देहोरविरुद्धत्वात् । ततश्च अग्निसूर्ययोः नक्तंदिवं व्यवस्थितयोरितरेतरप्रतिपादनाय स्तुतिरपि अशक्यत्वात् नावकल्पते इत्येषा वा अनुपपत्तिः । अथवा 'सूर्यो ज्योतिः' इति प्रातस्त्यं मन्त्रः, 'अग्निर्ज्योतिः' इत्येष सायं, इत्येषा मन्त्रयोरुपचारेण न सिध्यति । अथवा कमलो वेदः प्रमाणं इत्येषा अनवस्था न सिध्यति इत्यभिप्रायः । शास्त्रविरोधः, दृष्टविरोधश्च, पुनः भाष्यादृष्टविरोधः इति यत्, तदन्यायानि उक्तं क्रमभेदेन चोद्यते, तत् परिहारसूत्रक्रममेवानुरोधेन । 'न चैतद् विद्मः' इति आर्षेयवरणशेषोऽभिमतः । स चायं विशेषसम्बन्धानभिधानात् सन्दिग्धत्वेन अप्रमाणम् । नहि ब्राह्मणत्वाद्यात्मसन्देहनिदर्शनः केनचिद्देशेन धर्मेण अनुध्यन्ते । न च प्रत्यक्षविषया श्रुतिः सम्भवति । न च स्वतन्त्रब्राह्मण्याज्ञानप्रतिपादनेन प्रामाण्यम् । कथं पुनरत्र दृष्टविरोधः ? यदा समानाकारेषु पिण्डेषु ब्राह्मणादिविभागः शास्त्रेणैव निर्धार्यते । नायं शास्त्रविषयः, लोकप्रसिद्धत्वात् वृक्षादिवत् । कथं पुनरिदं लोकस्य प्रसिद्धं ? प्रत्यक्षमेवेति ब्रूमः । कस्मात् पुनः मातापितृसम्बन्धानभिज्ञाः चक्षुष्मत्स्वपि मनुष्येषु अनाख्यातं न प्रतिपद्यन्ते ? सामग्र्यभावात् । यथा वृक्षान् ग्रामाभिधानम्बुध्यते, नैतत्तुल्यम् । इदानीं ग्रामाभिधायकव्यापारात् ग्रामान्तरव्यवस्थितं सम्यक्त्वेऽनुगतं द्वारादिमद्रूपेण दृश्यते, न तु ब्राह्मणत्वम् । अपि च तुल्यजन्मनोऽपि निमित्तान्तरवशादेव प्रतिपद्यते । न च उपनीताध्ययनादि निमित्तं, वर्णत्रयसाधारणत्वात् । अध्यापनाद्यपि निराकारधर्मवैश्यप्रतियोगित्वात् सन्दिग्धम् । सर्वे च शुद्धत्वेषु सम्भाव्यमानत्वात् अनिश्चितम् । वस्तु अविचारितसिद्धमेव प्रतिपद्येत, स शुक्तिकामपि रजतं मन्यमानः क्रीणीयात् । नैष दोषः । क्वचिद्धि काचित् जातिग्रहणे इतिकर्तव्यता भवति इति वर्णितमेतत् । तेन यथैव आलोक–इन्द्रिय–अनेकपिण्डानुस्यूति–शब्दस्मरण–व्यक्ति–महत्त्व–संनिकर्ष–अन्तरविशेषादयः अन्यजातिग्रहणे कारणं, तथैव अत्र उत्पादकजातिस्मरणम् । तत्र च उत्पाद्योत्पादकसम्बन्धः मातुरेव प्रत्यक्षः, अन्येषां तु अनुमानागमदेशाचरणतः कारणं भवति । न चापरस्य प्रत्यक्षावगतमेव प्रत्यक्षनिमित्तं भवति, चक्षुरादेरनवगतस्यापि निमित्तत्वदर्शनात् । आन्तरालिकस्मृतिव्यवहितमपि चेन्द्रियसम्बन्धानुसारि प्रत्यक्षं इत्येतत् साधितम् । न च यत् सहसा दर्शने प्रत्यक्षं न भवति, तत् निपुणतोऽपि पश्यतां न प्रत्यक्ष इत्येतदप्युक्तमेव । स्वापराधात्तु दुर्ज्ञानोऽयं संबन्धः इति स्वयमेव वक्ष्यति ( १।२।१।२३ ) । न च ज्ञानमात्रेण प्रत्यक्षता हीयते । नहि यत् तिरिङ्गमात्रेण गृह्यते, तदप्रत्यक्षम् । न च स्त्रीणां क्वचित् व्यभिचारदर्शनात् सर्वत्रैव कल्पना युक्ता, लोकविरुद्धानुमानाप्रसरात् । विशिष्टेन हि प्रयत्नेन महाकुलीनाः परिरक्षन्ति आत्मानम् । अनेनैव हेतुना राजभिर्ब्राह्मणैश्च स्वपितृपितामहादिवंशपरम्परास्मरणार्थं समूहलेख्यानि प्रवर्तितानि । तथा च प्रतिकुलं गुणदोषस्मरणात् तदनुरूपाः प्रवृत्तिनिवृत्तयो दृश्यन्ते । न च भर्तृव्यतिरेककृतेन वर्णसङ्करः अपराधेन जायते । दृश्यते हि अपराधिनीनामपि स्वभर्तृनिमित्तः प्रसवः । तदपराधनिमित्तस्तु तासां अशुभफलोपभोगः भवेत्, न तु अपत्यानां वर्णसङ्करः । न च नियोगतः ( नियमेन ) वर्णान्तरैरेव सह प्रमादः । सवर्णेन च उत्पादितस्य नैव वर्णान्तरापत्तिः । सकृज्जातानामपि च पुनः उत्कर्षापकर्षाभ्यां सप्तमे पञ्चमे वा अन्यवर्णापत्तिः स्मर्यते ( याज्ञ० १।९६ ) । तच्च एतावन्मात्रम् आगमिकं मन्तव्यं, नहि अयं पुरुषसत्तानियमः लौकिकप्रमाणगम्यः । तस्मात् सत्यपि सादृश्ये यथा नैव चिह्नितेन स्त्रीपुंस्कोकिलादिविभागज्ञानं, तथैव दर्शनस्मरणपरम्परानुगृहीतप्रत्यक्षगम्यानि ब्राह्मणत्वादीनि इति भवति आगमवचनस्य प्रत्यक्षविरोधः । येऽपि आचारनिमित्ता ब्राह्मणत्वादयः, तेषामपि दृष्टविरोधस्तावत् अस्त्येव । न [illegible] आचारनिमित्तवर्णविभागे प्रमाणं किञ्चित् । मिश्रा हि ब्राह्मणादीनां आचारा विधीयन्ते, तत्र इतरेतराश्रयता भवेत् । ब्राह्मणादीनामाचारः, तद्योगेन ब्राह्मणादय इति । [illegible] एवं शुभाचारकाले ब्राह्मणः, पुनः अशुभाचारकाले शूद्र इति अनवस्थितत्वम् । तथा एकेनैव प्रयत्नेन परपीडाऽनुग्रहावपि कुर्वता युगपत् ब्राह्मणत्वाब्राह्मणत्वविरोधः । एवाभिरुपपत्तिभिस्तु अत्र प्रतिपाद्यते । न तपआदीनां

समुदायो ब्राह्मण्यं, न तज्जनितः संस्कारः, न तदभिव्यङ्ग्या जातिः, किं तर्हि मातापितृजातिज्ञानाभिव्यङ्ग्या प्रत्यक्षसमधिगम्या । तस्मात् पूर्वेणैव न्यायेन वर्णविभागे व्यवस्थिते 'मांसेन शूद्री भवति' इत्येवमादीनि कर्मनिन्दावचनानि, अथवा वर्णत्रयकर्महानिप्रतिपादनार्थानि इति वक्तव्यम् । पूर्वपक्ष अत्रापि वक्तव्यात् प्रत्यक्षस्य, फलेन अज्ञानविधिना सह विकल्पो न सम्भवति । अपि च तत्र अनुष्ठानाप्रकरणात् भवेदपि, न तु अत्र वस्तुरूपाणां वैकल्प्येन अनिष्कल्पनात् । 'को हि तद्वेद' इति पूर्ववदेव अज्ञानसंशयविपर्ययाणां अनौपचारिकत्वात् आनर्थक्यम् । निश्चितवेदप्रामाण्यैश्च त्रैविद्यवृद्धैः विज्ञायमानत्वात् स्वार्थेऽपि आनर्थक्यम् । विकल्पाभावश्च अनन्तरोक्तवत् ।

तथा फलाभावात् । ३ ॥

भाष्यं— गर्गत्रिरात्रब्राह्मणं प्रकृत्य उच्यते 'शोभतेऽस्य मुखं य एवं वेद' इति यदि भूतानुवादः, अनर्थकः । अथ अध्ययनफलानुवादः, ततः असदनुवादः । कालान्तरे फलं भविष्यतीति चेत्, नहि अत्र प्रमाणमस्ति । विधिः स्यादिति चेत्, नैव विधिपरः । 'द्रव्यसंस्कारकर्मसु' (४।३।१।१) इति चिन्तयिष्यति एतत् उपरिष्टात् किं फलविधिः, उतार्थवाद इति । इह तु किं भूतानुवादः क्रियार्थो वा इति । तेन न फलविधित्वात् निराकृतस्य इह अनर्थकोऽर्थवादविचार इति । 'आऽस्य प्रजायां वाजी जायते य एवं वेद' इति चोदाहरणम् ।

वा— यदि तावत् गर्गत्रिरात्रब्राह्मण-वेदानुमन्त्रणज्ञानकाले विद्यमानयोरेव मुखशोभा-वाजिजन्मनोः सङ्कीर्तनं, न धर्मं प्रति प्रमाणम् । अथ तु अविद्यमानयोः, ततः स्वार्थेऽपि । वर्तमानापदेशाच्च प्रत्यक्षानुपलब्धिविरोधः, कर्मानुष्ठानयोग्यपुरुषकरणात् विद्यारम्भस्य दीक्षितशीर्षस्नानादिवत् निराकाङ्क्षत्वात् फलविधित्वं निराकरिष्यते । पौनरुक्त्यात् तर्हि अत्र न विचारयितव्यं अत आह, तेन फलविधित्वात् निराकृतस्य इह आनर्थक्यार्थवादत्वविचार इति । स्तुत्यर्थताऽपि च असत्यस्य नास्ति इति व्यवस्थितमेव ।

अन्यानर्थक्यात् । ४ ॥

भाष्यं— 'पूर्णाहुत्या सर्वान् कामानवाप्नोति' 'पशुबन्धयाजी सर्वान् लोकानभिजयति' 'तरति मृत्युं तरति ब्रह्महत्यां योऽश्वमेधेन यजते य उ चैनमेवं वेद' इति । यदि भूतानुवादमात्रं, अनर्थकम् । अथ फलविधिः, इतरेषामानर्थक्यम् । नहि अकृत्वा पूर्णाहुतिं अग्निहोत्रादयः क्रियन्ते, न च अनिष्ट्वा अग्नीषोमीयेण, सोमेन यजन्ते, न च अनधीत्य अश्वमेधेन यजन्ते । तत्रया पथिजातेऽर्के मधु उपलभ्य तेनैव पथा मध्वर्थिनः पर्वतं न गच्छेयुः, तादृश हि तत् । अपि च आहुः 'अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत् । इष्टस्यार्थस्य संसिद्धौ को विद्वान् यत्नमाचरेत् ॥' इति ।

वा— अनन्तरेणैव पूर्णाहुत्यादिफलवचनानि व्याख्यातानि । विधित्वाभ्युपेयवादेन तु दोषान्तरमभिधीयते । पूर्णाहुतेः अग्निसंस्कारत्वात्, पशुबन्धस्य च ज्योतिष्टोमोपकारकत्वात्, अश्वमेधज्ञानस्य च संस्कारत्वात् न तावत् फलविधित्वावसरः । यदि पुनरिष्यते, ततः अन्यानर्थक्यम् । समानफलान्यपि कर्माणि यानि परस्परानपेक्षाणि क्रियन्ते, तेषां यथारुचि अनुष्ठानात् नास्त्यानर्थक्यम् । पूर्णाहुतिपशुबन्धयोस्तु अकृतयोः इतरकर्मानधिकारात् 'प्रथमं वा नियम्येत' (११।१।८।४३) इत्यनेन न्यायेन अप्राप्ते फले नोत्तरकर्मानुष्ठानप्रयोजनमस्ति इति तद्विध्यानर्थक्यम् । तथा च दृष्टान्तोऽपि । 'तेनैव पथा मध्वर्थिनः' इति यत्र अन्यः पन्थाः पर्वतस्य तत्र गच्छेयुरपि, न तु तेनैव गच्छन्ति । तस्मात् भूयसां फलानां विधीनामनुग्रहाय सह फलानामेव अनर्थकत्वम् । न च फलविशेषार्थिनः क्रियापि कर्माणि, अविशेषश्रवणात् । न हि समानायां श्रुतौ अप्रत्यक्षः सन् फलविशेषः कर्मविशेषेभ्यः शक्यः कल्पयितुम् । न च स्तुतिः असत्यत्वात् इति स्थितमेव ।

अभागिप्रतिषेधाच्च । ५ ॥

भाष्यं— 'न पृथिव्यामग्निश्चेतव्यो, नान्तरिक्षे, न दिवि' इति अप्रतिषेधभागिनमर्थं प्रतिषेधन्ति । विज्ञायत एव एतत्, अन्तरिक्षे दिवि च अग्निर्न चीयते इति । पृथिवीचयनप्रतिषेधार्थं च यद्वाक्यं भवेत्, चयनप्रतिषेधा-

 अर्थवादाधिकरणं

र्थमेव तत् । अथ अप्रमाणं, नैव विशेषो भवति । कथं तत् प्रमाणं, यत् विप्लवमाकुलयेत् स्वयं चाकुलं स्यात् ? । न चेतव्यं, हिरण्यं निधाय चेतव्यमिति ।

वा— त्रीण्यपि पृथिव्यादिवचनानि अप्रतिषेधभाविनमर्थं प्रतिषेधन्ति । अन्तरिक्षे दिवि च तावत् अप्राप्तत्वात् प्रतिषेधाविषयत्वम् । अतश्च पर्युदसितव्याभावात् न पर्युदासः । अन्तरिक्षे हि अदिवि च पृथिव्यां नित्यं चयनं प्राप्तं इति तद्विधिरनर्थकः । अथापि नित्यानुवादः, तथापि अक्रियार्थत्वमेव । पृथिवीचयनप्रतिषेधपर्युदासौ तु चयनविध्यबाधेन अशक्यौ । बाधे च विध्यानर्थक्यम् । विकल्पेऽपि पक्षे बाधः । सामसंयोगाच्च अक्रेक्यम् । दुर्वचश्च प्रतिषेधः पृथिवीपरत्वे सति रसत्वेन पाक्षिकत्वम् । विध्यचयने अज्ञापकत्वात् । एतदेवास्य स्वयमाकुलत्वम् । विध्यन्तरमेव 'हिरण्यं निधाय चेतव्यं' 'इष्टकाभिरग्निं चिनुते' एतच्च आकुलयेत् । प्रयोजनानुद्दिष्टं नैवोपपद्यते ।

अनित्यसंयोगात् । ६ ॥

भाष्यं— अनित्यसंयोगश्च वेदप्रामाण्ये सति 'परं तु श्रुतिसामान्यमात्रं' ( १।१।८।३१ ) इति परिहृतः । इदानीं वेदैकदेशानां आक्षिप्तानां पुनश्चोद्यकः उत्तिष्ठति 'बबरः प्रावाहणिरकामयत' इति ।

वा— सर्वोपाख्यानेषु अन्यपरत्वासंभवात् स्वरूपप्रतिपादनात् अनित्यसंयोगः । स च समस्तवेदप्रामाण्ये सति कथंचित् अन्यथा नीयेत । यदा तु यथैव अप्रमाणानां मध्ये शब्दः, तथापि च वेदः प्रमाणं, तथैव वेदेऽपि विधिमात्रं प्रमत्या कल्प्यते, तदा इतरैकदेशवत् अनित्यार्थैकदेशाप्रामाण्यं यथाश्रुतार्थग्रहणात् आपद्यं किं निवार्यते । तस्मात् प्रथमादीनां अनपेक्ष्य अर्थं अध्ययनभावादेव फलं कल्प्यम् । अथवा यथा एतानि उपेक्षाफलानि तथा तद्विषयं प्रत्यक्षमपि प्रतिपत्तव्यम् । अथ कस्मात् मन्त्रवत् यथाप्रकरणं प्रयोगकाले न प्रयुज्यते, प्रयोगरूपसामर्थ्याभावात् । नहि मन्त्राणां पाठमात्रेण विनियोगः, किं तर्हि तत्सामर्थ्यात् । न चात्र तदस्ति । अथवा यथा तेषां पूर्वपक्षे कार्यान्तराभावात् रूपमात्रं ग्रहीष्यते तथा अत्राप्यस्तु । यत्तु सूत्रकारेण अनित्यत्वमुक्तं, तत् प्रामाण्यापेक्षया, न अप्रयोजकतया ।

विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः । ७ ॥

भाष्यं—इदं समाम्नायते 'वायव्यं श्वेतमालभेत भूतिकामः, वायुर्वै क्षेपिष्ठा देवता, वायुमेव स्वेन भागधेयेनोपधावति, स एवैनं भूतिं गमयति' इति । वायुर्वै क्षेपिष्ठा देवता इत्यतो यद्यपि क्रिया नावगम्यते क्रियासम्बद्धं वा किंचित्, तथापि विध्युद्देशेन एकवाक्यत्वात् प्रमाणम् । 'भूतिकामः' इत्येवमन्तो विध्युद्देशः, तेन एकवाक्यभूतः 'वायुर्वै क्षेपिष्ठा देवता' इत्येवमादिः । कथमेकवाक्यभावः ? पदानां साकाङ्क्षत्वात् विधेः स्तुतेश्च एकवाक्यत्वं भवति । भूतिकाम आलभेत । कस्मात् ? यतो वायुः क्षेपिष्ठेति । नायमभिसम्बन्धो विवक्षितः 'भूतिकामेन आलब्धव्यं' इति । कथं तर्हि ? 'आलभेत, यतस्ततो भूतिः' इति । भिन्नौ इमावर्थौ, उभयाभिधाने वाक्यं भिद्येत । किमर्था स्तुतिरिति चेत्, कथं रोचेत, नानुष्ठीयेत इति । ननु प्राक् स्तुतिवचनात् अनुष्ठानं भूतिकामान्वात् सिद्धं, स्तुतिवचनमनर्थकम् । नहि । यदा स्तुतिपदासंनिधानं तदा पूर्वेणैव विधिः, यदा स्तुतिपदसम्बन्धः, न तदा भूतिकामस्य आलम्भो विधीयते । यथा पटो भवति इति, पट उत्पद्यते इत्यर्थः, निराकाङ्क्षं च पदद्वयम् । यदा च तस्मिन्नेव रक्त इति अपरं श्रूयते, तदा रागसम्बन्धो भवतीत्यर्थः, भवति च रक्तं प्रति आकाङ्क्षा । एवं यदा न स्तुतिपदानि विधिशब्देनैव तदा प्ररोचना, यदा स्तुतिवचनं तदा स्तवनेन । ननु एवं सति किं स्तुतिवचनेन, यस्मिन् सति अविधायकं, मा भूत् तत्, तदभावेऽपि पूर्वविधिनैव प्ररोचयिष्यते इति । सत्यं, विनाऽपि तेन सिध्येत् प्ररोचनं, अस्ति तु तत् । तस्मिन् विद्यमाने योऽर्थो वाक्यस्य, सोऽवगम्यते । स्तुतिः प्ररोचनं तयोः । तस्मिन्नविद्यमाने विधिना प्ररोचनं इति । ननु तस्यापि स्तुतिपदेषु पूर्वस्य विधिस्वरूपत्वात् विधिरभिप्रेतः स्यात्, न विरुध्येत स्तुतिपदसंबन्धः । आह, स्तुतिपदानि हि अनर्थकानि अभविष्यन् साकाङ्क्षाणि । भवन्तु अनर्थकानि इति चेत्, न गम्यमानेऽर्थे अविवक्षितार्थानि भवितुमर्हन्ति । योऽसौ विध्युद्देशः, ए

शक्नोति निरपेक्षः अर्थं विधातुं, शक्नोति च स्तुतिपदाना वाक्यशेषी भवितुम्। प्रत्यक्षश्च वाक्यशेषभावः। अतः अस्मात् विधेः स्तुतिमवगच्छामः। ननु निरपेक्षादपि विधिमवगमिष्यामः। भवत्वेवं, नैवं सति कश्चिन् विरोधः। किंतु अशक्यः स्तुतिपदसंबन्धे सति विध्यर्थो विवक्षितुम्। वाक्यं हि संबन्धस्य विधायकम्। द्वौ चेत् संबन्धौ विदध्यात् 'भूतिकाम आलभेत' 'आलम्भेन च एष गुणो भविष्यति' इति, भिद्येत तर्हि एवं सति वाक्यम्। अथ यदुक्तं न क्रिया गम्यते, न तत्संबद्धं वा किंचिदिति, 'स्तुत्यर्थेन विधीनां स्युः'। स्तुतिशब्दाः स्तुवन्तः क्रियां, प्रशंसमानाः अनुष्ठातृणां, उपकरिष्यन्ति क्रियायाः। एवमिमानि सर्वाण्येव पदानि कं चिदर्थं स्तुवन्ति (शंसन्ति) विदधति। अतः प्रमाणमेवंजातीयकानि 'वायुर्वै क्षेपिष्ठा देवता' इति।

व्या—पूर्वपक्षोदाहृतेष्वेव वाक्येषु सिद्धान्ते अभिधातव्ये किमर्थं वाक्यान्तरोपन्यास इति? केचिदाहुः, समानन्यायत्वात् इदमपि तत्र, तान्यपि च इह उदाहृतानि द्रष्टव्यानि इति। यद्यप्येवं तथापि अपूर्वोदाहरणे अभिप्रायान्तरं आकाङ्क्षति। तदभिधीयते। पूर्वोदाहृतेषु सर्वत्र स्वार्थासत्यत्वमपि आशङ्क्यते। तत्र कः प्रथममेव तत्प्रतिपादनक्लेशं अङ्गीकुर्यात् इति प्रसिद्धस्वार्थसत्यत्वानां स्तुतिद्वारा एकवाक्यभावेन धर्मप्रमाणत्वमात्रप्रतिपत्तिद्योतनार्थो वाक्यान्तरोपन्यासः। तत्र भाष्यकाराः प्रसिद्धेनैव एकवाक्यत्वेन स्तुत्यर्थोपयोगं वदन्ति।

(वेदवाक्यानां एकवाक्यत्वादिप्रतिपादनोपयोगः) एतावत्तु अत्र प्रथमं वक्तव्यं, किमर्थं रूपभङ्गेन यत्नादेकवाक्यता पुरुषार्थत्वं वा वेदस्य उच्यते इति। लौकिकवाक्ये तु दृष्टत्वात् इति यदि उच्येत, तदाभिधीयते। युक्तं लोके वाक्यार्थस्य प्रमाणान्तरगम्यत्वात् अन्यथाऽपि कल्पनम्। इह तु अत्यन्तातीन्द्रियत्वात् यथाश्रुतात् ईषदपि अन्यथात्वे पौरुषेयत्वमापद्येत। लोकेऽपि च यानि प्रमाणान्तरानवगतार्थानि आप्तप्रत्ययमात्रेण श्रोतॄणां प्रमाणानि भवन्ति, तेषां नैव अन्यथाव्याख्यानं लभ्यते। तत्र केचिद्वदन्ति, 'तुल्यं च साम्प्रदायिकं' (१।१।८।२८) इति वदत्पति, तेन समस्तो वेदः पुरुषार्थः इति साध्यते। यदि आत्मानुपकारिणं ग्रन्थं एव बुद्धिपूर्वकारिणः पुरुषाः प्रयत्नेन धारयेयुः। यद्यपि केषां चिदज्ञानं भवेत्, तथापि असम्पूर्णलौकिकान्तानेकपरीक्षकप्रमादकल्पना निष्प्रमाणिका। तस्मात् यथायथा पुरुषार्थता भवति, तथातथा भङ्क्त्वाऽपि रूपं, व्याख्यायते इति। न तु एतद्युक्तमिव। कुतः? पुरुषाधीनप्रामाण्यप्रसङ्गात्। यदि हि अक्षरानुपयोगोऽपि अर्थैः अस्मदादिभिरेवं कल्प्यते, यस्माद् वयं प्रयत्नेन धारयामः तस्मादस्य पुरुषार्थतेति। तथा सति आत्मचेष्टितवशेन प्रामाण्यं अभ्युपगतं स्यात्। अथ पुरुषान्तरधारणमुच्येत, एवमपि तद्वशेन, तैरपि एवमन्यवशेन इत्यनादित्वेऽपि सति अन्धपरम्परान्यायेन सर्वेषां परप्रत्ययात् न क्व चित् प्रामाण्यावस्थानम्। सर्वत्र हि 'एवमयं पुरुषो वेद' इति प्रत्ययः, न 'एवमयमर्थः' इति। तेन यद्यपि तेषु तेषु अध्येतृषु नूनं पुरुषार्थं वेदं मन्यन्ते इत्यभिप्रायोऽनुमीयते, तथापि निर्मूलत्वात् तन्मानेन असिद्धिः। अतो यावत् वेद एव पुरुषार्थतया स्वकं आत्मानं न प्रतिपादयति तावद् अप्रमाणम्। तदुच्यते। सकलस्य तावत् वेदस्य 'स्वाध्यायोऽध्येतव्यः' इति अध्ययनभावना विधीयते। तत्र किं भावयेत् इत्यपेक्षायां अध्ययनं इत्यावगतमपि पुरुषप्रवर्तनाशक्तियुक्तेन विधायकेन अपुरुषार्थभाव्यायां भावनायां प्रवर्तनाऽशक्तिप्रसङ्गात् तद्वशात् निराक्रियते। ततश्च अध्ययनेन इत्यविरोधात् संनिधेश्च करणांशे निविशते। तेन किं इत्यपेक्षिते 'यच्छ्रूयते' इत्युपलम्भात् अक्षरग्रहणं इत्यापतति। तस्यापि अपुरुषार्थत्वात् 'तेन किं' इति 'पदार्थधारणं' इत्युपतिष्ठते। तेनापि पदार्थज्ञानं, तेन वाक्यार्थज्ञानं, तेन च अनुष्ठानं, अनुष्ठानेन स्वर्गादिफलप्राप्तिः, इति एतावति प्राप्ते निराकाङ्क्षी भवति। एवं सर्वविधीनां प्राक् पुरुषार्थलाभात् अपर्यवसानम्। न च तद्वशेन विधिदर्शनात् स्वर्गादिरेव फलं कल्प्यते। योग्यतया हि यस्य यत्र अनन्यकारिणि व्यापारो लभ्यते, तदेव तस्य कार्यं इत्यवधार्यते। तत्र यदि तावत् तदनुसारेणैव क्रियमाणि अध्ययनानि फलमाक्षिपन्ते, ततो नान्यत्र कल्पनमर्हति। पारंपर्यप्रयो-

नशादपि न तैर्निर्वर्त्यते । लक्षणा च एतेभ्यः कल्प्यते । न च श्रौतार्थसम्भवे सा युक्ता । युगपच्च उभयवृत्तिविरोधात् प्राशस्त्यपरत्वे फलादीनि न स्युः । नहि अन्यशास्त्रे सति उपायमानत्वेन उपात्ताना एकान्तेन पारमार्थिकत्वं इति वक्ष्यते । अत एव च अर्थात् गम्यमानं अन्यपरत्वाच्छब्दानां न प्राशस्त्यं प्रयोजनं भवति । नहि यद्यत् प्रतीयते, तत्तत् शास्त्रफलमवसीयते । यथा 'पूर्वो धावति' इत्युक्ते यद्यपि अपरो गम्यते, तथापि न कार्येण युज्यते, तद्वत् प्ररोचना गम्यमानाऽपि न कार्यान्तरोपयुक्तशास्त्रार्थत्वेन अवतिष्ठते । अन्यथाऽनुपपत्त्या चेय तेभ्यः कल्प्येत । सर्वप्रमाणप्रसक्तसमये च अन्यथाऽनुपपत्तिर्भवति । प्रमाणाभावश्च यः सर्वप्रकारं प्रयतमानस्य, स प्रमाणम् । नयदि केन चिदुपदेशेन वा अतिदेशेन वा न लभामहे ततो दर्विहोमन्यायेन ( ८।४।१ ) विध्युद्देशत्वेन हि शक्ती कल्पयिष्यामः । अथ तु केन चिद् दूरस्थेनापि सेत्स्यति, ततः तदनुसारत्वात् कर्तव्यः इत्येवं साकाङ्क्षो विधिरास्ते ।

तथा 'वायुर्वै क्षेपिष्ठा देवता' इत्येवमादयपि स्वाध्यायाध्ययनविधिना पुरुषार्थतया उपनीत 'यत्फलवते तत् कुर्वीत' इत्युपलब्धाच्च तदैव तेन अवगम्यमानं अपुरुषार्थत्वेन च पूर्ववत् ( विधिवाक्यवत् ) अक्षरादिषु शक्यदर्शनस्थत् भूताख्यानावकाशे यावत् भूतम् । तथापि तु साकाङ्क्षमेव इति य. तेन स्थयमाय. साधनानुरूपताभ्योऽस्तित्वादिरेण 'क्षिप्रदेवतायाश्च कर्म क्षिप्रमेव फलं दास्यति' इति मानरूपरूपोऽर्थः, सः अनन्तरप्रवृत्तविध्युद्देशाकाङ्क्षित्वात् पुरुषार्थे स्तावका प्राप्तेति प्रतिपत्तु इति परिगृह्यते । सोऽयं नष्टाश्वदग्धरथवत् संप्रयोगः । एवं च न प्ररोचना अन्यकृता कर्माङ्गम् । न च अर्थवादपदैः प्रयोजनान्तरं साधनीयं इति आम्नानसामर्थ्यात् उभयोर्नियमः ।

एतेन प्रतिषेधापेक्षितद्वेषसिद्ध्यर्थं निन्दाद्यवाननिर्णयव्याख्याता । तथापि हि न द्वेषादृते विद्वान् निवर्तते । द्वेषश्च अप्रशस्तप्रत्ययापीनोत्पत्तिः । न च अप्रशस्तत्वेन नसरादिभि. परै. प्रशस्ताप्रशस्ताभिधानेन निषेधनकर्तृ स्तावासाधारणगुणैः सुखं अवगमितुं, इति अनन्यप्रयोजननिन्दावाक्यगम्यमेव भवति । अतश्च एकवाक्यत्वसिद्धिः । नित्यं च विधिप्रतिषेधयोः क्रमेण वाक्यशेषाः स्तुतिनिन्दानिर्णयहेतवो भवन्ति । नहि स्तुतिनिन्दे नाम व्यवस्थिते, निन्दारूपासु स्तुतिषु स्तुतिरूपास्वपि च निन्दासु विपर्ययदर्शनात् । यथा वक्ष्यति 'नहि निन्दा निन्द्यं निन्दितुं प्रवर्तते, अपि तु विधेयं स्तोतुं ' इति । तथा नैयग्रकवाक्येषु 'यदभिघारयेत् रुद्राय पशून् निदध्यात्' इति स्तुतमपि अभिघारणं नाश्रयिष्यते, निन्दितमपि च अन्ते विधिदर्शनात् अभिघारणमेव प्रशस्तं भविष्यति ।

सन्दिग्धस्तुतिनिन्दानामपि च प्रकरणादेव निर्णयः, यथा वक्ष्यति 'न वयं निन्दितान् अनिन्दितान् वा असुरान् विद्मः । कदा चिद्धि यस्मात् असुरानपि एवा वशीकृत्य आनयति क्रिया, तस्मात् नूनं प्रशस्ता इति स्तुतिः स्यात् । अथवा विध्यवकाशसुरागमननिमित्तत्वात् अशोभना इति निन्दा । तत्र अन्ते सामविधानात् तत्प्रशंसार्थे एषा निन्दा इति गम्यते' । सर्वत्र च किं चित् पदं स्तौति निन्दति च, इतराणि तु एकवाक्यतया तादर्थ्यं प्रतिपद्यन्ते । यत्रापि तादृशं पदं न स्यात्, तत्रापि लक्षणा लक्षितलक्षणा वा अन्यथाऽनुपपत्तेः आश्रयणीया । विधिप्रतिषेधयोश्च स्तुतिनिन्दाभ्यां अविनाभावात् अन्यतरदर्शनेन इतरदनुमाय वाक्यं पूरयितव्यम् ।

एवं भारतादिवाक्यानि व्याख्येयानि । तेषामपि हि 'श्रावयेच्चतुरो वर्णान्' इत्येवमादिविध्यनुसारेण पुरुषार्थत्वान्वेषणात् अक्षरादि व्यतिक्रम्य धर्मार्थकाममोक्षाधर्मानर्थदुःखसंसारसाध्यसाधनप्रतिपत्तिः उपादानपरित्यागाङ्गभूता फलम् । तत्रापि तु राजधर्मोपधर्मादिषु केचित् साक्षाद्विधयः, केचित् पुनः परकृतिपुराकल्परूपेण अर्थवादाः । सर्वोपाख्यानेषु च तात्पर्ये सति श्रावयेत् इति विधेरानर्थक्यात् कथं चित् गम्यमानस्तुतिनिन्दापरिग्रहः । तत्परत्वाच्च नातीव उपाख्यानेषु तात्पर्याभिनिवेशः कार्यः । वेदप्रस्थानाभ्यासेन हि वाल्मीकिद्वैपायनप्रभृतिभिः तथैव स्ववाक्यानि प्रणीतानि । प्रविरागाणां च विचित्रबुद्धित्वात् युक्तमेतत् । इह केचित् विधिमानेन प्रतिपद्यन्ते, अपरे अर्थवादेन, अपरे अन्येन

स्मृतं क्रियमाणं अभ्युदयकारि भवति, तथा अन्येनापि विधिप्रसिद्धो अर्थवादप्रतिपादितविधिविहितं इति । " ननु सत्स्वपि स्तुतिपदेषु ' इति । यत्र लघुमुपायं अनुपादाय गुरूपायः आश्रीयते तत्र तथापि भवेत् । अत्र तु पूर्वमेवं लघुतर आश्रितः समर्थतरश्च । तस्मात् यथैव प्रयुक्ते घट-शब्दे नाकाशादयः तदानीमेव प्रयुज्यन्ते, तथाऽत्र विधौ सति स्तुतिः नाश्रयितव्येति । तत्र उत्तरसाकाङ्क्षत्वात् स्तुतिपदानि अनर्थकानि स्युरिति । ' भवन्तु इति चेत् ' नोक्तेन न्यायेन अर्थवत्त्वात् अविवक्षितार्थता युक्तेति । इत्थंभवे हि प्रत्यक्षादेकवाक्यत्वात् अर्थवादानुग्रहो युक्त इति । ' ननु सत्स्वपि ' इत्यनेन गतार्थत्वात् ' नतु निरपेक्षात् ' इति अप्रकाम्यम् । तदुच्यते । तत्र अर्थवादपरित्यागाय उक्तं, इदानीं तु भवतु नाम स्तुतिसंबन्धः समस्तस्य, पूर्वस्यापि तु स्वल्पायगतो विधिसंबन्धो न बाधितव्यः । अथास्य कचिदपि शक्तिः अपह्रियते, ततः प्रतिप्रसवहेत्वभावात् सर्वत्र अप्रामाण्यप्रसङ्गः इति । तदभिधीयते । भवतु पूर्वस्य विधिशक्तिः, न तु इयं क चिदाश्रिता इति अन्यत्रापि प्राप्यते, कदा चिदाविर्भूता इति सर्वत्र आविर्भवति । यत्र तु अर्थान्तरमुत्पादि नोपादीयते तत्र, आविर्भूता शक्तिः कार्यमारभते । यत्र तु अपवादभूतवाक्यान्तराभिव्यक्तिः तत्र वाक्यभेदप्रसङ्गात् पूर्वा तिरोधीयते । प्रश्नोत्तरत्वेन अयं पूर्वोक्त एव वाक्यभेदः परामृश्यते । तस्मादैकार्थ्यात् प्ररोचनमेवात्र विधिरिति । ' प्रीयमाणा अनुष्ठातृणां ' इति । ' कर्मणां प्रीयमाणः ' ( पा० १। ४।३३ ) इति संप्रदानत्वं प्रसक्तं भवति । प्ररोचयतेः प्रकृत्यन्तरत्वात् इति चेत्, न, तत्रापि संनिधानपक्षत्वात् । अथ सामान्यविवक्षया षष्ठी इत्युच्यते, साऽपि उपात्ते विशेषे दुर्लभा । तस्मात् अनुष्ठातॄणां क्रियायाः इति संबन्धः । केभ्यः प्ररोचयमाना इति अपेक्षिते, अर्थात् तेभ्य एवेति गम्यते । अथ च ' अनुष्ठातॄननुवदिष्यन्ति ' इति संबन्धः । क्रियायाः इति पञ्चमी । क्रियातोऽपि हि त एव प्ररोचकाः इति । अथवा क्रियार्थं इति पञ्चम्यर्थः कल्प्यः । ' कं चिदर्थं स्तुवन्ति ' इति श्लोकम् । कं चिदिति विधेयं तत्संबन्धिनं वा कं चिद्वा विदधाति क्रिया तत्संबन्धिनं वा, तच्च स्तुतिद्वारेण । इति उपपन्नं प्रत्ययोद्वारेण अर्थवादप्रामाण्यम् ।

( केचिन्मतेनोक्तां भाष्यव्याख्यां दूषयति– ) इदं तु व्याख्यानं नानुमन्यन्ते । यदि हि प्रत्ययोत्पत्तिः स्यात् ततः केन स्तुतिरासज्येत । न तावत् शब्दभावनाकर्थंभावोऽस्ति । साऽपि कस्मात् इत्यपेक्षा कल्प्येत, साऽपि विधीयतिकर्तव्यताविधयैव तदनुग्रहार्थत्वात् । शब्दान्तरव्यपदेश्यमानं तु भिद्यते । साऽपि च नियुज्यमानस्यैव पुरुषस्य भवति, न क्रियामात्रश्रवणात् । यदि याममध्ये तान्कर्मनः इत्युक्ते कर्तव्यस्याऽकर्तव्यस्योक्तेः प्राक् प्रशस्तः अप्रशस्तः इति वा अपेक्ष्यते । तदनपेक्षितं च श्रुतिमात्रेण वदन्तः नार्थवादाः प्रतिपादयन्ति । न च भावनार्थेन सह कस्य चित् संबन्धः अपेक्षा वा विद्यते, सर्वस्य भावनाङ्गत्वात् । भावना तु प्रत्ययोद्वारेण अपनीता किमपेक्षेत । तस्मात् तद्गतांशनवोच्छेदात् न भूतिः फलं, न यागः करणं, न च इतिकर्तव्यता का चित् स्यात् । उक्तेऽपि च प्राशस्त्ये कस्मात् इति अनपेक्षितत्वात् प्रशस्तोऽयं इत्येतावन्मात्रे अवधृते प्रशस्तत्वात् इत्यनुच्यमाने कर्तव्यताबुद्धिः नैव स्यात् । भवन्ती वा तद्विधा भवेत् ' प्रशस्तोऽयं कर्तव्यः ', ' घटो रक्तः कर्तव्यः ' इतिवत् । अकल्पिते विधौ आनर्थक्यमेव स्यात् । प्रत्यक्षं च विधिमुत्सृज्य पारम्पर्यलक्षणया अर्थवादेभ्यः परिकल्प्यते इति अपूर्वा यानोयुक्तिः । न चैतत्कल्पनाऽपरोऽस्ति अन्यतः सिद्धत्वात् । अनुक्तो हि सन् अर्थवादादेव विधिः कल्प्येत, यदि अन्यथा नोपपद्येत । प्रत्यक्षप्रत्ययोपपन्नत्वात् नान्यथाऽनुपपत्तिः । यथा अर्थवादोऽपि यदि उपाख्यानादिष्विव प्ररोचनाया निष्प्रयोजनः स्यात्, ततो दूरं नीयेत । यथोक्तेन तु न्यायेन प्ररोचनोपयोगात् नान्यत्र गच्छति इति । अवश्यकर्तव्या च प्ररोचना यदि अन्यतः सिध्येत्, ततः अर्थवादान्नापेक्षेत । साऽपि तु अनन्यगतिकत्वात् तमेव आश्रयति । सर्वत्र च वैदिकेऽर्थे अर्थापत्त्या शब्दः कल्प्येत, ततः अर्थसिद्धिः, येन प्ररोचनया विधिशब्दः कल्प्येत, नार्थः । तत्कल्पनाऽपेक्ष्यां च यथा ऐन्द्रवायवादिवाक्येषु ' सोमेन यजेत '

इत्यस्मिन् उपदिश्यमाने नान्यथानिर्वहणा, तथैव व्याख्येव इत्यनेन अन्वयानुपपत्तिप्रतिबन्धः। तुल्यार्थत्वेऽपि चाभिधित्सौ भवतः। अन्ययार्थवादयोः पुनः अत्यन्ताभिधानुग्राह्यानुग्राहकार्थविषयत्वेन अर्थभेदात् समुच्चयः इत्येकवाक्यता। यदि च प्रत्ययोत्पत्तिः स्यात् तत. कर्तृपस्थोपमाद्विशेषावगतक्रियाफलस्वार्थपरार्थानुष्ठेयप्रसङ्गः। स्यादेतत्। शिथिलमात्र अविवक्षायिन्धा नोपक्रियस्था कर्तृसंख्यादिलाभः इति। एतथाऽनर्थं, यतः तदर्थमपि उपात्तः प्रत्ययः सामर्थ्यात् शिथिर वक्त्येव। प्रतीतस्य च इथी एवाविवक्षा, विध्यपस्पर्शो वा प्रत्यैकान्तरात्, अनुवादकत्वं वा इद्रियसम्बन्धेऽस्तु। न तावत् विधे. राविधिर्नाम किञ्चित्। नाप्यनुवादः, तथाऽनवसायाप्राप्तेः। नहि एव संभवति, 'योऽयं वायव्यश्वेतालम्भः कर्तव्यः स प्रशस्तः' इति, भवति तु एव 'कर्तव्यः प्रशस्तत्वात्' इति। यत्तु उदयनाचार्यमतम् इति, तथापि कत्वावशेन विधिप्रतिषेधौ अनपेक्ष्य नियामाक्षेपात् निषित्वमाश्रितमेव इत्यद्दृष्टत्वात्। यदि च निष्प्रयोजकत्वा स्यात्, ततः प्रत्यासत्तेः भावार्थ एव साध्यांशे निवेशेत् इति निष्फलत्वं स्यात्।

( स्वमतेन व्याख्यानमुपक्रमते— ) तस्मात् सूत्राविनाशेनैव विधिना एकवाक्यत्वम्। तथा च भाष्यकार' सविधिकमेव 'भूतिकाम' इत्येवमन्त विध्युद्देश' इत्याह। अन्यथा भावार्थः इत्येवापाक्षत्। न चात्र क्रियामात्रतया विध्युद्देशत्वं शक्यते वक्तुम्। तस्मात् प्रत्यय एव विध्यभिधायित्वात् विध्युद्देशः। विध्यर्थेन तु एकवाक्यत्वासम्भवात् सूत्रार्थितेन उद्देशग्रहणम्। 'भूतिकाम इत्येवमन्त' इति च पश्वादिसंसर्गस्तुवर्शक स्तुत्यवसरप्रदर्शनार्थम्। नतु एवं सति कर्मनामधेयेषु अनाकाङ्क्षणात् अर्थवादा न संबध्येरन्। सत्यमेवैतत्। तथापि तु प्रमाणान्तराप्राप्त्यभावात् क्व चित् प्रयोगवचनेन ( 'आग्नेयोऽष्टाकपालो भवति' इत्यादौ ), क्व चित् पश्रमन्त्रकरणेन ( उपांशुयाजमन्तरा यजति इत्यादौ ), अथवा श्रुतवर्तमानान्यथाऽनुपपत्त्या कल्पिते विधित्वे अर्थवादसंगतिः। यत्रापि केवलार्थवाददर्शनादेव विधित्वं, तत्रापि अन्यथाऽनुपपत्तिमात्रं शरणम्। ( 'तास्यामेतमग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छत्' इत्यादौ अर्थवादमात्रकल्प्यविधिदर्शनात्। मु. पृ. ४९ )। समनन्तरा तु भवी नातिगौरवं युक्तमिति। यत्तु अस्मिन् पक्षे वाक्यभेदः सम्बन्धद्वयाश्रयणात् इति, स आन्यैव पक्षत्वात् इति एकप्रकारोपपत्तेः परिहृतः। विधीयमानस्यैव हि स्तुत्याकाङ्क्षा इति अनेकरूप्यात् उपपन्नं तत्त्वम्। यदि च एवविधैः सम्बन्धभेदैः वाक्यं भिद्येत, ततः साध्यसाधनेतिकर्तव्यतासम्बन्धैरपि भिद्येत। तस्मात् 'वाक्यमित्रसम्बन्धो विवक्षितः' इत्यादिभाष्य एवं नेतव्यं, न पूर्वेण सामविधिपर्यवसानं विवक्षितं, विधिनादिद्वारप्रयोजनकल्पनाया अतिगौरवनिमित्तात् वाक्यभेदात्। 'किमर्था स्तुतिः' इति पूर्वेणैव प्ररोचनाऽपि सिद्धा इत्यभिमानात्। 'कथं रोचेत' इति विध्यनुग्रहकथनम्। 'ननु प्राक्' इति पूर्वाभिप्रायनिराकरणम्। 'नेह' इति, स्तुत्यभावे तस्य शक्तिद्वयं अगत्या आश्रीयते, न संभवत्यामपि इत्येतच्च, तदा भूतिकामस्य विधिं समाप्यते इत्याह। 'यथा एव' इति यतार्थम्। 'विधिशब्देन तदा प्ररोचना' इति विधुत कार्यैकान्तत्वं विधिस्तुत्योः। 'ननु एवं' इति अस्ति चेत् प्ररोचयितुमपि शक्तिः, फलादन्यत् अपेक्षते इति। 'सत्य' इति, तस्मात् नियमाने तस्मिन्, न अभिधाने गौऽर्थः स गम्यते। कथमसौ? 'स्तुतिः प्रयोजनं तयोः' न तस्यैव पूर्वस्यापि इत्यर्थः। स्तुतिविषयोपकल्पनाय विधेरपि स्तुतिप्रयोजनव्यपदेशः। नहि निर्विषया स्तुतिरुपपद्यते। अर्थवादाभावे तु अगत्या येनकेनापि गौरवमङ्गीकरिष्यति। 'ननु सत्स्वपि' इति पूर्वपक्षस्य व्याख्येयम्। 'अत. अस्मात्' विधेः इति इयं षष्ठी, वाक्यशेष भक्त्यादित एव अस्य स्तुतिमवगच्छाम, न स्वत इत्यर्थः। 'ननु निरपेक्षादपि' इति, यदि क्व चित् अतिकर्तव्यताकस्य विधेः प्रवर्तनशक्तिः, फलादन्यदनपेक्षते, तेन सत्स्वपि अनादरः स्यात्। आचार्यस्तु लोपहासमाह, यथासौ केवलः प्रयुज्यमानो निरपेक्ष, तत्र भवतु, न कश्चिद्विरोधः। इत्य न तु संभवः साकाङ्क्षैः पदान्तरैः आक्षितत्वात्। चानत्र हि एकं एकस्यैव संबन्धस्य विधायकम्। तत्र यदि द्वौ विध्युद्देश एव कुर्यात्

तया सति भिद्येत । निष्युद्देशोऽध्यायितानामेव एष हि गुणो भवति इति प्ररोचना दर्शयति । तस्मात् विधिना एकवाक्यत्वात् तदनुप्रवेशेन अर्थवन्तोऽर्थवादाः इति ।

तुल्यं च सांप्रदायिकम् । ८ ॥

भाष्यं— अथोच्येत, प्राक् स्तुतिपदेभ्यो निराकाङ्क्षाणि विधायकानि, विधिस्वरूपत्वात् । स्तुतिपदानि तु प्रमादपाठ इति । तन्न । एवमर्थावगमात् । ( किन्च ) तुल्यं च साम्प्रदायिकम् । सम्प्रदायः प्रयोजनं येषां धर्माणां सर्वे ते विधिपदानामर्थवादपदानां च तुल्याः । अध्यायानध्यायते, गुरुमुखात् प्रतिपत्तिः, शिष्योपाध्यायता च सर्वस्मिन्नेवंजातीयके अविस्मार्थे तुल्यमाद्रियन्ते । स्मरणं च दृष्टम् । अतो न प्रमादपाठ इति ।

वृ— चशब्दव्याख्यानार्थं परिचोदना उपन्यस्ता आनर्थक्यमेवास्तु इति, तन्नैव । कुतः ? पूर्वोक्तेन न्यायेन अर्थस्यावगम्यमानत्वात् । अथवा तत्र तत्प्रयोजकस्य एवमर्थावगमात् इत्युक्तप्रकारपरामर्शः । किंच 'तुल्यं च' इति योजना । सम्प्रदायानुग्रहार्थं धर्मजातं तत्संबन्धस्मरणात् स्वर्गादिसंयोगाच्च । न चास्य प्रयोजनवत् सन्निहिताध्ययनपरित्यागेन अन्यार्थत्वे प्रमाणमस्ति । सम्प्रदायाङ्गत्वेऽपि च अविस्मृतस्य आकाङ्क्षितत्वात् । तादर्थ्यस्मरणस्य अविस्मार्थत्वम् । नहि अन्यत् कल्प्यमानं स्वाध्यायेतिकर्तव्यताऽनुगुणं भवति । यदि तावत् स्वर्गः कल्प्येत, ततः पुरुषार्थत्वमेव आपद्यते । अथ पुनः क्रतुफलसिद्धिरेव पठिते वेदे भवतीति, एवमपि दूरस्थोपकारित्वं । तस्मात् सम्प्रदायस्य अक्षरग्रहणं साधयतः नियमजातं अनुग्राहकम् । न च निष्प्रयोजनस्य अविघ्नेन फार्ये, परं तादृशस्य विघ्नमेव उत्पन्न, येन क्लेशोऽपि तावत् स्यात् । यतस्ते प्रयोजनैर्विधिवाक्यैः तुल्यमेवाद्रियन्ते, तेन अवश्य तद्वदेव प्रयोजनवन्त्यपीति । नियमस्मृतेश्च वेदमूलत्वात् वेदश्च एवमादरः । स च प्रयोजनवत्त्वादृते नोपपद्यते, इति प्रयोजनवत्त्वमपि सामान्येन अनुमाय 'अर्थाद्वा कल्पनैकदेशत्वात्' ( १।४।१४।२५ ) इति सामर्थ्यतः अर्थवादानां स्तुतिर्नाम प्रयोजनविशेषो लभ्यते । 'स्मरणं च दृष्टं' इत्येतदेवाह । अथवा यदेवेदं ग्रन्थस्मरणं पौर्वापर्याविशेषेण अध्येतृपुरुषप्रयोजनवत्त्वाभिप्रायप्रतिपत्तिपूर्वकं प्रयोजनवत्त्वानुमानम् । समाम्नायते च कुतश्चित् वाक्यात् इयं प्रतिपत्तिः इति नाप्रमाण्यम् । अन्यथा हि निष्प्रयोजनान्येतानि इति केचित् परित्यज्यार्थवादान् विधिमात्रं प्रतिपद्येरन् । तत्र दृढस्मरणं एतेषु न स्यात् । अस्ति तु तत् । तस्मान्न प्रमादपाठः । ततश्च अर्थवन्त इति ।

तुल्यं च साम्प्रदायिकं इत्यस्य अपरा व्याख्या—सम्प्रदायः प्रयोजनं यस्य वाक्यस्य येन प्रवर्तितः सम्प्रदायः 'तस्मात् स्वाध्यायोऽध्येतव्यः' इत्येतत् स्वाध्यायस्याविशेषात् विध्यर्थवादयोः तुल्यं, अतः प्रागुक्तेन न्यायेन प्राक् पुरुषार्थसिद्धेः अवसातुं न लभ्यते इति शक्त्यनुसारेण स्थित अर्थवादानां स्तुत्यर्थत्वं इति ।

अप्राप्ता चानुपपत्तिः, प्रयोगे हि विरोधः स्याच्छब्दार्थस्त्वप्रयोगभूतस्तस्मादुपपद्येत । ९ ॥

भाष्यं— अपि च या एषा अनुपपत्तिरुक्ता प्रत्यक्षादिविरोधात् इत्येवमाद्या, सा 'सोऽरोदीत्' इत्येवमादिषु न प्राप्नोति । कुतः ? प्रयोगे हि स्तेयादीनामुच्यमाने विरोधः स्यात् । शब्दार्थस्तु अप्रयोगभूतः । तस्मात् उपपद्यते 'स्तेन मनः, अनृतवादिनी वाक्' इति ।

वृ—उक्तदोषपरिहारः अतः परम् । प्रत्यक्षादिविरोधिका या अत्रानुपपत्तिः विधिकल्पनायामुक्ता, ता असत्यस्य अप्राप्ता मन्यामहे । अथवा इदं स्तुतिव्याख्यानं ता अनुपपत्तिं अप्राप्तं इति व्याख्येयं येषां दृश्यः पाठः । प्रयोगे हि अनुष्ठाने रोदनरपोत्खननविट्मोहस्तेयानृतवादादीनां कल्प्यमाने विरोधः स्यात् । अस्माकं तु पुनः य एषा शब्दानां श्रौतोऽर्थः स नैव विवक्षितः, न च अध्याहारादिभिः विधिः, किं तर्हि स्तुतिमात्रं विवक्षितं, न च तद्विरुध्यते । तस्मादुपपद्येत । अथवा 'शब्दार्थस्तु' इति, विधायकशब्दानुग्रहार्थः सन् अयमर्थवादः, न स्वार्थानुष्ठानेन सम्बध्यते । प्रयोगमप्राप्तः अप्रयोगभूतः । तस्मादुपपद्येत ।

सर्वोऽयं पाठः अप्राप्ता चानुपपत्तिः इति, अत्र मन्यामहे इति वाक्यशेषः । अप्राप्तं चानुपपत्तिः इत्यपरः,

असद्व्याख्यानं इत्यभिप्रायः। अथवा नानुपपत्तिः इत्यपरः, तत्र आमनाये विरोधा इति।

गुणवादस्तु। १०॥

भाष्यं — यदुक्तं विधेरप्य परोचनार्थी स्तुतिः इति, तदिदं कथमवगम्येत, यत्र अन्यत् विधेयं अन्यच्च स्तूयते। यथा 'श्वेतवायव्यमालभेत भूतिकामः वायुर्वै क्षेपिष्ठा देवता' इति एतस्मिन्वाक्ये विधीयते, अपरश्च स्तूयते 'आपो वै शान्ताः' इति। तदुच्यते। गुणवादस्तु। गौण एष वादो भवति, यदत्यभिप्रेते स्तोतव्ये अन्यदन्यत्र स्तूयते। अभिजनो हि एष वेतसावकयोः। तवस्ते जाते। अभिजनसंस्तवेन च अभिजातः स्तुतो भवति। यथा अश्मकाभिजनो देवदत्तः अश्मकेषु स्तूयमानेषु स्तुतमात्मानं मन्यते। एवमत्रापि द्रष्टव्यम्। (अश्मकाः नाम देशविशेषः।) अथ 'सोऽरोदीत्' इति कस्य विधेः शेषः। 'तस्माद् बर्हिषि रजतं न देयं' इत्यस्य। कुतः? साकाङ्क्षत्वात् पदानाम्। 'सोऽरोदीत् यदरोदीत् तद्रुद्रस्य रुद्रत्वम्' इत्यत्र तु इति अनुवादः, तदन्वयात्। तस्य यत् अश्रु अशीर्यत इति, तस्येति पूर्वमङ्गमपेक्ष्य एव। अपरिमिते उत्तरिनस्य 'यो बर्हिषि रजतं ददाति पुराऽस्य संवत्सराद् गृहे रोदनं भवति' इत्यस्य हेतुत्वेन अथ प्रतिनिर्दिश्यते 'तस्माद् बर्हिषि रजतं न देयं' इति। एवं सर्वाणि साकाङ्क्षाणि। कथं निषेधकुर्वन्तीति? गुणवादेन। रोदनप्रभवं रजतं बर्हिषि ददतो रोदनमापद्यते। तत्प्रतिषेधस्य गुणो यद्रोदनमिति। कथं पुनः अरुदति अरोदीत् इति भवति, कथं वा अनश्रुप्रभवे रजते अश्रुप्रभवमिति वचनं, पुराऽस्य संवत्सरात् असति रोदने कथं रोदनं भवतीति। तदुच्यते। गुणवादस्तु। गौण एते शब्दाः। रुद इति रोदननिमित्तस्य शब्दस्य दर्शनात् 'यदरोदीत्' इत्युच्यते। वर्णसारूप्यात् निन्दन् अनश्रुप्रभवमपि अश्रुप्रभवमित्याह। निन्दयैव च धनत्यागे दुःखदर्शनात् 'पुराऽस्य संवत्सरात् गृहे रोदनं भवति' इत्याह। तथा 'यः प्रजाकामः पशुकामो वा स्यात् स एतं प्राजापत्यं तूपरमालभेत' इति आकाङ्क्षित-त्वात् अस्य विधेः शेषोऽयं 'स आत्मनो वपामुदक्खिदत्' इति। कथं गुणवादः? इत्थं नाम, नासन् पशवः, यत् आत्मनो वपामुदक्खिदत् इति। एतच्च कर्मणः सामर्थ्यं, यत् अग्नौ प्रहृतमात्रायां वपायां अत्र तूपर उदगात्, इत्थं बहवः पशवो भवन्तीति। कथं पुनः अनुत्खिन्नायां वपायां प्रजापतिः आत्मनो वपामुदक्खिदत् इत्याह? उच्यते। असद्वृत्तान्तान्वाख्यानं स्तुत्यर्थेन, प्रशंसया गम्यमानत्वात्। इह अन्वाख्याने वर्तमाने इदं निश्चयते यत्र वृत्तान्तरान्, यत्र कश्चित् प्ररोचना द्वेषो वा। तत्र वृत्तान्तान्वाख्यानं न प्रवर्तकं, न निवर्तकं चेति प्रयोजनाभावात् अनर्थकं इत्यविवक्षितम्। प्ररोचनया तु प्रवर्तते, द्वेषान्निवर्तते इति तयोर्विवक्षा। वृत्तान्तान्वाख्यानेऽपि विधीयमाने आर्हिंसना दोषो वेदस्य प्रसज्येत। कथं पुनः तद् निराकरणं अन्वाख्यायते इति, उच्यते। नित्यः कश्चिदयं प्रजापतिः स्यात् वायुः आकाशः आदित्यो वा। स आत्मनो वपां उदक्खिदत् इति वृष्टिं वायुं रश्मिं वा। तामग्नौ प्रागृह्णात् वैद्युते आर्चिषि (जाठरे) लौकिके वा। ततः प्रजाः इति अन्नं वीर्यं वीरुद् वा। तमास्य तत्प्रसूताः प्रजाः प्रजन् प्रभवेति इति गौणाः शब्दाः। 'आदित्यः प्रायणीयश्चरुः, आदित्य उदयनीयश्चरुः' इत्यस्य विधेः शेषः "देवा वै देवयजनमध्यवसाय दिशो न प्राजानन्" इति, आदाद्विप्रतिषेधात्, सर्वव्यामोहाना आदित्यश्चरुः नाशयिता, अपि दिङ्मोहस्य, इति स्तुतिः। कथं असति दिङ्मोहे दिङ्मोहवाद इति? उच्यते। अप्रज्ञातस्य बहोः कार्यस्य उपस्थितत्वात् गौणो मोहशब्दः। अप्रज्ञानतमसावितानाविभि. ज्ञापयति इति गौणता।

वा— यत्र तावत् विधिस्तुत्योः एकविषयता तत्र उपपन्नता नाम, तदन्ये विषयनानात्वे तु कथमिति। गुणादित्याह। यत् क्रियायाः अभिप्रेते स्तोतव्ये तदन्यदन्यत्र स्तूयेत, अथवा तद्विकारे प्रकृति-स्तुतिरिति विधानार्थं स्तोतव्ये, तदन्यदन्यत्र प्रकृतिः स्तूयते, तत्र तद्द्वारेणापि लोके वेदे च स्तुतिसिद्धेः प्रकारान्तरता, तस्माददोषः। एतस्मात् सूत्रैः अर्थवादप-

रिवान् वक्ष्यति । शान्ताभिरद्भिः सजतो विकारः शान्तिहेतुर्भवन् यजमानस्य कष्टं शमयति इति । गुणवादमूलेण सुदेनैव तावत् रोदनाद्युदाहरणभपरिहारः । शेषसूत्राण्यपि एतदुक्तोपपादनार्थतया समन्वयन्ते । तत्र उदाहृतानां गौणतानिमित्तं किंचित् इहैव वक्ष्यते, पर तु नसिद्धिमूले ( १।८।१२।२३ ) सोऽरोदीत् इति साकाङ्क्षत्वेन एकवाक्यता विधिस्तुत्योः प्रथममेवं कथ्यते । स इति सकृतापेक्षः । कुतः ? तत्प्रत्ययात् । तद्धि प्रकृतं प्रतीयते । अथवा तच्छन्दस्य प्रकृताद्दिश्य प्रसिद्धम् । सः इत्युक्ते तच्छब्दप्रत्ययात् स एवार्थः । एवं तस्य यदश्रु, तत् रजतं इति सम्बन्धः । यथा चेयं उपरितनस्य निन्दारूपस्य उत्पत्तिः इति तदनन्तरं तदभिधानमुपपद्यते । कोऽसौ ग्रन्थः ? न दर्शयति, यो बर्हिषि रजतं दद्यात् पुराऽस्य संवत्सरात् गृहे रोदनं भवेदिति । येन हेतुना तदेवं भवति इति, तदुपपाद्यते । कारणानुरूपत्वात् कार्यस्य रोदनप्रभवरजतदानात् रोदनोत्पत्तिः, तस्मात् देयं इति सकलं अदानस्य उपपत्तिरिति । निन्दया तच्छेषत्वं अर्थवत् । गुणवादस्तु शब्दात्मकत्व स्वशब्दोपस्थापितविज्ञानप्रयोग रोदनसामान्यम्, अदृष्टकल्पना । अश्रुणश्च शौक्ल्यात् यदि नाम एतत् कठिनं भवेत्, ततो रजतखण्डं भवेत् इत्युत्प्रेक्ष्य तत्प्रभवनिन्दा । धनत्यागेन अत्यन्तोदारस्यापि मनः पीड्यते इति तत्सामान्याद् रोदनोपन्यासः ।

एव येन येन विहारूपेण निन्दाविधानोत्पत्तिः प्रतिषेधोपकारिणी इति मुख्यार्थाभावेऽपि अदोषः । एव यथोत्पन्नतादिप्रयोजनता । स्वाभाव्यो स्तवनेनापि हि विशिष्टपरोक्षार्थं कर्माणि क्रियन्ते, विमुक्त यावद्धनत्यागेन इति स्तुतिः । यथा 'नेममपि उद्धृत्य अग्र ददाति' इति लोकेऽपि त्यागिनं स्तुवन्ति इति । वृत्तान्तपरिवर्तायी च वेदः तत्र प्रामाण्यमप्रतिपद्यमानः स्मृतौ सत्यत्वात् नान्यमान्यपरमर्हति इति निष्प्रयोजनोपाख्यानसत्यतया नार्थः । शब्दमात्रताऽत्र वा अर्थवादः ।

सा च प्रवृत्तिः विज्ञानमात्रेणैव उपयुज्यते नार्थेन । अर्थाभिधायां तु सर्वेष्वविवादः सिद्ध एव । अथोच्येत, अवश्यागम्यमानेन स्तुतिनिन्दात्मभिनि सुतरां तत्र प्रतीयते । स्वप्न परमार्थे यथार्थो भवन्ति, यदत्र स्तुतिर्निन्दा वा, सत्यमेवैतदिति । असत्ये यस्मादन्यत्र दुष्टमपि अवधूतं इह गुणवत्तामिति ब्रवीति अतो नूनं मे प्ररोचयति, तथा गुणवन्त सन्तं निन्दति निवर्तयितु इति । ततश्च एवं विदित्वा यो यस्य अनतिक्रमणीयः, तदनुरोधेन स तथा प्रवर्तते । वेदश्च प्रमाणं इति स्थितम् । नेन प्रवृत्तिनिवृत्त्यनुग्रहणीये स्वसंवेद्ये अर्थे पुंसः प्रशस्ताप्रशस्तज्ञाने भवतः । इह ते वेदेन उत्पादिते । तस्मात् तदनुरूपं व्यवहर्तव्य इति । लोकेऽपि या क्रिया फलान्तरयुक्ता मेधाविहेतुत्वेन आप्ता मन्यन्ते, तस्यां क चित् प्रवर्तयन्तः तदभिप्रेतं सौभाग्यादि फल असत्यमपि तदन्यस्य निवृत्ते । तत्प्रवृत्तश्च इतरोऽपि क्रियाऽऽश्रयं फलं प्राप्नोति । यद्यपि च प्रविपत्ता जानाति, नैतदत्र पारमार्थिकं फलं, मदभिप्रायानुसारेण एतैरुपन्यस्त, सर्वथा अपुरुषार्थे मा न प्रवर्तयन्ति तत्सत्यं नाम एतत्, किमपि अन्यद्याचयामि इति ज्ञात्वा अनुतिष्ठति । एवं वेदेऽपि विधिना तावत् फलमवगमितं अर्थवादास्तु असत्येन नाम प्ररोचयन्तु, न तद्गते सत्यत्वासत्यत्वे किंचित् दूषयतः, प्रवर्तमानमानस्य स्तुतिन्यायात् । यत्तु परस्तात् भविष्यति तत् विधेरुपरिगत इति निश्चित्य नैव विद्वांसो न प्रवर्तन्ते । तस्मात् उपाख्यानासत्यत्वं अतन्त्रम् । नहि शुक्तिकादर्शनानन्तरं यदि रजतान्तरं तद्देशे लभते ततोऽभिधीयते शुक्तिज्ञानं तु किंचित् आलम्बनं ( इति ) ।

श्रुतिसामान्यमात्रेण सर्वत्र योजनीयम् । यथेह महाभूतानि प्रजाः पान्ति इति प्रजापतित्वेन उच्यन्ते । वाय्वादीनां यथाक्रमेण मध्यवर्तिनः सारा सृष्ट्यादयः यथा, तासां सति तेनैव क्रमेण येषुते सृष्टि आसीत्सि शरीरान्तर्वर्तिनि वायु अन्तश्चरत्वसामान्यात्, रश्मि लौकिके तदाप्यायनात्तस्य । सत. अत. इति बीजादीनां सामान्येन अनादित्वात् अजन्मप्रसिद्धेः । तथाऽन्य प्राप्य प्रजाः पशून् आप्नोति । सर्वप्रजानां बीजादिपरिणामप्रभवत्वात् इत्यालम्बनम् ।

सुधा—वृष्ट्यादीनां यथात्वं मध्यवर्तिभावत्वम्भगुणयोगेन उपपादयति । वृष्ट्युत्सरणमानयोः पाणयत्तरात् तन्मध्यवर्तित्वं 'सर्वेभ्योऽन्तं मरुतो गृणन्ति' इत्यादौ च वृष्टिहेतुत्वेन मारुतस्तुतौ तत्कारणं वृष्टेः । मरुद्भाग-

भावे वायोरुत्पत्तेः तन्मध्यवर्तित्वं, वायुरहितस्य च अन्तरिक्षाकाशस्य ऊष्मनुत्पादकत्वात् तत्सारत्वम् । रश्मेः आदित्यावयवत्वात् तन्मध्यवृत्तित्वं रश्म्याधत्तत्वाय प्रकाशकत्वस्य तत्सारत्वम् । धेनुतस्य अविच्छिन्नत्वप्रसिद्धेः वृष्टेर्निर्दोषकल्पना । कश्यपशब्दस्य शरीरवाचित्वात् तदन्तर्वर्तिभिः आर्त्विजः । तस्मिन् वायोः निक्षेपकल्पनाया आत्मनो अन्तश्चरत्वसामान्यम् । 'आदित्यो वा अस्तं यन् अग्निमनुप्रविशति' इत्यादिदर्शनात् स्वरूपेण स्वर्गस्थस्य आदित्यस्य भूमिष्ठाग्निप्रवेशायोगात् रश्मिप्रवेशकल्पना । भौमादेर्जलस्य ऊष्मणा विना प्ररोहादर्शनात् तस्य च तेजोगुणत्वात् 'आग्नेय्यो वा ओषधयः' इति च लिङ्गात् अग्न्युदकसंयोगजत्वोपपत्तेः तत्सामान्यात् वृष्टिरेतुतसंयोगस्य कारणत्वाभिधानम् । नाड्याभिपाचितस्य अन्नरसस्य व्यानाख्येन वायुविशेषेण अस्थिभूतेभ्यो विण्मूत्रादिभ्यो विविक्तीकृतस्य चरमधातुरूपेण परिणामात् वायोः बीजकारणत्वाभिधानम् । धीवरादेः मीनादिवदेव मौमाग्निजन्यत्वात् निदाघकाले च प्ररोहदर्शनेन आदित्यरश्मिजन्यत्वागमात् रश्म्यग्निसंयोगजन्यत्वम् । ( पृ. ५९-६० )

( व्याख्यानमयं वैनविषके 'युगपद्दर्शिन' ) वा-- ( पृ. १२६ ) एतस्मिंस्तु प्रकरणे अयं तात्पर्यनता, किन्तु स्तुतित्वमेव दीयते । अत. स्तुतिलक्षणत्यागेनैव स्वार्थपरता वर्णयामः । मन्त्रार्थवादनिन्दाप्रामाण्यात् धृतिप्रम्यौ दृश्येते । ( सुधा तु ' वस्तुतस्तु सिद्धिप्रत्याभानेऽपि मन्त्रादिव्याख्याऽऽरम्भकत्वेन उपायमानतया तदङ्गीकरणं इति भावः । ' इत्याह ) । तत्र सुप्रभातो प्रजापतिरेव योगी तस्मिन् काले पुण्यकर्मोद्भवाभ्युदयमेव, पशूनामभावात् स्वमाहात्म्येन 'आत्मन एव पशुरूपं अभिनिर्माय वपोत्खननादि कृतवान् । तत. अश्वमात्रे एव, कर्माणि तूपरः पशुरन्वियात' । इति ईदृश इव कर्म प्रत्यासन्नफलम् । एवं च महता यत्नेन प्रजापतिना चरितं इति कर्म सत्यमेव । प्रतिपत्ति च स्तुतिलिङ्गन्यायेन तुल्यनामप्रभावव्यापारवत्त्वपत्तेः नातिसताप्रसङ्गः इति । ( दिङ्मोहोदाहरणे देवशब्दार्थमाह-- ) कर्मसु कौशलेन दीव्यन्तीति देवाः ऋत्विजः । ते देवयजनाध्यवसानानन्तरं दर्शपूर्णमासयोः अनभ्यस्तं लौकिकं कर्मराशिं आलोच्य कथं अविदितं करिष्यामः इत्याकुलीभावसामान्यात् दिङ्मोहाभिधानम् । तथा च लोके कर्तव्यतासु 'दिशो मे परिभ्रमन्ति' इति व्यवहारो भवति । तत्र तद्व्यदासेन अदितिनियमः प्रशस्यते । कथं तु तद्--व्युदसनं ? अवधारणावशाद्वचनात् । यावद्धि प्रायणीयाया प्राकृतानि अनभ्यस्तानि कर्माणि क्रियन्ते, तावत् इतरेषु भविष्यत्सु प्रणिधानं भवति । अन्यथा सर्वस्मिन् अप्राकृते निरवकाशत्वात् अनवधारणं स्यात् । तेन आदित्येनैव पत्त्यापितं इति मोहापनयेन स्तुतिः ।

रूपात् प्रायात् ॥ ११ ॥

भाष्यं-- 'हिरण्यं हस्ते भवति अथ गृह्णाति' इति साक्षाद्वचनस्य विधेः शेषः 'स्तेनं मनः' 'अनृतवादिनी वाक्' इति । निन्दावचनं हिरण्यस्तुत्यर्थेन । यथा विमृषिणा, वैयदान एव भोजयितव्यः । कथं पुनः अक्षेन मनः निन्दितुमपि स्तेनशब्देनोच्यते, वाचं च अनृतवादिनीमपि अनृतवादिनीति ब्रूयात् ? गुणवादस्तु रूपात् । यथा स्तेनाः प्रच्छन्नरूपा, एवं च मनः इति गौणः शब्दः । प्रायश्च अनृतवादिनी वागिति ।

वा-- इदं सर्वं क्रियमाणं मनसा संकल्प्य वाचा चाभिधाय क्रियते, तत् अत्यन्तान्तरङ्गभूतयोरपि अनयोः दूरेण हिरण्यादूनत्वं स्तेयानृतवाद्योगादिति या निन्दा तस्मानर्थकतापिनी, सा विधायका भवति । विधिपरा तु स्तुत्यर्था बाधते तदुपपादनस्य दृष्टार्थत्वात् यथा वक्ष्यति 'न चेदन्यं प्रकल्पयेत् प्रक्लृप्तावर्थवादः स्यात्' ( १०। ८।४।७ ) इति ।

दूरभूयस्त्वात् ॥ १२ ॥

भाष्यं-- दृष्टविरोधे उदाहरणं 'तस्मात् धूम एवाग्नेर्दिवा ददृशे नार्चिः' 'तस्मादर्चिरेवाग्नेर्नक्तं ददृशे न धूमः' 'इति अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा इति सायं जुहोति, सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति प्रातः' इति विधलिङ्गमन्त्रयोर्विधानस्य व्यवहारदृष्टित्वात् शेषः । उभयोर्देवतयोः संनिधाने होमः इति स्तुतेरुपपत्तिः । दूरभूयस्त्वात् धूमस्य अग्नेश्च अदर्शने योगः शब्दः ।

वा— ' तस्माद् धूम एव ' इति दिवा अग्निरादित्यं गच्छति इत्यस्य उपपत्तित्वेन । तदिदं किमर्थमुच्यते ? मिथलिङ्गाग्निहोत्रमन्त्रविधिमुत्तरार्थम् । कथं पुनः ' अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा ' ' सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा ' इत्यनयोर्मिथलिङ्गत्वम् ? यदा विविक्तौ एव अग्निसूर्यौ देवतात्वेन उपलभ्येते । केचिदाहुः, अग्निर्ज्योतिः इत्यत्र ज्योतिःशब्दः सूर्यवाची, सूर्यो ज्योतिः इति पुनः अग्निवाची, तेन उभौ मिथलिङ्गौ इति । तदयुक्तम् । ज्योतिःश्रुतेः तेजःसामान्यवाचित्वेन उभयत्र सामानाधिकरण्येन उपपत्तेः । अन्यतरपर्यायश्च सन् इतरत्र न प्रयुज्येत । नहि यो यत्पर्यायः स तेनैव सह प्रयुज्यते । सूर्यवाची सन् प्रातर्मन्त्रे न प्राप्नोति, अग्निवाची सायंमन्त्रे । तस्मात् उदाहरणं भ्रान्तिलिखितं, इति इमौ उदाहर्तव्यौ, ' अग्निर्ज्योतिर्ज्योतिः सूर्यः स्वाहा, सूर्यो ज्योतिर्ज्योतिरग्निः स्वाहा ' इति । तद्विधेश्च स्तुतिः प्रथमविहितकेवलदेवत्यमन्त्रपर्युदासेन मिथलिङ्गविधानोपपत्तिः इयमुच्यते, यदनयोर्मिथत्वं दिवा अग्रेरनुप्रवेशात् नक्तं चादित्यस्य, इति केनलिङ्गा न युक्तेति । अस्मिन्नपि तु व्याख्याने पर्युदसनीयत्वेनैव पूर्वमन्त्रोदाहरणं, इतरौ तु स्तुतिभागिनौ मिथलिङ्गाभिधानादेव शास्येते इति नोदाहृतौ इति भाष्य नेयम् । अथ वा उभयोः केवलमिथलिङ्गयोर्मध्ये पठितोऽयमर्थवादः । तत्र उभयदेवत्ययोः अन्या प्रशंसा, इतरयोः पुनरियं, यस्माद्दिवा अग्निरादित्यं गच्छति तस्मात् सूर्य एव सदा ज्योतिः । एवं नक्तमग्निः, अतस्तौ व्यवस्थितावेव ज्योतिष्मन्तौ इति स्तुतिः । कथं तु धूम एवेत्यवधारणा ? दूरस्थैः भूम्ना दिवा धूम एव दृश्यते, रात्रौ अर्चिः इति येन विद्येन स्तुत्यालम्बनम् ।

व्यपराधात् कर्तुश्च पुत्रदर्शनात् । १३ ॥

भाष्यं— दृष्टविरोधे एव उदाहरणं ' न चैतद् विद्मः ' इति । तत् 'प्रवरे प्रवियमाणे देवाः पितर इति ब्रूयात्' इति आकाङ्क्षितत्वात् अस्य विधेः शेषः । अब्राह्मणोऽपि ब्राह्मणः प्रवरानुमन्त्रणेन स्यात् इति स्तुतिः । दुर्ज्ञानत्वात् अज्ञानवचनं गौणम् । व्यपराधेन कर्तुश्च पुनर्दर्शनेन । ' अप्रमत्ता रक्षत तन्तुमेन ' इत्यादिना दुर्ज्ञानम् ।

वा— प्रवरे प्रवियमाणे यजमानो वदेत् ' देवाः पितरः ' इत्यादि । तत्प्रशंसार्थं उक्तं अब्राह्मणोऽपि ब्राह्मणो भवति प्रवरानुमन्त्रणेन इति । तत्र प्रसिद्धब्राह्मणस्यानस्यैव ब्राह्मण्यलाभो निष्प्रयोजनः इति तदुपपत्त्यर्थमुक्तं ' न चैतद् विद्मः ' इति । ज्ञायमाने तु अज्ञानवचनं दुर्ज्ञानत्वात् । यत् सुखेन अज्ञानं तदज्ञानमेव । तच्च व्यपराधनिमित्तम् । सत्यपि च व्यपराधे यदि मातुरेव क्षेत्रिणो वा पुनः स्यात्, ततस्तयोः प्रसिद्धजातित्वात् नैव दुर्ज्ञानता भवेत् । तयोरपि एवम् । एवं तत्पूर्वजयोः । इत्यनादिन्यायेन जातिव्यभिचारैनैव । यतस्तु ' माता भस्त्रा पितुः पुत्रः ' इति स्मर्तृणां दर्शनं, जनयितुश्च नानाजातित्वोपपत्तिः, तेन वर्णसंकरः । वेदेऽपि च ' अप्रमत्ता रक्षत तन्तुमेन ' इति जातिविच्छेददर्शनं व्यपराधे कर्तृपुत्रनिमित्तमेव उपपद्यते । अन्यथा हि अपरिरक्ष्यमाणेऽपि नैव स्वजातितन्तुविच्छेदो भवेत्, तेन अस्ति प्रशंसाऽवसरः इति । निरूढब्राह्मण्यप्रवरसंकीर्तनात् जन्मभवोऽयं इति ज्ञानात् ब्राह्मणः कृतो भवति इति स्तुतिः ।

आकालिकेप्सा । १४ ॥

भाष्यं— शास्त्रदृष्टविरोधे उदाहरणं 'को हि तद्वेद' इति ' दिक्ष्वतीकाशान् करोति ' इति आकाङ्क्षितत्वादस्य विधेः शेषः । प्रत्यक्षफलत्वेन स्तुतिः । अनवधारणवचनं विप्रकृष्टकालफलत्वात् गौणम् ।

वा— यत् तदानीमेव उत्पद्यते तत् आकालिकम् । तच्च सर्वलोकस्य अभिमतं, न यत् चिरभावि । तस्मात् प्रवर्ग्यकाले दिक्षु अतीकाशकरणं प्रवर्ग्यस्य प्रशस्यते । तद्धि तत्फलं धूमकरैश्वानलुमदात् । इतरत्तु कर्मजन्य सत् कदा चित् भविष्यति । कः तद्वेद ? ज्ञाननीयत्वं हि तत्, इदं तु सर्वप्रत्यक्षम् । तदपेक्षया च ज्ञायमानेऽपि अज्ञायमानवचनं इतरप्रशंसार्थम् । पाठान्तरं 'आकालिकद्वायन्तवचने' इति (पा० ५।१।११४, अत्र कैयटः, आदिः जन्म, अन्तो विनाशः । एकः कालो आद्यन्तौ यस्य असौ आकालिकः । जन्मविनाशयोश्च

꣸ अर्थाभिधानसंयोगान्मन्त्रेषु शेषभावः स्यात्, तत्राचोदितमप्राप्तं चोदिताभिधानात् । ९।१।१२।३६ ॥

दर्शपूर्णमासयोः 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामि' इति निर्वापमन्त्रः । अत्र सवितृ–अश्वि–पूष–शब्दाः कर्मसमवेतमर्थमभिदधति तेन तेषां विकृतौ यथायथं ऊहः, किंवा एते शब्दाः कर्मसमवेतमर्थं नाभिदधति इति विकृतौ तेषां न ऊहः इति विचारे 'अर्थाभिधानसंयोगान्मन्त्रेषु शेषभावः स्यात्' इति सूत्रांशेन पूर्वपक्षमाह । मन्त्रेषु 'सवितुः प्रसवे, अश्विनोर्बाहुभ्यां, पूष्णो हस्ताभ्यां' इति भिन्नेषु मन्त्रेषु विद्यमानानां सवित्रादिपदानां देवतावाचकानां शेषभावः शेषत्वं कर्माङ्गत्वं स्यात् । अर्थाभिधानसंयोगात् कर्माङ्गभूतस्य देवतारूपस्य अर्थस्य यदभिधानं प्रकाशनं, तेन संयोगात् वाचकतया संबन्धात् । तथा च कर्माङ्गत्वप्रकाशकत्वेन कर्मसंबन्धात् 'सवितुर्जुष्टं निर्वपामि, अश्विनोर्जुष्टं निर्वपामि, पूष्णो जुष्टं निर्वपामि' इति प्रकृतौ तेषामपि देवतानां हविर्दातव्यम् । अग्न्यादिना एषां विकल्पः स्यात् । तस्मादूहः । इति पूर्वपक्षः ।

अथ 'तत्राचोदितमप्राप्तं चोदिताभिधानात्' इति सूत्रांशेन सिद्धान्तमाह । चोदिताभिधानात् चोदितः विधिविहितः योऽयं अग्निः अग्नीषोमौ उपांशुयाजदेवता च प्राजापत्यादिः, तस्यैव चोदितस्य मन्त्रेण अभिधानात् । तत्र पूर्णमासकर्मणि एव दर्शकर्मणि अचोदितं सवितृ–अश्वि–पूषदेवतारूपं, अतः ऊहं अप्राप्तं स्यात् । न तद्वाचकशब्दानामूहः कर्तव्यः । दर्शपूर्णमासकर्मणि आग्न्यादय एव देवता विहिताः न सवित्रादयः । तस्मात् सवित्रश्व्यादिशब्दाः न कर्मसमवेतार्थाभिधायिनः, इति न सवित्रश्व्यादिशब्दानामूहः प्रकृतौ विकृतौ वेति सिद्धान्तः ।

एकस्मिन्नेव सूत्रे तुशब्दवाचशब्दादिपाठं विनैव पूर्वोत्तरपक्षयोः प्रतिपादनं 'विचित्रा सूत्राणां गतिः' इति न्यायेन ।

ततश्चावचनं तेषामितरार्थं प्रयुज्यते । ३७ ॥

दर्शपूर्णमासयोः 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामि' इति सवित्रादिशब्दैः प्रसवादय एव सवित्रादयः प्रकाश्यन्ते, इति कथं तेषां कर्मणि अविवक्षितत्वं उच्यते, इति शङ्कायां आह सिद्धान्ती । तत्र तैः सवित्रादिशब्दैः तेषां कर्मसमवेतानां देवतानां अवचनं, न वचनं भवति । विधौ या देवतास्ता एव कर्मसमवेताः । आग्न्यादिषु विधिविहितासु सतीषु केवलं मन्त्रलिङ्गात् सवित्रादीनां कर्मसमवायित्वं स्वीकर्तुं न शक्यते । ननु तर्हि किमर्थं निर्वापमन्त्रे सवित्रादीनां पाठः ? उच्यते । इतरार्थं निर्वापप्रशंसार्थं तत्साहचर्यार्थं निर्वापमन्त्रे सवित्रादिशब्दाः प्रयुज्यन्ते । अतो विकृतिषु सवित्रादिशब्दा नोहितव्याः । नापि सवित्रादीनामन्यत्रोत्कर्षः । के

० अर्थाभिधानसंयोगात्० इत्यधिकरणे देवस्य त्वेत्यादिपदानामेव उच्चारणमात्रार्थत्वे भिन्नप्रयोजनकत्वेन निर्वपामिपदैकवाक्यतानुपपत्तेः तद्वशात् देवस्य त्वेत्यादिपदार्थविशिष्टनिर्वापप्रकाशनस्यैव अभ्युदयकारित्वनियमात् तेषामपि स्वार्थाभिधायकत्वं वक्ष्यते । कौ. १।२।४२ पृ. ७२

* अर्थावगतौ न श्रुतत्वमेव कारणं, किं तर्हि ? प्रकरणादिकमपि । ऋजु पृ. १.

* अर्थावबोधः अध्ययनोत्तरकालभावी इति न तन्मुखेन कर्मविधीनां प्रयोजकत्वम् । अत एव दर्शनानियमवद् दृष्टोऽपि अर्थावबोधः अधिकारिविशेषणतया न परिगृह्यते । अध्ययनपूर्वकत्वात् अर्थावबोधस्य प्रागध्ययनात् सामर्थ्याऽनुपपत्तेः । उत्तरकालभावित्वेन च अर्थावबोधोऽपि प्रयोजनान्तरं न स्वीक्रियते । ऋजु. पृ ९.

* अर्थी समर्थोऽधिक्रियते इत्युक्तम् (भा. ६।१।२।५) । भा. १०।१।२२।५६.

꣸ अर्थी समर्थो विद्वानधिक्रियते इति न्यायः । अयं सदर्थः, जैमिनीये । तथाहि– 'तस्मात्सामर्थ्यमात्रेऽवबोधे भाष्यवेदान्तादिष्विष्टे– 'अर्थी समर्थो विद्वान धिक्रियते ' इति न्यायेन दर्शपौर्णमासादिविषयाऽवबोधमपेक्षमाणस्तदवबोधे स्वाध्याय विनियुङ्क्ते ' इत्यादि । साहस्री. ७१९.

सू अर्थैकत्वादेकं वाक्यं, साकाङ्क्षं चेद्विभागे स्यात्। २।१।१५।४६ ॥

अथ प्रश्लिष्टपठितेषु यजुःषु कथमवगम्यते इयदेकं यजुरिति । मन्त्रविषये निरूपिते नियतेयो मन्त्र इत्याकाङ्क्षाया ऋक्सामयोः परिमाणस्याप्येतृपरपरासिद्धत्वात् प्रश्लिष्टपठितेषु यजुःषु कियदेकं यजुरित्याकाङ्क्षाया तत्परिमाणलक्षणं क्रियते । अत्राय पूर्वपक्षिणोऽभिसन्धिः— न तावदर्थैकत्वादेकं वाक्यं, तथा सति प्रतिपदमर्थभेदेन वाक्यभेदप्रसङ्गात् । नापि विभज्यमानसाकाङ्क्षत्वं, एव च सति 'स्योनं ते सदनं कृणोमि घृतस्य धारया सुशेवं कल्पयामि' इत्यस्य 'तस्मिन्सीद' इत्यनेन सहैकवाक्यत्वप्रसङ्गात् । नापि मिलितमेकवाक्यत्वलक्षणं, एकं हि पदमेकार्थं, न तद्विभज्यमानसाकाङ्क्षम् । तथानेकार्थं प्रतिपदमर्थभेदेनैकार्थ्याभावात् । तदुक्तं 'एकार्थत्वं पदस्य स्यात् साकाङ्क्षावयवं न तत् । साकाङ्क्षावयवः सम्परस्तत्रैकोऽर्थो न विद्यते ॥' इति । (वा. पृ. ४४६) अतो 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामि' इत्येवमादियजुषामपि नियतोपायाधीनमेव परिमाणपरिज्ञानमिति । एवं प्राप्ते अभिधीयते । भवेदेव मन्त्राभिधेयवचनोऽयमर्थशब्दो भवेत्, प्रयोजनवचनस्त्वयम् । तेन यावन्ति पदान्येकप्रयोजनानि विभागे च साकाङ्क्षाणि तावन्त्येकं वाक्यम् । तेनार्थैकत्वं विभज्यमानसाकाङ्क्षत्वं च मिलितमेवैदमेकवाक्यत्वलक्षणम् । अतो न प्रतिपदमेकवाक्यम् । प्रतिपदमभिधेयभूतार्थनानात्वेऽपि 'देवस्य त्वा' इत्येवमादिषु प्रयोजनभूतस्यार्थस्य एकत्वादेकवाक्यत्वमेव । 'स्योनं ते सदनं कृणोमि' इत्यस्य 'तस्मिन्सीद' इत्यनेन सहैकवाक्यत्वं, विभज्यमानसाकाङ्क्षत्वेऽपि सदनकरणपुरोडाशप्रतिष्ठापनरूपप्रयोजनभेदात् । तथा 'भगो वां विभजतु, अर्यमा वां विभजतु' इत्येवमादिषु पुरोडाशविभागरूपैककार्यत्वेऽपि विभज्यमानसाकाङ्क्षत्वाभावान्नैकवाक्यत्वम् । एतच्च न केवलं यजुर्मन्त्रमात्रविषयं लक्षणं, किन्तु ब्राह्मणवाक्यलौकिकवाक्ययोरपीति । तदुक्तं 'सामान्यदेषु वाक्येषु श्रूयमाणेषु दृश्यते । विस्पष्टमेकमर्थस्य वाक्यानामेकवाक्यता ॥' इति । (वा. पृ. ४४६) प्रयोजनम्— पूर्ववत् प्रतिपत्तिलाघवमेव । सूत्रं तु सुबोधमेवेति ।

सू अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद् विभागे स्यात् । २।१।१४।४६ ॥

प्रश्लिष्टपठितेषु यजुःषु इदमेकं यजुः इति कथमवगम्यते, अतः एकवाक्यलक्षणमाह । अर्थैकत्वात् अर्थस्य प्रतिपाद्यस्य एकत्वात्; एकार्थप्रतिपादकं एकं वाक्यम् । यावता पदसमूहेन एकोऽर्थो विशिष्टः प्रतिपादयितुं शक्यते तावान् पदसमूहः एकं वाक्यम् । यदि च विभागे क्रियमाणे साकाङ्क्षं पदं स्यात् । भवति किं चिदेकार्थं, न तु विभागे साकाङ्क्षं यथा 'भगो वा विभजतु, अर्यमा वां विभजतु' इति । भिन्नमिदं वाक्यं विभागे विकल्प्यते । अथ विभागे साकाङ्क्षं एकं यजुः इत्युक्ते 'ऋताषाडृतधामाऽग्निर्गन्धर्वस्तस्यौषधयोऽप्सरस ऊर्जो नाम स इदं ब्रह्म क्षत्रं पातु ता इदं ब्रह्म क्षत्रं पान्तु तस्मै स्वाहा ताभ्यः स्वाहा' इत्यादिराष्ट्रभृद्धोमेषु द्विःस्वाहाकारमेकैकं यजुः स्यात् । तत्र विभागे साकाङ्क्षतायामपि एकवाक्यत्वं मा भूत् इति अर्थैकत्वात् इत्युक्तम् । के.

● अर्थैकत्वादेकं वाक्यं इत्यत्र अर्थशब्दस्य प्रयोजनवाचित्वाभ्युपगमः । सु. पृ. ८६७. ● 'यजतिषु येयजामहं करोति, नानुयाजेषु ।' ननु अर्थैकत्वात् इत्ययं न्यायोऽत्र नास्ति, येन एकवाक्यता स्यात् । उच्यते । सत्यं अयं न्यायो नास्ति, किन्तु येयजामहं विपरिवर्तमानमनूद्य पर्युदासार्थो विधीयते । टुप्. १०।८।१।४ पृ. २०५९. ● अर्थैकत्वादेकं वाक्यं (२।१।१४।४६) इत्यनेन न्यायेन प्रश्लिष्टपठितानां यजुषां परिमाणं ज्ञेयम् । इदमेव एकवाक्यताऽधिकरणम् । सोम. २।१।१२. ● अर्थैकत्वाधिकरणे (अर्थैकत्वादेकं वाक्यं २।१।१४।४६) भिन्नप्रमितिविषयानेकमुख्यविधेयप्रवाहित्य अर्थैकत्वस्य ढकमस्वामिः । कौ. २।२।७।२० पृ. २३६.

सू अर्थैकत्वाद्विकल्पः स्यादृक्सामयोस्तदर्थत्वात् । ९।२।७।२९ ॥

इदमेव सूत्रम् । तत्रयं 'अर्थैकत्वाद्विकल्पः स्यात्' इत्यवयवः पृथक्कृत्य अधिकरणान्तरत्वेन भाष्यकारैर्व्याख्यातः । सिद्धान्तपरत्वायं सूत्रावयवोऽत्र । सामवेदे

ष्टहस्तं गीत्युपायाः । आभ्यन्तरप्रयत्नजनितस्वरविशेषाणाम् अभिव्यञ्जिका क्रिया गीतिर्नाम । सैव साम इत्युक्तम् । तत्सम्पादनार्थाः ऋगक्षरविकारः, विश्लेषः, विकर्षणं, अभ्यासः, विरामः, स्तोभः इत्येवमादयः उपायाः । तेषां किं समुच्चयो विकल्पो वेति विचारे सिद्धान्तमाह । तेषामुपायानाम् अर्थैकत्वात् गीतिनिर्वर्तनरूपफलैक्यात् विकल्पः स्यात्, न समुच्चयः इति । के.

**अर्थैकत्वाद्विकल्पः स्यादृक्सामयोस्तदर्थत्वात् । ९।२।८।१९ ॥**

अत्र वर्णकत्रयम् । तत्र प्रथमं 'ऋचा स्तुवते' 'साम्ना स्तुवते' इति श्रूयते । तत्र ऋचा साम्ना वा स्तोतव्यमिति विकल्पः, उत साम्नैवेति नियमः इति विचारे पूर्वपक्षमाह । अर्थैकत्वात् स्तुतिरूपैकार्थसाधकत्वात्, ऋक्सामयोः तदर्थत्वात् सः स्तुतिरूपः अर्थः प्रयोजनं ययोः ते तदर्थे, तदर्थत्वात् स्तुतिफलकत्वात् ऋक् च साम च तयोः विकल्पः स्यात् । न समुच्चयः । अचतुरविचतुरेत्यादिना ऋक्सामेति अजन्तत्व निपातनम् । इदं अर्थैकत्वाधिकरणम् ।

**अथ द्वितीयं वर्णकम्** । द्वादशाहगते दशमेऽहनि पत्नीसंयाजोत्तरं मानसस्तोत्रात् प्राक् ( ताण्ड्ये ४।९।१ ) 'अयं सहस्रमानवः इत्येतया आहवनीयमुपतिष्ठते' इति सामवेदे श्रूयते । अनया ऋचा किं प्रगीतया उपस्थातव्यं अप्रगीतया वेति विचारे पूर्वपक्षमाह । ऋक्सामयोरिति ऋक्शब्देनात्र अप्रगीता ऋगुच्यते सामशब्देन च प्रगीता । तयोः उपस्थानरूपस्यार्थस्य एकत्वात् विकल्पः इति ।

**अथ तृतीयं वर्णकम्** । केचित् त्रैस्वर्येण मन्त्रान् अधीयते केचित् चातुःस्वर्येण । त्रैस्वर्यं उदात्तानुदात्तस्वरिताः । चातुःस्वर्यं उदात्तानुदात्तस्वरिततानाः । तानो नाम एकश्रुतिः । तत्र त्रैस्वर्यचातुःस्वर्ययोः समुच्चयासंभवात् ऋक्सामयोः त्रैस्वर्यचातुःस्वर्ययोः विकल्पः स्यात् स्तुत्यर्थत्वेन अर्थैकत्वात् । अत्र ऋक्शब्देन त्रैस्वर्यं, सामशब्देन च चातुःस्वर्यं लक्षणया ग्राह्यम् । एवं वर्णकत्रयेऽपि विकल्प इति पूर्वः पक्षः ।

**वचनाद्वा विनियोगः स्यात् । २० ॥**

स्तुतौ साम्नः विनियोगः स्यात् ऋक्निन्दया साम्नो वचनात् । वाशब्दः पूर्वपक्षव्यावृत्त्यर्थः । 'यदृचा स्तुवते तदसुरा अन्ववायन्, यत् साम्ना स्तुवते तदसुरा नान्ववायन्, य एवं विद्वान् साम्ना स्तुवीत' इत्यत्र ऋचं निन्दित्वा साम प्रशस्य लिङा साम विहितम् । तस्मात् साम्नैव स्तोतव्यं इति सिद्धान्तः ।

**अथ द्वितीयं वर्णकम्** । आहवनीयोपस्थाने विहितायाः 'अयं सहस्रमानवः' इति ऋचः प्रगीताया एव विनियोगः स्यात् । 'अयं सहस्रमानवः इत्येतया' इति वचनात् । एतया इति प्रकृतवचनः शब्दः, प्रगीता च सामवेदे प्रकृता । यद्यपि सामवेदे अप्रगीताऽपि समस्ति तथापि सा प्रमाणार्थैव । तस्मात् प्रगीतया उपस्थातव्यं इति सिद्धान्तः ।

**अथ तृतीयं वर्णकम्** । यज्ञकर्मणि मन्त्राणां विनियोगः प्रयोगः तानेनैव स्यात् । 'यज्ञकर्मण्यजपन्यूङ्खसामसु' ( पा० १।२।३४ ), इति व्याकरणस्मृत्यनुमितात् 'तानो यज्ञकर्मणि' इति वचनात् । त्रैस्वर्यादीनां समाम्नानं तु अर्थावबोधार्थम् । तस्मात् तानेन प्रयोग इति सिद्धान्तः । के.

* **अर्थैकत्वाधिकरणम्** । 'यदृचा स्तुवते' इत्यस्य अकर्तृविशेषणविधिः शक्तिप्रतिबन्धकस्य च्छन्दस्तुतस्यापि उपक्रमस्य 'य एवं विद्वान् साम्ना स्तुवीत' इति कर्तृविशेषणविधिरूपशक्तिप्रतिबन्धकस्य च्छन्दस्तुतोपसंहारबलेन स्वतः प्राप्तं ऋग्विधानत्वं परित्यज्य सामविधेयत्वस्वीकारात् उपसंहारप्राबल्यमाश्रित्य, तन्निरस्तम् । अत्रापि वाक्यभेदादिदोषपरिहारार्थं औपचारिकसामविधिरेवाङ्गीकारात् । पराक्रमः. ५।१।१.

**अर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमः स्यात् । ३।१।६।१२ ॥**

'अरुणया पिङ्गाक्ष्या एकहायन्या सोमं क्रीणाति' इति ज्योतिष्टोमे श्रुतम् । अत्र किं अरुणिमा गुणः क्रयणप्रकरणे निविशते प्राकरणिकं सर्वार्थत्वात् अरुणं सर्वम् इति, उत क्रये एव निविष्टः सन् अवच्छेदकतया एकहायन्यां निविशते इति विचारे सिद्धान्तमाह ।

द्रव्यगुणयोः एकहायनीगोरूपद्रव्यस्य आरुण्यस्य च गुणस्य अर्थैकत्वं सोमक्रयरूपप्रयोजनैकत्वं, तत्र ऐककर्म्यात् क्रयरूपैककार्यत्वात् नियमः स्यात्, द्रव्यगुणयोरुभयोरपि नियमः स्यात् आरुण्यावच्छिन्नैकहायनीरूपद्रव्येण सोमक्रयः, न तु अनरुणया एकहायन्या, नापि अरुणया अनेकहायन्या इति। के.

* 'अर्थैकत्वे द्रव्यगुणयोः' इति हि पञ्चमम प्रति उपादीयमानयोः अनियतवचनयोः परस्परनियमे सति यावति विषये दशत्वं तावति राजन्यत्वं इति अवगम्यते इति बलात् दश राजन्या विज्ञायन्ते पूर्वपक्षे। वा. ३।५। २०।५२ पृ. १०२१. * 'अर्थैकत्वे द्रव्यगुणयोः'। ऐककर्म्यात् क्रियापदस्यैकत्वात् अर्थैकत्वे एकवाक्यत्वे सति वाक्यभङ्गो न न्याय्यः। अतो द्रव्यगुणयोः द्रव्यप्रधानस्य एकहायनीशब्दस्य गुणोपसर्जनारुणाशब्दस्य च नियमः सामानाधिकरण्येन विशिष्टैकार्थप्रतिपादकत्वे. अन्यथा अन्ययः स्यात् इति। कु. पृ. २५९. * अर्थैकत्वेऽपि अव्यभिचारतुल्यत्वेऽपि च शुक्लादिशब्दोक्तस्यार्थस्य शब्दापौनरुक्त्यपार्थक्यगमकत्वदर्शनात् शुक्लत्वरूपादिशब्दोक्तस्य तु अदर्शनात् अर्थस्यापि शब्दविशेषापादितशक्तिविशेषवशेनैव गमकता 'नयमाद्यर्थेष शब्दानां शक्तिभेदोऽभिधा मता। प्रत्येकव्यस्तथाऽर्थानां लक्ष्यार्थान्तरगोचरः॥' इत्यरुणटीकोक्ता (गमकता टीकया उक्ता इत्यन्वयः) (वा. पृ. ६८४)। सु. पृ. १४५७.

* अर्थो वा स्यात् प्रयोजनमितरेषामचोदना(द)र्थस्य गुणभूतत्वात्। ९।१।५।२३॥ इत्यनेन अर्ध्यमानमपूर्वं प्रयोजनम्। द्रव्यादीनामर्थ्यमानमपूर्वं प्रति गुणभूततया कर्तव्यत्वेन अचोदनात् इति सिद्धान्तितम्। सु. पृ. १४६९.

ॐ अर्धं त्यजति पण्डितः इति न्यायः। सर्वनाशे समुत्पन्ने अर्धं त्यजति पण्डितः इति स्पष्ट एव। संग्रहः.

* अर्धोदुच्छिष्टानां (सभूतसमुत्थाने) विभागो भवति पनस्य। भा. ६।५।७।२७.



ॐ अर्धकुक्कुटीन्यायः। 'भूतशब्दाभिधेयानामर्थानां युगपत्तया। ग्रहणाग्रहणं युक्तमर्धकुक्कुटिपाकवत्॥' वा. ३।१।७।१४ पृ. ७२०. शब्दाविदिष्टविरोध दर्शयितुं अर्धं कुक्कुट्याः पच्यतां अर्धं प्रसवाय धार्यता इति लोकप्रवादस्यात पाक्षुपतं वाक्यं, नैकस्य वस्तुनोऽर्धजरतीयं, कथमनेन 'कुक्कुटपर्धस्य वा पाकः प्रसवायार्धधारणं' इति वार्तिकालोचनया दृष्टान्तितं भवेत्। सु. पृ. १०२३-२४.

ॐ अर्धजरतीन्यायः। यत्र सर्वत्यागे ग्रहणे वा प्रसक्ते निर्युक्तिकमेकार्थोपादानमर्धान्तरत्यागश्च क्रियते, तत्रायं न्यायोऽवतरतीति। यथा जरती वृद्धा स्त्री, तस्याः पतिस्तदर्धं मुखमात्र गृह्णाति अवयवान्तरं त्यजतीति युक्तिशून्यं, तथा ये ईश्वरवचनत्वेनागमप्रामाण्यमुपगच्छन्ति तेषां बुद्धवचसामपि प्रामाण्यप्रसङ्गो वेदस्यापि वाऽप्रामाण्यापत्तिः। यदि वा ईश्वरवचनत्वसाम्येऽपि वेदस्य प्रामाण्यमप्रामाण्यं च बुद्धवचसामङ्गीक्रियते, तदेतदपि युक्तिशून्यमिति भावः। साहस्री. २५५.

* अर्धजरतीयं उपन्यस्यते। बृहती. स्फोटवादे पृ. ११८. अर्धेन जरत्यर्धेन तरुणीवत् उपन्यस्यते। 'समासाच्च तद्विषयात्' इति स्वार्थे छः। ऋजु. * चेतनाशे चेत् स्वप्नानामयथार्थता, अचेतनाशेऽपि तथास्तु, न्यायमर्धजरतीयेन। परिमलः. १।२।२।७ प्रभृ. * यदि तु बुधाभावेऽपि रोहिणीमात्रवशादेव उत्तरा उच्यते, तदा रोहिणीयोगाभावेऽपि बुधमात्रसद्भावात् उत्तरा स्यात्, अन्यतराभावेऽपि एतद्वचनप्रवृत्तेः स्वीकारात्, कश्यपयोगवत् मारयोगस्यापि प्राशस्त्यहेतुत्वाच्च। अतः अर्धजरतीयापत्तिः। समयमयूखः पृ. २९. * 'सर्वेनाप्याहृता वा (स्मृतीनां प्रमाणता) स्यान्न त्वर्धजरतीयता'। वा. १।३।२।३ पृ. १७०. केन चित् पाशुपतेन सर्वजरत्या योषितः आनुलोम्यत्वात् सर्वतरुण्याश्च वृद्धे अरुचिप्रसङ्गात् अर्धजरत्यानयने दूतः प्रेषितः इति लोकप्रवादः उपमानत्वेनोक्तः। सु. पृ. १३५. * एकदेशनिर्वापेऽपि निमित्तस्य सजातत्वात् नैमित्तिकोऽपनयः कर्तव्य इति स्पष्टं सिद्धान्तिना अपनयः इष्यते। तर्हि सयोगोऽपि तथा इष्यतां अर्धजरतीयत्वायोगात्। सोम.

६।५।१९. ● यदपि अर्धजरतीयन्यायापादनं, तदपि अज्ञानविजृम्भितमेव । यथाहि अत्यन्तर्यौवनभक्षणेऽपि तदङ्गसम्बन्धिप्रसङ्गोच्छृङ्खलनं सिद्धं, नैवं वयोनिर्णयांशबाधे अङ्गत्वांशबाधादिकं इति वैषम्यात् । अत्र जरतीशब्दः अत्यन्तवाचको गृहीतः । सना.प्रदीपे विवाहप्रकारो पृ. २९१.

● अर्धनिरस्ते (दर्शौ) चन्द्राभ्युदये अथ-निरस्य तूष्णीं निर्वापः । भा. ६।५।१।१८–२०.

● अर्धपिप्पलीपदयोः सामानाधिकरण्यम् । संकर्ष. २।१।११.

● 'अर्धमन्तर्वेदि अर्धं बहिर्वेदि' इति देशलक्षणार्थमुच्यते । भा. ३।७।६।१२. ● 'अर्धमन्तर्वेदि' इतिवत् लक्षणया युग्चादेरपि उद्देश्यान्तर्भावाङ्गीकारेण सत्यपि उभयोरेकापूर्वसाधनत्वे व्यपदेशेन 'योक्त्रेण पत्नीं संनह्यति, मेखलया यजमानं' इत्यत्र । भाट्ट. ६।१।६, ● 'अर्धमन्तर्वेदि' इतिवत् 'यः सोमेन यक्ष्यमाणोऽग्निमादधीत नर्तु पृच्छेत न नक्षत्रं' इत्यत्र यक्ष्यमाणपदेन पौर्णमास्यावि-लक्षणया विहितकालस्यानादरविधानात् पौर्णमास्याद्यनादर इति केचित् । ५।४।५. ● 'अर्धमन्तर्वेदि मिनोति, अर्धं बहिर्वेदि' अग्नीषोमीये पशौ यूपमानं प्रकृत्य श्रूयते । अत्र लौकिकदेश एव यूपार्धत्वेन विधीयते, न संस्कृतवेदिभागः । वि. ३।७।६. ● 'अर्धमन्तर्वेदि मिनोति, अर्धं बहिर्वेदि' अत्र सौमिक्या वेदेः देशत्वेन अङ्गप्रधानार्थत्वस्य स्थापितत्वात् यूपार्धद्वयेऽपि वेदेः प्राप्तत्वात् अर्धोद्देशेन तद्विधाने परिसंख्याऽऽपत्तिः । अतो वरं लक्षितदेशविशिष्टमानस्यैव यूपोद्देशेन विधानम् । भाट्ट. ३।७।६.

● अर्धलौकिकन्यायः । अयं न्यायः 'स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा' इति श्रीमद्भागवतप्रथमस्कन्धचतुर्थाध्यायपञ्चविंशपद्यविवरणे श्रीपद्मनाभाचार्यैरुक्तः । तथाहि, यद्यप्यलौकिकप्रकारेण वेदगाध्ययनमप्यलौकिकमिति न्यायेन तत्सिद्धिः, तथापि अर्धलौकिकन्यायेन वा भारतादिना कार्यं सेत्स्यतीति भावः । साहस्री. ५४१.

● अर्धवैशसन्यायः । अयं न्यायः पूर्वोक्तार्धकुक्कुटीन्यायसमानविषये प्रवर्तते । अयं शारीरकसूत्रभाष्ये व्यवहृतः । तथाहि 'न चार्धवैशसं संभवति' इत्युक्तम् । वैशसं हिंसा प्रोच्यते । यथोक्तं "परं द्रुतगदव्याप्तपुत्रस्यान्तर्व्यवस्थितिः । न चौरिचिन्ताविमुक्तजनसंवादवैशसम् ॥" इति कात्यायनः । चौरिचिन्ताविमुक्तेषु तच्चिन्तापरेषु जनेषु यः संवादः स एव वैशसं हिंसा, तत्र परमित्यर्थं इति । साहस्री. ८७६.

● 'अतश्च क चित् प्रमाणत्व क चिदप्यप्रमाणताम् । व्यवस्थापयता न्यायेन भवेदर्धवैशसम् ॥' वा. १।३।२।२ पृ. १७४. ● अपि च 'यदिदं किंच अत्र स्मृत्या कृतिस्मृ कल्पनार्थेभ्यः तथेऽत्र' इत्यत्र न तावत् सर्वासाम्यवहारार्थोपदेश इति शक्यं वक्तुं, अन्यासाद्यनादरप्रसङ्गात् । सर्वं तु प्रामाण्यार्थं इति अप्रदृष्टिश्चोद्यते । तस्मादस्यावि 'आपो वासः' इत्यनापि नाचाम आचमनं चोद्यते, प्रसिद्धास्वेव तु आचमनीयास्वप्सु परिधानदृष्टिश्चोद्यते इति युक्तं, नहि अर्धवैशसं सम्भवति । शाभा. ३।२।१८ तम्. । अन्यथा आचमनविधौ पूर्वत्र ध्यानविधिः, उत्तरत्र क्रियाविधि. इति अर्धवैशसं स्यात् । रत्नप्रभा. ● 'अविरोधे श्रुतिर्मूलं, न मूलमन्तरसम्भवः । विरोधे त्वन्यमूलत्वमिति स्यादर्धवैशसम् ॥' वा. १।३।१।२ पृ. १००. एकस्या धर्मसंहितायाः भागस्य अर्धाङ्गत्वेन वैशसं विरोध इत्यर्थः । सु. पृ. १२४. ● यानि कि कर्म प्रति प्रधानभूतानि, तत्र तत्संस्कारार्थानि गुणभूतानि इति विचारः । ..अथ अकाले प्राधान्यं कर्मकाले तु संस्कारः, तदा अर्धवैशसम् । भा. ९।२।२. ● 'ननु शुल्यादिबाधायाः श्रुतिमूलत्वनिश्चयः अनुमानादपि प्राप्स्यत् येन किंचित् प्रतिपत्स्यते । तस्मात् कारणवैषम्यालोभयत्रैकरूपता । सिध्येत्मूलप्रत्यवसा हि प्रतिपत्त्यनुसारिणी ॥' ततश्च अर्धवैशसप्रसङ्गनिवृत्ति. । वा. १।३।२।३ पृ. १८०. श्रुतिविरोधे अत्यन्तदुष्टविरुद्धपरिहारार्थे भ्रान्त्यादिमूलत्वकल्पनया स्मृत्यप्रामाण्यापरिहारार्थे भ्रान्त्यादिमूलत्वकल्पनया न तत्परिकरणस्य न्याय्यत्वेन अर्धवैशसानापादकत्वात् न तत्परिहारार्थं अविरोधेऽपि अप्रामाण्यमापादनीयं इत्याह — ननु इति । सु. पृ. १४०, ● न्यायतत्त्वमन्तरेणाप्रतिपादनस्य

अर्थवैशसादिदोषपरिहारोपयोगित्वमाह् । सु. पृ. १३८.

* अर्धिनः. ऋत्विजः । दक्षिणाया अर्धोऽस्ति येषां, षट् गावः, ते अर्धिनः । ते च प्रतिप्रस्थाता, मैत्रावरुणः, ब्राह्मणाच्छंसी, प्रस्तोता चेति । के.

⧖ अलम्मुग्धत्तपञ्चाशिकादूषणोद्भावनेन इति न्यायः । उन्मत्तेन विरचिता या पञ्चाशिका पद्यात्मक श्लोका वा तावन्ति वाक्यानि वा असंबद्धार्थानि, तेषु दूषणदानं व्यर्थं ■ क्रियते तद्वत् । संग्रहः.

■ अलमुन्मत्तप्रचरित काव्यदूषणोद्भावनेन इति न्यायः । यत्र विशेषफलुं धावनमेन पुरुषार्थं मन्यमाना बालैरप्युपहसनीयास्तान प्रत्यभिप्रायोऽयमिति । साहस्री. ७७१

⧖ 'अलाभे मत्तकाशिन्या दृष्टा तिर्यक्षु कामिता' इति न्यायः । तारुण्यमदमत्ता योषित् मत्तकाशिनी नाम । सा पुरुषस्य अलाभे तिर्यञ्चमपि श्वानं कामयते उपभोगार्थम् । तद्वत् । निन्दार्थोऽयं न्यायः । संग्रहः.

* अलिङ्गेऽपि वृक्षपदार्थे पुंलिङ्गो वृक्षशब्दः प्रयुज्यते । तत्र न अयमर्थतः साधुता ब्रूमः, किंतु अभियुक्तप्रयोगमात्रबलेन साधुत्वम् । वि. ४।१।६.

* अलौकिकं ( लोके अप्रयुक्तं ) — 'न च लक्षणमस्तीति प्रयोक्तव्यमलौकिकम् ।' वा. १।३।८।२४ पृ. २६३.

⧖ अलौकिकं लौकिके नाङ्गं इति न्यायात् अलौकिकसामर्थ्यदृष्टान्तः लौकिके न संभवति । कर्मणा जातिपरिवृत्तौ विश्वामित्रदृष्टान्तो न युक्त इति भावः । ब्राह्मणमहासंमेलनविशिष्टाङ्के पृ.१६९.

* अलौकिकानां पदानां—'न चालौकिकानां सता वेदादेव पूर्वोत्तरपदसंबन्धमपेक्ष्य शक्यतेऽर्थोऽध्यवसातुम्' । भा. १।४।७।१०. * अलौकिकत्वं वेदतदुपजीविप्रमाणातिरिक्तप्रमाणानात्मकत्वे सति प्रमितिविषयत्वम् । मणि. पृ. ७.

⧖ 'अलौकिकप्रकारेण वेदसाध्यं फलमप्यलौकिकम्' इति न्यायः श्रीमद्भागवते १।४।२८ पद्ये वल्लभाचार्यैरुदाहृतः । साहस्री. ५४१.

* अलौकिकप्रमाणानि । धर्मप्रमाणानि विधि–अर्थवाद–मन्त्र–नामधेय–स्मृति–शिष्टाचाररूपाणि षट् । कर्माङ्गत्वबोधकानि श्रुति–लिङ्ग–वाक्य–प्रकरण–स्थान–समाख्याः इति षट् । श्रुति–अर्थ–पठन–स्थान–मुख्य–प्रवृत्तिरूपाणि षट् क्रमबोधकानि । वचन–नाम–लिङ्गानि अतिदेशप्रमाणानि । स्थानापत्तिः ऊहप्रमाणम् । प्रत्याम्नान–प्रतिषेध–अर्थलोपरूपाणि बाधप्रमाणानि त्रीणि । एवमेकत्रिंशत् । एषां आलोकसंयोगादिवत् सहकारिताभाव, त्रिविधैव मानं इत्यपि केचित् । मणि. पृ. १२.

* 'अल्पं जुहोति' इति वचनेन अल्पीयस्त्वेन प्रक्षेपरूपप्रतिपत्तिविधिः अवदानस्य । अतः शेषसत्त्वात् भक्षणं तत्प्रतिपत्तिः । भाट्ट. ३।५।५. * 'अल्पं जुहोति' इति विशेषवचनात् चमसेषु सोमस्य शेषः सिध्यति । तद्भक्षणं तु अपूर्वार्थप्रतिपादकवचनेभ्योऽवगम्यते । ततोऽस्ति सोमेषु भक्षः । वि. ३।५।६.

* 'अल्पं भक्षयति' इति वचनेन कृत्स्नस्य शेषस्य एकभक्षणप्रतिपाद्यत्वाभावात् एकेन भक्षणेन प्रतिपादितेऽपि शेषे अवशिष्टशेषस्य भक्षणान्तरेण प्रतिपत्तिसंभवात् । प्राथम्यविशेषश्च समुच्चयः । भाट्ट. ३।५।१०. * 'अल्पं भक्षयति' । ज्योतिष्टोमे हुतशेषसोमभक्षण न आतृप्ति भवति, किंतु अल्पमेवेति भावोक्तम् । ३।२।१०

* अल्पं भूयसा बाध्यते । भावार्थः । यथा पञ्चदशरात्रे एकं अग्निष्टुन्नाम आग्नेयीसुब्रह्मण्याप्रवर्तकं अनेकेन ऐन्द्रीसुब्रह्मण्याप्रवर्तकेन ज्योतिरादिनाम्ना । बाल. पृ. १११.

⧖ अल्पेन वैकल्येन छन्दस्त्वं नापैति इति न्यायः । 'सैता अनुष्टुभः, ताः त्रिः प्रथमया त्रिरुत्तमया एकादश भवन्ति विराट् सज्या द्वादशी ताः षोळश गायत्र्यो भवन्ति, न वा एकेनाक्षरेण छन्दांसि वियन्ति न द्वाभ्याम् ।' ऐआ. १०।९।१०.

⧖ 'अल्पस्य हेतोर्बहु हातुमिच्छन् विचारमूढः प्रतिभासि मे त्वम् ।' ( रघु. २।४७ ) इति न्यायः स्पष्टः । संग्रहः.

* अल्पत्वं च कस्य चित् बहुत्वमपेक्ष्य भवति । भा. ४।१।१७।४७.

* अल्पबाधेन बहुबाधो बाध्यते । अप्राप्त बाधः । वा. ३।३।७।१४ पृ. ८६०. यथा अश्वप्रतिग्रहेष्टेः प्रतिग्रहीतृविषयत्वे वरुणायेति चतुर्थ्याः पञ्चम्यर्थत्वं, भवेत् इत्यस्य च प्रतिग्रहार्थत्वं, 'स त्वा देवता' इति च तच्छब्दस्य प्राधान्यनिर्दिष्टवरुणपरामर्शित्वं, दातृत्वे च वरुणस्य अदेवतात्वात् देवतानन्वयोगः इति बहुबाधः । दातृविषयत्वे तु प्रतिगृह्णातिमात्रस्य स्वार्थत्यागः । भाट्ट. पृ. १४०.

¶ अल्पभूयोविरोधन्याय । अल्पानां भूयोभिर्विरोधे बाधो भवति इति या रीतिः । 'न चात्र अल्पभूयोविरोधन्यायोऽस्ति अन्यतरत्यागे भूयसा तदर्थाना बाधापत्तेः ।' सु. पृ. ४७.

* अल्पलक्षणया बहुलक्षणा बाध्यते । प्राप्तबाधः । बाल. पृ. १४३.

* अल्पार्थविधानेन अनेकार्थविधानं बाध्यते । यथा 'दध्ना जुहोति' इत्यादौ विशिष्टविधिः गुणविधिना । प्राप्तबाधः । बाल. पृ. १४०.

* अल्पार्थविधिसंभवाच्च न विशिष्टविधानेन परिहारो घटते । वा. ३।३।१०।२१.

* अवकाभिर्वेतसशाखया च वैदिविकर्षणं कुर्वीत, न प्रणीतकं अग्निचयने । अवका. शैवालम् । वि. १।१।७।२६-२८.

* अवकाशब्दस्य 'आपो वै शान्ता.' इति वाक्यशेषानुसारेण अप्सु लक्षणा नोपेयते, अर्थवादाधिकरणे गुणवादमूलेन अग्निशमनस्तुतिद्वारेण अवकानामेव स्तुतिः इति विधिस्तुत्योर्वैयधिकरण्यपरिहारात् । पराक्रमः.

* अवकाशैः (महावकाशैः) नाम 'द्वौ समुद्रौ' इत्यादिभिः 'कोऽसि को नाम' इत्यन्तैर्मन्त्रैः महासु पवमानं प्रातःसवने माध्यंदिने सवने च अग्निष्टोमे । के.

* अवकीर्णिपशुः 'यो ब्रह्मचारी अवकिरेत् स गर्दभं पशुमालभेत ।' अयं पशुर्लौकिकेऽग्नौ कर्तव्यः । वि. ६।८।४. * अवकीर्णिपशुयागः लौकिकाग्नावेव । किंतु 'अथ पशुकल्प.' इति आश्वलायनोक्तायाः स्मार्तपद्धतिरर्थवत्ताया एव तदङ्गत्वं इति के चित् । आपस्तम्बवचनादप्सु वा । भाट्ट. ६।८।४. अवकीर्णी लौकिकाग्नावन्यत्र । सोम. ६।८।४.

¶ अवकीर्णिपशुश्च तद्वदाधानस्याप्राप्तकालत्वात् । ६।८।४।२२ ॥

'ब्रह्मचार्यवकीर्णी नैर्ऋतं गर्दभमालभेत' इत्युक्तः अवकीर्णिपशुः अवकीर्णिनः स्त्रिया इतरेतोविसर्गेण ब्रह्मचारिणः पशुः तद्वत् पूर्वोक्ताधिकरणोक्तवत् स्थपतीष्टिवत् लौकिकेऽग्नौ एव स्यात्, न आधानसिद्धेऽग्नौ । आधानस्य अप्राप्तकालत्वात् ब्रह्मचर्यकाले आधानं न प्राप्तम् । विवाहोत्तरमाधानम् । न प्राप्तः कालो यस्य तदाधानं अप्राप्तकालम् । आधानस्य अप्राप्तकालत्वात् अवकीर्णिपशुर्लौकिकेऽग्नौ इति सिद्धान्तः । के.

¶ अवकीर्णिपश्वधिकरणम् । अवकीर्णिपशुर्लौकिकेऽग्नौ ॥

अवकीर्णिपशुश्च तद्वदाधानस्याप्राप्तकालत्वात् । ६।८।४।२२ ॥

भाष्यं— अस्ति अवकीर्णिपशुः 'ब्रह्मचार्यवकीर्णी नैर्ऋतं गर्दभमालभेत' इति । तत्र संदेहः किं तदर्थं आधानं कर्तव्यं, उत लौकिकेषु अग्निषु तत् वर्तेतेति । पूर्ववत् अवकीर्णिपशुश्च तद्वत् इति अधिकरणातिदेशः । पूर्वस्य अधिकरणस्य यः पूर्वपक्षः सोऽत्र पूर्वः पक्षः, यः अधिकरणस्य सिद्धान्तः स सिद्धान्तः । सर्वार्थमाधानं तस्मादाहिताग्निषु इति पूर्वः पक्षः । आधानस्य अप्राप्तकालत्वात् इति सिद्धान्तः । अप्राप्तोऽयं आधानस्य कालः इत्येतदुक्तम् । तस्मात् इदमपि कर्म लौकिकेषु इति ।

सोम— पूर्वातिदेशात् संगतिः ।

वि— 'अवकीर्णिपशुः कुत्र, विवाह्याधानसंभवात् । वैदिके, लौकिके ब्रह्मचारिण्याधानवर्जनात् ॥'

भाट्ट— 'यो ब्रह्मचार्यवकिरेत् स नैर्ऋतं गर्दभं पशुमालभेत' इति श्रुतो यागोऽपि लौकिके एवाग्नौ, सत्यपि त्रैवर्णिकत्वे विद्वत्त्वे वा भार्याऽभावेन आधानासंभवात् । न च अवकीर्णिनोऽपि स्नात्वा विवाहे बाधकाभावः, 'अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत्' इति वचनेन विप्लुतब्रह्मचर्यस्य अवकीर्णिनः अकृतप्राय-

श्रितस्य विवाहनिषेधात् । नहि अत्र अविप्लुतब्रह्मचर्यपदेन कृतब्रह्मचर्याश्रमोत्तराश्रमयोः पौर्वापर्यमात्रस्य अनेन विधानात् अवकीर्णिनोऽपि विवाहे बाधकाभावः, 'स्नात्वा भार्यामुपेयात्' इत्यनेनैव स्नानपूर्वभाविनो ब्रह्मचर्यस्य स्नानोत्तरभाविना विवाहेन अर्थात् पौर्वापर्यसिद्धेः अस्य वचनस्य साङ्गब्रह्मचर्यवत एव विवाहाधिकारः इत्येवमर्थत्वात् अवकीर्णिनो विवाहानुपपत्तेः । अतः सोऽपि लौकिकाग्नावेव । आपस्तम्बवचनात् अप्सु वा । अत्र च अवकीर्णियागो न देवप्रकृतिकः । 'गर्दभ पशु' इति पशुशब्दोपादानवैयर्थ्यात् । किंतु 'अथ पशुकल्पः' इत्याश्वलायनोक्तायाः ( आश्व. गृ. १।११।१-१५. ) पशिवतिकर्तव्यताया एव तदङ्गत्वं इति केचित् ।

मण्डन— 'भौमे चरौ नावकीर्णीष्टिरिष्टा ।' ५.

शंकर— 'अवकीर्णिपशुस्तथा ।' लौकिके । ५.

* अवक्रयेयं 'सुवक्षा अवक्रयेयं' इति सोमभक्षार्थे चमसग्रहणमन्त्रः । वाक्षिटः स्यादादेशस्मरणात् छन्दसि दृष्टानुविधित्वेन दृह स्याम् इत्युपसंख्यानकरणात् 'सिब्बहुलं लेटि' ( पा० ३।१।३४ ) इति सिबुपिकरणाभ्यगाम्य रूपसिद्धिः । सु. पृ. ११३५.

* अवगतप्राधान्यस्य अन्यार्थता न युक्ता । सु. पृ ८५४.

* अवगमितोऽर्थः न निषीयते । भा. २।२।६।१७ पृ. ५१०.

✠ 'अवगूर्य वषट् करोति । इत्यनयोर्व्यवधानव्यवायेऽपि पौर्वापर्यम् ॥

आगुःशब्दस्येव आगूर्येत्यस्यापि येयजामहवाचित्वात् 'अवगूर्य वषट् करोति' इति वचनेन तदानन्तर्यस्य वषट्कारे क्त्वान्तेन विधानात् याज्यावषट्कारसमुच्चयपक्षस्य च ज्ञापकसिद्धत्वेन निरपेक्षप्रदानार्थत्वबोधविकल्पात् दुर्बलतया चासार्वत्रिकतया एव वक्तव्यतया यदा समुच्चयस्तदा याज्योर्ध्वं वषट्कारः, यदा केवलो वषट्कारस्तदा येयजामहाव्यवहितोत्तरमेव प्रयोक्तव्यः । इति प्राप्ते, किंचिद्व्यवधानेऽपि 'भुक्त्वा गतः' इत्यादौ लोके 'पुरोऽनुवाक्यामनूच्य याज्यया जुहोति' इति वेदेऽपि क्त्वाप्रत्ययप्रयोगात् समुच्चयविकल्पयोर्विकल्पकल्पनस्य अत्यन्तजघन्यत्वात् उत्तरकालतायामेवावगूर्येति ल्यप् । वस्तुतस्तु आपानावपानयोरानयनावनयनयोः आहारावहारयोरुपसर्गभेदेनार्थभेदस्य बहुशो दर्शनात् अवगोरणस्य वधाध्यवसायपरत्वेन अन्यत्र प्रयोगादिह तदसंभवेऽपि लक्षणयोच्चैरुच्चारणाध्यवसानमेवार्थः । संकर्ष. ४।३।४.

* अवगोरणे ब्राह्मणस्य, शतसंवत्सरं यातनाः कर्तुर्भवन्ति, 'यो ब्राह्मणायावगुरेत्, तं शतेन यातयात्, तस्माद् ब्राह्मणाय नावगुरेत्' इति वचनात् । अवगोरणं ताडनाय दण्डोद्यमनम् । वि. ३।४।१०. * अवगोरणनिषेधः केवलं पुरुषार्थः, न क्रत्वर्थः, क्रतुपुरुषार्थो वा । भा. ३।४।१०।२३. * अवगोरणनिषेधस्य पुरुषार्थस्य दर्शपूर्णमासप्रकरणादुत्कर्षः । वि. ३।४।१०, * अवगोरणनिषेधफलं यातनापरिहारः । ३।४।१०.

✠ अवगोरणन्यायः । शंय्वधिकरणम् । सर्वपरिदानाधिकरणम् ॥

शंयौ च सर्वपरिदानात् । ३।४।६।१७ ॥

भाष्यं— दर्शपूर्णमासयोः श्रूयते 'देवा वै शंयुं बार्हस्पत्यमब्रुवन् हव्यं नो वह' इति प्रकृत्य वचनमिदं भवति 'किं मे प्रजाया इति । तेऽब्रुवन् यो ब्राह्मणायावगुरेत् । तं शतेन यातयात्, यो निहनत् तं सहस्रेण यातयात्, यो लोहितं करवत् यावतः प्रस्कन्द्य पांसून् संगृह्णात् तावतः संवत्सरान् पितृलोकं न प्रजानीयात् इति । तस्माद् ब्राह्मणायावगुरेत् न हन्यात् न लोहितं कुर्यात्' इति । तत्र संदेहः किं दर्शपूर्णमासयोः अवगोरणप्रतिषेधः, उत पुरुषस्योपदिश्यते इति । किं प्राप्तम् ? प्रकरणात् दर्शपूर्णमासयोरवगोरणादिप्रतिषेधः । न दर्शपूर्णमासयोर्ब्राह्मणस्यावगोरितव्यं हन्तो वा कार्यो लोहितं वा प्रस्कन्दनीयम् । अन्य उपाय आस्थातव्य आनतये । तेनान्वाहार्येण आनमन्तीति प्रकरणम् प्राप्नोति । एवं प्राप्ते ब्रूमः । शंयौ च प्रकरणादुत्कर्षः । कस्मात् ? सर्वपरिदानात् । सर्वावस्थस्य ब्राह्मणस्यायं प्रतिषेधः उक्तः । न दर्शपूर्णमासमनेनैव नावगोरणादि कर्तव्यमिति । ननु प्रकरणाद्दर्शपूर्णमासधर्मोऽयम् । सत्यं प्रकरणादेवम् । वाक्येनावगुरमाणस्य धर्मः । वाक्यं च प्रकरणाद्बलीयः ।

तदपि पुरुषार्थं स्यात्, सर्वस्य क्रतुगतत्वौदासीन्येन सर्वस्य पुरुषस्य परिदानात् खण्डनात् निषेधात् इति ।

वि— 'विप्रायावगुरेन्नेति फलार्थो वा पुमर्थता ।, फलस्य क्रत्वनिष्पत्तेः क्रत्वर्थ० पूर्वमन्त्रवत् ॥, यातनापरिहारस्य निषेधफलतोचिता । निषेधोऽयं पुमर्थत्वात् प्रक्रियातोऽपकृष्यताम् ॥' निषेधस्य केवलपुरुषार्थतया प्रकरणादुत्कर्षो युक्तः ।

भाट्ट— अत एव दर्शपूर्णमासयोः 'देवा वै शंयुं बार्हस्पत्यमब्रुवन् हव्यं नो वहेति सोऽब्रवीत् वरं वृणै किं मे प्रजाया इति, तेऽब्रुवन् यो ब्राह्मणायावगुरेत् तं शतेन यातयात् तस्मान्न ब्राह्मणायावगुरेत्' इति श्रुतौ दण्डोद्यमनादिरूपावगोरणप्रतिषेधोऽपि शुद्धपुरुषार्थ एव, यातनारूपस्य फलस्य फलवत्त्वेन प्रकरणेन वाक्यसंकोचायोगात् । अत्र हि आशिषि लिङ्, प्रवर्तनायाः बाधात् । आख्यातार्थोऽपि लक्षणया भोगरूपानुभवो, निस्तारो वा । तमिति द्वितीयार्थो विषयत्वम् । तथा च अवगोरणकर्तृविषये शतगुणं यातनाऽनुभवः शतसंवत्सरेण वा तन्निस्तारो भविष्यतीत्यर्थः । वस्तुतस्तु, आख्यातार्थोऽनुभावनादिः, लिङर्थोऽनुकूलव्यापार एव । तथा च तं प्रति भयात् शंयुरनुभावयेदित्यर्थः । अत्र च लिङुपादानेन पूर्ववद्वर्तमानव्यापनीतेर्यातनायाः साध्यत्वावगमान्निषेध्यफलं कामपदाद्यभावेऽपि स्पष्टम् । अतः शुद्धपुरुषधर्मो इति प्रत्युदाहरणमाप्तम् । अत एव शाबरभाष्येण शंयोर्वरदानमपि संगच्छते । पुरुषधर्मत्वं च पुरुषनिष्ठप्रत्यवायजनकक्रियाविरहरूपत्वम्, न तु पुरुषस्य संस्कार्यतया शेषित्वं प्रमाणाभावादिति ध्येयम् । न च क्रतौ अवगोरणप्राप्त्यभावादेव अन्योन्यसंबन्धेन प्रत्युदाहरणत्वमिति वाच्यं, अन्वाहार्येणानत्वसंभवे तस्यापि तदर्थं प्राप्तेः । क्रतूपकारकतया प्राप्त्यभावेऽपि 'न म्लेच्छमुपेयात्' इतिवत् क्रतुमध्यपतनप्रतिषेधस्यापि क्रत्वङ्गत्वोपपत्तेश्च । अतश्च फलस्य श्रुतत्वादेव पुरुषधर्मत्वम् । अत्र च अर्थवादोक्तस्य पदान्तरस्य फलपरत्वं अस्त्येव स्वर्गादिवद्वा तत्परत्वमित्यादि तु स्वयमूह्यम् । २।४।१०.

मण्डन— 'पुंसो निषेधः यातनावनोक्तः ।'

शंकर— 'नावगोरणकर्तनम् ।' १२ न क्रत्वर्थम् ।

* अवघातः । कृष्णाजिनास्तरणं, तदुपरि उलूखलस्थापनं, तत्र व्रीह्यावापः, मुसलेन कुट्टनं, शूर्पेण परापवनं, कणेभ्यः तण्डुलानां विवेचनं इतिकर्मसमुदायात्मकोऽवघातः एकः पदार्थः । के. * अवघातः चरुपुरोडाशयोर्धर्मः । के. * अवघातः तण्डुलनिष्पत्तिपर्यन्तमभ्यसनीयः । वि. ११।१।५, * अवघातः द्रव्ये एवातिशयं कुर्यात्, न तु अपूर्वं जनयति । न च विधिवैयर्थ्यं नखनिर्भेदनादिना तुषविमोकसंभवेऽपि 'अवघातेनैवासौ कर्तव्यः' इति यो नियमः, तस्य नियमस्य अपूर्वहेतुत्वेन विधेयत्वात् । २।१।३, * अवघातेन व्रीहीणां तुषविमोको दृष्टः संस्कारः । २।१।६. * अवघातस्य— अग्निचयने सर्वौषधावघातस्य नाभ्यासः । 'तत्र सकृत् क्रियया कृतः शब्दार्थः इति न स्यादभ्यासः' । भा. ११।१।६।२८.

॥ अवघातस्य कृष्णलचरौ बाधः ॥

विधेः प्रकरणान्तरेऽतिदेशात् सर्वकर्म स्यात् । १०।१।११ वर्णक २.

भाष्यं— एवं वा । अस्ति प्राजापत्यश्चरुः 'प्राजापत्यं चरुं निर्वपेत् शतकृष्णलमायुष्कामः' इति । तत्रैतत् विशिष्टमुदाहरणमङ्गीकृत्य एतदेव सर्वं चिन्त्यते । किं कृष्णलेष्ववहन्तिः कर्तव्यो, नेति । विधेः प्रकरणान्तरेऽतिदेशात् सर्वकर्म स्यात् इति पूर्वः पक्षः । कर्तव्यः, यथा तेषामेव पाकः इति ।

अपिवाऽभिधानसंस्कारद्रव्यमर्थे क्रियेत, तादर्थ्यात् । २ ॥

भाष्यं— इति सिद्धान्तः, न कर्तव्यः इति ।

तेषामप्रत्यक्षशिष्टत्वात् । ३ ॥

भाष्यं— इत्युपवर्णनापरिहारः ।

शा— 'प्राजापत्यं घृते चरुं निर्वपेच्छतकृष्णलमायुष्कामः' इति श्रूयते । तत्रावघातः कर्तव्यो न वेति संशये, चरुशब्दः अचरौ चरुधर्मविधानार्थः । तेन तुषार्थोऽप्यवघातो वचनात् भवन् कर्तव्य इति विशेषाशङ्का । विनाऽप्यवघातेन अश्मार्थैरेव धर्मैर्द्धयेन न उपचरुशब्दो नावघातं प्रापयितुमलं, भवनं

भावस्य अनेकानि स्वनिष्पत्तिसमर्थानि साधनानि आलोचयतः यः अवघातविधिना साधनविशेषसमर्पणेन तत्रोपसंहारः क्रियते, स एव नियमविध्यादिशब्देन उच्यते। अर्थाक्षेपेण हि प्राप्स्यन्नपि अवघातः तण्डुलीभावजनकत्वेन नियम्यमानो जन्यजनकनियमस्य अदृष्टं प्रयोजनमपेक्षते। ततश्च अवघातेन तण्डुलीभावे कृते तज्जन्यस्यात् तण्डुलेषु अतिशयो निष्पाद्यमानो नावघातक्रियाजन्यो वक्तुं शक्यते। तण्डुलोत्पादननिरपेक्षावघातस्वरूपजन्यत्वाभ्युपगमे कृष्णलेष्वपि अतिदेशप्राप्तोऽवघातो न निवारयितुं शक्यते। तस्मात् नियमादृष्टस्य चतुर्थाधिकरणे ( २।१ ) क्रियाजन्यत्वं नाभ्युपगम्यते। अन्ये तु अर्थाक्षेपस्य विधिकल्पनानिरपेक्षस्य अप्रापकत्वेन मन्यरस्यात् अप्राप्तावस्थस्य क्रियास्वरूपस्यैव विधेयत्वात् प्रयोजनकल्पना उचिता, न फलमात्रस्यैनावस्थितस्य नियमस्य इति मन्वानाः नियमादृष्टस्यापि क्रियाजन्यत्वमिच्छन्ति। सु. पृ. ५२१. ७ अवघातनिष्पन्नैरेव तण्डुलैः अपान्तरापूर्वद्वारेण दर्शपूर्णमासौ परमापूर्वं जनयतो नान्यथा। अतो दर्शपूर्णमासापूर्वं अवघातस्य नियमहेतुः। बि. १।१।१.

**Z** अवघातन्यायः। व्रीह्यवघातन्यायः। अवघातमन्त्रन्यायः। दर्शपूर्णमासयोः अवघातमन्त्रस्य सकृदाम्नानम् ॥

**एकद्रव्ये संस्काराणां व्याख्यातमेककर्मत्वं, तस्मिन् मन्त्रार्थनानात्वादावृत्तौ मन्त्रस्यासकृत्प्रयोग, स्यात्। ११।४।१२।४२॥**

भाष्यं— दर्शपूर्णमासयोः श्रूयते ' व्रीहीनवहन्ति ' इति। तत्र मन्त्रः, ' अव रक्षो दिवः सपत्नं वध्यासं ' इति। तस्मिन् विचार्यते किं प्रतिप्रहारं मन्त्रः, उत सकृदेव आदाविति। किं प्राप्तम् ? प्रतिप्रहारमिति। कुतः ? प्रहारात् प्रहारः कर्मान्तरं, यतैः पर्यवसानात्। कर्मभेदे च सति गम्यते विशेषः, येन कर्मणा सन्निपतितो मन्त्रस्तदर्थं इति। गम्यमाने च विशेषे भेदो दृष्टः। तस्मात् प्रतिप्रहारं मन्त्र इति। एवं प्राप्ते, उच्यते। एकस्मिन् द्रव्ये प्रोक्षणादौ संस्काराणां अवहननादीनां व्याख्यातमेककर्मत्वं आ तण्डुलनिर्वृत्तेः एकमिदं कर्मेति ( ७।२।७।१५ ) ' सर्वेषां चैककर्म्यादेतेषां च तद्गुणत्वात् ' इति ( एतादृशं सूत्रं नोपलभ्यते )। ननु प्रतिप्रहारं कर्मभेदः इत्युक्तं, उच्यते। एकस्यैव कर्मणोऽयमभ्यासः, फलस्याभ्याससाध्यत्वात् सोमयजिवत्। तस्मिन् मन्त्रार्थनानात्वादावृत्तौ मन्त्रस्यासकृत्प्रयोगः। यत्र मन्त्रार्थस्य नानात्वं, तत्रास्यावृत्तिर्भवति यथा अग्नौ लोकंपृणायाः। यत्र पुनरेक एव मन्त्रार्थस्तत्रावृत्तिरनर्थिका। इह चैको मन्त्रार्थः। कथं ज्ञायते ? करणोऽयं मन्त्रः, करणश्च कर्तव्यस्य वस्तुनोऽभिसंधानार्थः समधिगतः। समस्ताश्चैते प्रहाराः कर्तव्याः। समस्ता हि कार्यं साधयन्ति, न व्यस्ताः। उप्तानां व्रीहीणां तण्डुलविवेचनं चिकीर्षितं, तदभिसंधातव्यम्। तस्मात् सर्वप्रहाराणां क्रिया मन्त्रेणाभिगृहीता। तत्रावृत्तिरनर्थिका। तस्मान्मन्त्रस्य सकृत् प्रयोगः स्यात्।

सोम— यथा कपालशब्दशक्तिपर्यालोचनया कपालाना न तन्त्रत्वं, एवं अवहन्तिशब्दशक्तिपर्यालोचनया मन्त्रस्यापि न तन्त्रत्वं इत्युभयोः संगतिः। मन्त्रविधौ अवहननकर्मकभावनाया उद्देश्यत्वप्रतीतावपि ' प्रधानविधिनाक्रान्तं स्वस्वगुण्याङ्गसमन्वितम्। अङ्गप्रधानसंयुक्तां विधत्तेऽपूर्वभावनाम् ॥ ' ( शा. ७।१।१ पृ. ५२५. ) इति यसमाद्वन्यायेन परमार्थतः प्रधानभूतावहननविधिविधेयत्वात् मन्त्रस्यावघातकरणकभावनाऽन्वय उपपद्यते। सूत्रार्थस्तु— यत्र मन्त्रकार्यस्य नानात्वं, तत्रावृत्तावपि इह सकृदेव प्रयोगः स्यात् अवहननस्य व्रीहिद्रव्यसंस्कारस्यैकत्वेन भेदाभावात्। व्याख्यातं चैकजातीयकानामेकत्वं इति।

वि— ' अवघातार्थमन्त्रः, किमसकृत् सकृदेव वा ?, प्रहारभेदादावृत्तिः, कर्मैक्येन सकृत्क्रमेण ॥ ' तण्डुलनिष्पत्तिपर्यन्तत्वेन आश्रितप्रहाराभ्यासयुक्तस्य अवघातस्य एककर्मत्वात् तत्र विनियुक्तस्य मन्त्रस्य अवघातोपक्रमे सकृदेव पाठः।

भाट्ट— दर्शपूर्णमासयोरवघातमन्त्र. ' अव रक्षो दिवः सपत्नं वध्यासम् ' इत्ययं किं प्रतिप्रहारमावर्तते, न वेति चिन्तायां सोमाग्निवत् प्रथमतो भावनाऽन्वितस्यापि मन्त्रस्य अवघाताङ्गत्वानपायात् प्रतिप्रधानं गुणावृत्तिन्यायेन

व्याख्यातं, न तत्तथा पूर्वपक्षाभावात् । किन्तु प्रत्युदाहरणमात्रम् । तत्रैकाधिकरण्यमेव । सूत्रार्थस्तु— अवहननपेषणादिक्रियाणां प्रत्यक्षे दृष्टे प्रयोजने सति तन्निर्वृत्याऽपवर्गः समाप्तिः स्यात् दृष्टप्रयोजनार्थत्वात् इति । ( मिश्रमतेन क्रियाणां० धर्ममात्रे० इति सूत्राभ्यामेकं चतुर्थमधिकरणम् । एवं भाट्टबिन्दू अपि । सोमनाथमतेन च 'क्रियाणामर्थशेषत्वात् प्रत्यक्षे तन्निर्वृत्याऽपवर्गः स्यात्' इति सूत्राक्षराणि ) ।

वि— 'अवघातः सकृत्तो वा, सकृत् स्याद् निषिसिद्धितः ।, दृष्टा तण्डुलनिष्पत्तिस्तदन्तोऽभ्यसनतामयम् ॥'

भाट्ट— अवघातादिक्रियाणां दृष्टार्थत्वस्य द्वितीये स्थापितत्वात् तदनुरोधेन यावद्वैतुष्यमवघातस्यावृत्तिः, इति तदधिकरणप्रयोजनमेवेद तन्त्रप्रसङ्गादिदोष्यते । न च उद्यमननिपातनरूपस्य अवघातपदार्थस्य आवृत्तौ कश्चित् बाधः, आवृत्तिवदनावृत्तेरपि शास्त्रेण अनुक्ततया प्रयोजनानुरोधेन आवृत्तौ बाधकाभावात् । यत्र तु दृष्टासम्भवात् अदृष्टार्थोऽवघातः, तत्र अनावृत्तिरेव । यथा चयने 'औदुम्बरमुलूखलं सर्वौषधस्य पूरयित्वाऽवहन्ति अत्र तद्वदवघाति' इति । अत्र वितुषस्य सर्वौषधस्य अग्रे विनियोगाभावात्, प्रत्युत अवघातसंस्कृतसर्वौषधपूरणस्य उपधानोपयोग्युलूखलसंस्कारार्थत्वप्रतीतेः अवघातस्य अदृष्टविधया सर्वौषधसंस्कारत्वेऽपि वैतुष्यप्रयोजनकत्वाभावेन आवृत्त्यनापत्तिः । अवघातस्य आरादुपकारकत्वे तु गुरुत्वम् । ११।१।४.

मण्डन— 'अभ्यासः स्यात् तण्डुलोऽवहन्तेः ।'

शंकर— 'अवघातः सकृत् न ।'

※ अवघातादिधर्मा अपूर्वप्रयुक्ताः ॥

यज्ञकर्म प्रधानं, तद्धि चोदनाभूतं, तस्य द्रव्येषु संस्कारस्तत्प्रयुक्तस्तदर्थत्वात् । ९।१।१ ॥

( अत्र भाष्ये प्रथमं वर्णकमुक्तं, तत् वार्तिकेऽपि व्याख्यातम् । ततो भाष्ये द्वितीयं वर्णकं, तत् वार्तिके नैव व्याख्यातम् । ततो भाष्ये तृतीयवर्णकस्य सद्भावमात्रमुपन्यस्य ततश्चतुर्थं वर्णकमारचितम् । वार्तिके च व्याख्यातम् । ततो भाष्ये तृतीयं वर्णकं प्रायुपन्यस्तं विचारितम् । वार्तिके च तत्र व्याख्यातम् । ततो वार्तिके सन्निपत्योपकारकविषयं वर्णकान्तरमेव उपन्यस्तम् । तदेव अस्मिन्नधिकरणे सप्त वर्णकानि । शास्त्रदीपिकायां तत्र नि चतुराणि उपन्यस्तान्येव । विस्तरे तु त्रीण्येवोपन्यस्तानि । भाट्टदीपिकायां तु वर्णकजङ्गलं सर्वं छित्त्वा एकमेव स्वीकृतम् । श्रीशंकरभट्टैस्तु षडपि वर्णकानि दर्शितान्येव । इति )

भाष्यं— अष्टमेऽध्याये विशेषातिदेशलक्षण वृत्तम् । इदानीमूहलक्षणं वर्तयिष्यामः । त्रिविधश्चोहः मन्त्रसामसंस्कारविषयः । स इह प्राधान्येन वक्ष्यते । अन्यदपि किं चित् उपोद्घातेन प्रसङ्गेन च । आदितस्तु अयमर्थोऽभिन्त्यते लक्षणसिद्धयर्थं, अग्निहोत्र दर्शपूर्णमासौ ज्योतिष्टोमश्चोदाहरणम् । तत्र पृथक् धर्माः समाम्नाताः । तेषु संशयः किं ते अपूर्वप्रयुक्ताः, उत यजिप्रयुक्ता इति । अपूर्वप्रयुक्तेषु सत्सु ऊहः सिध्यति, यजिप्रयुक्तेषु तु प्रकरो धर्माणाम् । कथमिव ? सर्वे हि ते यजतय. । यजतिसामान्ये यजतिशब्दवाच्ये धर्मा विधीयमानाः सर्वेन भवितुमर्हन्ति । अपूर्वप्रयुक्तत्वे तु तदीयविशेषे विधीयमाना अन्यस्मिन्नपि तदीयविशेषपदे भविष्यन्ति । तस्मात्तत्रोहः सिद्धो भवति ।

वा— ननु दशमानन्तरमूहश्चिन्तयितुं युक्तः । कुत. ? उपकारातिदेशे सति ऊहोऽवकल्पते, शास्त्रातिदेशे सति ऊहाभावः । यथा प्रकृतौ अग्न्यन्वाधानादीनि ब्राह्मणतर्पणान्तानि गृहीत्वा कथमेतान्युपकरिष्यन्ति इति (अपेक्षायां) तत्र कानि विदारदुपकारकाणि, कानि चित् सन्निपत्योपकारकाणि । एवं शास्त्रातिदेशो सौर्ये चेन्न प्राप्तम् । ननु यद्यपि प्रकृतौ दृष्टार्थे, तथापि ( 'तण्डुलान् पिनष्टि' इति ) शास्त्रस्याविशिष्टत्वात् अदृष्ट उपकारः कल्पनीय. पेषणस्य प्रयाजादीनामिव । एवमेव 'अग्नये जुष्टं निर्वपामि' इति ( मन्त्रस्य सौर्येऽपि प्राप्तेः अदृष्टोपकारत्वात्रोहः सिध्येत् ) । तस्माद्दशमानन्तरं दशममधिन्तनीय. । ( तत्र ) बाधे कार्यापत्ययलोपादिभिः स्थिते तत. (पश्चात्) नवमस्यावसरो युक्तः । (तत्रोच्यते) सत्यं ( उपकारातिदेशाधीन ऊहः ), किंतु सर्वो शास्त्रातिदेशसद्भाव उक्त आक्षेपात् सौर्ये इतिकर्तव्यता भवतीति । अष्टमे विशेषातिदेशः ( कथितः ) । नवमे

सौर्ये इतिकर्तव्यतायां प्राप्तायां किं ( अग्नये जुष्टं इति मन्त्रः ) अविकृतः प्रयोक्तव्यः, उत विपरीतोऽपि ( सूर्येति ) इत्यनेन प्रसङ्गेन नवमो दशमश्चाध्याय-समुपजायमान एवोत्तिष्ठति ( नवमः । तत्रभिन्ने ऊहे ) ' विधेः प्रकरणान्तरे ' ( १०।१।१।१ ) इति सूत्रं सत्र-माक्षेपेणैवारभ्यते । तस्मादयमदशमयोः ' अपिवाऽभि-धानसंस्कारद्रव्य ' ( १०।१।१।२ ) इत्यनेन सम्बन्धः ( प्रतिपाद्यते न केवलस्य दशमस्य ) तेनाष्टमानन्तरं नवम आरभ्यते ।

' त्रिविध ऊहः ' इत्युक्तं ( भाष्यम् ) । कथं ? ऊहो नाम वितर्कणा ( विशिष्टा तर्कणा ) । सा चेत्रूपा मन्त्रसामसंस्कारेषु क्रियमाणा भेदं सा, तस्याः अभि-मन्त्रसामसंस्कारेषु क्रियमाणा शेष सा, तस्याः अभि-विशेषः । सामग्रहणानर्थक्यं च, मन्त्रग्रहणेन सत्कार-ग्रहणेन चोपात्तत्वात् । अत्र वर्णयन्ति, नैव वयं ऊहभेदं ( ऊहस्वरूपस्य भेदं ) प्रतिजानीमः । किंतु विषयगतं निरूपयामः । यत्र भवतीति किंतु ( मन्त्रसामसंस्कारेषु ) वक्ष्यमाणेषु सः ( भविष्यतीति ) । तस्माद्विषयभेदः प्रदर्श्यते , न ऊहभेदः ।

' प्रकृतिवान्ये यजतिशब्दवाच्ये विधीयमानाः सर्वत्र भवितुमर्हन्ति ' इति ( भाष्य ) कोऽभिप्रायः ? करणानु भवितुमर्हन्ति ' इति ( भाष्य ) कोऽभिप्रायः ? करणानु-ग्राहिणी इतिकर्तव्यता, तेन ( करणेन ) चापेक्षिता, तस्मात् करणमुद्दिश्य ( समिदादिवाक्यैः ) तत्रैतिकर्त-व्यता विधीयते । उद्दिश्यमानस्य च विशेषणमविवक्षितम् । तस्माद्यागमात्रे विधानं वाक्येन ( अत. वाक्यैरिति ) ।

अत्र परिचोद्यते— ( दर्शपूर्णमासवाक्ये ) यागः फले विधीयमानत्वात् उपादेयः, इतिकर्तव्यता प्रति चोद्दिश्यमानः । सकृदुच्चारिते चोपादीयमानोद्दिश्यमानत्वे न सम्भवतः, विवक्षाभेदात् । तस्माद्वाक्येनेतिकर्तव्यता न सम्भवतः, विवक्षाभेदात् । तस्माद्वाक्येनेतिकर्तव्यता सम्बन्धो घटते ( तेन गत्यर्थं स्यात् ) । उच्यते । ' दर्श-पूर्णमासाभ्यां स्वर्गकामो यजेत ' इतीद यागोत्पत्ति न विद-धाति, ' यदाग्नेयोऽष्टाकपालो भवति ' इत्येवमादिभि-( वाक्यैः ) यागोत्पत्तेर्विहितत्वात् । ( तथा— ) फल-सम्बन्धमपि न करोति, उत्पत्तिवाक्येन कृतत्वात् विश्व-जिन्न्यायेन ( ४।३।७।१५ ) । परिशेषादितिकर्तव्यता-सम्बन्धार्थं ( एवेदं वाक्यम् ) । यथा ' अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति ' इति न दीक्षा विधीयते । नापि यजमानस्य, न चाध्वर्युः कर्ता, उभयस्य चोदकेन प्राप्तत्वात्, किं तर्हि दीक्षाक्रमः अनियमेन प्राप्तः सन् नियम्यते, एवमत्रापि ( दर्शपूर्णमासवाक्येन ) याग-मात्रस्य ( केवल ) धर्मैरभिः [ धर्मा विधीयन्ते ] ( अतोऽस्य नास्ति वैरूप्यम् ) । उद्दिश्यमानस्य च विशे-षणमविवक्षितम् । तस्माद्यागमात्रे धर्मप्राप्तिः इत्यभि-प्रायः ।

' अपूर्वप्रयुक्तत्वे तु तदीयविशेषे विधीयमानाः ( धर्माः ) अन्यस्मिन्नपि तदीयविशेषापत्ते भविष्यन्ति । तस्मात्त्रिविध ऊहः सिद्धो भवति ' इति ( भाष्यम् ) कोऽ-भिप्रायः ? भाव्यमानेन करणेतिकर्तव्यते आकाङ्क्षिते । ' तस्मात् द्वयोरपि भाव्यमानेन सम्बन्धः आकाङ्क्षित-त्वात् । भाव्यं चापूर्वम् ' । न च यागः इतिकर्तव्यतया विना न सिध्यति निर्ज्ञातत्वात् ( इति दानपाठः । निर्ज्ञातो-पायत्वात् इति तु मुद्रितलिखितयो द्वयपाठः । दान-पाठ एव तु युक्तो भाति । इतिकर्तव्यतया विनाऽपि यागः सिध्यतीत्युक्तत्वात् ) यागस्य लोके । तेन विशिष्टः ( अपूर्वाख्यः ) भाव्यः ( यथा ) विशिष्टेन करणेन सम्बध्यते ( तथा ) न धर्माणां करणेन सम्बन्ध । अत-एवाऽधिकरणन्यायेन तु ( ३।१।६ ) करणेतिकर्तव्यतयोः सम्बन्धः । तस्मात् ये दर्शपूर्णमासप्रकरणे तदपूर्वेण परि-गृहीता धर्माः, न ते अन्यत्र सन्ति प्रमाणाभावात् । तत्र विकृतौ ( सौर्ये ) प्रत्यक्षं भाव्यं ब्रह्मवर्चसम् । तस्य ( च ) प्रत्यक्ष वाक्यविहितमेव करणम् । भाव्यमानं च धर्मानां प्रत्यक्ष वाक्यविहितमेव करणम् । भाव्यमानं च धर्मानां सम्बन्धः । तत् तावत् प्रथममपेक्षते, आकाङ्क्षति करणानुग्रहद्वारेण । तत् तावत् प्रथममपेक्षते, सन्निधाने ( च ) धर्माः ( इति ) । न च सन्निधाने धर्माः सन्ति । तस्माच्चोदनासामान्यात् आग्नेयस्य धर्माः सौर्येऽतिदिश्यन्ते साकाङ्क्षत्वादाग्नेयस्य । तत्र चैषा वचन-व्यक्तिः ( अतिदेशवाक्यस्य ) यथा आग्नेये उपकृतं तथा सौर्येऽप्युपकर्तव्यम् । इह पुनः ईदृशोऽतिदेशः, यथा आग्नेयेन ( व्याहृतं ) तथा सौर्येणापीति । आग्नेये न ' अग्नये जुष्टं ' इति मन्त्रेण भाव्यमानस्यापूर्वसम्बन्धिनी देवता प्रकाशिता, तेनेहापि तथैव प्रकाशयितव्या ( सूर्यः ) ।

न चोहाद्दते शक्यते प्रकाशयितुम्। तस्मादूहः कर्तव्यः (उपसंहरति–) इत्ययं (भाष्यस्य) अभिप्रायः।

भाष्यं–– ननु एतत् सर्वं सप्तमे विचारितं निर्णीतं च। उच्यते। पुनस्तदेव स्मार्यते उत्तरविवक्षया।

वा–– नन्वेतत् सप्तमे गतम्। उच्यते।

वि— 'इष्टयग्निहोत्रसोमानां धर्मः किं यजयेऽथवा। अपूर्वायेति निर्णीतिः स्मार्यते सप्तमोदिता॥'

(अथ द्वितीयं वर्णकम्)

भाष्यं–– अथवा तत्र योऽर्थो नोक्तः तद्विवक्षया इदमुच्यते। कश्चासौ (अनुक्तोऽर्थः ?) 'नत्व द्रव्येषु संस्कारस्तत्प्रयुक्तस्तदर्थत्वात्' इत्येतेन चेह प्रयोजनमूहो निरश्चितः। एवं हि स सिध्यति। तत्र (सप्तमे) एतावदेवोक्त, नैतेन तत्र प्रयोजनमिति। तत्र हि एतावती चिन्ता, किं प्रतिप्रकरणं नियता धर्माः, उत सर्वे सर्वत्रेति। तत् (यागाख्येन) अपूर्वप्रयुक्तत्वे यजिप्रयुक्तत्वे च सिध्यति, न द्रव्य– (द्रव्यादि–) संस्कारस्यापूर्वार्थत्वे। तत्तु इह सिद्धम् (न तत्र)। तस्मादपूर्वप्रयुक्तत्वसिद्धौ व्यवहारार्थं अस्मिन्नुपादीयते तस्मात् पुनरुक्तम्।

वा–– (भाष्यकारेण तदेवोत्तरविवक्षया स्मार्यते इत्युक्त्वा 'अथवा' इति वर्णकान्तरमुक्तं तद् व्याचष्टे–) 'यस्तस्मै प्रधानं तद्धि चोदनाभूतं' इत्यनेनाप्यपेन अपूर्वार्था धर्मा इति (सप्तमसिद्धं) अनूद्य द्रव्यसंस्कार (व्रीह्यादि द्रव्य, अवघातादिश्च संस्कारः) शब्दीयपरार्थोपन्न, धर्मान् (अवघातादीन् तदुपात्मकल्पोषणार्थीश्च) लभते, न स्वरूपेण इत्ययं उपदिश्यते 'नत्व द्रव्येषु संस्कारः' इत्यनेन (सूत्रावयवेन)।

(व्याख्यानान्तरमाह [१] भाष्यस्य) अथवा सप्तमे अपूर्वं प्रयोजकमित्युक्तम्। इह तु एतच्चिन्त्यते तत् (अपूर्वं) किं स्वार्थमेव (प्रयुङ्क्ते धर्मान्) उत परार्थं 'भिन्ने जुहोति' इतिवत्। यथा निमित्तस्य भेदनस्य प्रयोजकत्वे सत्यपि न भेदनार्थो होमः, किन्तु क्रत्वर्थः, एवमिहापि अपूर्वं तु प्रयोजकं, यागार्थाश्च धर्माः। अनेनापि प्रकारेण सप्तमे प्रतिप्रकरणं नियता धर्मा इति सिद्धम्। ऊहस्तु अपूर्वार्थतामन्तरेण न सिध्यति।

अत्र चोद्यते, ये दर्शपूर्णमासार्था धर्माः, ते सौर्ये न सन्ति, तत्राप्रवृत्तिरेव धर्माणां प्राप्नोति। उच्यते। नैकृतस्य वाक्यस्य साकाङ्क्षत्वात् अतिदेशेन वा अनुपङ्गेण वा यागार्थत्वपक्षेऽपि प्राकृतैरङ्गैः सिध्यति सम्बन्धः इति। तस्मात् (इहैव) अपूर्वार्थता प्रतिपाद्या ऊहसिद्धये (न तु सप्तमे)।

(व्याख्यानान्तरमाह २) अथवा सप्तमे अपूर्वार्था धर्मा इति स्थितम्। इह तु सन्निपातिनामतादर्थ्यमाश्रित्य तादर्थ्यं (प्रतिपाद्यते)। तेषां धर्माणामपूर्वार्थता प्रकरणात्। तच्च प्रकरणमसंयुक्तानां ग्राहकम्। ये तु श्रुतिलिङ्गवाक्यैः संयुक्ताः (सन्निपातिनः) तान् (प्रकरणं) न गृह्णाति संयुक्तत्वादेव। तस्मात्ते अपूर्वार्था न भवन्ति। दर्शपूर्णमासाधिकारे च पाठात् संयुक्तानामपि प्रकरणे एव निवेशः। (असंयुक्तानामपि इति क्व चित् पाठः। तत्र अपूर्वासंयुक्तानामपि इति व्याख्या। तस्मात्) अनेनापि प्रकारेण सप्तमाष्टमयोर्न किंचिदनुपपन्नम् (इति न तत्रैतन्निराकार्यम्)। ऊहे तु यदि अपूर्वार्थं न भवति (किंतु व्रीहिस्वरूपार्थं) तथा सति नीवारेषु तन्न प्राप्नोति। तस्मात् सन्निपत्योपकारका ये धर्मास्तेऽपि अपूर्वार्था इति नवमे प्रतिपाद्यते ऊहसिद्ध्यर्थम्। (तदेवं त्रेधा भाष्यं व्याख्यातं द्वितीयवर्णके। एवं द्वितीयवर्णके त्रयः पक्षा उपन्यस्ताः। अवघातमन्त्रादयः अनिरश्चितस्वरूपसाधनविशेषमात्रद्वारा अपूर्वस्योपकुर्वन्ति इत्याद्यः पक्षः। धर्माणामपूर्वार्थत्वमेव इति द्वितीयः पक्षः। आराडुपकारकाणामिव सन्निपातिनामपि धर्माणां अपूर्वार्थत्वमेव इति तृतीयः पक्षः। एते पक्षाः मध्यमे भाष्ये उक्ताः।)

वि— 'अवघाते व्रीहिरूपं विवक्ष्येत न वा, श्रुतेः। आद्यः, साधनतामात्रमपूर्वत्वाद्विवक्ष्यते॥'

भाष्यं—अथवा अन्यामेव चिन्तामिह वक्ष्यामः, किं यजिनिमित्ता धर्मा अपूर्वप्रयुक्ताः, उतापूर्वनिमित्ता अपूर्वप्रयुक्ताश्चेति। (इदं वर्णकान्तरं वर्णकान्तरव्यवधानेन भाष्यकार एव व्याकरिष्यति। अव्यवधानेन तु अपरमेव वर्णकमाह–) इदानीं तु यजिप्रयुक्ता अपूर्वप्रयुक्ता वेति चिन्त्यते। किं तावत् प्राप्तं ? यजिप्रयुक्ता इति।

कुत ? यजिशब्देन इतिकर्तव्यताया अभिसंबन्धात् 'एव यागं कुर्यात्' इति, एवं यागेन कुर्यात् इति। एवं प्राप्ते ब्रूमः। यदन्यस्यार्थं यत् कार्यं, तत् प्रधानम्। तद्धि फलवत्तया चोद्यते। यत्र फलवत्ता, तत्रैव इति कर्तव्यता। अथ यदुक्तं यजतिशब्देनाभिसंयोगो धर्माणामिति, तदुच्यते, तस्य द्रव्येषु यजतौ च य संस्कार, स तदमयुक्त अपूर्वप्रयुक्त तदर्थत्वात्। यजतेर्हि याणा च तदीयेन धर्मैरभिसंबन्धो, न स्वेनात्मना। नहि यागस्य च धर्माणां च परस्परेणाकाङ्क्षा विद्यते। प्रत्ययार्थेन हि इतिकर्तव्यता आकाङ्क्ष्यते कर्तव्य कथमिति, न यजि कीदृश इति। तस्मात् य( त्) कर्तव्य तस्यैव इतिकर्तव्यतया संबन्ध, अपूर्वं च तत्। तस्मात् अपूर्वप्रयुक्ता इति।

भा—अथवा अयमेव चिन्त पर्तयिष्याम। अपूर्वार्था धर्मा इति स्थिते क्रमे, तस्मै निमित्तं परीक्ष्यते किंपूर्वं निमित्तं, उत याग इति। न चानिमित्ता प्रवृत्ति, येन विचार एव न स्यात्। तत्र भाव्यमानत्वात् दर्शपूर्णमासापूर्वं निमित्तं न भवति। अनेनैव कारणेन फलमपि न निमित्तम्। परिशेषात् यागो निमित्तं, निष्पन्नरूपत्वात्। ननु यागस्य फले उपादीयमानत्वात् निमित्तवेलाया चोद्द्यमानात् विनश्यमेव स्यात्। उच्यते। दर्शपूर्णमासपद निमित्त ( प्रतिपादयति ) अकिंचित्करत्वात् ( प्रयोजनान्तराभावात् )। प्रकृतयागात् दर्शपूर्णमासपदाभावेऽपि विधीयते एव तेन ( यजिना )। यदि एतत् निमित्तता न प्रतिपद्येत, अनर्थकमेव स्यात् (दर्शपूर्णमासपदम्)। ननु सप्तम्यन्त निमित्तं भवति 'भिन्ने जुहोति' इति, तृतीयान्तं चेदम्। उच्यते। 'निमित्तार्थेषु सर्वासां ( विभक्तीनां ) प्रायदर्शनं' इति स्मरणम्। अपि च उद्दिश्यमानत्वात् करणविभक्तेरविवक्षैव। तस्मात् ( दर्शपूर्णमासयोर्निमित्तत्वात् ) विकृतौ अपूर्वमस्ति, दर्शपूर्णमासयोगो नास्ति, तदभावे धर्माणामप्यभाव, यथा भेदनाभावे होमाभाव। सौर्ये च यागाङ्गत्वात् अपूर्वस्य अतिदेशेनानुषङ्गेण वा प्राकृतैरङ्गैरङ्गवान् सौर्ययाग सिध्यति। ऊहाभावस्तु ( ऊहस्तु न सिध्यति )। अत्रोच्यते। अयं दोषोऽस्मिन् व्याख्याने। (दोषगेकार–)

आज्यभागादीनामपि फलार्थत्वं स्यात् प्रकृतयागात् अविशेषणात् ( दर्शपूर्णमासपदस्य निमित्तत्वेन प्रतिनिर्दिष्टस्य अभावात् )। अपि च दर्शपूर्णमासशब्दो लोके कालवाचक प्रसिद्ध, न यागस्य वाचक। सामानाधिकरण्यात् यागवचनो भवेत्। न च निमित्तमिच्छत सामानाधिकरण्यमुपपद्यते। यदि प्रकृतान् यागान् विदधीत, एव सामानाधिकरण्यात् यागवचनो भवेत्। न चैकस्मिन्नुच्चारणे निमित्त ( च ) भविष्यति, सामानाधिकरण्यं च प्रतिपत्स्यते। तस्मात् निमित्तमिच्छत काल्पनिक उपपद्यते इत्ययं दोष। अथोच्यते यागपद निमित्त ( प्रतिपादयति ), तत्र उद्दिश्यमानत्वात् यागसामान्येनोद्देशे प्राप्नोति। तत्र प्रकृतौ विकृतौ च निमित्तमेकं यागसामान्यम्। अपूर्वं च सौर्ये विद्यते। तस्मात् अनेन व्याख्यानेन प्रकृतिविकृत्यो साधारणा धर्मा प्राप्नुवन्ति, तत्रातिदेशाभाव। तस्मादयमपि पक्षो दुष्ट।

भाष्य— एवं प्राप्ते। एतेष्वेवोदाहरणेषु इति चिन्त्यते किं यजिनिमित्ता धर्मा अपूर्वप्रयुक्ता, उतापूर्वं प्रयोजक निमित्तं चेति। ( इदमेव पूर्वं 'अथवा अयमेव चिन्तामिह पर्तयाम' इत्यादिना उक्तम्, स एव भाष्येण निदिश्यते )। किं प्राप्तम्? यजिनिमित्तं अपूर्वं प्रयोजकमिति। कुतः? नैकस्य प्रयोजकत्वं निमित्तभावश्चोपपद्यते। यदर्थं हि क्रियते धर्मा, तत् प्रयोजकम्। यस्मिन् सति क्रियन्ते, तन्निमित्तम्। न चैतस्मिन् पक्षे अपूर्वार्था एते, अपूर्वे च सति भवन्ति इति शक्यं वदितुम्। अत्र हि यजत्यर्थत्वात् तदुक्तिषु, अथवा अपूर्वे सतीति। यजिनिमित्तत्वे तु शब्दोऽवकल्पते, एवं यागेन कुर्यात् इति। यागे सति अपूर्वस्योपकारकाणि, असति अनुपकारकाणि अङ्गानीति। तस्मात् यजिर्निमित्तं, अपूर्वं तु प्रयोजकमिति। एवं प्राप्ते ब्रूमः। यजतिं प्रधान यजते कार्यम्। तद्धि फलसाधने। तदीयेषु द्रव्येषु यजतौ च य संस्कार, सोऽपूर्वप्रयुक्त। तदर्थत्वे इति कृत्वा क्रियन्ते, न यजत्यर्थेन तेषामभिसंबन्ध। प्रयोगवचनेनैते प्रत्ययार्थेन संबध्यन्ते। न हि धात्वर्थो धात्वर्थ। तस्मादपूर्वप्रयुक्ता अपूर्वनिमित्ताश्च। यदुक्तं अपूर्वस्य प्रयोजकत्वं निमित्तभावश्च नोपपद्यते

वचनव्यक्तिभेदादिति, तत्रोच्यते । प्रयोजकत्वं वाचनिकं, निमित्तभावश्च नैव वचनाद्भविष्यतीति । यदि येन प्रयुज्यते, भवति तत्तस्य निमित्तम् । यथा आराम पोषकस्य आरामो वेतनदाने प्रयोजको निमित्तं च । आरामे सति तस्मै वेतनं दीयते, वेतनेन समर्थो भवति आरामं रक्षितुम् । तस्माद्धर्माणां अपूर्वमेव प्रयोजकं निमित्तं चेति ।

वा—(स्वयमिदानीं वार्तिककारः पक्षान्तरमाह) अथवा अपूर्वार्था धर्मा इति स्थितं संनिपत्योपकारका आराद्दुपकारकाश्च प्रकरणेन प्रमाणेन । तत्र प्रकरणे 'अग्नये जुष्टं निर्वपामि' इति मन्त्र आम्नायते । आम्नानसामर्थ्याच्च तेनोपकर्तव्यं प्रकरणिनः । तत्र कथं खलु उपकरिष्यतीति विशेषाकाङ्क्षा जायते, किमुच्चारणमात्रेण, उत प्रकाशनद्वारेणेति । अपूर्वेण देवताप्रकाशनमपेक्षितम् । शक्नोति चायं ( मन्त्र. ) तत् कर्तुम् । तस्मात् प्रकाशनद्वारेणोपकरोति तेनाभि प्रकाशयन् उपकरोति इति ( निश्चीयते )। निमित्तेन चास्य ( मन्त्रस्य ) भवितव्यम् । तच्चाग्निर्निमित्तमस्य । सौर्ये चाग्निर्नास्ति । तत्र निमित्ताभावात् मन्त्रस्य निवृत्तिः यथा भेदनाभावात् होमस्य निवृत्तिर्दर्शपूर्णमासयोः ( इति पूर्व. पक्षः । सिद्धान्तस्तु अपूर्वमेव निमित्तं नाग्न्यादिस्वरूपम् । देवताप्रकाशनद्वारेणानेन मन्त्रेणापूर्वं कुर्यात् इ येनान्ततः शब्दस्य पर्यवसानात् अपूर्वमस्य प्रयोजनं, तदनुष्ठाने अर्थान्निमित्तं भवति, इति अपूर्वीयदेवताप्रकाशनमेवास्य निमित्तं इति अप्रतिहता मन्त्रस्य सौर्ये प्रवृत्तिः इति ) ।

सोम—इह यच्छब्दाद्यभावात् यजेः अपूर्वस्य वा निमित्तत्वं न केनापि शब्देनोच्यते, किंतु धर्मप्रवृत्तेः भावाधीनतया आर्थिकं निमित्तत्वं, तदपि अपूर्वस्यैव, तस्य साध्यतया साधनानुष्ठाने निमित्तत्वौचित्यात् । यजेस्तु सिद्धतयाऽवगम्यमानस्य तदयोगात्, अपूर्वस्य चानिष्पन्नस्यापि बुद्धौ विपरिवृत्तिमात्रेण 'चर्मणि द्वीपिनं हन्ति' इतिवन्निमित्तत्वं सम्भवति । सूत्रार्थस्तु—यज्ञकर्म यजतिकार्यमपूर्वमित्यर्थः । हि यस्मात् तदेव चोदने, तस्यापूर्वस्य द्रव्येषु संस्कारः अवघातादिः तत्प्रयुक्त. अपूर्वप्रयुक्तः अपूर्वार्थत्वात् । इति अपूर्वप्रयुक्तत्वं स्मार्यते इति पक्षे । द्रव्यसंस्कारग्रहणं सर्वधर्मोपलक्षणार्थम् । एवं द्वितीयवर्णकद्वितीयव्याख्यानेऽपि । प्रथमव्याख्याने तत्प्रयुक्तः अपूर्वसाधनत्वप्रयुक्तः तदर्थत्वात् इत्यर्थः । तृतीयव्याख्याने तु यथाश्रुतमेव । 'अथवा अन्या' इत्याद्यन्तिमपक्षे तत्प्रयुक्तः तन्निमित्तः इत्यर्थः ।

वि—(तृतीय वर्णकम्–) 'नापूर्वस्य निमित्तत्वमस्ति वा, न प्रयोक्तृता । , अस्ति शब्दप्रयोक्तृत्वमार्थिकी तु निमित्तता ॥'

भाट्ट—तदेवं सिद्धेऽतिदेशे तत्प्रापितपदार्थविषय ऊहश्चिन्त्यते । त्रिविधश्चोहो निरूप्यते मन्त्रोहः सामोहः संस्कारोहश्च । तत्र ऊहो नाम प्रकृतौ अन्यथादृष्टस्य विकृतौ अन्यथाभावः । तस्य च येन सम्बन्धेन यद्धर्मावच्छिन्नवृत्तित्वं यस्य प्रकृतौ श्रुतं, तस्य तेन सम्बन्धेन विकृतौ तद्धर्मावच्छिन्नभिन्नवृत्तित्वम् । अस्ति चेदं 'देवस्य त्वा' इत्यादिमन्त्रेषु प्रोक्षणादिसंस्कारेषु च । मन्त्राणां हि स्मारकत्वसम्बन्धेन अग्नित्वावच्छिन्नवृत्तित्वं श्रुतं प्रकृतौ, विकृतौ च तेनैव सम्बन्धेन तद्धर्मावच्छिन्नभिन्नसूर्यादिवृत्तित्वात् । एवं प्रोक्षणावघातादीनामपि संस्कार्यतासम्बन्धेन व्रीहित्वावच्छिन्नवृत्तित्वं प्रकृतौ श्रुतं, विकृतौ च तेनैव सम्बन्धेन तद्धर्मावच्छिन्नभिन्नश्यामाकवृत्तित्वात् । एवं साम्नामपि आयीभावादिरूपाणां येन सम्बन्धेन यत्स्थानगतै(ते)कारवृत्तित्वं प्रकृतौ श्रुतं, विकृतौ तेषां तेनैव सम्बन्धेन तत्स्थानभिन्नस्थानगतै(ते)कारवृत्तित्वादूहः । अत्र श्रुतत्वं तात्पर्यमनपेक्ष्य प्रतीयमानत्वं, तेन ऋचै(चे)कारवृत्तित्वस्य शब्दादप्रतीतावपि न क्षतिः । अत्र च सम्बन्धैक्याविवक्षायां भूमपशुपुरोडाशयागोद्देशतायाः प्रकृतौ स्मारकत्वसम्बन्धेन अग्नीषोमदेवतावृत्तेः विकृतौ अनुपयुक्तान्यदेवताविधानेन आराद्दुपकारकस्य सम्बन्धान्तरेण तदुपकारवृत्तित्वात् अतिप्रसङ्गवारणाय सम्बन्धैक्यविवक्षणम् । प्रकृतावेव श्रुतव्रीहित्वावच्छिन्नवृत्तित्वेन श्रुतानामवघातादीनां तद्भिन्नयवादिवृत्तित्वात् तद्वारणाय प्रकृतिविकृतिपदोपादानम् । प्रकृतिस्थव्रीहिव्यक्त्यपेक्षया सौर्यादिविकृतिस्थव्रीहिव्यक्तीनां भेदात् आतिदेशिकव्रीहिप्रोक्षणादौ एव अवघातादीना-

विजातीययाग यस्तीनामुत्पत्तौ बाधकाभावेन आनर्थक्यस्य तदवस्थत्वात् । न च सामान्यसामग्र्याः विशेषकारणसमवहिताया एव कार्यजनकत्वनियमः, अन्यत्र तथात्वेऽपि प्रकृते तथा कल्पनाया प्रमाणाभावात्, 'तदेव यादृक् तादृक् च होतव्यं ' इति लिङ्गानुपपत्तेश्च । अत एव अनयैव रीत्या पक्षप्राप्तिमुपपाद्य फलतो नियमविधित्व व्रीह्यादिविधीनामुपपाद्यते प्रतिनिधिश्च । अतो ब्रह्मतत्संस्कारविधयः सर्वे अपूर्वसाधनीभूतविषया एव व्यापकीभूतापूर्वत्वावच्छिन्न प्रति द्रव्यत्वादिना कारणस्य लोकतोऽवकल्पनेन नियमप्रतिबन्धनापत्तेः । आराद्दुपकारकाणामपि अनयैव रीत्या अपूर्वजननानुकूलयोग्यतासंपादकत्व द्रष्टव्यं, न तु यागार्थत्व, आनर्थक्यापत्तेः । यागादिनिष्ठयोग्यतासंपादकत्वाच्च न प्राधान्यापत्तिः अङ्गत्वविघातो वा इत्यादि क्षुण्ण कौस्तुभे ।

वस्तु व्रीहित्वावच्छिन्नोद्देशेनैव प्रोक्षणादिविधिः, शाब्दबोधे लक्षणाया अनङ्गीकारात्, पश्चात्तु निपादस्थपतिन्यायेन प्रोक्षणादिविशिष्टव्रीहीणां वाक्यान्तरकल्पनया अपूर्वार्थत्वकल्पन इत्युक्त, तन्न प्रोक्षणादेः सम्बन्धाद्दृष्टस्य वा व्रीहित्वावच्छिन्नभाव्यकत्वे अयोग्यतानिश्चयस्य प्रतिबन्धकत्वात् शाब्दबोधस्यैवानुपपत्तेः लक्षणाऽङ्गीकरणात् मयुक्तम् । अतो व्रीह्यादिपदेन अपूर्वसाधनत्वावच्छिन्नलक्षणात् तदुद्देशेनैव प्रोक्षणादिविधिः, इति ते अपूर्वप्रयुक्ता एवेति सिद्धः व्यामाकादौ ऊह । न चैवमपि धर्मानुष्ठाने व्रीहित्वादीनामपि अनुष्ठापकतया निमित्तत्वात् विकृतौ तदभावे मेदनाभावे इव धर्मलोपापत्तिः, यच्छब्दाद्यभावेन व्रीहित्वादीना निमित्तत्वे प्रमाणाभावात् । प्रधानाराशा उद्देश्यताऽवच्छेदककोटौ अप्रवेशेन अनुष्ठापकत्वस्याप्यभावाच्च । अत एव अपूर्वस्यैव तत्वात् निमित्तत्वम् । नन्वेतस्तु फलेच्छाया अनुष्ठापकत्वेऽपि फलस्यासिद्धस्यानुष्ठापकत्वे प्रमाणाभावात् फलीभूतापूर्वमपि न निमित्तम् । अनयैव च दिशा यागत्वस्यापि आराद्दुपकारकस्थले निमित्तत्वं प्रयुक्तम् । अतो बाधकाभावात् सिध्यत्येवोहः ।

यानि चात्र सूत्रे ( भाष्ये वार्तिके च ) अनेकानि दर्शनानि कृतानि, तानि पुनरुक्त्वात् अनुपयुक्तत्वाच्चोपेक्षितानि । मूलकारैस्तु ग्रन्थव्याख्यानरसिकतया कृतानि इति ध्येयम् ।

मण्डन— ' अतिदेशोऽष्टमेऽध्याये समाप्तो, नवमे पुनः । अतिदिष्टपदार्थानामूहानूहविचारणा ॥ '

शंकर— ' धर्मसाधर्म्यसारणम् । ' १ । व्रीहित्वाद्यविवक्षितम् । ' २ । ' मन्त्रार्थत्वनिरासो ना । ' ३ । ' सन्निपातिषु चात्र सः । ' ४ । निमित्तत्वोक्त्याऽपूर्वस्य ।' ५ । ' सन्निपातिषु चा तथा । ' ६

* अवघातादिनिर्वर्त्यैः तुषकणप्रमोचनादिधर्मैः पुरोडाशसिद्धिं प्रति वस्तुगत्यापि व्रीहि–पुरोडाश–क्रतु–अपूर्व–अध्वर्यु–यजमानैः अपेक्षित. । नहि तद्विनाऽपि व्रीहिभिर्यष्टु पुरोडाशो वा निर्वर्तयितुं शक्यतेति । शा. ३।१।४।१० पृ. ६६९.

㉀ अवघातादिसंस्कारविधिः नियमविधिः ॥

संस्कारे च तत्प्रधानत्वात् । ४।२।११।२६ ॥

भाष्यं— अयमपि अधिकरणातिदेशः । दर्शपूर्णमासयो. श्रूयते ' व्रीहीनवहन्ति ' ' तण्डुलान् पिनष्टि ' इति । तत् किमिमौ विधी, उतानुवादौ इति संशये, अर्थप्राप्तत्वात् अनुवादौ । इति प्राप्ते, नियमार्थत्वात् विधी इति ।

शा— ' व्रीहीनवहन्ति ' इति नावघातस्य यागार्थतया श्रवण देशादिवत् । न च चरुवत् विशिष्टद्रव्य क्रियासम्बन्धि श्रूयते, इति तण्डुलाश्रितक्रियानुवादमात्र इत्यधिका शङ्का । उत्तरं, यद्यपि न श्रवणमस्ति, तथापि प्रकरणग्रहणादेव प्रधानसाधन एवावघातस्तत्र विनियुक्तस्यावघातादेः प्रधानाङ्गत्वमस्त्येव इत्यभ्यासादेव प्रवृत्तिः ।

सोम— " नात्र नियमविधिः सम्भवति । न हि न द्रव्यस्य साक्षात्, तत्र नियमस्यानर्थक्यात् । नापि यागे, अवघातस्य ' व्रीहीनवहन्ति ' इति द्रव्यनिष्ठत्वेन श्रवणेन देशादिवत् यागसम्बन्धित्वानवगमात् । न च यथा शुक्लादेः साक्षात् यागसम्बन्धानवगमेऽपि तद्विशिष्टचरुद्रव्यस्य यागान्वयात् अर्थात् विशेषणस्यापि यागान्वयः, तथा अवहननस्य यागान्वयः संभवति, तत्र गुणविशिष्टद्रव्यस्यैव प्रकृते संस्कारविशिष्टद्रव्यस्य यागसम्बन्धा-

श्रवणात् 'व्रीहिभिर्यजेत' इति द्रव्यस्वरूपमात्रस्यैव तच्छ्रवणात्" इत्यधिका शङ्का। 'व्रीहीनवहन्ति' इत्यत्र यागवाचकशब्दाभावेऽपि प्रकरणबलात् यागार्थत्वमुपपद्यते इति परिहारस्तु स्पष्टः। सूत्रार्थस्तु— संस्कारेऽपि श्रुतिर्नानुवादो नियमप्रधानविधिसंभवात् इति।

चि— 'अवघातेऽपि नियमो देशादाविव नेन सः। प्रधानेन प्रयुक्तः स्यात्, सम्बन्धः प्रक्रियोचितः॥' यथा देशकालकर्तृद्रव्याणां पक्षे प्राप्तो नियमो विहितः, एवमवघातोऽपि तण्डुलनिष्पत्त्यर्थं लोकतः प्राप्तोऽपि पाक्षिकनखविदलनादिव्यावृत्तये नियम्यते।

भाट्टे तु इदं सूत्रं नवमेऽधिकरणे अन्तर्भावितम्।

मण्डन— 'तथाऽवघाताद्विविधिर्नियन्ता।' तथा द्रव्यगुणविधानवत्।

शंकर— 'संस्कारे च तथैव नः।' तथैव नियमः।

● 'अवघ्नन्' इति (शब्द. हविष्कृदाह्वान-) कालक्षणार्थः ('हविष्कृदेहीति त्रिरवघ्नन्नाह्वयति' इत्यत्र)। भा. ३।२।३१. ● अवघ्नन् इत्यत्र हि धात्वर्थोपसर्जनः कर्ता लक्षणार्थयुक्तः प्रतीयते 'लक्षणहेत्वोः क्रियायाः' (पा० ३।२।१२६) इति शतृप्रत्ययात्। भा. ३।२।३६.

● अवच्छेदकावच्छेदेन तद्वत्ताबुद्धिं प्रति सामानाधिकरण्येन तदभाववत्तानिश्चयस्य विरोधित्वम्। रहस्य. पृ. ३३.

● अवज्वलनं दर्भपिञ्जूलैः प्रज्वालनम्। चरौ नैव कर्तव्यं, पुरोडाशे तु कर्तव्यम्। भा. १०।१।११।४७.

■ अवटस्य समूहन यूपधर्मः। अवटः गर्तः। वि. ७।३।५. ● अवटबर्हिषि पशुगतयूपीये दर्शपूर्णमासगतबर्हिर्धर्माणां बर्हिर्नाम्ना नातिदेशः। भा. ७।३।७।१८.

● अवत्तत्वात्तु जुह्वां० (३।५।१।७) इत्येतदेव तुशब्दस्थाने चशब्दं कृत्वा पूर्वपक्षवादिप्रत्यवस्थानं व्याचक्षाणैः चमसो दृष्टान्तो दातव्यः। परं च अनुभाष्यमस्त्रं वक्तव्यम्। एतदुक्तं भवति, अवत्तत्वात्तु जुह्वां चमसवत् शेषोऽस्तु। तस्योत्तरं 'तस्य च होमसंयोगात्' इति गतार्थम्। वा. ३।५।१।१९. ● अवत्तद्रव्यस्य शेषकार्यार्थस्य नाशे शेषकार्यलोपः। भा. ६।४।२।२.

■ अवत्तहविर्नाशे प्रतिनिधिमाज्यमवदाय यष्टव्यम्॥

शेषाद् द्व्यवदाननाशे स्यात्, तदर्थत्वात्। ६।४।१।१॥

भाष्यं— दर्शपूर्णमासयोः श्रूयते 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति' इति। तत्र यदि द्व्यवदानमात्रमुद्धृतं नश्यति, किं शेषात् पुनरवदेयं, नेति भवति संशयः। किं प्राप्तम्? द्व्यवदाननाशे शेषात् पुनरवदेयम्। कुतः? तदर्थत्वात्। अन्यार्थं हि तद्धविः। अग्नये यष्टो निर्वर्तयितव्य इति। अवदाने नष्टे यागः कर्तव्य एवावतिष्ठते। प्रयोजनं च यागेन। न च आग्नेयेन क्रियमाणः शुद्ध एवाभिनिर्वर्तितो भवतीति किंचिदपि न क्रियेत। तस्माच्छेषादवदातव्यमिति।

टुप्— यदि आग्नेयचोदना द्व्यवदाननिष्ठा (द्व्यवदानस्यैव यदि यागार्थतां प्रतिपादयति) ततः तद्विनाशे शिष्टस्य अनाग्नेयत्वात् द्रव्यान्तरं (आग्नेयं) उत्पाद्यम्। अथ सकल- (पुरोडाश-) निष्ठा, ततः शिष्टस्यापि आग्नेयत्वात् [illegible] एव ग्रहीष्यते इति। केचिदेवं संशयमाहुः (आग्नेयचोदना किं सकलनिष्ठा, उत द्व्यवदानमात्रनिष्ठा इति)। अन्ये पुनः (सर्वप्रदानाधिकरणन्यायेनैव ३।४।१४ द्व्यवदानोपादानस्य सिद्धत्वात्) एवं (वक्ष्यमाणां) चिन्तामाहुः। (अनेन न्याय दर्शयति-) 'आग्नेयोऽष्टाकपालो भवति' इति यदि अभिमुद्दिश्य त्यज्यते एतमस्याग्नेयता उपपद्यते (नान्यथा)। एवमन्यथाऽनुपपन्ना कृत्स्नस्य (पुरोडाशस्य) यागार्थता (कल्प्येत), मध्यपूर्वार्धयोः (तु 'चतुरवत्तं जुहोति' इति) वचनेन यागार्थत्वात् (तन्मात्रेणैव अकृत्स्नप्रयोगेऽपि तद्धितार्थयोगोपपत्तेः ततो ग्रहीतव्यं इत्यनेन न्यायेन कृत्स्नस्य आग्नेयत्वोपपत्तेः) अन्यथाऽनुपपत्तिः क्षीयते। अतो मध्यपूर्वार्धयोः वचनेन यागार्थतायां विचारणा इह निन्दा (किं शिष्टादवदेयं, न वेति) मध्यपूर्वार्धावयवोपलक्षितं (अवदानद्वय) होमसाधनं, नष्टेऽपि मध्यपूर्वार्धावयवविनि (अवदानद्वयस्य) उपलक्षणत्वेन विद्यमानत्वात्। तत एव पुनः

अवदेयम् । कृत्स्नस्य मध्यपूर्वार्धे ( कृत्स्नस्य मध्यपूर्वार्धात् इति तन्त्ररत्ने पाठः ) इति चेत्, तन्न अश्राव्यमानत्वात् । ' यस्य सर्वाणि हवींषि नश्येयुर्दुष्येयुः ' इति कृत्स्नस्य ( हविषः ) नाशे दोषे वा आज्यस्य प्रतिनिधित्वं, न चेह कृत्स्ननाशः ।

निर्देशाद्वाऽन्यदागमयेत् ॥ २ ॥

भाष्यं— अथवा अन्यत् हविः आगमयेत्, न शेषादवदानयम् । कुतः ? निर्देशात् । निर्देशो हि भवति मध्यात् पूर्वार्धात् अवदेयमिति । द्व्यवदानं च होमसंस्तव ' द्व्यवदानं जुहोति ' इति । तत्र अन्यत् शिष्ट मध्यस्य पूर्वार्धस्य विशेषणार्थम् । यच्च तत् होमसंयुक्तं, तत् निर्दिष्टम् । तत् शेषेण क्रियमाणं अमध्येन अपूर्वार्धेन न कृतं स्यात् । ननु अवत्ते यत् शिष्टं, ततो मध्यात् पूर्वार्धाच्च ग्रहीष्यते । उच्यते । कृत्स्नस्य यन्मध्यं पूर्वार्धं च तच्चोदितं, नेतरस्य । अथवा निर्देशादिति । विनष्टे अन्यत् द्रव्यं निर्दिश्यते । ' यस्य सर्वाणि हवींषि नश्येयुर्दुष्येयुर्वाऽऽज्येन ता देवताः परिसंख्याय यजेत ' इति, हविषो नाशे आज्यं आगमम् । तेन न शेषादवदातव्यमिति ।

अपर आह । शेषनिर्देशादिति । निर्दिश्यते हि स्विष्टकृदादिभ्यः शेषकार्येभ्य इति । तन्नोपपद्यते । नहि तानि शेषकार्याणि हवींषि प्रयोजयन्ति । न चानिर्वृत्तप्रयोजनं हविरन्यत् प्रतिपाद्यम् । तस्मान्नायमर्थः ।

टुप्— विशिष्टस्य ( अविकलस्य पुरोडाशस्य ) मध्यपूर्वार्धे निर्दिश्येते ( न तु मध्यपूर्वार्धमात्रम् । कथं ? ) प्रमाणवैलाया ( वाक्यप्रवृत्तिवेलाया ) वाक्यैः अङ्गुष्ठपर्वमात्रैः उपलक्षितः ( मध्यावयवः पूर्वार्धावयवश्च ) स यागसाधनम् । एवं चेत् कृत्स्नस्य ( अविकलस्य पुरोडाशस्य ) मध्यपूर्वार्धे ( एव अवदानोपलक्षणं ) इति शास्त्रार्थं एवायम् । इतरथा ( कृत्स्नपुरोडाशमध्यपूर्वार्धलक्षितावदानद्वयस्य नाम्नाऽर्थाभावे द्व्यवदानस्य ) अनाशे स्यात् ( सर्वं तस्य ) उपलम्भनम् । नाशे तु ( अवशिष्ट पुनरवदीयमानं ) अकृत्स्नं ( प्रसज्येत ), इति वैरूप्यम् । एकरूपेण च शास्त्रेण भवितव्यम् । तस्मादुपलभ्यमानेन इतरत् निर्दिश्यते । ( न तु सर्वं यागाङ्गतया । तस्मात् न शेषादवदेयम् । तस्मात् अवदाननाशे हविरन्तरेणैवाधिकारः ) ।

शा—'कृत्स्नं खलु पुरोडाशं प्रकृत्य श्रूयते वचः । मध्यादवद्यतीत्येतद् विकलात्रावगम्यते ॥' यदाऽपि समस्तपुरोडाशनाशो याग. (वार्तिकमते) तदाऽपि द्व्यवदाननाशे तस्य विकलत्वात् अविकलं हविरन्तरमुत्पाद्यम् । तत्तु न्यायतः पुरोडाशान्तरं, वचनात्तु आज्यं भवति ।

सोम—सूत्रार्थस्तु अवदाननाशे शेषादवदेयं स्यात्, तस्य यागार्थत्वात् इति ।

वि— ' अवत्तनाशे तच्छेषात् पुरोडाशादवद्यति । यजेदाज्येन वा, ऽऽद्योऽत्र मध्यपूर्वार्धसंभवात् ॥, कृत्स्नस्य मध्यपूर्वार्धे ये शेषस्थे न ते ततः । हविर्नाशाज्यविधिः सुतरां सर्वनाशने ॥ '

भाट्ट—दर्शादौ यदा एकस्य पुरोडाशस्य दधिपयसोरन्यतरस्य वा हविषः संपूर्णस्य नाशः, तदा प्रधानानुरोधेन हविरन्तरोत्पत्तौ प्राप्तायां ' यस्य सर्वाणि हवींषि नश्येयुर्दुष्येयुरपहरेयुर्वा आज्येनैता देवताः परिसंख्याय यजेत ' इति श्रुतेनाज्येनैव यागः इत्यविवादम् । अत्र हि नाशादीनां प्रत्येकं निमित्तत्वे वाक्यभेदापत्तेः उभयहविरयोग्यत्वमेव ' अंशुमन्तरेंदि ' इतिवत् लक्षणया निमित्तं, न तु हविरलाभः, नाशानुरोधेनवैयर्थ्यापत्तेः । अत एव अनुपलपुरोडाशाद्यभावे नाज्यनियमः, किंतु यत्किंचिदनियतप्रतिनिध्युपादानमेव । एकदेशनाशादौ तु यदि अवदानग्रहणोत्तरं पात्रीस्थस्य कुम्भीस्थस्य वा नाशः, तदा भाष्यकारमते यावत् द्व्यवदानस्यैव हविष्ट्वात् शेषकार्याभावेऽपि तेनैव यागः । वार्तिककारमते तु यावन्निष्कासीदिपरिमितपुरोडाशस्य, यावद्दुग्धं सान्नाय्यस्य च हविष्ट्वात् हविर्नाशत्वेन पात्रीस्थनाशेऽपि आज्येनैव यागः । एवं तन्मते अवदाननाशेऽपि हविर्नाशनिमित्तादहविरन्तरोत्पत्तिप्रसक्तौ वचनादाज्येन यागः । भाष्यकारमतेऽपि तद्विषये आज्येनैव यागः, न पुनः पात्रीकुम्भीस्थादवदानं, ' मध्यात् पूर्वार्धाच्चावद्यति ' इत्यनेन कृत्स्नस्य प्रकृतस्य पुरोडाशादेः यो मध्यादिदेशस्तस्यावदानतया उपरितनभागस्यैवावदेयत्वात्, तस्य च नष्टत्वेन पुनरादाने मध्यादेरवदेयत्वप्रसङ्गात्,

अतस्तत्रापि हविरन्तरोत्पत्तिप्रसक्तौ आज्येन यागः । न च गर्गमते हविष्ट्वावच्छिन्ननाशादिना हविरयोग्यत्वस्य निमित्तत्वे द्विप्रयवयवनाशेऽपि आज्येन यागापत्तिः, निमित्तज्ञानस्यैव नैमित्तिकानुष्ठापकतया तादृशनाशस्य नित्यतया वा निमित्तत्वानुपपत्तेः । अनुद्धरणीयनूनानवनीयातिरिक्तावयवनाशे तु भवत्येव आज्येन यागः । यथैव मीमांसकमर्यादा । याज्ञिकास्तु ता न मन्यन्ते । वेणा-मतमाश्रयः— एकदेशनाशवदेव एकदेशनाशस्य न निमित्तत्वं , एकदेशनाशेऽपि पुरोडाशाज्ययोर्हविष्यादेः प्रत्यभिज्ञायमानत्वात्, तस्यैव हविष्ट्वावच्छेदकत्वेन यावच्छिन्नत्रीहिपरिमितत्वादेरतदनवच्छेदकत्वात्, तथाचस्या यजनीयत्वाच्च । अत एकदेशनाशेऽपि भवत्यिष्टस्यैव यागः । होमः पर मध्यापादानकर्माभावे अवदानासम्भवाल्लुप्यताम् । वस्तुतस्तु— यावदवशिष्ट तस्यापि हविष्ट्वात्तन्मध्यापादानकर्म सम्भाव्यैवेति होमोऽपि कार्य एव । अत एव आश्वलायनः ' अवदाननाशे पुनरायतनादवदानम् ' इति । अतश्च यद्यपि मीमांसकमतं न्यायसिद्धं भवेत्, तथापि सूत्रानुमितवचनेन तद्बाधोऽभिप्रेति मुक्तमेव । ' आग्नेयी सुब्रह्मण्या कार्या ' इत्यनेन ऐन्द्याः ण्योहवत् । कृत्स्नहविर्नाशे तु अनेकहविष्कयागविषये वनिपयबाधः । कृत्स्नहविर्नाशे तु अनेन हविष्कयागविषये अतिप्रसङ्गः । सर्वहविर्नाशे एनामेन हविर्नाशे हविरन्तरोत्पत्तिरेव । सर्वहविर्नाशे एनाज्येन पुनरुत्पादितेन यागः । अत एव आपस्तम्बः ' यद्यभ्युदियाद्यस्य देवतं हविर्निर्वपेदन्यदविकृतमैवत्य निर्वपेत् । यस्य सर्वाणि हवींषि, आग्नेयैता देवता. परिसंख्याय यजेत ' इति । यद्यपि चोत्तरवाक्ये श्रुतौ च सर्वत्वमविवक्षितं, तथापि पूर्ववाक्यवैयर्थ्यापत्ते हविरुभयत्वनिरवधिसर्वनाशस्य निमित्तता ।

मण्डन— ' नष्टेऽवदाने हविरन्तरं स्यात् । '

शंकर— ' नाशेऽवत्तस्य चाज्यतः । '

० अवदान उपांशुयाजाज्यस्य चतुर्वारम् । भा. १०। ८।१३।३३-३४, ० अवदानं एककपालस्य । अवभृथे चावधारणं भवति ' इहैव एककपालस्य द्विरवद्यति ' इति । तेन ज्ञायते नूनमन्यत्र न द्विरवदानमिति । ७।३। ५।२३.

※ अवदानं चतुरवत्तं, विना वचनं दर्विहोमेष्वेव ॥

' चतुरवत्तं जुहोति ' इति विधौ जुहोतेर्विशेषणान्तराग्रहणात् तदभावाच्च होमत्वमेवोद्देश्यताऽवच्छेदकं, तच्च दर्विहोमेष्वप्यविशेषात् प्रवृत्ति । इति प्राप्ते, होम चतुरवत्तयोरन्यतरोत्पत्त्योरिदं सम्बन्धमात्रविधानेन ' पुरोऽनुवाक्यायै याज्यायै देवतायै वषट्काराय चतुरवत्तं जुहोति ' इति श्रुत्यन्तरे पुरोऽनुवाक्यादिसम्बन्धिहोमस्यैवोपस्थितेः दर्विहोमानामतथात्वात् गृहीततात्पर्यकजुहोतिना होमविशेषस्यैवोपस्थापने नाधकाभावाद्दर्विहोमेष्वेव चतुरवत्तम् । संकर्ष. २।२।५.

※ अवदान त्रैधातवीयायां सहैव ॥

' इन्द्राय राज्ञे पुरोडाशमेकादशकपालं निर्वपेदिन्द्रायाधिराजायेन्द्राय स्वराज्ञे ' इति प्रकृत्य ' एकं पुरोडाशमधिश्रयति ' इति श्रुते यागत्रित्वे पुरोडाशैकत्वेऽपि हविर्भेदादवदानमपि त्रिर्भवेत् । इति प्राप्ते, ' सर्वेषामभिगमयन्नवद्यत्यछम्बट्कारम् ' इति वचनादधिश्रयणवत् सहैवावदान , तैत्तिरीयशाखायां तु त्रयः पुरोडाशा उत्तरोत्तरे स्थूला आम्नाताः । तत्पक्षेऽपि त्रैधातवीयायामिव सहैवावदानम् । संकर्ष. २।२।१४.

० अवदान उपस्तरणस्य स्रुवेण, पुरोडाशस्य हस्तेन, मांसस्य स्वधितिना सामर्थ्यानुसारात् । वि. १।४।२०, ० अवदान द्विरेव पुरोडाशसान्नाय्ययोः । चतुरवत्तत्वं तु उपस्तरणाभिघारणोपेते हविषि श्रूयते । १०।८।११.

※ अवदान पञ्चावत्तं जामदग्न्यादीनाम् ॥

जामदग्न्यानां पञ्चावत्तविधौ जामदग्न्यकर्तृकहोममात्रोद्देशेन पश्वादेर्दर्विहोमेषु स्यादेव पञ्चावत्तम् । इति प्राप्ते, प्राप्तचतुरवत्तोद्देशेन निमित्ते पञ्चमावदानमात्रविधानेन दर्विहोमेषु चतुर्वत्तस्यैवाभावात् पञ्चमाप्रवृत्तिः । ' जमदग्निर्वै ' इत्युपक्रम्य ' स एतं पञ्चमपरदानमपश्यत् निरवपत् ' इति वाक्यशेषात् । संकर्ष. २।२।६.

० अवदानं प्रदानविपरीतेन क्रियते । भा. ५।१। २।३. ० अवदानं प्रदानार्थं, प्रदानं तु कर्मप्रयोजकत्वान्मुख्यम् । वि. ५।१।१२.

**अवदानं प्राकृत एककपाले, वैश्वानर्यां वपायां च नातिदिश्यते ॥**

द्यावापृथिव्याद्येककपालेषु वैश्वानर्यां च वपायां प्रकृतितः प्राप्त्यादवदानमपद् भवेदेव। इति प्राप्ते, 'यज मानो वा एककपालेषु वैश्वानर्यां च वपायाम्' इत्यादिना अवदानेन यजमानस्य मरणमुक्त्वा 'सकृदेव होतव्यम्' इति विधानेन अवदानप्रतिषेधः कल्प्यते। इतरयोरपि लिङ्गं भाष्ये द्रष्टव्यम्। संकर्ष. २।२।१६.

• अवदानं मध्यात् पूर्वार्धाच्चादेयम्। तत्र कृत्स्नस्य यन्मध्यं तत् चोदितम्। पञ्चावत्तिनस्तु मध्यात् पूर्वार्धात् पश्चार्धाच्चेति त्रिः। भा. ६।४।१।२. • अवदानं चैन्द्राग्नादितस्य हविषः मध्यात् पूर्वार्धाच्च इति द्विः अङ्गुष्ठपर्वमात्रं भागमपरच्छेदं जुह्वा ग्रहणम्। के.

**अवदानं समकालं पशौ दैवतस्विष्टकृतयोः ॥**

प्रकृतितः प्राप्त्याम् पशावपि दैवतावदानोत्तरमेव प्रदानम्। इति प्राप्ते, 'दैवतान्यवदायाभोमश्यथ समवद्यावान्याम्' इत्यनेन दैवतावदानसमनन्तरमेव सौविष्टकृतावदानविधानात्। तस्य प्रदानेन स्पष्टवानायोगात् 'न तावत्येव होतव्यम्' इत्यनुवाददर्शनाच्च समानकालान्यवदानानि कृत्वा प्रदानम्। संकर्ष. २।२।१८.

• अवदानं सदैव भेधातथ्यामा पुरोडाशभेदेऽपि। संकर्ष. १।२।१४. • अवदानं सानाय्ये दध्नो ऽवदानं गृहीत्वा पयसो ग्राह्यम्। कल्पसूत्रेषु तु पयसो ह्यवदानं गृहीत्वा पश्चाद्दध्न इत्युक्तं, तैत्तिरीयश्रुतौ तादृक्क्रमस्य वाचनिकत्वात्। आह्नि. ५।१।२, • अवदानं स्विष्टकृति प्रथममाग्नेयस्य पश्चात् सानाय्यस्य, प्रवृत्तिक्रमात् मुख्यक्रमस्य बलीयस्त्वात्। ५।४।२. • अवदानं हविष्प्रयोजकः संस्कारः, होतुमवदीयमानत्वात्। वि. १०।७।१, • अवदानं हृदयादीनां अग्नीषोमीये पशौ आलम्भस्य प्रयोजकम्। ४।१।१२ • अवदानं होमपर्यन्तमेकः पदार्थः। ततः आग्नेयमवदाय हुत्वा पश्चात् अग्नीषोमीयावदानं इत्यनुसमयः पौर्णमास्याम्। ५।२।४, • अवदानानि त्रिविधानि अग्नीषोमीयपशौ प्रधानदेवतार्थानि, सौविष्टकृतानि, इडाभक्षणार्थानि चेति। तानि च तेनैव क्रमेणानुष्ठीयन्ते काण्डानुसमयेन। प्राजापत्येषु तु पदार्थानुसमयः। ५।२।६. • अवदानानि सर्वाणि पशौ समानकालानि, ततः प्रदानम्। संकर्ष. २।२।१८. • अवदानेन यागः' प्रक्रान्तो भवति। वा. ५।१।१८।३५. • अवदानस्य अनुसमयः मध्यपूर्वार्धसमुदायेन। भा. ५।२।३।४–५, • अवदानस्य मुख्यस्य परिमाणमुक्तं 'अङ्गुष्ठपर्वमात्रं देवतानामवद्यति' इति। कृष्णलेषु तु 'चत्वारि कृष्णलान्यवद्यति' इति। १०।२।२।६. • अवदाने 'द्विर्हविषोऽवद्यति' इति विधिना पुरोडाशावदाने द्वित्वस्यैव प्राप्तत्वात्। 'चतुरवत्तं जुहोति' इति चतुष्ट्वं [illegible] उपस्तरणाभिघारणार्थाभ्याम् आज्यावदानाभ्यां सह सम्पद्यते। वि. १०।८।१२.

**अवदानं पञ्चावत्ते तृतीयं पश्चार्धादुत्तरार्धाद्वा ॥**

औषधात् यत् तृतीयमवदानं, तदुक्तादिग्दर्शनवाक्ये 'एष वत्पश्चार्धो यथा गुदस्य' इति गुदत्वेन पश्चार्धसत्त्वात् पुरोडाशस्य पश्चिमभागादेव भवेत्। तच्च पाठक्रमात्तृतीयम्। इति प्राप्ते, 'मध्यादवद्यति' इति विधाय 'यदुभयतोऽवद्येत्' इत्यादिना पूर्वपश्चार्धयोरवदानं विनिन्द्य 'उत्तरार्धादेनमवद्येत्' इति स्पष्टं विधानात् सौविष्टकृतावदानस्थलादेव त्रिरवदानेन हविषस्त्रिरवदानसिद्धिरिति भाष्याभिप्रायः। वस्तुतस्तु 'भावापरिस्विष्टकृतोऽद्वितीय पञ्चावत्तिनः' इति सूत्रे वाशब्दादेरभावेन पूर्वपक्षनिरासे मानाभावादेकवाक्यत्वस्याभावेऽपि द्वयपि शाखाभेदेन सिद्धान्तावेव। पञ्चमप्रपाठे 'अत्र आज्यस्य व्यन्त्विति दैक आहुर्न तथा कुर्याद्' इत्यादिना शाखान्तरसिद्धमेव मन्त्रपाठं विनिन्द्य 'आज्यस्य हविषो व्यन्त्वित्येव ब्रूयाद्' इति कौषीतकिब्राह्मणे(३।४) विधानेऽपि 'नहिनिन्दान्यायेन' विधेयस्तुतिमात्रार्थत्वेन द्वयोरपि स्वशाखानाविकरणसिद्धान्तसिद्धत्वात् (संकर्ष. ४।३।१९)। पशुपूपक्रमाधिकरणे न्यायोपेतद्वित्वचनस्य न्यायविरुद्धवचनतः प्राबल्यस्य भाष्यकारैरेव वर्णनेन 'पश्चार्धात्तृतीयं पञ्चावत्तिनः

अतोऽन्यथापि हविरन्तरोत्पत्तिप्रसक्तौ आज्येन यागः । न च सर्वमते हविर्द्रव्यावच्छिन्ननाशादिना हविरयोग्यत्वस्य निमित्तत्वे त्रिचतुरवदाननाशेऽपि आज्येन यागापत्तिः, निमित्तज्ञानस्यैव नैमित्तिकानुष्ठापकतया तद्दर्शनाशस्य नित्यतया वा निमित्तत्वानुपपत्तेः । अङ्गुष्ठपर्वन्यूनानवनीतातिरिक्तावयवनाशे तु भवत्येव आज्येन याग । इत्येव मीमांसकमर्यादा । याज्ञिकास्तु ता न मन्यन्ते । तेषामयमाशयः— एकदेशदाहवदेव एकदेशनाशस्य न निमित्तत्वं, एकदेशनाशेऽपि पुरोडाशादिपदाभिधेयस्य प्रत्यभिज्ञायमानत्वात्, तस्यैव हविर्द्रव्यावच्छेदकत्वेन यावत्सिद्धार्थिहविर्द्रव्यादेस्तदनवच्छेदकत्वात्, तन्नाशस्याप्रयोजकत्वात् । अतः एकदेशनाशेऽपि अवशिष्टेनैव याग । होमे परं यथापादानकत्वाभावे अवदानमपरावृत्त्यताम् । वस्तुतस्तु— यावदवशिष्टं तस्मात् हविष्प्रत्यक्षापादानकत्वं संभवत्येवेति होमोऽपि कार्य एव । अत एव आश्वलायनः ' अवदाननाशे पुनरायतनादवदानम् ' इति । अतश्च यद्यपि मीमांसकमतं न्यायसिद्धं भवेत्, तथापि स्मृत्यनुमितवचनेन तद्बाधोऽग्निष्टुति गुरूण्योहवत् । ' आग्नेयी कृष्णग्रीवा कार्या ' इत्यनेन ऐन्द्राः बाधः । कृत्स्नहविर्नाशे तु अनेकहविष्कायामिष्टौ कतिपयहविर्नाशे हविरन्तरोत्पत्तिरेव । सर्वहविर्नाशे एवाज्येन पुनरुत्पादितेन याग । अत एव आपस्तम्बः ' यथाप्रदेशं हविर्नाशेऽपदेवतं अन्यद्धविस्तद्दैवतं निर्वपेत् । सर्वाणि हवींषि, आग्नेयी देवता, परिहरणाग यजेत ' इति । यद्यपि चोत्तरवाक्ये श्रुतौ न सर्वत्वमविवक्षितं, तथापि पूर्ववाक्यवैयर्थ्यापत्तेः हविष्प्रयत्नतरविस्तारसर्वनाशस्य निमित्तता ।

मण्डन— ' नष्टेऽवदाने हविरन्तरं स्यात् । '

शंकर— ' नाशेऽवत्तस्य चाज्यतः । '

● अवदानं उपांशुयाजस्य चतुर्धा । भा. १०।८।१३।३३-३४, ● अवदानं एककपालस्य । अवभृथे चावधारणं भवति ' इदमेव एककपालस्य द्विरवद्यति ' इति । तेन शाखे नूतनमन्यत्र ॥ द्विरवदानमिति । ७।१। ५।२३.

※ अवदानं चतुरवत्तं, विना वचनं दर्विहोमेष्वेव ॥

' चतुरवत्तं जुहोति ' इति विधौ जुहोतेर्विशेषणानतरावहत्वात् तद्भावाच्च होमत्वमनोद्देश्यताऽवच्छेदकं, तस्य च दर्विहोमेष्वप्यविशेषात् प्रवृत्ति । इति प्राप्ते, होम चतुरवत्तयोरन्यतोऽन्ययोरिह तदन्यथाप्राप्तविधानेन ' पुरोऽनुवाक्यायै याज्यायै देवतायै वषट्काराय चतुरवत्तं जुहोति ' इति श्रुत्यन्तरे पुरोऽनुवाक्यादिसंनिधिहोमस्यैवोपस्थितेः दर्विहोमानामतथात्वात् पठितत्वाच्चाङ्गजुहोतिना होमविशेषस्यैवोपस्थापने बाधकाभावाद्दर्विहोमेष्वेव चतुरवत्तम् । संकर्ष. २।२।५.

※ अवदानं त्रैधातवीयायां सहैव ॥

' इन्द्राय राज्ञे पुरोडाशमेकादशकपालं निर्वपेदिन्द्रायाधिराजायेन्द्राय स्वराज्ञे ' इति प्रकृत्य ' एकं पुरोडाशमधिश्रयति ' इति श्रुते वाचनिके पुरोडाशैकत्वेऽपि हविर्भेदादवदानमपि भिन्नं भवेत् । इति प्राप्ते, ' सर्वेषामभिगमयन्नवद्यत्यछंबट्कारम् ' इति वचनादभिगमयन् सहैवावदानं, तैत्तिरीयशाखायां तु अत्र पुरोडाशा त्रय एवैते स्थूल आम्नाता । तत्पक्षेऽपि त्रैधातवीयायामपि सहैवावदानम् । संकर्ष. २।२।१४.

● अवदानं द्रवद्रव्यस्य स्रुवेण, पुरोडाशस्य हस्तेन, मांसस्य स्वधितिना सामर्थ्यानुसारात् । वि. १।४।२०, ● अवदानं द्विरेव पुरोडाशशाखाणयो. । चतुरवत्तस्य तु उपस्तरणाभिघारणोपेते हविषि श्रूयते । १०।८।११.

※ अवदानं पञ्चावत्तं जामदग्न्यादीनाम् ॥

जामदग्न्यानां पञ्चावत्तविधौ जामदग्न्यकर्तृकहोममात्रोपस्थितेर्दर्विहोमेषु न्यायेन पञ्चावत्तम् । इति प्राप्ते, प्राप्तचतुरवत्तोद्देशेन निमित्ते पञ्चावत्तदानमात्रविधानेन दर्विहोमेषु चतुरवत्ताभावात् पञ्चावत्तप्रवृत्ति । ' जमदग्नि ' इत्युपक्रम्य ' स एतं पञ्चमवदानमपश्यत् निरवपत् ' इति वाक्यशेषात् । संकर्ष. २।२।६.

● अवदानं प्रधानचिकीर्षयैव क्रियते । सा. ५।२।१२. ● अवदानं प्रदानाङ्गं, प्रदानं [illegible] कल्पनाशेषत्वान्मुख्यम् । वि. ५।४।२.

सोम— यथा चतुर्मुष्टिनिर्वापस्य विधानात् नावदनुसमयः, एवमिहापि द्व्यवदानेनानुसमय इति प्रत्यवस्थानात् संगतिः। चतुरवत्तवाक्ये यत् चतुरवत्तमित्यनूद्य तत्संस्कारतया होमविधिपक्षं अवत्तहोमविधिपक्षं च दशमे वक्ष्यति (१०।८।१२)। तत्रावत्तविशिष्टविधिपक्षाश्रयणेन प्रदानान्तस्य प्रस्तुताधिकरणप्रतिपाद्यमुक्त्वा, चतुरवत्तानुवादेन होमविधिः इति पक्षेऽपि द्व्यवदानवाक्ये द्व्यवदानविध्यवश्यमापेऽपि चतुरवत्तहोमाययवतया विधानाच्च पृथक्पदार्थत्व इति नानाबीजेष्ट्यधिकरणन्यायेन (११।४।१३) तस्य प्रदानान्तानुसमयः। एवं चोपस्तरणाभिघारणयोः पृथक्सङ्ख्यात्वेऽपि न पृथक्पदार्थत्वं 'चतुरवत्तं जुहोति' इत्येतद्वचनबलेनैव विधानात् इति ध्येयम्। सूत्रार्थस्तु अवदानसंयुक्ते होमे विधीयमाने अवदानस्य होमार्थत्वात् अवदानेनैव होमप्रक्रमात् होमान्तमवदानं स्यादिति।

वि— 'अवदानेऽनुसमयो होमान्ते नाऽवदानके। पदार्थत्वं विधेयत्वात्तेनानुसमयस्ततः॥', अवद्यति। प्रदानान्तोऽवदानस्य तदर्थता। अतोऽनुसमयस्तस्य होमान्तस्य तु केवलम्॥'

भाट्ट— सान्नाय्यवदाग्नेयाग्नीषोमीयादौ भिन्नदेवत्येऽपि अवदानेनानुसमयः। इति प्राप्ते, 'चतुरवत्तं जुहोति' इत्यनेन अवत्तोद्देशेन होमाङ्गसंस्कारविधानादर्थादेवावदानमात्रे, 'द्विर्हविषोऽवद्यति' इत्यनेन द्वित्वमात्रविधानात् उक्तविधचतुरवत्तहोमस्यैव एकपदार्थत्वेनावदानादिप्रदानान्तेनानुसमयः। वस्तुतस्तु—अवत्तोद्देश्यत्वेन ततः पूर्वमवदानादिप्राप्तेर्दुरुपपादत्वात्, अवदानवाक्ये चावदानमात्रे द्वित्वविधाने अलंकरणार्थत्वावदानेऽपि द्वित्वप्राप्त्यापत्तेः, हविरुद्देशेनैव द्वित्वविधाने होमादावपि तदापत्तेः, हविर्विशिष्टोद्देशेन तद्विधाने च वाक्यभेदापत्तेः, अवश्यं द्वित्वविशिष्टावदानविधिस्वीकारेऽपि उपस्तरणादिविधिन्यायेन (१०।८।१२) एकार्थत्वलाभाय चतुरवत्तहोमविध्युपपादकत्वस्याप्यङ्गीकारात् अवदानादिप्रदानान्तस्यैव एकपदार्थत्वाभ्युपगमेन तेनैवानुसमयः।

मण्डन— 'क्रमोऽवदानेऽधिगतः प्रदाने।'

शंकर— 'चतुरवत्तहोमोऽसौ।' असौ काण्डानुसमयः।

※ अवदानाभिघारणासादनेष्वानुपूर्व्यं प्रवृत्त्या स्यात्। ५।४।२।२॥

दर्शे दध्नो धर्माः पूर्वं समाम्नाताः, पश्चादाग्नेयस्य। प्रदानं तु पूर्वमाग्नेयस्य, पश्चात् दध्नः। तत्र किं प्रवृत्तिक्रमेण आग्नेयात् पूर्वं दध्नः आसादनादि कर्तव्यं, उत मुख्यक्रमेण पूर्वं आग्नेयस्य आसादनादि कर्तव्यं इति विचारे पूर्वपक्षमाह। अवदानाभिघारणासादनेषु अवदाने अभिघारणे तथा आसादने च प्रवृत्त्या उत्पादनप्रवृत्तिक्रमेण आनुपूर्व्यं क्रमः स्यात्। पूर्वं हि दधि उत्पाद्यते, पश्चादाग्नेयः पुरोडाशः। तस्मात् प्रवृत्तिक्रमो मुख्यक्रमात् प्रबलः।

यथाप्रदानं वा, तदर्थत्वात्। ३॥

सूत्रेण प्राप्तं पूर्वपक्षं वाशब्देन परिहरन् सिद्धान्तमाह। दर्शे दध्याग्नेययोः अवदानाभिघारणासादनेषु यथाप्रदानं प्रदानमनतिक्रम्य आनुपूर्व्यं अनुष्ठेया अनुक्रमः स्यात्, आसादनादीनां तदर्थत्वात् प्रदानार्थत्वात्। प्रदानं मुख्यम्। तदर्थानि आसादनादीनि। प्रदानं च आदौ आग्नेयस्य पुरोडाशस्य, ततः सान्नाय्यस्य दध्नः सहैव। तस्मात् मुख्यक्रमः प्रवृत्तिक्रमात् बलीयान्।

लिङ्गदर्शनाच्च। ४॥

सिद्धान्ते हेत्वन्तरमाह। चकारः समुच्चयार्थः। 'स वै ध्रुवामेव अग्रेऽभिघारयति, ततो हि प्रथमावाज्यभागौ यक्ष्यन् भवति' इति लिङ्गस्य दर्शनात्। अत्र हि ध्रुवाऽभिघारणोत्तरं आज्यभागानुष्ठानं भवतीत्युक्तं, तच्च 'यस्य पूर्वमवदानं तस्य पूर्वमभिघारणं' इति न्यायेन सिद्धं भवति, तेन मुख्यक्रमः सूचितः। तस्मात् मुख्यक्रमेणैव अभिघारणादीनि कर्तव्यानि। के.

● अवद्यति। एकस्मात् हविषः अवदाने वक्तव्ये अवद्यति इति प्रयोगः। पू. ३।५।२।३.

● अवद्यतेः यागानभिधायकत्वम्। ▮ पृ ७८९,

● अवद्यतेः यागीयद्रव्यसंस्कारार्थावदानवाचित्वम्। पृ. ७८९.

**सोम—** यथा चतुर्मुष्टिनिर्वापस्य विधानात् तावदनुसमयः, एवमिहापि द्व्यवदानेनानुसमय इति प्रत्यवस्थानात् **संगतिः** । चतुरवत्तवाक्ये यत् चतुरवत्तमित्यनूद्य तत्संस्कारतया होमविधिपक्षं अवत्तहोमविधिपक्षं च दशमे वक्ष्यति ( १०।८।१२ ) । तत्रावत्तविशिष्टविधिपक्षाश्रयणेन प्रदानान्तत्वं प्रस्तुताधिकरणप्रतिपाद्यमुक्त्वा, चतुरवत्तानुवादेन होमविधिः इतिपक्षेऽपि द्व्यवदानवाक्ये द्व्यवदानविध्यवगमावेऽपि चतुरवत्तहोमावयवतया विधानाच्च पृथक्पदार्थत्व इति नानाबीजेष्ट्यधिकरणन्यायेन ( ११।४।१३ ) लभ्यः प्रदानान्तानुसमयः । एवं चोपस्तरणाभिघारणयोः पृथक्संस्कारत्वेऽपि न पृथक्पदार्थत्वं 'चतुरवत्तं जुहोति' इत्येतद्वचनत्वेनैव विधानात् इति ध्येयम् । सूत्रार्थस्तु अवदानप्रयुक्ते होमे विधीयमाने अवदानस्य होमार्थत्वात् अवदानेनैव होमपक्रमात् होमान्तमवदान स्यादिति ।

**वि—** 'अवदानेऽनुसमयो होमान्ते वाऽवदानके । पदार्थस्य, विधेयत्वात्तेनानुसमयस्ततः ॥', अवदानतिः प्रदानान्तोऽवदानस्य तदर्थता । अतोऽनुसमयस्तस होमान्तता तु केवलात् ॥'

**भाट्ट —** अत्राग्नेयादावेवाग्नीषोमीयादौ भिन्नदेवत्येऽपि अवदानेनानुसमयः । इति प्राप्ते, 'चतुरवत्तं जुहोति' इत्यनेन अवत्तोद्देशेन होमाङ्गसंस्कारविधानादवदानप्राप्तेः 'द्विर्हविषोऽवद्यति' इत्यनेन द्वित्वमात्रविधानात् उक्तविधचतुरवत्तहोमस्यैव एकपदार्थत्वेनावदानादिप्रदानान्त्वेनानुसमयः । वस्तुतस्तु—अवत्तस्योद्देश्यत्वेन ततः पूर्वमवदानादिप्राप्तेर्दुरुपपादत्वात्, अवदानवाक्ये चावदानप्राप्ते द्वित्वविधाने अलंकरणार्थावदानेऽपि द्वित्वप्राप्त्यापत्तेः, हविरुद्देशेनैव द्वित्वविधाने होमादावपि तदापत्तेः, हविर्विशिष्टोद्देशेन तद्विधाने च वाक्यभेदापत्तेः, अवश्यं द्वित्वविशिष्टावदानविधिस्वीकारेऽपि उपस्तरणादिविधिन्यायेन ( १०।८।१२ ) दृष्टार्थत्वलाभाय चतुरवत्तहोमविध्युपस्थापकत्वस्याप्यङ्गीकारात् अवदानादिप्रदानान्तस्यैव एकपदार्थत्वावगमेन तेनैवानुसमय. ।

**मण्डन—** 'क्रमोऽवदानेऽभिगतः प्रदाने ।'

**शंकर—** 'चतुरवत्तहोमेऽसौ ।' असौ काण्डानुसमयः ।

***** अवदानाभिघारणासादनेष्वानुपूर्व्यं प्रवृत्त्या स्यात् । ५।४।२।२ ॥

दर्शे दध्नो धर्माः पूर्वं समाम्नाताः, पश्चादाग्नेयस्य । प्रदानं तु पूर्वमाग्नेयस्य, पश्चात् दध्नः । तत्र किं प्रवृत्तिक्रमेण आग्नेयात् पूर्वं दध्नः आसादनादि कर्तव्यं, उत मुख्यक्रमेण पूर्वं आग्नेयस्य आसादनादि कर्तव्य इति विचारे पूर्वपक्षमाह । अवदानाभिघारणासादनेषु अवदाने अभिघारणे वेद्या आसादने च प्रवृत्त्या उत्पादनप्रवृत्तिक्रमेण आनुपूर्व्यं क्रमः स्यात् । पूर्वं हि दधि उत्पाद्यते, पश्चादाग्नेयः पुरोडाशः । तस्मात् प्रवृत्तिक्रमो मुख्यक्रमात् प्रबलः ।

यथाप्रदानं वा, तदर्थत्वात् । ३ ॥

सूत्रेण प्राप्तं पूर्वपक्षं वाशब्देन परिहरन् सिद्धान्तमाह । दर्शे दध्याग्नेययोः अवदानाभिघारणासादनेषु यथाप्रदानं प्रदानमनतिक्रम्य आनुपूर्व्यं अनुपूर्वता अनुक्रमः स्यात्, अवदानादीनां तदर्थत्वात् प्रदानार्थत्वात् । प्रदानं मुख्यम् । तदङ्गानि आसादनादीनि । प्रदानं च आदौ आग्नेयस्य पुरोडाशस्य, ततः शृतदध्नोः सहैव । तस्मात् मुख्यक्रमः प्रवृत्तिक्रमात् बलीयान् ।

लिङ्गदर्शनाच्च । ४ ॥

सिद्धान्ते हेत्वन्तरमाह । चकारः समुच्चयार्थः । 'स वै ध्रुवामेव अग्रेऽभिघारयति, ततो हि प्रथमावाज्यभागौ यक्ष्यन् भवति' इति लिङ्गस्य दर्शनात् । अत्र हि ध्रुवाऽभिघारणोत्तरं आज्यभागानुष्ठानं भवतीत्युक्तं, तच्च 'यस्य पूर्वमवदानं तस्य पूर्वमभिघारणं' इति न्यायेन सिद्धं भवति, तेन मुख्यक्रमः सूचितः । तस्मात् मुख्यक्रमेणैव अभिघारणादीनि कर्तव्यानि । के.

* **अवद्यति** । एकस्मात् हविषः अवदाने कर्तव्ये अवद्यति इति प्रयोगः । सू. ३।५।१।१.

* **अवद्यतेः** यागानभिधायकत्वम् । ■ पृ. ७८९,
* अवद्यतेः यागीयद्रव्यसंस्कारार्थावदानवाचित्वम् । पृ. ७८९.

अपामग्निविकारत्व स्यात्, अङ्गानि तु आहवनीये एव कर्तव्यानि। नह्यङ्गानामाहवनीयसंयोगः प्रधानदेशत्वकृतो भवतीति यावत्, येन प्रधानस्याहवनीयसंयोगाभावे अङ्गान्यपि न तत्र भवेयुरिति।

वि— 'किमप्स्ववभृथे मुख्यमात्रं साङ्गमुता, ऽग्रिमः। मुख्यस्यैवान्वया, न्मैवं प्रयोगेण सदन्वयात्॥'

भाट्ट— 'अप्सु अवभृथेन चरन्ति' इत्यनेन विहितः अप्देशः अवभृथशब्दवाच्यप्रधानमात्रोद्देशेन विहितत्वात् तत्रैव, न तु साङ्गे। न च समाख्यावत् अस्य प्रयोगविधित्वात् सर्वविषयत्वं, प्राकृतानां प्रयाजादीनां क्लृप्तदेशान्वयेन अङ्गविषये कल्प्येनानेन देशान्तरविध्यनुपपत्तेः। अत एव प्रयोगविध्याश्रितस्य दौर्बल्यं तत्रतत्र निरूपितम्। अपण-बर्हि.स्तरण-हविरासादनादौ अप्-विधानानुपपत्तेश्च। अतो 'यदाथर्वणं वै काम्या इष्टयः' इत्यत्र प्रधानमात्रे एव उपांशुत्वविधिवत् प्रधानमात्रे एव अप्-विधिः। न चेह करणत्वनिर्देशात् साङ्गविषयत्वं, तन्निर्देशेऽपि अङ्गवाचकपदाश्रवणस्य तुल्यत्वात्। अन्यथा उत्पत्तिवाक्येऽपि करणत्वेन प्रधानदेवतायोगेऽपि वरुणैककपालयोः साङ्गविषयत्वापत्तेः। इति प्राप्ते, वैगुण्यत्कालस्वरकर्त्रादिक प्रयोगान्वयि, प्रयोगश्च अङ्गप्रधानसाधारण. इत्युक्तम्। तदिह देशविधिरयं प्रयोगविधिरेव। तस्य च अङ्गप्रधानविषयत्वात् आर्थिके विशेषणविधौ अङ्गप्रधानोद्देशेनैव अप्-देशो विधीयते इत्यौपदेशिकेन तेन आतिदेशिकाग्न्यादेर्बाधात् युक्तमेव अप्स्वन्वयम्। नहि अत्र श्येनीयप्राकृताङ्गानां उद्गातृकर्तृकत्वस्येव अत्र कल्प्यत्वम्। तत्र हि श्येनमानविधायां औद्गात्रं इति समाख्यायाः प्राकृताङ्गानां उद्गातृभेदे समाम्नानाभावेन तद्विषये अङ्गप्रधानयोः एकदेशकालकर्तृकत्वं औत्सर्गिक इति न्यायमात्रेण कल्प्यत्वात् प्राकृतवत्सनानां कर्तृकत्वेन पुनः उद्गातृकर्तृकत्वस्य बाध.। विस्तरेण च एतदुपपादितं कौस्तुभे स्वरचर्चायाम्। प्रकृते तु साङ्गप्रधानभावनोद्देशेनैव अप्-देशविधानात् सर्वार्थत्वम्। एवं सत्यपि यदि द्वितीया सप्तमी वा श्रूयेत, तत. 'ता उपांशु कर्तव्याः' 'मन्द्रं प्रायणीयायां' इत्यादिवत् प्रधानमात्रकर्मकभावनाया उपादानात्, तस्यां च प्रयाजादीनां फलोपकार्यङ्गानां अनन्वयात्, न तेषु उपांशुत्वादिप्रवृत्तिर्भवेत्। तृतीयाश्रवणात्तु अवभृथकरणकफलकर्मकभावनोपादानात् तस्यां च प्रयाजादीनां प्रयोगविधानाधीनान्वयावश्यंभावात् युक्तमेव साङ्गप्रधानोद्देशेन अपां विधानम्। इत्थं देवतादीनां अन्यत्र अन्वयित्वात् प्रधानमात्रगामित्वं इति विशेषः। अत एव यत्र प्रधानकर्मकभावनाऽन्वयित्व देशादेः प्रामाणिकं, तत्र प्रधाने एवान्वयः। अन्यत्र तु तृतीयासत्त्वे असत्त्वे वा सर्वत्र प्रधानकरणकसाङ्गभावनाप्रयोगे एव देशाद्यन्वयात् साङ्गे एव सन्निवेश इति ध्येयम्।

मण्डन— 'साङ्गोऽप्स्ववभृथो भवेत्।'

शंकर— 'साङ्गोऽप्स्ववभृथो मत.।'

४ अवभृथः सौमिकः अपूर्वः॥

अवभृथे बर्हिषः प्रतिषेधाच्छेषकर्म स्यात्। १०।७।१५।४७॥

भाष्यं — अस्ति ज्योतिष्टोमे अवभृथः। 'वारुणेनैककपालेन अवभृथमभ्यवयन्ति' इति। तत्र पदाम्नायते 'अपबर्हिषः प्रयाजान् यजति' 'अपबर्हिषावनुयाजौ यजति' इति। तत्र एषोऽर्थः सांशयिकः किं बर्हिर्मन्तं वर्जयित्वा अन्यत् सर्वं कर्तव्य, उत आज्यभागाभ्यामन्यत् परिसंख्यायते, अथवा अपूर्वोऽयमेव इति। किं प्राप्तं? बर्हिर्मन्तं वर्जयित्वा शेषकर्म स्यात्। सर्वं कर्तव्यम्। कुतः? 'अपबर्हिषः प्रयाजान् यजति' 'अपबर्हिषावनुयाजौ यजति' इति बर्हिर्मन्तं प्रतिषिध्य कृतार्थः शब्दः अन्यत् चोदकप्राप्तं न शक्नोति वारयितुम्। तस्मात् अन्यत् स्यादिति। ननु 'आज्यभागौ यजति' इति परिसंख्यार्थं ग्रहण, 'अप्सुमन्तावाज्यभागौ यजति' इति गुणार्थं तन्मन्यते स्म।

आज्यभागयोर्वाऽगुणत्वाच्छेषप्रतिषेधः स्यात्। ४८॥

भाष्यं— न चैतदस्ति शेषकर्म कर्तव्यमिति। किं तर्हि, शेषप्रतिषेधः स्यात्। कुतः? आज्यभागयोः श्रवणात् 'अप्सुमन्तावाज्यभागौ यजति' इति। ननु अप्सुमत्तागुणविधानार्थं तत् इत्युक्तम्। नेत्याह। लिङ्गक्रमाभ्यां प्राप्तौ एव अप्सुमन्तौ मन्त्रौ, 'अप्स्वग्ने

चायव्यामालभेत भूतिकामः ' इति अजाशब्देनापि विहिते द्रव्ये यजाशब्दवाच्यवन्ध्यात्वगुणयुक्ते अविदेशा-प्राप्तौ न छागशब्देन निर्गुणेन चाभिधान, तया द्वापि ( अग्नये पावकाय इत्यादौ ) अविकारः स्यात् इति-पूर्वपक्षः । सु. पृ. ४६८.

● **अविगीतस्मृत्या** । आप्ताविगीतस्मृत्या अनाप्त-विगीतस्मृतिर्बाध्यते । वा. १।३।७।१४ पृ. ८६०.

● **'अविच्छिन्ने कथंभावे यत् प्रधानस्य, पठयते । अनिर्ज्ञातफलं कर्म, तस्य प्रकरणाङ्गता ॥'** ( वा. ३।३।४।११ पृ. ८१७ ) इति न्यायः । राज-सूये कथंभावापेक्षा हि पवित्रादारभ्य क्षत्रस्यधृतिं यावत् अनुवर्तते । तथाच ' अविच्छिन्ने...प्रकरणाङ्गता ' इति न्यायात् राजसूयाङ्गता शौनःशेपोपाख्यानादीनाम् । भामती. ३।३।२५ सू. । अत्र कल्पतरुः—पवित्रः सोमयागविशेषः । क्षत्रस्य धृतिः इष्टिः । अत्र परिमलः— क्षत्रस्य धृतिः सोमयागविशेष एव । इष्टिः इति तु आचार्यैः शाखाऽन्तरं कल्पसूत्रान्तरं वा दृष्ट्वा उक्तम् । इति ।

● **'अविदहन्ता श्रपयत'** इति विधेः 'स्रो विदग्धः स नैर्ऋतः ' इति शेषः । भाट्ट. ३।४।७.

● **अविदितस्य**— आलभेत निर्वपेत् इति च नैतौ विधातारौ, अविदितस्यार्थस्य वक्ता विधायको भवति, न चैतयोरविदितोऽर्थः । भा. २।३।५।१२.

● **अविदितबोधनं** विधिः । सु. पृ. ४७२.

● **अविद्यातः** कथमभ्युदयः शक्यते वक्तुं, अविद्या हि प्रत्यवायस्य निमित्तम् । सत्यं यथा भवानाह । प्रत्यवायस्तु आपेक्षिकः । सर्वं हि श्रपि प्रत्यवायायैव । किंतु प्रत्यवाय एव एकम्, न चोपायश्च अन्यभेदि विशेषः । बृहती. पृ. ११८.

● **अविद्यानिवृत्तिः** । उपनिषज्जन्यात्मज्ञानस्य अविद्यानिवृत्तिद्वारा मोक्षजनकस्य प्रमाणान्तराप्राप्तत्वात् नालौकिकत्वं इति न तत्र धर्मत्वम् । मणि. पृ. ९.

■ **अविधित्वविधित्वयोरुपसंहाराभावेन होमा-न्तरेषु** ( ' पृथिव्यै स्वाहा ' इत्यादिभिर्वेषु ) अनारभ्य-विहितयोः वषट्कारस्वाहाकारयोः विकल्पः सुस्थितो भवति । वि. १०।८।१०.

● **अविनाभावो हि** अनेककार्यकारणस्वस्वामिसह-चरभावादिप्रभेदभिन्नः । वा. १।२।३।२६ पृ. १३९.

' **अविप्लुतब्रह्मचर्यो** लक्षण्यां स्त्रियमुद्वहेत् ' इति वचनेन विप्लुतब्रह्मचर्यस्य अवकीर्णिनः अकृतप्रायश्चि-त्तस्य विवाहनिषेधात् । भाट्ट. ६।८।४.

● **अविभक्ताश्च** अङ्गप्रधानानां प्रयोगः इत्युक्तं ' अङ्गानि तु विधानत्वात् प्रधानेनोपदिश्येरन् ' इत्यत्र ( ११।२।२।८ ) । भा. ११।२।८।३२.

● **अविमांसानां** अजमांसानां च विषमा पक्तिः । यावता कालेन आजानि पच्यन्ते, तावता आविकानि विलीयन्ते । भा ११।४।१०।३७.

● **अविरविकन्यायः** । अयमेव अव्याविकन्यायः । भाष्येऽपि ( महाभाष्येऽपि ) अविरविकन्यायेन इति द्वंद्वगर्भे तत्पुरुषे पूर्वसमासपूर्वपदस्थायाः सुपः ' सुपो धातुप्रातिपदिकयोः ' ( पा० २।४।७१ ) इति प्राप्तलोप-विधेऽपि लुक् न कृतः । वा. १।३।८।२४ पृ. २६०. ( भाष्यकृता पतञ्जलिना ) ' कर्मण्यण् ' इति सूत्रे (पा०३।२।१) 'हिमवन्तं शृणोति, आदित्यं पश्यति' इति हश्रिशृणोतिभ्यां अण्प्रत्ययः कस्मान्न भवति इत्याशङ्क्य अनभिधानात् इति परिहार उक्तः । यथा अविक-शब्दस्य स्वार्थिककप्रत्ययान्तस्य अविशब्दसमानार्थत्वेऽपि ' तस्य विकारः ' इति विकारतद्धिते लक्षणानुगमेऽपि ' आविकं मांसं ' इति प्रयोगदर्शनात् अविकशब्दादेव उत्पद्यते नाविशब्दात्, तथा अत्रापि प्रयोगाभावेन अभि-धानसामर्थ्याभावात् न अण्प्रत्ययोत्पत्तिः इत्युपपादनाय अविरविकन्यायेन इति दृष्टान्ते अभिहिते अपशब्दः प्रयुक्त इत्यादृ–भाष्येऽपीति । अविश्च अविकश्च अव्य-विकौ, तयोर्न्यायः इति द्वंद्वगर्भः तत्पुरुषः । सु. पृ. २७५.

● **अविरोधसंभवे** विरोधो नाश्रीयते । वा. २।२।७।२१ पृ. ५२५.

● **अविवाक्यं नाम** चतुर्विंशस्तोमकं दशममहः अग्निष्टोमः सोमो रथंतरसामा द्वादशाहे । तत्र कश्चन कश्चन विप्रश्न ब्रूते । प्रमादे सति ये वाचा दुरी-कवः ते विमृयुः । यदि तत्र न विन्देयुः अन्तःसदसात्

न्युन्यम् ( वक्तव्यं ) । यदि तत्र न निन्देयुः गृहपतिना न्युन्यम् । 'काले नय' इत्यनुष्टुभमुक्त्वा तत् ब्रूयात् । सत्याषाढः १६।४।३–७.

* अविवृद्धस्तोमकाः क्रतवः । प्रकृतौ यत्र स्तोत्रे यावन्तः स्तोमा भवन्ति ततो न्यूनाः स्तोमाः, तत्र स्तोत्रे यत्र क्रतौ भवन्ति, ते अविवृद्धस्तोमकाः क्रतवः । येषु तु अधिकाः ते विवृद्धस्तोमकाः । के. * अविवृद्धस्तोमकाः विवृद्धस्तोमकाश्च विकृतिरूपाः के चित् क्रतवः । वि. १०।४।१२. * अविवृद्धस्तोमकेषु क्रतुषु प्राकृतं साम निवर्तेत, यावता निवृत्तेन सा संख्या पूर्यते तावत् प्राकृतं बाधितव्यं, अन्यत् प्राकृतमेव स्यात् । भा. १०।४।१०।२०, * अविवृद्धस्तोमकक्रतुपूर्णदृष्टैः सामभिः प्राकृतसाम्ना बाधः । १०।४।१०।२०.

⁂ 'अविशिष्टं हि लक्षणं' इति न्यायेन उपलक्षणानां विशेषणविशेष्यभावायोगः । सु. पृ. ११२२। 'सर्वेषां वा लक्षणत्वादविशिष्टं हि लक्षणम्' ( ३।१।७।१४ ) इति सूत्रस्याक्षरार्थः— सर्वेषां ग्रहाणां सम्मार्जनं कर्तव्यं, नैकस्यैव, ग्रहत्वस्य लक्षणत्वात् कृत्स्नग्रहोपस्थापकत्वात् । उद्देश्यतावच्छेदकत्वादिति वा । अविशिष्टं समानं हि यस्मात् लक्षणं ग्रहत्वरूपं सर्वग्रहेषु इति । के.

⁂ अविशिष्टस्तु वाक्यार्थः ( १।२।४।३२ ) इति न्यायः । प्रकरणादिनोऽर्थस्य सन्निधाने यमर्थमाम्नन्ति ( मन्त्राः ), स तस्य वाचकभूतः इत्येव गम्यते । भा. १।२।४।३२ पृ. ८४३ । तदेतत् अविशिष्टस्तु वाक्यार्थं इत्यत्र वर्णितम् । वा. पृ. ८४२. ( लोके वेदे च क्रियाकारकसम्बन्धरूपो वाक्यार्थः समानः इति सूत्राक्षरार्थः ) । * अविशिष्टस्तु वाक्यार्थः इति न्यायात् मन्त्राणामिव वेदान्तानां अर्थपरत्वं औत्सर्गिकम् । भामती. १।१।१ पृ. ४६ ब्रह्म. * अर्थपरता न दृष्टार्थत्वात् स्वाध्यायाध्ययनविधेः कर्मवत् अविशिष्टस्तु वाक्यार्थ इति न्यायात् । विवि. पृ. २७०–७१.

* अविशिष्टफलानां प्रायश्चित्तानां विकल्पः । भाट्ट. १२।३।१.

⁂ अविशेषेण यच्छास्त्रमन्याय्यत्वाद् विकल्पस्य तत् संदिग्धमाराद् विशेषशिष्टं स्यात् । १०।८।८।१६ ॥

अविशेषेण विशेषमनुद्दिश्य यत् शास्त्रं, सामान्यशास्त्रं, तत् यावद्विशेषविषयं कतिपयविशेषविषयं वेति संदिग्धं भवति, अतः तत् आरात् विशेषशास्त्रात् दूरस्थं भवति, विशेषशास्त्रं दृष्ट्वा दूरं भवति, विशेषशास्त्रविषये न प्रवर्तते इत्यर्थः । तस्मात् तादृशे स्थले विशेषशिष्टं विशेषशास्त्रेण यत् शिष्टं विहितं तदेव स्यात् । सामान्यविशेषोभयशास्त्रबलात् विकल्पस्तु न भवति । विकल्पस्य अष्टदोषदुष्टत्वेन अन्याय्यत्वात् । यथा ज्योतिष्टोमे 'वर्त्मनि जुहोति' इति शकटचक्रकृते वर्त्मनि अनोगमनेन उत्पन्नया रेखाया जुहोति इति विशेषशास्त्रम् । 'यदाहवनीये जुहोति' इति सामान्यशास्त्रम् । तेन वर्त्मशास्त्रस्य विषये आहवनीयशास्त्रं न प्रवर्तते । एवं राजसूये 'वल्मीकवपामुद्धृत्य जुहुयात्' इत्यादावपि बोध्यम् । तस्मात् वर्त्माविशेषेण वर्त्मभिन्नेषु अन्येषु होमेषु आहवनीयः स्यात् । इति सिद्धान्तः । के.

* अविशेषेण यच्छास्त्रं० इति दशमाधिकरणन्यायेनापि काम्यं नित्यस्य बाधकम् । सु. पृ. ४८८.

* अविशेषादनर्थकं हि स्यात् ( २।२।२।२ ) इति अभ्यासाधिकरणे स्थितवेदप्रामाण्यलक्षणत्वेन सूत्रम् । विशेषशब्दरहितश्च अनन्यपरो विधिः कर्मस्वरूपमेव विदधत् पूर्वविहितात् अवश्यमेव कर्मान्तरं करोति इति विधिलिङ्निर्णयफलोपजीवनम् । वा. २।२।२।२ पृ. ४४१. ( 'एकस्यैवं पुनःश्रुतिरविशेषादनर्थकं हि स्यात्' । 'समिधो यजति' इत्यादौ एकस्य यजतेः पुनःश्रुतिः एवं शब्दान्तरवत् भेदिका स्यात् अविशेषात् अर्थभेदाभावात् इत्यक्षरार्थः सूत्रस्य ) ।

* अविशेषप्रवृत्तस्यापि वाक्यस्य विशेषपरता दशमे ( १०।३।२ ) उक्ता । वाल पृ. २०१.

⁂ अविहितमप्रतिषिद्धमनुमतं भवति इति न्यायेन बौधायनसिद्धान्तः ( समुद्रयानप्रतिषेधसिद्धान्तः )

गौतमादीनामपि संमत एव । सना० प्रदीपे प्रमाणप्रकाशः पृ. २९५.

■ अविहितस्वाहाकारेषु प्रदानेषु स्वाहाकारविधान इत्यधिकरणार्थः । चि. १०।८।१०.

* अविहितेतिकर्तव्यताकं कर्म विहितेतिकर्तव्यताकात् धर्मान् गृह्णाति इत्युक्तम् ( ७।४।१ ) । भा. ८।४।४।९, * अविहितेतिकर्तव्यताकेषु सौर्यादिषु इतिकर्तव्यताया अतिदेशः इत्यधिकरणार्थः । ७।४।२।१.

* 'अर्वां हे धेनू ददाति अजमृषभम्' । पदान्तरसमभिव्याहाराभावे धेनुपदमात्रश्रवणे सर्वेण गोवृत्तिपानादिगुणस्यैव प्रतीतेः धेन्वादिशब्दानां गोमात्रवृत्तिविजातीयधानादिगुणे एव शक्तिः । वैजात्यं च गोमात्रवृत्ति धानादिनिष्ठमनुभवसिद्धम् । अश्वादिपदसमभिव्याहारे च धेन्वादिपदस्य लक्षणा । भाट्ट. १०।२।२८.

* अवेः अङ्गानि सहसा पच्यन्ते अजाऽङ्गानि तु विलम्बेन । चि. ११।४।११.

* अवेक्षणं आज्यधर्मः । चि. ३।८।४, भक्षव्यापारविशेषश्च । तत्र सोमे 'नृचक्षा त्वा' इत्यादिर्मन्त्रः । ३।२।९. * अवेक्षणग्रहणसम्यग्जरणेषु भक्षानुवाक. यथालिङ्गं विनियोक्तव्यः इति सिद्धान्तपक्षः । बा. ३।२।१।२५. * प्रकृतौ आज्योत्पवनावेक्षणयोः प्रयोजनमेतत्, यत् आज्यस्य अपरेण द्रव्येण असंसर्गः । भा. ५।२।८।१६.

* अवेष्टयो द्विविधा राजसूये भूतानामवेष्टयः, दिशामवेष्टयश्चेति । भूतानामवेष्टयोऽपि द्विविधाः 'पृथिव्यै स्वाहा' इत्यादयः षट् पूर्वा अवेष्टयः, 'अद्भ्यः स्वाहा' इत्यादयश्च उत्तराः । दिशामवेष्टयस्तु एकादश यथा 'आग्नेयमष्टाकपालं निर्वपति हिरण्यं दक्षिणा, ऐन्द्रमेकादशकपालं ऋषभो दक्षिणा, वैश्वदेवं चरुं पिशङ्गी पष्ठौही दक्षिणा, मैत्रावरुणीमामिक्षां वशा दक्षिणा, बार्हस्पत्यं चरुं शितिपृष्ठो दक्षिणा, आदित्यां मल्हां गर्भिणीमालभते, मारुतीं पृश्निं पष्ठौहीमश्विभ्यां, पूष्णे पुरोडाशं द्वादशकपालं निर्वपति, सरस्वते सत्यवाचे चरुं, सवित्रे सत्यप्रसवाय पुरोडाशं द्वादशकपालं तिसृधन्वं शुष्कदृतिर्दक्षिणा' ( तैस. १।८।१९ ) । चि. २।३।२. * अवेष्टिः । अन्नाद्यकामस्यावेष्टिकवाक्यान्तर्गतस्य 'राजन्योऽन्नाद्यकामो यजेत' इति फलपदानुषक्तस्य 'ब्राह्मणोऽन्नाद्यकामः' 'वैश्योऽन्नाद्यकामः' इतिवत् राजन्यस्यापि अविशेषात् तत्प्रयोगस्यापि फलभेदात् भेदापत्तिः । सु. पृ. ९१२. * अवेष्टिः द्वेधा राजसूये अन्तःप्रयुज्यमाना बहिःप्रयुज्यमाना चेति । तत्र बहिरवेष्टौ 'यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधाय आहुतिमाहुतिं हुत्वा तमभिघारयेत् । यदि राजन्य ऐन्द्रं, यदि वैश्यो वैश्वदेवं' इति विधीयते । तथा चानेन वाक्येन ब्राह्मणादिकर्तृकं गुणविशिष्टं कर्मान्तरं विधीयते । चि. २।३।२. * अवेष्टिः । 'यदि राजन्य ऐन्द्रं मध्ये निधाय आहुतिं हुत्वा अभिघारयेत्' इत्यनुषक्तस्यास्य राजन्यकर्तृकप्रयोगविषयैन्द्रमध्यनिधानपूर्वकाभिघारणविधिवाक्यस्य तत्प्रयोगं विना अनुपपत्तेरपि प्रयोगभेदोऽवसीयते । सु. पृ. ९१२. ■ अवेष्टिः राजन्यात् बहिरपि । न च तत्र दक्षिणाभेदः । नहि राजन्यकर्तृको दक्षिणाम्नानं प्रत्यन्ते 'एतयैव अन्नाद्यकाम यजेत' इत्येकवचनान्तेन शब्देन फलं प्रति निर्देशात् सहप्रयोग एव । भा. ११।४।३।९.

■ अवेष्टेः ब्राह्मणादिकर्तृकायाः राजसूयान् भिन्नतन्त्रता ॥

अवेष्टौ चैकतन्त्र्यं स्याल्लिङ्गदर्शनात् । ११।४।३।९ ॥

भाष्यं— तस्मिन्नेव राजसूये अवेष्टिः, आग्नेयोऽष्टाकपालो हिरण्यं दक्षिणा, .. बार्हस्पत्यश्चरुः शितिपृष्ठो दक्षिणा इत्याम्नाता । तस्यां चिन्त्यते किमङ्गानां भेदः, अथ तन्त्रभाव इति । किं प्राप्तम् ? अवेष्टौ चैकतन्त्र्यं स्यात् । तन्त्रतालिङ्गदर्शनात् । लिङ्गं हि तन्त्रभावस्य सूत्रके दृश्यते 'यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधायाऽऽहुतिमाहुतिं हुत्वाऽभिघारयेत्, यदि राजन्य ऐन्द्रं, यदि वैश्यो वैश्वदेवं' इति । तन्त्रत्वे च हविषां मध्ये निधानमुपपद्यते । एकतन्त्रे च सामञ्जस्यम् । तस्मादैकतन्त्र्यम् । ननु लिङ्गमुपदिश्यते, कुतः प्राप्तिः ? एक चोदनया प्राप्तिः । 'अवेष्टा दिशामवेष्टयः । इमं वा अथ त लोकं पुनरुपावरोहन्ति' इति । अवेष्टिरिति

चैकप्रस्तुतेः । ‘ एतयैवान्नाद्यकामं याजयेत् ’ इति च ।

टुप्—‘ गार्हपत्यं मध्ये निधाय ’ इति मध्यशब्दोऽयम् । यदि अन्यान्यपि हवींषि तन्त्रेण क्रियन्ते, एवं मध्यशब्दो भवति । ‘ आहुतिमाहुतिं हुत्वा ’ इति तन्त्रे एवोपपद्यते । ‘ एतया यजेत ’ इत्येकवचनप्रयोगः श्रूयते । यदि भेदेन प्रयोगो भवेत्, तथा सति प्रयोगे बहुवचनं श्रूयेत । तस्मात् प्रयोगे एकवचनश्रवणात् तन्त्रम् ।

वचनात् कामसंयोगेन । ९ ॥

भाष्यं—न वा तन्त्रभावः । कुतः ? उक्तो न्यायः, ‘ प्रतिदक्षिणं वा कर्तृसम्बन्धः स्यात्० ’ इति ( ११।४।१।२ )। लिङ्गदर्शनादिति यदुक्तं, तत्र ब्रूमः । वचनादिय कामसंयोगेनापि श्रूयते, ‘ एतयैवान्नाद्यकामं याजयेत् ’ इति । तदेतद्दर्शनम् । न च तत्र दक्षिणाभेदः । नहि राजसूयिकयो दक्षिणास्तत्र प्राप्यन्ते । ‘ एतयैवान्नाद्यकामं याजयेत् ’ इत्येकवचनान्तेन शब्देन फलं प्रति निर्देशात् सहप्रयोग एव, तत्रैतद्दर्शनमुपपद्यते । तस्मात् तदपेक्षमेतत् ।

टुप्—‘ प्रतिदक्षिणं वा कर्तृसंयोगात् ’ इत्यनेन न्यायेन तन्त्रभेदः प्राप्नोति । ‘ मध्ये निधाय ’ इत्यनेन लिङ्गेन च तन्त्रं प्राप्नोति । तत्र को निर्णयः, भेदेन वा, तन्त्रम् ? उच्यते । ‘ एतयाऽन्नाद्यकामो यजेत ’ इति कामसंयोगेन श्रूयते । तत्र योऽन्नाद्यं कामयमानः करिष्यति, तस्य तन्त्रेण प्रयोगो भविष्यति । भेदेन क्रियमाणानां यत् प्रयोगे एकवचनं, तद्बाध्येत । तस्मादेकवचनादनन्यथासिद्धलिङ्गाच्च यागे तन्त्रेण प्रयोगः । क्रत्वर्थायां [illegible] अवेष्टौ तत्प्रयाभावाद्दक्षिणाभेदाच्च भेदेनैव प्रयोगः ।

क्रत्वर्थायामिति चेन्न, वर्णसंयोगात् । १० ॥

भाष्यं—अथ यदुक्तं क्रत्वर्थायामेवैतद्दर्शनं भवतु । एव प्रकृतविषयत्वं भविष्यतीति । तन्न । कुतः ? वर्णसंयोगात् ‘ यदि ब्राह्मणो यजेत ’ ‘ यदि वैश्यः ’ इति । न च क्रतौ ब्राह्मणवैश्यौ स्तः । राजन्यस्यैव राजसूयः, ‘ राजा राजसूयेन ’ इति वचनात् । तस्मादक्रत्वर्थायामेतद्दर्शनम् ।

शा—राजसूये अवेष्टिर्नामेष्टिः ‘ आग्नेयमष्टाकपालं निर्वपति हिरण्यं दक्षिणा ’ इत्यादिपञ्चहविष्का । सा चेयं ‘ ईश्वरो वा एष दिशोऽनून्मदितोर्यद् दिशोऽनुव्यस्थापयन्ति, दिशामवेष्टयो भवन्ति दिक्ष्वेव प्रतितिष्ठत्यनुन्मादाय ’ इत्येवं दिग्व्यवस्थापननिमित्तोन्मादपरिहारार्थतया श्रूयमाणा राजसूयान्तर्गता इति वादरविवादम् । ( दिशोऽनु सारा दिवमनु । उन्मदितोरीश्वरः उन्मत्तो भवितुं समर्थः स्यात् । यजमानस्यानुन्मादाय एता दिशामवेष्टयो भवन्ति, तथा सति दिक्षु प्रतिष्ठितो भवतीत्यर्थः । दिशां सम्बन्धिनां उन्मादयितृणां अवयजनहेतुत्वात् दिशामवेष्टय इति भट्टभास्करः । सोम. )

सोम—पूर्ववत् करणवत् इहापि अङ्गानुष्ठाने तन्त्रे इत्युत्थानात् संगतिः । यदि प्रयोगस्य मध्येनिधानादिना समानतन्त्रतास्य आवश्यकत्वात् न तत्रार्थे विचारः । किंतु क्रतुमध्यस्थायाम् । अवेष्टिः इति नैकस्य याज्ञिकप्रयोगगतं न तु श्रुतिगतं, तत्र ‘दिशामवेष्टयो भवन्ति’ इति बहुत्वेनैव अवगमात् । यद्यपि यथोत्पत्त्या एव कामे निधानं, तथापि मध्येनिधानविधिबलात् अन्तःप्रयोगे सावकाशत्वाच्च बहिःप्रयोगे दक्षिणाभेदः परित्याज्यः । अन्यदीक्षितैस्तु परिमलेऽपि दक्षिणाशब्दो बहिःप्रयोगे अवान्तरपरः, अन्तःप्रयोगे मुख्यः । न च तस्मापि सोऽयमनल्पकः इत्यत्र मानमस्ति मुख्यत्वोपपत्तेः इत्युक्तम् । तच्चिन्त्यम् । सूत्रे लिङ्गदर्शनं मध्येनिधानदर्शनमभिमतम् ।

वि—‘ अवेष्टावङ्गतन्त्रत्वं भेदो वा, लिङ्गतोऽग्रिमः । नोत्पत्तौ दक्षिणाभेदास्तिर्बाह्यप्रयोगगम् ॥ ’ बहिःप्रयोगे तन्त्रं, अन्तःप्रयोगे भेदः इति निर्णयः ।

भाट्ट—राजसूये अवेष्टिसंज्ञकानि पञ्च कर्माणि ‘आग्नेयमष्टाकपालं निर्वपति हिरण्यं दक्षिणा, ऐन्द्रमेकादशकपालमृषभो दक्षिणा, वैश्वदेवं चरुं पिशङ्गी पष्ठौही दक्षिणा, मैत्रावरुणीमामिक्षां वशा दक्षिणा, बार्हस्पत्यं चरुं शितिपृष्ठो दक्षिणा ’ इत्येतैर्वचनैर्विहितानि । तस्यापि उत्पत्तिवाक्ये दक्षिणाभेदश्रवणात् क्रतुस्वभेदेन पूर्ववत् प्रयोगभेदः । न च ‘ यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधाय आहुतिमाहुतिं हुत्वा अभिघारयेत् ’ इत्यादिवचनैर्मध्येनिधानादिरूपगुणसामर्थ्येन पञ्चहविष्केष्टिप्रयोगैक्यसिद्धेः

द्युपत्तिवाक्ये दक्षिणाशब्दो दक्षिणावयवपर इति वाच्यम्। तस्य ब्राह्मणादिकर्तृकत्वेन अन्वाचार्ये बहिःक्रतुप्रयोगत्वेन स्थापितत्वात् राजसूयमध्ये क्रियमाणानां तेषां पृथक्प्रयोगत्वोपपत्तेः। न च राजसूयप्रकरणपठितानामपि एषा निरवकाशेन विशेषवचनेन ब्राह्मणादिकर्तृकत्वेन अन्वाचार्यत्वावगमात् सामान्यविहितस्वाराज्यसम्बन्धानुपपत्तेः, अन्तःक्रतुप्रयोगे एव प्रमाणाभावः, स्वाराज्यार्थे अन्तःक्रतुप्रयोगस्यापि द्वितीये ( २।३।२ ) कौस्तुभे व्यवस्थापितत्वात्। न च एवमपि बहिःप्रयोगानुरोधेन दक्षिणाशब्दस्य अवयवपरत्वावश्यभावे अन्तःक्रतुप्रयोगेऽपि मिलिताया एव दक्षिणात्वात् कथं प्रयोगभेद इति वाच्यम्। दक्षिणाशब्दस्य अवयवपरत्वे लक्षणापत्तेः प्रत्येकं दक्षिणात्वाचयमेन प्रयोगभेदावश्यंभावात्। तस्य च मध्येनिधानादिरूपगुणानुरोधेन ब्राह्मणकर्तृकप्रयोगे निवेशासम्भवेऽपि अन्तःक्रतुप्रयोगनिवेशे बाधकाभावः। न च एवं बहिःक्रतुप्रयोगे उपदिष्टदक्षिणाऽनापत्तिः, दक्षिणायाः स्वरूपेण प्रयोगद्वारकत्वेन पश्चात् विध्येकेष्टिप्रयोगे अद्वारत्वानुपपत्तेरिति वाच्यम्। तत्प्रयोगस्य दक्षिणापेक्षायां सति सम्भवे तत्तत्प्रधानाङ्गत्वेन अवगताऽऽम्नाता एव उपस्थितत्वात् आमयीन्यायेन ( ३।२।८ ) ग्रहणोपपत्तेः। अस्तु वा तत्र आतिदेशिकी एव दक्षिणा सर्वथा अन्तःक्रतुप्रयोगभेदः।

मण्डन—‘ अवेष्टौ न कृतौ तन्त्रम्। ’ क्रतौ प्रयोगे।

शंकर—‘ नायेष्टावेकान्तत्वम्। ’

* अवेष्टेः राजसूयात् बहिष्प्रयोगे अङ्गानां तन्त्रम्। वि. ११।४।३. * अवेष्टेः राजसूयान्तःप्रयोगे अङ्गानां न तन्त्रम्। भा. ११।४।३।८–१०.

अवेष्टौ चैकतन्त्र्यं स्याल्लिङ्गदर्शनात्। ११। ४।३।९॥

राजसूये दिशामवेष्टयः नाम पञ्च इष्टयः ‘आग्नेयोऽष्टाकपालो हिरण्यं दक्षिणा’ इत्यादयः। अस्यां अवेष्टौ अङ्गानां ऐकतन्त्र्यं एकतन्त्रता स्यात्। लिङ्गदर्शनात्। ‘ यदि ब्राह्मणो यजेत, बार्हस्पत्यं मध्ये निधाय आहुतिमाहुतिं हुत्वाऽभिघारयेत् ’ इति तन्त्रभावस्य लिङ्गं दृश्यते। तन्त्रभावे सत्येव बार्हस्पत्यस्य मध्ये निधानमुपपद्यते, न तन्त्रभेदे। तस्मात् तन्त्रम्। इति पूर्वः पक्षः।

वचनात् कामसंयोगेन। १०॥

न तन्त्रभावः, वचनात् इयं अवेष्टिः कामसंयोगेन फलसंयुक्ताऽपि श्रूयते ‘ एतयैवान्नाद्यकामं याजयेत् ’ इति। तस्मात् राजसूयात् भिन्नतन्त्रैव इति सिद्धान्तः।

क्रत्वर्थायामिति चेत्। ११॥

पूर्वपक्षी आह। उक्तं लिङ्गदर्शनं क्रत्वर्थाया राजसूयाङ्गभूतायामेव अवेष्टौ स्यात् न स्वतन्त्रायां इति चेत्।

न, वर्णसंयोगात्। १२॥

सिद्धान्ती आह। न क्रत्वर्थायां लिङ्गदर्शनमुपपद्यते वर्णसंयोगात् ‘ यदि ब्राह्मणः ’ ‘ यदि वैश्यः ’ इति वर्णेन संयोगः श्रुतः। न च ब्राह्मणवैश्ययोः राजसूयाधिकारः। तस्मात् राजसूयात् भिन्नतन्त्रैव अवेष्टिः। तत्र अङ्गानां तन्त्रेणानुष्ठानात् बार्हस्पत्यादीनां मध्यनिधानलिङ्गं उपपद्यते इति न विरोधः। तस्मात् स्वतन्त्रेयम्। के.

अवेष्टौ यज्ञसंयोगात् क्रतुप्रधानमुच्यते। २।३।३।३॥

अस्ति राजसूयः ‘ राजा राजसूयेन स्वाराज्यकामो यजेत ’ इति। तं प्रकृत्यामनन्ति अवेष्टिं नामेष्टिं, ‘ आग्नेयोऽष्टाकपालो हिरण्यं दक्षिणा ’ इत्येवमादिका प्रकृत्याभिधीयते ‘ यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधायाहुतिमाहुतिं हुत्वा तमभिघारयेत्, यदि राजन्य ऐन्द्रं, यदि वैश्यो वैश्वदेवम् ’ इति। तत्र सन्दिह्यते किं ब्राह्मणादीनां प्राप्तानां निमित्तत्वेन श्रवणं, उत ब्राह्मणादीनामयं प्रयोगो विधीयते इति। इदानीं गुणनिमित्तकर्मभेदाभेदप्रतिपादनप्रसङ्गेन प्रयोगभेदः प्रतिपाद्यते। अत्राय पूर्वपक्षिणोऽभिसन्धिः—यौगिकः खल्वयं राजशब्दः, राज्ययुक्तो हि राजेति महाजनप्रसिद्धेः। राज्यं च जनपदपुरपरिपालनचलितद्भुमाग्रहणम्। तच्च सर्ववर्णसाधारणमेव। तेन ‘ राजा राजसूयेन स्वाराज्यकामो यजेत ’ इत्यत्र विद्याविरहितत्वेन शूद्रस्यानधिकारात् त्रयाणामेव ब्राह्मणादीनामधिकारः। तथा च

पादानाच्च नैर्गुण्यिकावकाशः । अतो न कथं चिदपि ब्राह्मणादियुक्तवाक्यान्निमित्तार्थत्वमिति पूर्वाधिकरणपूर्वपक्षन्यायेन यदिशब्दपरित्यागादिना अवेष्टेरेव ब्राह्मणादिकर्तृकं प्रयोगान्तरं विधीयते इति सिद्धम् । न च प्राप्ते कर्मणि कथं ब्राह्मणादिबार्हस्पत्याद्यनेकार्थविधानमिति वाच्यम् । विशिष्टकर्मविधिवत् विशिष्टप्रयोगविधाने चानेकविधानोपपत्तेः । तथा च सति राजसूयान्तर्गतावेष्टिप्रयोगस्य स्वाराज्यफलेनैव निराकाङ्क्षत्वात् ब्राह्मणादियुक्तप्रयोगान्तरस्य फलाकाङ्क्षत्वात् ' एतयाऽन्नाद्यकामं याजयेत् ' इत्यन्नाद्यफलं ब्राह्मणादियुक्तप्रयोगान्तरेणैव सम्बध्यते । तदुक्तं ' क्रतुमध्यप्रयोगो हि स्वाराज्येनैव पूरितः । साकाङ्क्षस्त्वितरस्तस्मात्तस्यैव फलसंगतिः ॥ ' इति ( वा. पृ. ५८७ ) प्रयोजनम्--पूर्वपक्षे राजसूयान्तर्गतावेष्टौ ब्राह्मणादिनिमित्तं बार्हस्पत्यादिमध्यनिधानम् । सिद्धान्ते तु राजसूयप्रयोगाद्बहिरेव ब्राह्मणादिकर्तृकावेष्टिप्रयोगे बार्हस्पत्यादिमध्यनिधानमिति । सूत्रं तु--अवेष्टौ ब्राह्मणादियुक्तावेष्टिवाक्ये यजेतेति यज्ञसंयोगात्, क्रतुप्रधानं ब्राह्मणादीनामभिधानं नित्येन प्रयोगान्तरं विधातुमित्यर्थः । टीका.

**अवेष्टौ यज्ञसंयोगात् क्रतुप्रधानमुच्यते । २।३।२।३ ॥**

' राजा राजसूयेन स्वाराज्यकामो यजेत ' इति प्रकृत्य ' आग्नेयोऽष्टाकपालो हिरण्यं दक्षिणा, ऐन्द्रमेकादशकपालमृषभो दक्षिणा, वैश्वदेवं चरुं पिशङ्गी पष्ठौही दक्षिणा, मैत्रावरुणीमामिक्षा वशा दक्षिणा, बार्हस्पत्यं चरुं शितिपृष्ठो दक्षिणा ' इति पञ्च विशामवेष्ट्यो नाम हवींषि ताप ' यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधाय आहुतिमाहुतिं हुत्वाऽभिघारयेत्, यदि राजन्य ऐन्द्रं, यदि वैश्यो वैश्वदेवं ' इत्याम्नातम् । अत्र राजन्यशब्देन यौगिकेन ब्राह्मणादीनामपि राजसूयाधिकारित्वेन प्राप्तानां निमित्तार्थं श्रवणं इति पूर्वपक्षे उत्सूत्रे प्राप्ते सिद्धान्तमाह । अवेष्टौ अवेष्टिप्रकरणे ' यदि ब्राह्मणो यजेत ' इत्यादि क्रतुप्रधानमुच्यते, न निमित्तार्थेन । राजसूयात् बहिरेव ब्राह्मणादीनां अयं प्रधानभूतः अवेष्टिसंज्ञकः क्रतुः विधीयते इत्यर्थः । क्रतुः प्रधानं यस्मिन् कर्मणि तत् वचनरूपं कर्म क्रतुप्रधानमिति विग्रहः । राजसूये तु न ब्राह्मणवैश्ययोरधिकारः । क्षत्रियेणैव राज्ञा यष्टव्यराजसूयस्य संयोगात् न ब्राह्मणादिशब्दस्य निमित्तार्थता । किंतु ब्राह्मणादीनां अत्र अवेष्टियागः राजसूयात् बहिरेव विधीयते । राजसूयस्तु क्षत्रियस्यैव राज्ञः इति सिद्धान्तः । के.

**अवेष्टौ राजसूयात् बहिर्भूतायामन्नाद्यफलस्य विधिः ॥**

**संनिधौ त्वविभागात् फलार्थेन पुनःश्रुतिः । २।३।१३।२३ ॥**

**भाष्यं**— अस्त्यवेष्टिः ' आग्नेयोऽष्टाकपालः पुरोडाशो भवति ' इत्येवमादिः । सा प्रकृत्योच्यते ' एतयाऽन्नाद्यकामं याजयेत् ' इति । तत्र सन्देहः किं कर्मान्तरमवेष्टेः, उतावेष्टिरेवेति । किं प्राप्तं ? कर्मान्तरमिति उक्तेन न्यायेन ( २।३।१२ ) । एवं प्राप्ते ब्रूमः । संनिधौ फलार्थेन पुनःश्रुतिः अवेष्टेरेव, न कर्मान्तरमिति । कुतः ? अविभागात् । एतया इत्येषशब्दो न शक्नोति अवेष्ट्या विभक्तं यागमन्यं वक्तुम् । सन्निहितस्य प्रतिनिर्देशक एष शब्दः । तस्मात् अवेष्टिरेव अन्नाद्यकामस्य विधीयते इति । किं प्रयोजनम् ? यदि अवेष्टिः आग्नेयादीनि हवींषि, अथ कर्मान्तरमन्यद्धविष्को यागः इति ।

**वा**— प्रयोजने तु चोदयन्ति, कर्मान्तरेऽपि किल एतच्छब्दकृतात् सादृश्यप्रत्ययात् आग्नेयादीन्येव हवींषि, इति कथं अन्यद्धविष्को यागः इति । तत्तु अनोद्यम् । ज्योतिरादिवत् एतच्छब्दस्य प्रस्तूयमानमुख्यार्थोपपत्तौ सत्यां सादृश्यलक्षणाऽनुपपत्तेः । तस्मात् सूक्तं कर्मान्तरे अन्यद्धविष्को यागः इति ।

**सोम**— एतयेति वाक्यस्य कर्मान्तरविधायकत्वे तस्मिन् कर्मणि ' अव्यक्तासु तु सोमस्य ' इति सौमिकधर्मप्राप्तेः अन्नाद्यकामेन सोमहविष्को यागः कर्तव्यः । सिद्धान्ते आग्नेयादिहविष्का अवेष्टिः । सूत्रे विभागात् विपरिवृत्तेः इत्यर्थः । ( पक्षान्तरेच भाष्यानुसारेणाधिकरणम् । वार्तिकानुसारेण तु ' अनुवादेवाना देशादीना

संनिधौ कर्मभेदकत्वं नास्ति' इति त्रिन्दौ अधिकरणं द्रष्टव्यम् । )

* अवेष्टौ सत्यपि बलाबलविशेषे प्रयोगभेदेन स्वाराज्यान्नाद्यकामयोः समुच्चयसंभवे बाधो न युक्तः । स्वाराज्यान्नाद्ययोस्तु भिन्नप्रयोगविषयत्वात् व्यवस्थोपपत्तेः विरोधाभावात् बलाबलविशेषे सत्यपि, बाधो नास्ति । सु. पृ. ९१०, * अवेष्टिषु अतिदेशेन इतिकर्तव्यतालाभात्, मध्यनिधानान्वयाऽनुपपत्त्या च कल्पितेषु द्रव्यान्तरेषु यागीयत्वप्रतीतेस्तुल्यत्वात्, कल्प्यानां च यागान्तराणां इतिकर्तव्यताऽपेक्षायां श्रुतयागप्रकृतित्वेन धारणाया अवेष्टेरेव बुद्धिस्थत्वात् तेषामपि तत्प्रकृतित्वावगतेः तदीयेतिकर्तव्यतालाभात्, अभिन्नोऽविधेयद्रव्यविशेषप्रतीतेः निर्धारितशास्त्रार्थानुष्ठानसिद्धिः । पृ. ९११, * ब्राह्मणादिपदैः प्रयोगान्तरविधौ अन्याय्यकल्पनापत्तेः कल्प्य अवेष्टिपदहि प्रयोगविषयत्वैव युक्ता । पृ. ९१०.

अवेष्ट्यधिकरणम् । ब्राह्मणादीनां राजन्यात् यष्टिः अवेष्टेः कर्मान्तरता ॥

अवेष्टौ यज्ञसंयोगात् क्रतुप्रधानमुच्यते । २।३।२।३॥

भाष्यं-- अस्ति राजसूयः 'राजा राजसूयेन स्वाराज्यकामो यजेत' इति । तं प्रकृत्य आमनन्ति अवेष्टिं नाम इष्टिम् । 'आग्नेयोऽष्टाकपालो हिरण्यं दक्षिणा' इत्येवमादि । तां प्रकृत्य विधीयते 'यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधायाहुतिमाहुतिं हुत्वाऽभिघारयेत्, यदि राजन्य ऐन्द्रं, यदि वैश्यो वैश्वदेवं' इति । तत्र संदिह्यते किं ब्राह्मणादीनां यजमानानां निमित्तार्थेन श्रवणं, उत ब्राह्मणादीनां अयं यागो विधीयते इति । कथं निमित्तार्थेन भवेत्, कथं वा यागविधानमिति । यदि राजशब्दो ब्राह्मणादिष्वपि केन चित् प्रकारेण, ततो निमित्तार्थेन । अथ क्षत्रिये एव, ततः प्राप्तानि एवमादीनि श्रवणानि । किं तावत् प्राप्तं ? निमित्तार्थेनेति । तत्र एवं तावदुपवर्ण्यते यौगिको राजशब्द इति । राज्यं यस्य कर्म स राजा । किं पुनः राज्यं कर्म ? जनपदपुरपरिरक्षणे सत्युद्धरणे राजशब्दमार्यावर्तनिवासिनः प्रयुञ्जते । राज्ञः कर्म राज्यं इति चाभियुक्ता उपदिशन्ति । तेन मन्यामहे यस्य एतत् कर्म स राजेति । यथा ये उद्मेघं नाम कं चित् पुरुषं नावेदिषुः, तस्य तु पुत्रं औद्मेघिः इत्येवं विदुः, शक्नुवन्ति ते, यस्तस्य पिता स उद्मेघः इति कल्पयितुम् । उद्मेघपुत्रस्य एवं समभिव्याहारो भवतीति । एवं राज्ययोगात् राजशब्द इति विज्ञायते । ननु जनपदपुररक्षणवृत्तिं अनुपजीवत्यपि क्षत्रिये राजशब्दं आन्ध्राः प्रयुञ्जते प्रयोक्तारः । न ब्रूमो न प्रयुञ्जते इति, किं तर्हि, कर्मविशेषनिमित्तत्वात् राजशब्दस्य, तद्योगादपि राजशब्दो भवति इत्येतदुपपादयामः । प्रयुञ्जते च क्षत्रिये राजशब्दं अक्षत्रियेऽपि । तस्मिन् उभयस्मिन् प्रयोगदर्शनात् यदिशब्दसमभिव्याहाराच्च राजसूयस्यैव गुणविधानं भविष्यति, न ब्राह्मणस्य वैश्यस्य च कर्मान्तरं विधास्यतीति । अथवा अनार्यलौकिकस्य प्रयोगस्य आर्यलौकिकेन प्रयोगेण विरुध्यमानस्य अप्रामाण्यं स्यात् । अभ्युपगच्छामि हि वै जनपदिनः सार्वभौमं प्रयोगम् । अपि च अनिपुणीता लौकिका अर्था विपरीतेभ्यः प्रत्ययिततरा भवन्ति । तथा आर्यावर्तनिवासिनां शब्दार्थविषयेषु अभियुक्तानां अभिप्रायतरां धर्मेषु च अनुतिष्ठतां अन्यजनपदवासिभ्यो म्लेच्छेभ्यः समीचीनतर आचारो भवति । तस्मात् यौगिको राजशब्दः । निमित्तार्थानि श्रवणानि । राजसूयस्य गुणविधिः न कर्मान्तरमिति । एवं प्राप्ते ब्रूमः । अवेष्टौ तु यत् क्रतुप्रधाने ब्राह्मणादिश्रवणं ब्राह्मणादीनां अवेष्टिप्राप्तौ विधानं, न निमित्तार्थम् । कुतः ? अप्राप्तत्वात् ब्राह्मणवैश्ययोः । कथमप्राप्तिः ? क्षत्रियस्य राजसूयविधानात् 'राजा राजसूयेन यजेत' इति । ननु उक्तं यौगिको राजशब्द इति । एतदप्ययुक्तं यतो जातिवचन इति । ननु उभयाभिधाने यदिशब्दसंबन्धात् प्रकरणाच्च न कर्मान्तरविधानं न्याय्यं इत्युक्तम् । अत्रोच्यते । नोभयाभिधानं अवकल्पते । कुतः ? यदि तावत् जातिशब्दो राजेति, ततः तत्कर्मत्वात् जनपदपरिपालने राज्यशब्दो भविष्यति । तेन आर्यावर्तनिवासिनां प्रयोगो न विरोत्स्यते । अथ यदि राज्यशब्दः परिपालने निरूढो भविष्यति, तदन्यत्र करोति राज-

शब्दः क्षत्रियजातौ तन्निमित्तो भविष्यति तत्र आन्ध्राणां प्रयोगो न विरोत्स्यते । तस्मात् प्रयोगदर्शनात् उभावपि राजराज्यशब्दौ जातिपरिपालनाभ्यां नित्यसम्बद्धौ इत्यभ्युपगन्तव्यम् ।

को नु खलु निर्णयः ? राजजातीयस्य कर्म इत्यनः परिपालनं राज्यशब्देनोच्यते । एवं हि स्मरन्तः अभियुक्ताः तस्य कर्म इति ष्यञ्-प्रत्ययं विदधति, न तु तस्य कर्ता इति प्रत्ययान्तरं वा प्रातिपदिकप्रत्यापत्तिं वा समामनन्ति । तस्मात् राज्ञः कर्म राज्यं, न राज्यस्य कर्ता राजा । ननु योयो जनपदपुररक्षणं करोति, तं तु लोको राजशब्देनाभिवदति । उच्यते । योगात् लोकः प्रयुङ्क्ते । परिपालने राज्यशब्दः प्रसिद्धः इति । स तु परिपालने राज्यशब्दो राजयोगात् इत्यस्माभिरुक्तम् । तस्मात् राजशब्दः प्रसिद्धमूलम् । तद्योगात् राज्यशब्दः । तद्योगादपि ब्राह्मणवैश्ययोः राजशब्दः प्रयुज्यते । न तु एवं स्मरन्ति राज्ययोगात् राजेति । यत्तूक्तं, अनुमानात् राज्यस्य कर्ता यः स राजा, यथा औदनिकः पिता उदमेघ इति । उच्यते । अनुमानात् प्रयोगो बलवान् । राज्यस्य कर्तारं राजा इत्यनुमिमीमहे । क्षत्रिये तु प्रत्यक्षं प्रयुज्यमानम् उपलभामहे । तथा योगमपि अनुमिमीमहे राज्यस्य कर्ता राजेति । राज्ञः कर्म राज्यं इति तु स्मरन्ति । अनुमिमानाश्च स्मृतिमनुमिमते स्म । स्मरन्तस्तु प्रत्यक्षमुपलभन्ते । तेन तत्र स्मृतिर्बलीयसीति ।

आह, योयो राज्यं करोति तत्र राजशब्दं प्रयुञ्जते, न यत् राज्ञः कर्म तद्राज्यमिति । तेन मन्यामहे राज्ययोगो राजशब्दप्रवृत्तौ निमित्तं, न तु राजयोगो राज्यशब्दप्रवृत्तौ इति । न ब्रूमः, प्रयोगात् वयं राजयोगं राज्यशब्दप्रवृत्तौ निमित्तमवगच्छाम इति । कथं तर्हि, स्मरणात् । प्रयोगाच्च स्मृतिर्बलीयसी । प्रयोगाद्धि स्मृतिरनुमीयेत । अपि च राज्ययोगस्य निमित्तता व्यभिचरति । जनपदपरिपालनं अकुर्वन्नपि राजा इति आन्ध्रा वदन्तीत्युक्तम् । ननु राजयोगात् राज्यं इत्येतदपि व्यभिचरति । नहि राज्ञः स्नपितं निमिषितं च सर्वं राज्यमित्युच्यते । यदि वयं प्रयोगात् निमित्तमाश्रयाम, तत एवमुपालभ्येमहि । स्मृत्या तु वयं निमित्तमाश्रयामः । तेन यस्य

राजजातीयस्य कर्म आत्मा विशेष्यते, तद्राज्यं इत्यभ्युपगच्छामः । यत्तूक्तं, आन्ध्रा अपि राज्ययोगात् राजानमभ्युपगच्छन्तीति । परिहृतमेतत् प्रयोगो दुर्बलः स्मृतेरिति । यदुक्तं आर्यावर्तनिवासिनः प्रमाणं इतरेभ्य आचारेभ्य इति, तुल्यः शब्दप्रयोग आचारेषु इत्युक्तम् । तस्मात् जातिनिमित्तो राजशब्दः । एवं चेत् यज्ञसंयोगात् क्षत्रियस्य राजसूयेन, यागाभिधिः अवेष्टिः इति ।

या—' राजा राजसूयेन स्वाराज्यकामो यजेत ' इत्यस्य प्रकरणे ' आग्नेयोऽष्टाकपालो हिरण्यं दक्षिणा ' इत्यादिभिः द्रव्यदेवतासंयोगैः अवेष्टिसंज्ञकामिष्टिं विधाय श्रूयते 'यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधाय आहुतिमाहुतिं हुत्वाऽभिघारयेत् यदि राजन्य ऐन्द्रं, यदि वैश्यो वैश्वदेवं ' इति । तत्र पूर्वं तदेव संदेहः किं राजसूयमध्यस्थाया एव अवेष्टेः वर्णविशेषसम्बन्धं प्रासङ्गिकं निमित्तत्वेन उद्दिश्य तत्र नैमित्तिकं विधीयते, उत अप्राप्तमेव ब्राह्मणादिसम्बद्धं प्रयोगान्तरमुद्दिश्यते इति । तन्निर्णयार्थं च एतद्विचारयितव्यं किं राजसूये अधिकारः त्रयाणामपि वर्णानां, उत क्षत्रियस्यैवेति । तन्निर्णयार्थं अधिकारिविशेषणभूतो राजशब्दः तथैव विचारणीयः । ततोऽपि एतद्विचारयितव्यं किं क्षत्रियत्वनिमित्तो राजशब्दः, उत राज्यकरणनिमित्त इति ।

ननु च ' एतयाऽन्नाद्यकामं याजयेत् ' इति वर्णविशेषेण असम्बद्धं पृथक् स्वतन्त्रप्रयोगवचनादेव अवेष्टेर्वचनमस्ति इति वर्णत्रयस्यापि प्राप्तस्य निमित्तार्थतैव भवेत् । नैतदेवम् । तदा हि निर्ज्ञातफलसम्बन्धायाः कर्मान्तरे वचनान्तरेण अविधीयमानायाः पृथक् प्रयोगकारणाभावाच्च राजसूयमध्यस्थाया एव ' एकस्य तूभयत्वे संयोगपृथक्त्वं ' इत्यनेन न्यायेन ( ४।३।५ ) साधारणं च स्वाराज्य फलं, अन्नाद्यमिति च अन्यत् विज्ञायते । पृथक् च राजन्यैनैव फलार्थिना प्रयुज्यते, न धर्मान्तरसम्बन्धः । तद्यथा अध्ययनाधानयोः निर्ज्ञातप्रयोजनत्वात् तदधीनविद्यानां कर्मणां अधिकारसम्बन्धसमयेऽपि सति आत्मार्थप्रयोगेनैव अवतिष्ठते । तथा च अत्रैव स्वाराज्यकामाधिकारेऽपि राजन्यैकवर्णेन भोक्तृविशेषो भविष्यति । तस्मात् राजसूयाधि-

 अवेष्ट्यधिकरणं

राजा हि राज्ययोगात् प्रतीयते ॥' क्षत्रियवचन एवायं राजशब्दो न यौगिकः। स हि राज्ययोगाद्वा भवेद् धात्वर्थानुसारेण दीप्तियोगाद्वा, उभयथाऽपि चानुपपन्नः, तद्रहितरूढिशब्ददर्शनात्। एकदेशस्यापि रूढिः अत्र समुदायप्रसिद्धिं बाधते। न च अवयवप्रसिद्धिरपि अत्र ऐकान्तिकी विद्यते, नहि दीप्यमानेषु अग्न्यादिषु राजशब्दो विद्यते, न च अनभिषिक्ते जनपदपरिपालनव्यापृतेऽपि आयुक्तके। ननु च आयुक्तकस्य परप्रयुक्तकारित्वात् ऋत्विज इव यजमानत्वं, न राजत्वं भविष्यति। नैवं शक्यम्। पराधीनेष्वपि केषु चित् पृथिवीश्वराभिषिक्तेषु माण्डलिकेष्वपि प्रयोगदर्शनात्। तेन तर्हि अव्यभिचारात् स एवाभिषेको निमित्तं प्राप्नोति। नैव भविष्यति। कुतः? 'अभिषेकोऽपि धर्मज्ञैः क्षत्रियस्यैव पठ्यते। तद्वासौ राजशब्देन तेन नाक्षत्रिये मतः ॥' ततोऽभिषेकस्य निमित्तत्वं शक्यते, यदि अस्य स्वातन्त्र्यं भवेत्। अयं तु क्षत्रियजातावेव स्मृतिभिर्नियतो विधानवेलायामेव लब्धात्मकत्वात् षष्ठीशब्देन राजशब्देन संयुज्यते। तेनैव च उभयनिमित्तत्वं समुदायशब्दन्यायेन एतस्यानिष्टम्। यदि हि जात्यभिषेकयोः अत्यन्तसमुदितयोरेव प्रयुज्यते, न तु केवलाया जातौ जात्यन्तरे वा अभिषेके प्रयुज्यते, तत उभयं निमित्तम् इति कल्प्येत। स तु व्यभिषेकात् प्रागेव तस्मिन्कार्ये प्रयुक्तः 'राजानमभिषेचयेत्' इति। तस्मात् राजजातावेव प्रवर्तते। न च भाविसंज्ञाविज्ञानं, भूतत्वेनैव उपपद्यमानत्वात्। अगत्या हि सा अन्यत्र आश्रीयते। न च एकस्मिन् निमित्ते सिद्धे निमित्तान्तरं कल्पयितुं शक्यं, विनाऽपि तत्कल्पनेन प्रयोगोपपत्तेः। अभिषेकनिमित्तत्वेऽपि च न्यायानुसारेण नैव अक्षत्रियविषयत्वं सिध्यति। यत्तु धर्मशास्त्रातिक्रमेण क्रियते, न तस्य निमित्तत्वं स्यात्। यथा शूद्रकृतस्य आधानस्य आहवनीयादिप्रयोगनिमित्तत्वम्। अपि च, 'नित्याः शब्दार्थसंबन्धा यथावस्थितगामिनः। नाश्रयन्त्यधुना हेतुं स्वच्छन्दपरिकल्पितम् ॥' नित्यस्य हि राजशब्दस्य नित्येनैव निमित्तेन भवितव्यं, नित्यानित्ययोः संयोगाभावात्। सा च नियता वस्त्वपेक्षया वा विध्यपेक्षया वा निरूप्यते। तत्र न तावत् अभिषेको वस्तुरूपेणैव जानियत् केषु चित् समवेतो दृश्यते। तेन अवश्यं विधानापेक्षमेव निरूपणमाश्रयणीयम्। न च विधानं अक्षत्रिये राजशब्दस्यास्ति इति जात्यव्यभिचार एवापद्यते। ततश्च सैव निमित्तम्।

एतेन राज्यनिमित्तत्वं प्रत्युक्तम्। तदपि हि विधानात् प्रभृति अभिषेकवदेव क्षत्रियत्वमनवस्थम्। दृष्टश्च अनभिषिक्तेऽपि अप्राप्तराज्येऽपि च जनपदे, क्षत्रिये राजशब्दप्रयोगः। तद्वत्यपि वा अन्यजातीये अनभिधानं इष्टिविधानाम्। तस्मादपि न त्रैवर्णिको राजा। तथा च राज्ञोऽपत्यं राजन्यः इति ऐकान्तिकक्षत्रियजातिवचनस्य राजन्यशब्दस्य राजशब्दप्रकृतित्वमेव अन्वाचक्षते। अन्यथा त्रैवर्णिकानां राजत्वात् सर्वेषां त्रैवर्णिकानां अपत्येषु राजन्यशब्दप्रयोगः स्यात्। कुतः? 'राजन्यः क्षत्रिये रूढो राजानः सर्व एव चेत्। अपत्यापत्यवद्योगे वैषम्यं यद् कीदृशम् ॥' ननु एवमपि अनुपपन्नः एवायं अपत्यप्रत्ययः। तथाहि, 'प्रकृतौ तदपत्ये च जातिशब्दस्य तुल्यता। तेन राजैव सर्वत्र राजन्योऽप्यभिधीयताम् ॥' यथैव काकस्यापत्यं काकः, एवं राज्ञोऽपत्यं राजा इत्येव स्यात्। नैष दोषः। पर्याय एव हि राजशब्दस्य राजन्यशब्दः अनेन प्रकारेण अन्वाख्यायते। न तु एकजातिविषयत्वे सति तथा अन्वाख्यातुं युज्यते, नान्यथा। ननु 'राज्ञोऽपत्ये जातिग्रहणं' ('राजश्वशुराद्यत्' पा० ४।१।१३७ सूत्रे वार्तिकं) इति वचनात् क्षत्रियजातिवचनो भविष्यति। नैतदेवम्। इह अन्यसमर्थात्यनुपादानात् राजवत् मनुष्यजातिमात्राधिकारात् सङ्कुचनत्वं स्यात्। ननु च राजराजन्यशब्दयोः स्वतन्त्रकर्मभेदोपदेशेन स्मृतिविदा याज्ञिकाना च भेदेन प्रसिद्धिर्दृष्टा। सत्यं दृष्टा, सा तु ब्राह्मणपरिव्राजकन्यायेन राजन्यशब्दस्य अभिषिक्तविशेषगामित्वेन सामर्थ्यलभ्यत्वात्। यत्तु प्रसिद्धिद्वयाभावे राज्यनिमित्तत्वं प्रकरणादिभ्यो निश्चास्यते इति, तन्निराक्रियते। तथाहि, 'नैव वाच्यद्वयौ शब्दौ स्वातन्त्र्येण प्रसिध्यतः। कल्पनायामेकशक्तौ हि द्वितीयो यौगिको वरम् ॥' तदेतत् दर्शयति 'यदि तावत् जातिशब्दो राजेति ततः'

( भाष्यं ) तस्य कर्म राज्यं इति अवयवप्रसिद्धिसमयात् न तन्निरपेक्षं समुदायकल्पनमुपपद्यते । तेनैव तेन आर्यावर्तनिवासिनां प्रयोगो विरोत्स्यते । अथ तु प्रथममेव राज्यमिति प्रतिपालनं रूढिरूपेण अभिधीयते, ततः समुदायानुसारेणैव तत्कर्तरि राजशब्दप्रयोगसिद्धेः शक्यन्तरकल्पनमन्तरेणैव प्रसिद्धाना राज्याधिकारयोग्येषु क्षत्रियेषु प्रयोगो न विरोत्स्यते । दाक्षिणात्यसामान्येन आम्नाता इति भाष्यकारेणोक्तम् । तस्मान् न तावुभावपि रूढिशब्दौ, नापि यौगिकौ, अन्यतररूढित्वे तु राज शब्दस्य शक्तिकल्पना युक्ता । कुतः ? 'आचार्ययोरसंबन्धे संदेहे सति निर्णयः । संनिबन्धनया स्मृत्या बलीयस्त्वादवाप्यते ॥ ' राज्यशब्दाभिधेयं परिपालनादि कर्म क्षत्रियस्य इति मन्वादयः स्मरन्ति । पाणिनिप्रभृतयोऽपि राज्ञः कर्म इदं राज्य इत्येवं व्युत्पादयन्ति । ' गुणवचनब्राह्मणादिभ्यः कर्मणि च ' (पा० ५।१।१२४) इत्यधिकृत्य स्वतन्त्रशब्दात् राजप्रातिपदिकात् प्रत्ययविधिं, तत्र ष्यञ्प्रत्ययं विदधाति इति । अत्र वदन्ति, पत्यन्तपुरोहितादिपाठात् राजशब्दस्य विनैव विहितेन यका भवितव्यम् । तथा च मनुष्यमपरतर इहोपलभ्यते नानुदात्तयम् । तस्मात् राजशब्दात् राज्यशब्दव्युत्पत्तिः न तु विपरीता, इत्येतावन्मात्रमेव भाष्य द्रष्टव्यम् । राज्यशब्दाद्धि राजनि व्युत्पाद्यमाने पत्योपाख्यान वा राजशब्दादेशागमकं वा स्मरणं स्यात् । तस्मात् इयमेव वचन व्यक्तिः ' राज्ञः कर्म राज्य ' इति, न तु अर्थापत्त्या 'राज्यस्य कर्ता राजा' इति कल्पनीय, देशान्तरे विज्ञातत्वात् राज्ञः । कल्पितायामपि चार्थापत्तौ मन्वादिस्मृति वशेन क्षत्रियस्य एतत्कर्म इत्यवधारणात् स एव राजा विज्ञायते । सकलस्य राज्ञा इति शब्दः राज्ये अनुप्रविष्टः इति स यौगिको युक्तो, न तु राज्यशब्दः राजनि अनुस्यूतः सकलः इति अयौगिकत्वम् । स्वयमेवं राज्यशब्दस्य यौगिकत्वमुपपद्यते । यत्तु व्याकारिणि जनपदे राजशब्दप्रयोगः, स क्षत्रियत्वाभावात् न प्राप्नोति । तेन न आर्यावर्तनिवासिनां प्रयोगः सर्वत्र न विरुध्यते । यथा ' न शूद्रराज्ये निवसेत् ' इत्यादीनां अप्रामाण्योपगमो वाच्यः स्यात् । इत्यत आह— ' योगात् लोके प्रयुङ्क्ते ' इति ( भाष्यं ) । प्रथमं तावत् राजयोगात् राज्यं, पुनः तद्योगात् ब्राह्मणादिषु राजशब्दोपचार इति । ननु एवं सति राज्ययोगादपि राजा इत्येतत् अभ्युपगतमेव । नैष दोषः, गौणत्वाभ्युपगमात् । मुख्याभ्युपगमे हि अधिकरणं पतत्येव । गौणत्वं तु मुख्येन अविरोधात् अभ्युपगतमपि सिद्धान्तं न विरुणद्धि । तेन राज्यार्थिते प्रतिनिधिन्यायेन ब्राह्मणादौ राजशब्द इति द्रष्टव्यम् । तथा च दर्शयति ' न तु एव सत्यपि राज्ययोगात् राजेति ' ( इति भाष्य ) । तत्र एतत् आचार्यस्य दौर्बल्यात् गौणकल्पनाऽऽश्रयणं इत्येतावता भाष्य नैवम् । यत्तु औदुम्बरीयशब्दादिवत् प्रकृत्यर्थानुमाने, तत् प्रसिद्धप्रयोगेण प्रत्यक्षेण बाध्यते । अथ राज्यस्य कर्ता एवमभिधीयते इति, निमित्तभूतोऽपि कर्मकर्तृ सम्बन्धः तस्य च स्मरणं अनुमातव्यम् । राज्ञः कर्म राज्य इति मन्वादिस्मरणं तस्मात् बलवत्तरम् । पर आह— ' यो यो राज्य करोति ' इति ( भाष्य ) । सर्वथा अन्वयव्यतिरेकाभ्यां वाच्यवाचकसम्बन्धो विज्ञायते । स च राजशब्दस्य अव्यभिचारेण राज्यनिमित्ततया च गम्यते, न तु राजकर्मनिमित्तत्वेन । स्मृतेः पुनः शब्दापशब्दविभागमात्रविषयत्वात् अविषय एवायम् । उभौ हि राजराज्यशब्दौ साधू, तस्मादयुक्तः स्मरणोपन्यास इति । तदुच्यते । सत्यं प्रयोग एव, न च स्मृतेः कश्चित् विपरीतनिमित्तत्व इत्येव व्यापारः, तथापि तु वाच्यसाधुत्वपरत्वेन अन्वाख्यानात् निमित्तत्वमवगम्यते । राज्ञः कर्म राज्य इति हि व्युत्पादने तद्योगनिमित्तं राज्य इत्यर्थादुक्तं भवति । तेन स्मृतिविरोधात् राजशब्द एव स्वतन्त्र इति । प्रयोगोऽपि च क्षत्रियेषु अव्यभिचारी इत्युक्तमेव । मतान्तरे तु प्रयोगस्य अतन्त्रत्वात् व्यभिचारित्वमदूषणम् । यत्र तावत् प्रयोगः, तत्रास्ति राजकर्म तत्र । तेन प्रयुक्तस्य अन्वाख्यानसंभवात् अप्रयुक्तनिमित्तान्वाख्यानाभावाच्च अदोषः । किंच ' असाधारणभावेन सर्वत्रेष्टं विशेषणम् । तेन सर्वैव कर्मेति चिन्तितादि न गृह्यते ॥' जनपदरक्षणं हि असाधारणं राजकर्म, तेन राजानमित्युच्यते । चिन्तित निमित्तादि तु राज्ञः अन्येषां च इति अव्यवच्छेदात्

न राज्यशब्दाभिधेय भवतीति। तेन सार्वलौकिकादपि प्रयोगात् 'शास्त्रस्था वा तन्निमित्तत्वात्' (१।३।५।९) इत्यनेनैव राजशब्दस्य क्षत्रियवचनत्वम्। तुल्यस्य अन्त्य-जनपदवासिनामपि दृष्टार्थत्वात् शब्दव्यवहारे प्रमाणा-भाव इत्युक्तं 'चोदितं तु प्रतीयेत' (१।३।५।१०) इति।

तस्मात् क्षत्रियस्यैव राजसूयोऽस्ति इति ब्राह्मणादीना प्रापकाणि श्रवणानि। ततश्च 'एतयाऽन्नाद्यकाम' इत्येतदपि फलं यद्दिरेव प्रयोगात् भविष्यतीति। 'क्रतु-मध्यप्रयोगो हि स्वाराज्येनैव पूरितः। साकाङ्क्ष-त्वियत्तस्मात् तस्यैव फलसगतिः॥' ननु च एतया इति प्रत्यक्षनिर्देशवचनात् परोक्षसामान्यप्रवृत्ता राजसूयचोदना बाधित्वा अन्नाद्यफलतयैव भवितव्यम्। नैतदेवं, विरोधाभावात्। तथाहि, 'विरोधित्वात् प्रसज्येते विकल्पाद्विविकल्पने। बाधस्तेनाभ्युपेतव्यो व्यवस्थायां तु नैव ते॥' नहि अनेकफल एकस्य विरुद्ध, प्रयोगान्तरस्य वचनान्तरेणैव कल्पितत्वात्। समुच्चयेन हि आवृत्तिदोष. अन्यन अभिधीयते। सा तु अनावृत्तिः ब्राह्मणादिसम्बन्धात् राजसूयग्रहणाच्च अवश्य भाविनी। यदि च 'एतयाऽन्नाद्यकाम' इत्युपदिष्टास्य भवेत्, तत. पश्चात् प्रवर्तमाना राजसूयचोदना बाध्येत। न। द्वयोरपि हि आग्नेयादिचोदनोत्पादितेषु कर्मसु प्रवृत्तेषु युगपत्कालत्वेन अनुग्रहमाणविशेषत्वात् तुल्यबलत्वम्। यथैव हि राजसूयचोदना सन्निहितानालोच्य प्रवर्तते, तथैव अन्नाद्यकामचोदनाऽपि। नहि तत्र अवेष्टिः येन केनचिदपि शब्देनोपात्ता। न च 'राजसूयेन' इति सामान्य शब्दः, पौर्णमासीशब्दवत् प्रकृतसमुदायनिर्विशेषसमुदायाभि-धानत्वात्। अत एव तत्फलमपि न दौर्बल्यं लभते। इयान्तु विशेषः, एकेन बहवो गृह्यन्ते, अन्येनाल्पे। न च तावता कश्चिदतिशयोऽस्ति। ननु च एतया इति श्रुत्यैव प्रत्यक्षवचनात् अस्ति विशेषः। स्याद्विशेषो, यदि एतच्छब्दः परेण सम्बध्येत। यदि वा 'अथैष ज्योतिः' इत्यादिवत् प्रत्युच्यमान बूयात् प्रत्यक्षसंनि-कर्षात्, तथापि सन्निधानच्छब्दत्वेन वर्तेत. प्रकृतेन संब-ध्येत। एतावता राजसूयशब्दादपि अस्ति इत्यविशेषः। प्रकृतमपि च ब्रुवन् एतच्छब्दः आग्नेयादिवाक्यालोचना-

हते नैव ब्रवीतीति। ततश्च राजसूययजिरपि तावता यत्नेन शक्नोति अभिधातुं इति तुल्यबलत्वम्। ननु अवान्त-राधिकारस्य अस्ति विशेषः। उच्यते। अयमेव विशेषो यदेकेन बहूनां ग्रहण, अपरेन चाल्पानाम्। ग्रहणवेला [illegible] तुल्यैव। यदि च ऐकान्तिकमत्र अकर्मान्तरत्वं स्यात्, तत एतदुच्येत। कर्मान्तरमपि च एतदिति दर्शितम्। ततश्च विषयान्तरत्वादेव स्वाराज्यान्नाद्ययोरविरोधः। कर्मान्तरत्वेऽपि च बार्हस्पत्यादिलिङ्गदर्शनात् प्रकृतावेष्टि-प्रकृतित्वमेव प्रतिपत्तव्यम्। राजन्यस्यापि तुल्यप्रवृत्तेः फलपदानुग्रहाच्च ब्राह्मणवैश्यवदेव कर्मान्तरेण प्रयोगान्त-रेण वा भवत्व। एवं च तस्यापि मध्येनिधानवाक्य तन्त्रप्रयोगे सति उपपत्स्यते। राजसूयमध्यस्थाया तु दक्षिणाभेदात् प्रतीष्टि प्रयोगान्यत्वे मध्येनिधानविधिः अवरुध्येत (निरुध्येत)। तस्मात् प्रापकाण्येतानि श्रवणानि इति सिद्धम्।

शा— 'राज्ययोगनिमित्तोऽयमार्यावर्तप्रसि-द्धितः। सर्वलोकप्रसिद्धत्वादविगानाच्च गम्यते॥ क्षत्रियत्वनिमित्तत्वमनार्येष्ववगम्यते। द्रविडेषु विगीतं च तदन्येष्वप्रसिद्धितः॥' तेन राज्ययोगात् राजानस्त्रयोऽपि भवन्ति इति पूर्वः पक्षः। सिद्धान्तस्तु राज्ययोगादेव राज्यशब्दः। स्वतन्त्रस्तु राजशब्द. क्षत्रियवचन इति ब्राह्मणादेरवेष्टौ प्राप्त्यभावात् प्रापकाणि वचनानि इति।

मोम— पूर्ववत् यदिशब्दबलात् निमित्तार्थत्वं इति प्रत्यवस्थानात् संगतिः। अन्नाद्यवेष्टौ पूर्वपक्षे त्रयाणा वर्णाना कर्तृत्व, सिद्धान्ते [illegible] क्षत्रियस्यैवेति फलभेदो बोध्यः। राजसूयमेव विषयीकृत्य राजशब्दार्थनिरूपणे कर्तुं शक्येऽपि अध्यायसगतये प्रयोगभेदव्युत्पादनाय अवेष्टिवाक्योदाहरण इति द्रष्टव्यम्। अत्र 'यदि ब्राह्मण.' इत्यादिवाक्यैर्न कर्मान्तरविधि प्रकृतावेष्टिप्रत्यभिज्ञाविरो धात्, किंतु ब्राह्मणादिनिमित्तप्रयोगान्तरविधिरिति द्रष्टव्यम्। यद्यपि 'यदि ब्राह्मण' इत्यादेः प्रापकत्वे निमित्तार्थत्वे च यद्दिरवेष्टौ त्रयाणामपि वर्णानां कर्तृत्वाच्च फलभेद, तथापि अन्नाद्यावेष्टौ पूर्वपक्षे त्रयाणां वर्णानां कर्तृत्वं, सिद्धान्ते तु क्षत्रियस्यैवेति फलभेदो बोध्यः।

च भरद्वाजसूत्रं ' प्रतिग्रहे इष्टिः इत्याश्मरथ्यः, अश्व प्रतिग्रहे इत्यालेखनः, आर्त्विजे प्रतिग्रहे यजमानस्यैव स्यात् ' इति ।

सत्याषाढः—ऋत्विजोऽश्वप्रतिग्रहे वारुणी, यावतोऽश्वान् प्रतिगृह्णीयात् तावतो वारुणांश्चतुष्कपालान् निर्वपेत्, एकमतिरिक्तं, इमं मे वरुण, तत्त्वा यामीति याज्यानुवाक्ये । २२।५।११.

मण्डन— ' उपक्रमात् स तुरगस्य दातुः । '

शंकर— ' दातुः सैवेष्टिरुदिता । ' १७.

☙ यद्यपि पुरुडाशनीये मन्त्रोदकमात्रं निमित्तं, तथापि अश्वप्रतिग्रहेष्टिन्यायेन तदङ्गं पूर्वपक्षे । भाट्ट. १०।२।११,☙ यूपस्पर्शे प्रायश्चित्तं स्पर्शः विहितः अविहितो वेति-चिन्तायां, प्रकरणादिना अश्वप्रतिग्रहेष्टिन्यायेन च विहित-स्पर्शाङ्गतया तन्निमित्तकतया वा नैमित्तिकमिदं प्रायश्चित्तं कर्माङ्गतया विधीयते ( इति पूर्वपक्षः ) यदि तु अश्व स्पर्शनिषेधाधिक्यात् यदिशब्दोपादानाच्च अश्वप्रतिग्रहेष्टिवैलक्षण्यमाशङ्कयेन । ९।२।१२.

☙ अश्वप्रतिग्रहेष्ट्यधिकरणे उपक्रमानुसारेण उपसंहारो नीतः । पराक्रमः १, ☙ अश्वप्रतिग्रहेष्ट्यधिकरणेऽपि न पूर्वाधिकरणसिद्धकर्माङ्गत्वबलेन दातुरिष्टिरिति निर्णयः, अन्योन्याश्रयापत्तेः । पूर्वाधिकरणे हि एतदधिकरणसिद्धं दातुरिष्टिः इत्यमुमर्थं अपेक्ष्य कर्माङ्गत्वनिर्णयः । यदि हि ऋत्विजः प्रतिग्रहीतुरिष्टिः स्यात् तदा तस्य अधिकारसिद्धये तद्गाम्येव फलं कल्पनीयं, इति कथं यजमानगामिफलककर्माङ्गत्वं भवेत् । अतः दातुरिष्टिः इति स्थिते इदमधिकरणमारभ्यं इति भाष्यादिषु दर्शितम् । १९।२. ☙ अश्वप्रतिग्रहेष्ट्यधिकरणन्यायेन वैदिकस्यैव वैदिकाकाङ्क्षापरिपूरणार्थत्वं न्याय्यम् । सोम. २।१।१६, ☙ अश्वप्रतिग्रहेष्ट्यधिकरणोक्तरीत्या वैदिक्या एव इतिकर्तव्यताया: शीघ्रोपस्थिति-सत्त्वात् ग्रहण युक्तं, न लौकिक्याः । ७।४।१.

☙ अश्वभूरयन्यायः । कस्यायमश्वो यस्यायं भृत्यः, यस्याय भृत्यो यस्यायमश्वः, इत्यत्र यथा न वस्तुनिर्णयः, तथा प्रकृतेऽपि । माहुली. २१५.

☙ ' अश्वमालभेत ' इत्यत्र अकारवकारयोर्मध्यवर्तिनो वर्णस्य दन्त्यत्वे, 'स्वं धनं तद्रहितं दरिद्रमालभेत' इत्यर्थो भवति । तालव्यत्वे तु तुरंगमत्राविषम् । ततः संशयात् अप्रामाण्यं तस्य वाक्यस्येति चेन्न । व्याकरणानुसारेण अशू व्याप्तौ इत्यस्मात् औणादिके क्वप्रत्यये सति तालव्यत्वनिर्णयात् । तस्मात् अश्वालम्भनशास्त्रं प्रमाणम् । वि. १।३।९ गुरुमते.

☙ अश्वमेधः बहुदक्षिणत्वेन प्रसिद्धः । ' तस्य सप्तदशोऽग्निष्टोमः, तस्य दीक्षणीयायामिष्टौ द्वादशमानं हिरण्यं ददाति, चतुर्विंशतिमानं प्रायणीयायां, द्वे चतुर्विंशतिमाने आतिथ्यायां ' इत्यादि ' अष्टाचित्वारिंशतमानानि वपायां वपायां ' इत्यन्तेन बहुदक्षिणतया उक्तः । तत्र हि दीक्षणीया, प्रायणीया, आतिथ्या, षडुपसदः, अग्नीषोमीयपशुः, सवनीयपशु-यजनमय-उदयनीय-अनुबन्ध्यपशुषु द्वादशमानमारभ्य उत्तरोत्तरद्विगुणा दक्षिणा उक्ता । परिमल. ३।४।२।१६. वन्. ☙ अश्वमेधं अधीयानाः केचित् अश्वस्य घासमाहरन्ति, अपरे न, परे अन्यं धर्ममाचरन्ति । अश्वघासादेः एकेषां उपकारमाकाङ्क्षति अश्वमेधादिः, एकेषां नाकाङ्क्षति । भा. १।४।२।८ पृ. ६३२.

☙ अश्वमेधे अध्रिगुप्रैषे अश्वस्यैकत्रिंशद्वाङ्कामकानार्थं वैशेषिकमन्त्राकरणपक्षे त्रयाणां पशूनामर्थे षड्विंशतिरेषां वङ्क्रयः इति समासवचनम् । चतुस्त्रिंशन्मन्त्रवत्प्रतिषेधन्याय. ॥

अश्वस्य चतुस्त्रिंशत् तस्य वचनात् वैशेषिकम् । ९।४।२।१७ ॥

भाष्ये— अस्ति अश्वमेधः । तत्र सवनीयः पशुः अश्वः तूपरगोमृगौ च । अस्ति तु प्रकृतौ अग्नीषोमीये ' षड्विंशतिरस्य वङ्क्रयः ' इति वचनम् । तदिह चोदकेन प्राप्तम् । तत्र अश्वस्य चतुस्त्रिंशत् वङ्क्रयः । तूपरगोमृगयोः षड्विंशतिः । अस्ति तु ऋक् समाम्नाता ' चतुस्त्रिंशद्वाजिनो देवबन्धोर्वङ्क्रीरश्वस्य स्वधितिः समेति । अच्छिद्रा गात्रा वयुना कृणोत परुष्परुरनुघुष्या [illegible] वस्त ॥ ' इति । तदिदं सन्दिह्यते किं अश्वस्य वैशेषिकं वचनं कर्तव्यं तूपरगोमृगयोः समासेन, [illegible] प्रोप-

मेव समासवचनम् । किं प्राप्तं ? अश्वस्य चतुस्त्रिंशत् पङ्क्तयः, तस्य वैशेषिकमिदं वचनं कर्तव्यम् । कस्मात् ? वचनात् । एवं 'चतुस्त्रिंशद् वाजिनो देवबन्धोः' इत्येतद् वचनं अर्थवदिति । इतरथा एतद् वचनमनर्थकं स्यात् । तस्मात् वैशेषिकमश्वस्येति ।

टुप्—अयं तावत् सिद्धान्त एव । 'चतुस्त्रिंशद्वाजिनः' इत्यनया अनस्यं षड्विंशत्या प्रकाशयितव्या । आनर्थक्यभयात् (मन्त्रस्य प्रकरणाम्नातानर्थक्यभयात्) प्रकरणानुमितेन वाक्येन प्रापितत्वात् । ननु प्रतिषिद्धैव (अ६) 'न चतुस्त्रिंशत्' इति । उच्यते । विधिपूर्वकैव प्राप्तिः, इति विधिप्रतिषेधयोः विकल्पः षोडशिवत् इति पक्षे तावत् अनया प्रकाशनम् । यत्तु अर्थात् प्राप्नोति, तत् प्रतिषेधेन बाध्यते । यथा नान्येऽहनि मधुमांसाशने । ननु इह आनुमानिको विधिः, प्रत्यक्षेण प्रतिषेधेन बाध्यते । उच्यते । न विधिर्यदि बाध्यते । अपि च अन्यदेतदानुमानिकं, इदं तु प्रत्यक्षमिति । निषिध्येत् न बाधितुं शक्नोति । एवमुभयप्राप्तौ स्थितायां उत्तरा चिन्ता । न चैतत् पूर्वपक्षसूत्रं समाम्नातं पक्षस्य दर्शनात् । तथा पक्षव्यावर्तकस्य तुशब्दस्य च उत्तरस्याभावात् ।

यत् प्रतिषिध्य प्रकृतिर्नियुज्यते, सा चतुस्त्रिंशद्वाक्यत्वात् । १८ ॥

भाष्यं—यत् प्रतिषिध्य प्रकृतिर्नियुज्यते, प्रकृतौ यद् कृतं वचनं तत् कर्तव्यमिति । कथं ? 'न चतुस्त्रिंशदिति ब्रूयात्, षड्विंशतिरित्येव ब्रूयात्' इति । सा नियुज्यमाना चतुस्त्रिंशद्वाक्यत्वात् वारयति शब्दम् । तस्मात् प्रतिषिद्धत्वात् वैशेषिकं वचनं न कर्तव्यं, सामासिकं वचनं कर्तव्यम् । ननु 'षड्विंशतिरित्येव ब्रूयात्' इति वचनात् प्रतिषिद्धेऽपि वैशेषिकमेव वचनं कर्तव्यमिति । नेत्युच्यते । नहि अयं षड्विंशतिशब्दो विधीयते, किं तर्हि ? यथाप्राप्तं वचनमनूद्यते । कथमवगम्यते ? एवकारश्रवणात् । यथाप्राप्ते एवकारश्रवणम् । न च षड्विंशतिशब्दः प्राप्तः । षड्विंशतिसंख्याऽभिधानं प्रकृतौ कृतम् । इहापि तदेव प्राप्तम् । षड्विंशतिशब्देन यत् प्रकृतौ लक्षितं इहापि षड्विंशतिशब्दः तल्लक्षणार्थमेव उच्चारितः । षड्विंशतिसंख्यापरे अनेकोऽर्थो विधीयेत । चतुस्त्रिंशत्प्रतिषेधः षड्विंशतिसंख्यावचनं च, तत्र वाक्यं भिद्येत । भिद्यमाने एकवाक्यरूपं बाध्येत । किं तत् ? साकाङ्क्षत्वम् । 'न चतुस्त्रिंशदिति ब्रूयात्, षड्विंशतिरित्येव ब्रूयात्' इति । एतद्धि वचनं चतुस्त्रिंशद्वचनाभावे प्राप्तमेव सत् कर्तव्यतया प्रतिषेधं प्रदर्शितुं उच्चार्यते । तदेवमेकवाक्यतामापद्यते । सा एकवाक्यता संख्यापरे बाधिता स्यात् । अनेकार्थविधानं च अन्याय्यं एकार्थविधाने संभवति । भूयसी हि तत्र अदृष्टकल्पना स्यात् । तस्मात् यथाप्राप्तवचनं कर्तव्यमिति । (वार्तिककारमतेन अष्टादशादिसूत्रैः अधिकरणान्तरम् । तद्यथा—)

टुप्—'यत् प्रतिषिध्य०' इदं श्रूयते 'न चतुस्त्रिंशदिति ब्रूयात्, षड्विंशतिरित्येव ब्रूयात्' इति । तत्र संशयः, किं समस्ता ऋक् प्रतिषिध्यते अश्वस्यापि समस्तवचनं, उत चतुस्त्रिंशत्प्रतिषेध अश्वस्य वैशेषिकवचनं षड्विंशतिः इति । तत्र सिद्धान्तेनोपक्रमः तत्प्रतिषिध्य इति । ननु षड्विंशतिरिति ब्रुवन् निगदे षड्विंशतिरिति शब्दस्य विधिं बोधयति पूर्वपक्षवादी । तस्य कर्मानुष्ठानं, तूपरगोमृगयोः सामासिकवचनमन्यत् 'द्विपक्षाच्छवनयोर्बहुरूप.' इति, अश्वस्य तु वैशेषिकवचनमन्यत् 'षड्विंशतिरस्य वङ्क्रय.' इति । तदितरं मन्यादह 'न ह्यय विधीयते' इति (भाष्येण) । तस्य अयम् अन्यतरानुवादः । यदि तावत् प्रतिषेधो विधीयते, तथापि प्राकरणिकायां प्रतिषिद्धायां यदन्यत् चोदकप्राप्तं इयत्तावचनं तत् स्वयमेव भवति । षड्विंशतिवचनं अनुवादः सह एवकारेण, षड्विंशति इति इयत्ता विधीयते । न सा तावता चोदकप्राप्तत्वात् एवकारोपपद्यते च । एवकारस्तु अप्राप्तः स विधीयते । तस्य परिसंख्यारूपोऽर्थः । यदन्यत् प्राकरणिकं प्रतिषेधि (चतुस्त्रिंशद्वाजिन इति मन्त्रः), तत्र भवति । एवं अन्यतरस्यानुवादत्वे अवश्यम्भाविनि कस्य प्रतिषेधविधानं, युक्तत्वात् । इतरस्य चानुवादः, अपन्यायात् प्रतिषेधतुल्यार्थः इति ।

**ऋग् वा स्यादाम्नातत्वादविकल्पश्च न्याय्यः। १९॥**

**भाष्यं—** आम्नाता हि ऋक् अप्रतिषिद्धा च। तस्मादश्वस्य वैशेषिकं वचनं स्यात्। तथा च अविकल्पो भविष्यति। अविकल्पश्च न्याय्यः। विकल्पे विरुद्ध वचनं अन्योन्येन भवति। भवतीति चेत् न प्रतिषेधः, नेति चेन्न विधिः। तस्मात् वैशेषिकं वचनं कर्तव्यम्।

**टुप्—** वाशब्दात् पक्षान्तरम्। '**आम्नाता हि ऋक् अप्रतिषिद्धा च**' इति (भाष्य)। ननु प्रतिषिद्धा वाक्येन, उच्यते। पदविकारं वक्ष्यामः 'तस्यां तु वचनादैरवत्' (२० सू.) इति। ननु श्रुता षड्विंशतिविधाने अनेकार्थविधानादिदोषः स्यात्। उच्यते। ऐरवत् प्रतिषेधः कार्यापत्तिप्रदर्शनाय भविष्यति अस्य 'षड्विंशतिरस्य वङ्क्रयस्ता अनुष्ठ्योच्यावयताद्' इति।

**तस्यां तु वचनादैरवत् पदविकारः स्यात्। २०॥**

**भाष्यं—** अथ यदुक्तं ऋक् तत्र प्रतिषिध्यते इति, नैतदेवम्। तस्यां वचनात् पदविकारः स्यात्। वचनं हि भवति, 'न चतुस्त्रिंशदिति ब्रूयात्, षड्विंशतिरित्येव ब्रूयात्' इति। तत्र चतुस्त्रिंशत्पदं श्रुत्या प्रतिषिध्यते, ऋक् लक्षणया प्रतिषिध्यते, श्रुतिलक्षणाविशये च श्रुतिर्न्याय्या। तस्मात् वैशेषिकं वचनं कर्तव्यमिति।

(ऐरवत्० इत्यादि टुप्टीका यद्यपि एकविंशतितमसूत्रीयत्वेन मुद्रिता आनन्दाश्रमीये, तथापि सा विंशसूत्रीयैव इति वयं प्रतीमः इति तत्रैव टिप्पणोऽस्माभिरिति ध्येयम्। विषयनिर्णयोर्वा शिथिला सा स्यात्)।

**टुप्—** ऐरवत् इति विषम उपन्यासः। यत्र आम्नातं पदं पठ्यते तत्र ऋच्मर्थं स्पृशति सर्वो, संबन्धेन आम्नातेन 'अयं सहस्रमानवः' इतिवत्। यत्र तु अनाम्नातं पठ्यते तत्र ब्रवीति पदाणि स्पृशति, अर्थेनाभिसंबन्धात्। तथा पूर्वाण्यपि पर्याप्तिस्मृतात् स्वकर्मेण तत् पदं कार्येण प्रयुज्यते। अतश्च 'अश्वस्य चतुस्त्रिंशत्' इति पूर्वपक्षसूत्रं नियमेन ऋचोऽवक्तव्या इति, 'तत्प्रतिषिध्य' इति सिद्धान्तो नियममेव धारयति।

**सर्वप्रतिषेधो वाऽसंयोगात् पदेन स्यात्। २१॥**

**भाष्यं—** सर्वस्या एव वा ऋचः प्रतिषेधोऽयं, न चतुस्त्रिंशत्पदस्य। कस्मात्? पदेनासंयोगात्। चतुस्त्रिंशत्पदेन ऋचः संयोगो न स्यात्। विना तस्मात् पदात् नैव ऋक्-शेषो वङ्क्रिगणनं कुर्यात्। अथ षड्विंशतिपदेन संबध्येत, तथापि न अश्ववङ्क्रिसंख्या ब्रूयात्। तत्र दृष्टोऽर्थो नावकल्पेत। ऊनं च वाक्यं अर्थं न साधयेत्। ऊने च वाक्ये दोषश्रवणात्, 'मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह। स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्॥' (पा. शि. ५२) इति। चतुस्त्रिंशत्पदं चेद अनर्थकं स्यात्। तस्मात् समस्तं वचनं कर्तव्यम्। ऋचश्च विध्यन्तरेण विहितत्वात् वैशेषिकं वचनं इति।

**शा—** अत्र भाष्यकारः चतुस्त्रिंशत् इत्येवमादिसूत्रपञ्चकं एकाधिकरणत्वेन व्याख्यातवान्। वार्तिककारस्तु इदं सूत्रं पृथक्कृत्य प्राप्तिमुखत्वेन अधिकरणान्तरत्वेन व्याख्यातवान्। तत्र सिद्धान्तः 'एककारोपपन्नत्वान्न षड्विंशतिचोदना। चतुस्त्रिंशन्निषेधे च त्वनुवादोऽस्य संभवी॥ ऋच एव निषेधोऽतस्तथा सति च चोदनात्। प्राप्तं षड्विंशतिरिति ब्रूयादित्यनुकीर्त्यते॥'

**सोम—** षड्विंशतिः इत्यस्य पशुगणान्तरे समस्तवचनेऽपि अश्वमेधे न समाव. इति अग्निमाधिकरणद्वितीयपूर्वपक्षस्य पूर्वाधिकरणसंगत्या उत्थानात् तस्य पाक्षिकप्राकृताध्रिगुवचनविषयत्वात् तत्पाक्षिकत्वविचाररूपस्य अस्य वार्तिककारीयाधिकरणान्तरस्य तदुपोद्घाततया संगतिर्द्रष्टव्या। सूत्रार्थस्तु—अश्वस्य चतुस्त्रिंशत् वङ्क्रयः सन्ति, तस्मात्तत्प्रकाशनसमर्थं वैशेषिकमेव कर्तव्यं, वचनात् प्रकरणे वैशेषिकाम्नानात् इति।

**वि—** 'न चतुस्त्रिंशदित्येष निषेधो नियतो न वा।, नियतः पदबाधः स्यात्, ऐकाक्ष्यहत नतः॥ निषेधप्राप्तिपूर्वोऽतः प्रापकोऽत्रानुमीयते। निषेधप्रापकाभ्यां चतुस्त्रिंशद्विकल्प्यते॥' चतुस्त्रिंशत्० इत्ययं मन्त्रः अश्वस्य अध्रिगुप्रैषे विकल्प्यते। ९।४।२।१७.

'पृथग्वचनमश्वस्य स्यादन्याभ्यां समस्य वा।, आद्यः परे निषिद्धेऽत्र विरोधो नियतो यतः॥, षड्विं-

पदेन लक्षणया तद्वाविंशत्यभिधानात् षड्विंशतिपदप्राप्त्यभावेन 'षड्विंशतिरित्येव ब्रूयात्' इत्यस्य अनुवादत्वानुपपत्तेः। अतो वैशेषिकमन्त्रप्रतिषेध एवायम्। अतश्च 'न तौ पशौ करोति' इतिवत् विहितप्रतिषिद्धत्वात् विकल्पः। अन्वायपक्षे च अतिदेशप्राप्तस्य षड्विंशतिपदोपेतस्य अध्रिगोरेव न्यायेन प्राप्तत्वात् 'षड्विंशतिरित्येव' इत्यनुवादः। आश्वलायनमते तु 'षड्विंशतिः षड्विंशतिश्चतुस्त्रिंशदस्य वङ्क्रयः' इत्येवमाकारकाध्रिगुप्रैषस्य षड्विंशतिपदेन लक्षणात् तस्यैवायमनुवादः। एतेन "एवकारयुक्तवाक्येन उक्तविधाध्रिगुप्रैषस्यैव प्रतिप्रसवविधिः, प्राचनिकेन वा अध्रिगुप्रैषेण पाठप्राप्तस्य वैशेषिकमन्त्रस्य बाधात् 'न चतुस्त्रिंशत्' इति निषेधो नित्यानुवादः। वैशेषिकमन्त्रस्य चाश्वमेधादौ विनियोगाय न वैयर्थ्यमपि। एवं च विकल्पोऽपि नाष्टदोषदुष्टो भविष्यति। एवकारश्च अयोगव्यावृत्तेः अन्ययोगव्यावृत्तेर्वा अनुवादो भविष्यति" इत्यपास्तम्। निषेधपूर्वकैवकारस्थले एवकारसंबन्धस्य अनुवाद्यत्वप्रतीतेः, तादृशस्थले यत्र क्वचित् एवकारस्यापि स्वसंबन्धिविधिप्रतिबन्धकत्वात्। अत एव 'उपवासाः पतन्ति, इत्युक्ते उपवासमेव कुरु, न तु प्रवासं गच्छ' इत्यत्र प्रवासनिवृत्तिरेव विधेया न तु उपवासः, इत्यनुभवसिद्धम्। यत्र तु न निषेधपूर्वकता, तत्र अनुभवबलात् एवकारसंबद्धस्यापि विधाने न काचित् क्षतिः, यथा 'अत्र ह्येवावपन्ति' इत्यादौ। प्रकृते तु एवकारसंबन्धिनः अध्रिगुप्रैषस्य अविधेयत्वात् 'न चतुस्त्रिंशत्' इत्येव निषेधविधिः। प्राकृतप्राप्तस्य निषेधाच्च 'न तौ पशौ करोति' इतिवत् विकल्पः। 'षड्विंशतिरित्येव' इत्ययं प्रकरणपक्षे न्यायप्राप्तानुवादः सन् अप्रकरणप्राप्ततया करणस्यैव निन्दाऽर्थवादः। एवं च वैशेषिकमन्त्रस्य प्रकरणमपि न बाधितं भवति। विकल्पस्तु बहुवचनान्तपाशमन्त्रवत् न विरुध्यते। न चैवं अध्रिगुप्रैषस्य अविधेयत्वेऽपि एवकारार्थस्यैव वैशेषिकमन्त्रान्यत्वान्यनिवृत्तिरूपस्य विधेयत्वोपपत्तेः 'न चतुस्त्रिंशत्' इत्यस्यैव अनुवादत्वं किं न स्यादिति वाच्यम्। एवमपि शास्त्रप्राप्तनिवृत्तेः अविशेषेण विकल्पस्य अपरिहार्यत्वात्। अत एव 'अत्र ह्येवावपन्ति' इत्यादौ अभ्यासपरिसंख्यैव अङ्गीकृता कौस्तुभे। तन्त्ररत्नकारस्य तत्र एवकारार्थविधिं अङ्गीकुर्वतः तत्र विकल्पापत्तिः तद्वदेव इह तदनापत्तिः इत्ययं पर्यनुयोगो दुरुद्धरः, न तु मम। न च तथापि विनिगमनाविरहात् तादवस्थ्यं, एवकारस्य अयोगव्यावृत्त्यन्ययोगव्यावृत्तिरूपनानाऽर्थकतया सन्दिग्धार्थकत्वेन निःसंदिग्धार्थकनिषेधस्यैव विधित्वाङ्गीकारात्। अतः सिद्धः अश्वमेधेऽपि अध्रिगौ ऊहः। अत्र च सूत्रव्याख्याऽनुरोधेन किंचित् वैलक्षण्येन भाष्यकारेण ऐकाधिकरण्यं, वार्तिककारेण च अधिकरणद्वयं आश्रितम्। तत्तु प्रमेयमात्रभिन्नप्रवृत्तेन मया उपेक्षितम्।

**मण्डन** — 'समासोऽन्ये विकल्पितः।'

**शंकर** — 'चतुस्त्रिंशद्गण्यस्वे।' १ 'समासोऽपि विकल्पतः।' २.

* अश्वमेधे अश्वतूपरगोमृगाणां अध्रिगुप्रैषे 'षड्विंशतिरस्य वङ्क्रयः' इत्यस्य स्थाने 'चतुस्त्रिंशद्वाजिनो देवबन्धोः' इति ऋचं पठित्वा तूपरगोमृगार्थे द्विपद्याशब्दनयोर्यथाक्रमः इति पठितव्यम्। किंवा ऋचमपठित्वा षडशीतिरेषां वङ्क्रयः इति यथासामर्थ्यं समस्यवचनं पठितव्यम्। भा. ९।४।२।१७–२१. * अश्वमेधे 'ईशानाय परस्वत आलभते पर्यग्निकृतानारण्यानुत्सृजति' अत्र ईशानो देवता, परस्वन्तः पशवो द्रव्यं, आलम्भो यागः। पर्यग्निकृतोत्सर्गवाक्येन उत्सर्गप्रकारप्राकृतपर्यग्निकरणान्तानीतिविधीयते। तथा च यागविधिरयम्। वि. ९।४।१४. * अश्वमेधे वैश्वदेविनः पशवः एवमाम्नायन्ते 'आग्नेयः कृष्णग्रीवः, सारस्वती मेषी, बभ्रुः सौम्यः, पौष्णः श्यामः, शितिपृष्ठो बार्हस्पत्यः, शिल्पो वैश्वदेवः, ऐन्द्रोऽरुणः, मारुतः कल्माषः, ऐन्द्राग्नः संहितः, अधोरामः सावित्रः, वारुणः कृष्णः, एकशितिपात् पेत्वः' इति। ८।१।७. * अश्वमेधे न सर्वे (पशुत्रयस्य कमपि शेषं) भक्षयिष्यन्ति। के. अश्वमेधे परस्वदादौ पर्यग्निकरणान्तानीतिविधानेन वपाद्यङ्गप्रतिषेधः। भा. ९।४।१२।५१–५६. * अश्वमेधे यूपैकादशिन्यां अञ्जनादिपरिव्याणान्तानुगमः कर्तव्यः। वि. ५।२।५. * अश्वमेधे 'वसन्ताय कपिञ्जलानालभते'

पदेन लक्षणया तदादिसर्वमन्त्राभिधानात् पदमात्रप्रतिषेधे तत्र षड्विंशतिपदश्रवणाभावेन 'षड्विंशतिरित्येव ब्रूयात्' इत्यस्य अनुवादत्वानुपपत्तेः । अतो वैशेषिकमन्त्रप्रतिषेध एवायम् । अतश्च 'न तौ पशौ करोति' इतिवत् विहित प्रतिषिद्धत्वात् विकल्पः । आम्नातपक्षे च अतिदेशप्राप्तस्य षडशीतिपदोपेतस्य अध्रिगोरेव न्यायेन प्राप्तत्वात् 'षड्विंशतिरित्येव' इत्यनुवादः । आश्वलायनमते तु 'षड्विंशतिः षड्विंशतिश्चतुस्त्रिंशदेषां वङ्क्रयः' इत्येवमाकाराध्रिगुप्रैषस्य षड्विंशतिपदेन लक्षणात् तस्यैवायमनुवादः । एतेन "एवकारयुक्तवाक्येन उक्तविधाध्रिगुप्रैषस्यैव प्रतिप्रसवविधिः, वाचनिकेन वा अध्रिगुप्रैषेण प्राप्तस्य वैशेषिकमन्त्रस्य बाधात् 'न चतुस्त्रिंशत्' इति निषेधो नित्यानुवादः । वैशेषिकमन्त्रस्य वाचःस्तोमादौ विनियोगाच्च न वैयर्थ्यमपि । एवं च विकल्पोऽपि नाष्टदोषदुष्टो भविष्यति । एवकारश्च अयोगव्यावृत्तेः अन्ययोगव्यावृत्तेर्वा अनुवादो भविष्यति" इत्यपास्तम् । निषेधपूर्वकैवकारस्थले एवकारसम्बन्धस्य अनुवादत्वप्रतीतेः, तादृशस्थले यच्छन्दादिवत् एवकारस्यापि स्वसंबन्धिविधिप्रतिबन्धकत्वात् । अत एव 'उपवासाः पतन्ति, इत्युक्ते उपवासानेव कुरु, न तु प्रवासं गच्छ' इत्यत्र प्रवासनिवृत्तिरेव विधेया न तु उपवासः, इत्यनुभवसिद्धम् । यत्र तु न निषेधपूर्वकता, तत्र अनुभवबलात् एवकारसंबद्धस्यापि विधाने न काचित् क्षतिः, यथा 'अत्र होतावपन्ति' इत्यादौ । प्रकृते तु एवकारसंबन्धिनः अध्रिगुप्रैषस्य अविधेयत्वात् 'न चतुस्त्रिंशत्' इत्येव निषेधविधिः । शास्त्रप्राप्तस्य निषेधाच्च 'न तौ पशौ करोति' इतिवत् विकल्पः । 'षड्विंशतिरित्येव' इत्यस्य प्रकरणपक्षे न्यायप्राप्तानुवादः सन् अप्रकरणप्रशंसया करणस्यैव निन्दाऽर्थवादः । एवं च वैशेषिकमन्त्रस्य प्रकरणमपि न बाधितं भवति । विकल्पस्तु बहुवचनान्तपाठमन्त्रवत् न निरूप्यते । न चैवं अध्रिगुप्रैषस्य अविधेयत्वेऽपि एवकारार्थस्यैव वैशेषिकमन्त्राख्यान्यनिवृत्तिरूपस्य विधेयत्वोपपत्तेः 'न चतुस्त्रिंशत्' इत्यस्यैव अनुवादत्वं किं न स्यादिति वाच्यम् । एवमपि शास्त्रप्राप्तनिवृत्तेः अविशेषेण विकल्पस्य अपरिहार्यत्वात् । अत एव 'अत्र होतावपन्ति' इत्यादौ अप्राप्तपरिसंख्यैव अङ्गीकृता कौस्तुभे । तन्त्ररत्नकारस्य तु तत्र एवकारार्थविधिं अङ्गीकुर्वतः तत्र विकल्पापत्तिः तद्वदेव इह छादनापत्तिः इत्ययं पर्यनुयोगो दुरुद्धरः, न तु मम । न च तथापि विनिगमनाविरहात् तादवस्थ्यं, एवकारस्य अयोगव्यावृत्त्यन्ययोगव्यावृत्तिरूपनानाऽर्थकतया सन्दिग्धार्थकत्वेन निःसन्दिग्धार्थकनिषेधस्यैव विधित्वाङ्गीकारात् । अतः सिद्धः अश्वमेधेऽपि अध्रिगौ ऊहः । अत्र च सूत्रव्याख्यानुरोधेन किंचित् वैलक्षण्येन भाष्यकारेण ऐकाधिकरण्य, वार्तिककारेण च अधिकरणद्वयं आश्रितम् । तत् प्रमेयमात्रलेखनप्रवृत्तेन मया उपेक्षितम् ।

मण्डन — 'समासोऽश्वे विकल्पितः ।'

शंकर — 'चतुस्त्रिंशद्वङ्क्य्यश्वे ।' २ 'समासोऽपि विकल्पतः ।' ३.

● अश्वमेधे अश्वतूपरगोमृगाणां अध्रिगुप्रैषे 'षड्विंशतिरस्य वङ्क्रयः' इत्यस्य स्थाने 'चतुस्त्रिंशद्वाजिनो देवबन्धोः' इति ऋचं पठित्वा तूपरगोमृगार्थं द्विपञ्चाशदनयोर्वङ्क्रयः इति पठितव्यम् । किंवा ऋचमपठित्वा षडशीतिरेषां वङ्क्रयः इति त्रयाणामर्थे समस्तवचनं पठितव्यम् । भा. ९।४।२।१७–२१. ● अश्वमेधे 'ईशानाय परस्वत आलभते पर्यग्निकृतानारण्यानुत्सृजति' अत्र ईशानो देवता, परस्वन्तः पशवो द्रव्य, आलम्भो यागः । पर्यग्निकृतोत्सर्गवाक्येन वस्त्रोपकारप्राकृतपर्यग्निकरणान्ताङ्गरीतिर्विधीयते । तथा च यागविधिरयम् । वि. ९।४।१४, ● अश्वमेधे ऐकादशिनाः पशवः । एवमाम्नायन्ते 'आग्नेयः कृष्णग्रीवः, सारस्वती मेषी, बभ्रुः सौम्यः, पौष्णः श्यामः, शितिपृष्ठो बार्हस्पत्यः, शिल्पो वैश्वदेवः, ऐन्द्रोऽरुणः, मारुतः कल्माषः, ऐन्द्राग्नः संहितः, अधोरामः सावित्रः, वारुणः कृष्णः, एकशितिपात् पेत्वः' इति । ८।१।७. ● अश्वमेधे न सर्वे (पश्वङ्गस्य कमपि शेषं) भक्षयिष्यन्ति । वै. अश्वमेधे परस्वद्यागे पर्यग्निकरणान्ताङ्गरीतिविधानेन तदुत्तराङ्गप्रतिषेधः । भा. ९।४।१३।५१–५५. ● अश्वमेधे यूपैकविंशिन्या अञ्जनादिपरिव्याणान्तानुसमयः कर्तव्यः । वि. ५।२।५. ● अश्वमेधे 'वसन्ताय कपिञ्जलानालभते'

इति यद्दुक्तं विवक्षितमेव । भा. ४।१।५।११-१६. ● अश्वमेधे 'यवन्ताय कनिष्ठानालभते' इति विहितम् । तत्र त्रिन्यमेव उपादेयं अवच्छंभावित्वात् प्रथमभावित्वात् लाघवाच्च । वि. १२।१।८. ● अश्वमेधे श्वेते राजताः हरितस्तरवः आश्वः भवन्ति । भा. ९।४।४।२४. ● ( अश्वमेधीयत्रैधातवीयाविषयकं सर्वमिदं दीक्षणीयाधाद्नियमन्यायप्रयोजनत्वेन सर्वत्रोपन्यस्तं, तथापि अश्वान्तरमेदात् तत उद्धृत्य अश्वमेधपदके निवेशितमस्माभिः इति ध्येयम् । अत्र एव 'किं भवति प्रयोजनं इतरस्मिन् इतरस्मिन् वा पक्षे इति । उच्यते' इत्युपक्रम्य 'अश्वमेधे समाम्नायते' इत्यादि भाष्यम् । ) अश्वमेधे समाम्नायते 'त्रैधातवीया (दीक्षणीया) भवति' इति । यदि परमापूर्वप्रयुक्तः एवंजातीयको धर्मः, ततः तयोरन्तरविरोधे निबद्धः इति तत्कार्यापन्नाया त्रैधातवीयाया भविष्यति । अथ आग्नावैष्णवापूर्वप्रयुक्तः, ततो नेदमाग्नावैष्णवापूर्वं, इति तत्र त्रैधातवीयाऽपूर्वे न तेन धर्मेण समन्वयः इति । भा. १।१।२।१ वर्णक २.

टुप्— पूर्वपक्षे 'त्रैधातव्या दीक्षणीया भवति' इति आग्नावैष्णवकार्यापन्ना तद्धर्मैर्युज्यते यथा नीवाराः प्रोक्षणेन । सिद्धान्ते तु आग्नावैष्णवापूर्वप्रयुक्ता धर्माः, त्रैधातवीयाया च अपूर्वान्तरम् । न च अपूर्वान्तरं अपूर्वान्तरधर्मान् गृह्णाति । अनुपपन्नमिदं प्रयोजनम् । ( कथं ) 'त्रैधातवीया दीक्षणीया भवति' इति सामानाधिकरण्य ( अनयोः ) । तत्र यदि मुख्यवृत्ते द्वे अपि पदे गृह्येयाताम् . ( ततः ) सामानाधिकरण्यं नोपपद्येत । तस्मादेकमत्र गौणं पदम् । तत्र प्राथम्यादविशेषाच्च त्रैधातव्यापदं मुख्यं, दीक्षणीयापदं ( तु पश्चात्त्वात् समानविरोधं ) आत्मीय कार्यपकारं लक्षयति । तस्मिन् लक्षिते त्रैधातव्या विधीयते ( त्रैधातव्या दीक्षणीयाकार्यकारिणी भवति इति । ) सा च विधीयमाना तत्कार्यापन्नत्वात् तद्धर्मान् लभते । सिद्धान्तेऽपि यथा खलेवाली यूपकार्ये विधीयमाना तद्धर्मान् ( अञ्जनादीन् ) लभते । तस्मात् उभयोः ( पक्षयोः ) तुल्या धर्मप्राप्तिरिति । अथोच्येत 'त्रैधातव्या दीक्षणीया भवति' इत्यनेन ( वचनेन प्रसिद्धायाः ) त्रैधातव्यायाः यत् कार्ये, तत् निवार्य दीक्षणीयाकार्यं ( तस्याः ) विधीयते ( नानापूर्वा त्रैधातव्या विधीयते ) । तच ( दीक्षणीयाकार्ये ) आत्मीयैः ( यथासिद्धैरेव ) धर्मैः, अपूर्वं च ( आत्मीयेन स्वापूर्वेण त्रैधातव्या ) साधयिष्यति, न ( च ) दीक्षणीयाधर्मान् ग्रहीष्यति सिद्धान्तवादिनः । पूर्वपक्षेऽपि यदि दीक्षणीयाकार्ये यथासिद्धैव त्रैधातव्या वर्तेत, तथा सति आत्मीयैरेव धर्मैः तत्कार्यं साधयिष्यति प्रसिद्धधर्मकत्वात् । अथ न प्रवर्तेत, सुतरां आत्मीया एव धर्मास्तस्याः । अस्ति परमापूर्वप्रयुक्तायामपि धाद्नियमस्य प्रवृत्तौ आग्नावैष्णवी विशिष्टं द्वारमभूत्, तच ( द्वारं ) इह नास्ति । तस्मान्नास्ति पूर्वपक्षेऽपि धाद्नियमः । ननु अनेन न्यायेन नीवारेषु प्रोक्षणं न प्राप्नोति । उच्यते । अस्ति विशिष्टं द्वारं प्रोक्षणस्येति । इयांस्तु विशेषः, व्रीहयो दृष्टे नोपकुर्वन्ति, नीवाराश्च तत् ( कार्ये ) साधयन्तो दृश्यन्ते, तत्र तत्कार्यापन्नत्वात् तद्धर्मप्राप्तिर्युक्ता । इह तु अदृष्टं द्वारं, तस्मिन् कार्ये त्रैधातव्या वर्तेत इति नास्ति प्रमाणम् । अथवा दूरादेवेदं भ्रष्टं प्रयोजनम् ( इति पूर्वोक्तमेव स्पष्टीक्रियते । कथं ? ) त्रैधातव्या यादृशी उत्पन्ना, तादृश्येव ( अत्र ) चोद्यते, शब्देन ( हि ) तेन विपरिवर्तते । आख्यातश्रवणात् कर्मान्तरमपि न ( भवति ) । तस्मात् तादृश्येव विहिता, तादृश्येव ( कर्तव्या ) । यद्यपि च कर्मान्तरं ( स्यात् ), तथापि नाम्ना ( त्रैधातवीया- ) धर्मान् गृह्णीयात्, न चोदकेन ( दीक्षणीयाधर्मान् ) । तस्मात् पक्षद्वयेऽपि धर्मप्राप्त्यभावात् प्रयोजनान्तरं मृग्यमिति ) ।

सोम— अत्र भाष्यकारेण पूर्वपक्षे 'त्रैधातवीया दीक्षणीया' इत्यश्वमेधे आग्नावैष्णवस्थानापन्नप्राकृतदीक्षणीयास्थानापन्नायां अयं धाद्नियमः प्रवर्तते । सिद्धान्ते तु त्रैधातवीयायाः आग्नावैष्णवापूर्वसाधनत्वाभावात् तत्र युक्तोऽयं न प्रवर्तते इति प्रयोजनमुक्तम् । यत्तु धात्वमेधिकत्रैधातवीयाया नामधेयेन प्राकृतत्रैधातवीयाधर्मस्य उपांशुत्वादेः प्राप्त्या दुर्बलेन चोदकेन स्वविरोधप्राप्त्यसंभवात् अयुक्तम् । न च दुर्बलप्रमाणकस्यापि स्वाविरोधस्य प्रधानाङ्गतया प्रबलत्वात् नामधेयप्राप्तं तदुपांशुत्वं बाधित्वा स एव पूर्वपक्षे प्रवर्तते, सिद्धान्ते तु

उभयोरपि दीक्षणीयाऽर्थेऽपि तुल्यत्वे नामधेयप्राबल्यमादाय उपांशुत्वमेव प्रवर्तते इति युक्तमेव प्रयोजनं इति वाच्यम्। वस्तुतः आश्वमेधिकत्रैधातवीयायाः काम्यत्रैधातवीयाऽपेक्षया प्रकरणान्तराम्नाने सत्यपि 'भिद्यते भावनामात्रं धात्वर्थो नाथनिश्रुतेः' इति न्यायेन (वा. पृ. ६१७– नामविलक्षणधातुश्रवणे हि तदर्थभेदो भवति। यत्र तु धात्वश्रवणान् नाममात्रोपनीतमफलयागमत्यपिधानात् तत्राख्यातमात्रभेदः। सुधा. पृ. ९५५ – विधिपदानपेक्षस्यापि नाम्नः विधिविषयभूतधात्वर्थोपस्थापनोपपत्तिस्तत्नार्थः नामशब्दः। इति) कर्मान्तरत्वाभावेन यथासिद्धकाम्यत्रैधातवीयाया एव दीक्षणीयायाः कार्ये यजमानसंस्कारे विधानेन पूर्वपक्षेऽपि त्रैधातवीयाया उपांशुत्वस्यैव प्राप्तेः स्वरविशेषप्राप्त्यसम्भवात् इति वार्तिककारेण दूषितम्।

भाट्ट— ननु भाष्यकारेण अश्वमेधे 'त्रैधातवीया दीक्षणीया भवति' इति वचनेन दीक्षणीयाकार्ये यजमानसंस्कारे विहिताया त्रैधातवीयायां पूर्वपक्षे दीक्षणीयाधर्मप्राप्तिः, सिद्धान्ते तु प्रसिद्धत्रैधातवीयाया धर्मा एव इति प्रयोजनमुक्तम्। तन्न। पूर्वपक्षेऽपि सिद्धान्तेऽपि स्थानापत्तौ बाधकाभावात्। यदि तु स्थानापत्त्यतिदेशापेक्षया निमित्तातिदेशस्यापि बलवत्त्वात् अष्टमे बाधितत्वात् नामातिदेशेन प्रसिद्धत्रैधातवीयाधर्मा एव इत्याशङ्क्येत, तत् पूर्वपक्षेऽपि तुल्यम्। वस्तुतस्तु नेयं त्रैधातवीया प्रसिद्धत्रैधातवीयायाः कर्मान्तरं, तथापि अनुपादेयगुणयोगे आख्यातसामानाधिकरण्याभावात्। अतः प्रसिद्धायाः सधर्मिकाया एव त्रैधातवीयायाः यजमानसंस्कारार्थत्वेन विधानात् धर्माकाङ्क्षाविरहेण च स्थानापत्त्यतिदेशाप्रसक्तिः।

● अश्वमेधे सवनीयाः पशवः त्रयः 'अश्वस्तूपरो गोमृग इति ते प्राजापत्याः' इति। तत्र अश्वस्य चतुस्त्रिंशत् वङ्क्रयः। इतरयोस्तु षड्विंशतिः षड्विंशतिः। वि. ९।४।२. ● अश्वमेधे सौवर्णराजतौ महिमानौ नाम ग्रहौ। तयोः प्राकृतग्रहैः समुच्चयः। भा. १०।४।२।३–५. ● अश्वमेधयागस्य च संस्कारत्वात् न तावत् फलविधित्वावसरः। भा. १।२।१।४.

● अश्ववालत्वादयो धर्माः आतिथ्याबर्हिषः। वि. ४।२।१३.

● अश्वसहस्रं दक्षिणा पौण्डरीके (एकादशरात्रे)। भा. ३।४।१०।२८ पृ. ९५७. ● 'अश्वसहस्रेण अमुको राजा जितः' अत्र गौण्या लक्षणया वा अश्वसहचरितपुरुषैः इत्यर्थः। वा. १।४।१२।२३ पृ. ३५४. ● अश्वसहस्रेण गवामयुतेन च एक एव यज्ञियकपरिक्रयः सर्वपौण्डरीकार्थः। भा. १०।६।१७।६२ ६८. ■ 'अश्वसहस्रेण नगरं मुषितं' इति गम्यमानानामेव साधिना मोषक्रियासंबन्धः। वा. ३।४।४।११ पृ. ९४०.

■ अश्वाभिधानीन्यायः। यद्यपि गायत्र्यादिषु सामान्ये विहितेऽपि न स्तोभान्तरे तदाकाङ्क्षाशान्तिः इति नात्र अश्वाभिधानीन्यायेन फलतः परिसंख्यात्वं तथापि। भाट्ट. १०।४।१२. ● अश्वाभिधानीमादत्ते इति गर्दभाभिधानीं परिसंचष्टे। तत्र मन्त्रस्य अभिधान्याश्च यः संबन्धः, तदभिधानपरं वचनं 'इमामगृभ्णन् इति अश्वाभिधानीं' इति। न अनेन मन्त्रेण आदत्ते इति। लिङ्गेनैवावदाने प्राप्तत्वात् मन्त्रस्य परिसंख्या युक्ता। भा. ३।१।७।१४ पृ. ७०९–७१०, ७१२. ● अश्वाभिधानीवाक्यगतपरिसंख्याविचारः 'प्रहन्याम:' इत्यत्र वार्तिके द्रष्टव्यः। अयमेव अश्वाभिधानीन्यायः स्यात् १। के.

● 'अश्विनोस्त्वा बाहुभ्यां सध्यासं, नृचक्षसं त्वा देव सोम सुचक्षा अव ख्येषं,...मा मेऽवाङ् नाभिमति गाः॥' अयं मन्त्रः क्रियाविधिः। एते हि ग्रहणावेक्षणसम्मर्शनप्रकाशका मन्त्राः प्रकरणेन विनियुक्ताः, ग्रहणादीना अनुष्ठानयोग्यानां स्वाङ्गत्वसिद्ध्यै विधिं कल्पयन्ति इति तृतीये 'लिङ्गसमाख्याभ्यां यथार्थताऽनुवाकस्य' इत्यधिकरणे (३।२।९) उक्तम्। बाल. पृ. ६४.

● 'अष्टकाः कर्तव्याः' इति स्मृतिधर्मे प्रमाणम्। भा. १।३।२।१–२. ● अष्टकाः दर्विहोमो लौकिकः। वि. ८।४।१. ● अष्टकायां मन्त्रः 'यां जनाः प्रतिनन्दन्ति रात्रिं धेनुमिवायतीम्। संवत्सरस्य या पत्नी सा नो अस्तु सुमङ्गली॥ अष्टकायै सुराधसे स्वाहा॥' इति। भा. ६।५।९।३५, ● अष्टकायां लौकिकी हवि-

कर्तव्यता । ७।४।२।२–१२, ● अष्टकादीनि स्मार्तानि कर्माणि लौकिकानि । ८।४।२।२–३, ● अष्टकालिङ्गाश्च मन्त्रा वेदे दृश्यन्ते 'या जनाः प्रतिनन्दन्ति' इत्येवमादयः । १।३।१।२ पृ. १६५, ● अष्टमीषु अन्यासु अष्टकाशब्दः भाक्तः । एषा हि मुख्या, या माघ्या ऊर्ध्वा । गौणमुख्ययोश्च मुख्ये सम्प्रत्ययः । ६।५।१।३४.

● अष्टकाश्राद्धानि स्मार्तानि । तासु पाकसंस्थासु इदमेकं कर्म । तत्रापि पूर्वेद्युश्चत्वारि, अष्टकाः चतस्रः, अन्वष्टकाः चतस्रः इति द्वादश भवन्ति । मार्गशीर्षपौषमाघफाल्गुनमासानां कृष्णपक्षेषु सप्तम्यष्टमीनवमीषु एतानि क्रमेण भवन्ति । तत्र अष्टकासु गौरालम्भा भवन्ति । के.

● अष्टत्वादयः अर्थवादाः, न तु गुणविधयः जातेष्टिवाक्ये 'अष्टाकपालो भवति' इत्यादौ । भा. १।४।१३।१७–२२.

● (अष्टमशब्दः स्थूलवर्णक्रमसाम्यात् अर्थेन निर्देश्यते ।) अष्टमेऽध्याये 'यस्य लिङ्गमर्थसंयोगात्' (८।१।२) इत्येतत्सूत्रप्रभृतिषु अधिकरणेषु नाना विधानि प्रकृतिलिङ्गानि उक्तानि । इष्टिषु तद्धितेन देवता निर्देशः, एकद्विदेवतत्व औषधद्रव्यकत्वं, आज्यद्रव्यकत्वं, पयोद्रव्यकत्व, दधिद्रव्यकत्व, उपांशुविशिष्टद्रव्यकत्व द्रवसमानवर्णद्रव्यकत्वं, पशुमन्मतिमद्-द्रव्यकत्वं, निर्वपनिमित्तं इत्यादीनि । पशुषु आलम्भविधानं, प्रतिद्रव्यकत्व, मुख्यकालत्वं, पशुगणत्व इत्यादीनि । सोमेषु अव्यक्तचोदितत्व, अहर्गणत्वं, अहीनत्वं, सत्रत्व, संवत्सरत्व, निरायित्व इत्यादीनि । तत्र 'यस्य लिङ्गमर्थसंयोगात्' इति सामान्यसूत्रेणैव विशेषविवरणार्थैः सूत्रान्तरैः अनिबद्धान्यपि यानि कित् अन्यान्यपि चोदनालिङ्गानि सामान्यतः संगृहीतानि इत्यन्यथाऽनुपपत्त्या अवश्यं कल्पनीयम् । यथा 'तेषामृग् यत्रार्थवशेन पादव्यवस्था' (२।१।३५) इत्यत्र अर्थवशेन पादव्यवस्था हेत्वन्तरस्यापि वृत्तादिवशस्य उपलक्षणार्थमिति युक्तम् ।

कानि तानि अन्यानि चोदनालिङ्गानि इति चेत् उच्यते । एकं तावत् चोदनालिङ्गं द्रव्यदेवतायोग प्रतिपादकतद्धितान्तपदाश्रवणम् । यथा 'आग्नावैष्णवमेकादशकपालं निर्वपेत्, सरस्वतीमाज्यस्य यजेत, बार्हस्पत्यं चरुम्' इति । अत्र एकादशकपालत्वं 'ऐन्द्राग्नमेकादशकपालं निर्वपेत्' इति प्राकृते ऐन्द्राग्ने, 'तावग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छत्' इति विहिते प्राकृते अग्नीषोमीये च अविशिष्टं, एवं द्विदेवत्व निर्वपतित्वं च । यद्यपि द्वितीय प्राकृताग्नीषोमीयप्रधानचोदनायां नास्ति, तथापि अर्थविधिना निर्वापकत्वमस्त्येव, अतस्तत्र द्रव्यदेवतासम्बन्धप्रतिपादकतद्धितान्तपदे अपि मुख्यत्वसम्भवेन चोदनालिङ्ग मीमांसकानामपि अभिप्रेतं लभ्यते । अन्यथा अष्टमे एव तृतीयपादाद्ये 'हविर्गणे परमुत्तरस्य' (८।३।१) इत्यधिकरणे आग्नावैष्णवे अग्नीषोमीयस्य विध्यन्तः इति भाष्ये देवतासामान्यात् इति हेतुरसंगतः स्यात्, द्विदेवत्वस्य ऐन्द्राग्नेऽपि तुल्यत्वात् । एवमग्निसमवायकस्यापि । तद्धितमात्रं तु आग्नेयेऽपि तुल्यम् । तदवश्यं यच्छब्दतद्धितान्तपदवत्त्वं अग्निमुखतद्धितान्तपदवत्त्वं वा अवश्यं किंचित् चोदनालिङ्गान्तरं इह सिद्धान्तहेतुतया विवक्षितं गम्यते । एवं शारम्भणीयाया 'आग्नावैष्णवमेकादशकपालं निर्वपेद्दर्शपूर्णमासावारप्स्यमानः' इति, 'आग्नावैष्णवमेकादशकपालं निर्वपेद्दीक्षिष्यमाणः' इति च । 'द्यावापृथिव्यमेककपालं' इत्यत्र तु यच्छब्दतद्धितादेव चोदनालिङ्गात् अग्नीषोमीयविकृतित्वम् । आश्विनद्विकपाले तु द्विदेवत्वे सति अपचारयितृत्वात् ऐन्द्राग्नविकृतित्वम् । एवं 'मारुतं सप्तकपालं, मरुद्भ्यः सान्तपनेभ्यो मध्यंदिने चरुं' इत्यत्रापि सान्तपनपदविशेषणाविवक्षायामपि प्रधानभूतदेवताविधिः व्यस्त एव इति व्यस्तदेवताविधिसादृश्यात् अनेकदेवतासाम्य ऐन्द्राग्नविकृतित्वमेव । 'सौमेन्द्रं चरुं निर्वपेत् श्यामाकं सोमवामिनः' इत्यत्र तु व्यस्तत्वे सत्यपि अर्थवादिशब्दपर्यालोचनया. प्रथमोपस्थिताया अपि पश्चिमत्वात् अन्तरङ्गसोमरूपार्थसमवायेन उपांशुसमवायसाम्येऽपि च सोमप्राथम्यात् तदुपस्थित अग्नीषोमीयविकृतित्वमेव । एवं इन्द्रासोमीये इन्द्रमुख्यत्वात् ऐन्द्राग्नविकृतित्वम् । सोमापौष्ण–सोमारौद्रादौ तु सोमस्य प्राथम्येन अग्नीषोमीयविकृतित्वम् । इन्द्रापौष्णे ऐन्द्रा-

वैष्णवं इत्यत्र सत्यपि अग्नीषोमीयचोदनालिङ्गे पञ्चाक्षरत्वे अक्षरसंख्याया बहिरङ्गत्वात् अन्तरङ्गेन्द्रसमवायेन ऐन्द्राग्नविकृतित्वम् । एवं ऐन्द्रापौष्ण-ऐन्द्राबार्हस्पत्यादौ । एवं ऐन्द्रः पुरोडाशः, सौम्यश्चरुः इत्यत्र इन्द्रसमवायेन ऐन्द्राग्नविकृतिः पूर्वः, उत्तरस्तु सोमसमवायेन अग्नीषोमीयविकृतिः । 'वैश्वदेवं चरुं निर्वपेत् भ्रातृव्यवान्' इत्यादौ तु चतुरक्षरे न किंचित् त्र्यक्षरपञ्चाक्षरत्वादि नियामकमस्ति इति अनियम एव ऐन्द्राग्नाग्नीषोमीयविकृतित्वे ।

नन्विदमुक्तमापस्तम्बसूत्रे 'एकदेवता आग्नेयविकाराः, द्विदेवता अग्नीषोमीयविकाराः, बहुदेवता ऐन्द्राग्नविकारा वा' इति । (आप. ३०।३) । अत्र ऐन्द्राग्नविकारा वा इति द्विदेवतेष्वपि संबन्धनीयम् । तेन उभयत्र विकल्पः । स च व्यवस्थितः । अस्मदुक्तोदाहरणेषु पूर्वोक्तरीत्या क्व चित् अव्यवस्थितविकल्पोऽपि इति । कपर्दी तु 'यासां विकृतीनां द्विबहुदेवतापदेषु चत्वार्यक्षराणि अधिकानि वा, ता अग्नीषोमीयविकाराः । यासां तु त्रीणि ऊनानि वा, ता ऐन्द्राग्नविकाराः अन्यत्र प्रकृतिदेवताभ्यः' इत्याह । तत्र द्व्यक्षरेण सामीप्यात् त्र्यक्षरोपस्थितानपि एकाक्षरादिभिश्च सामीप्यात् पञ्चाक्षरोपस्थितावपि चतुरक्षरे उभयसाम्याद् कथं पञ्चाक्षरस्यैवोपस्थितिः इति चिन्त्यम् । यस्य तु धर्मणः क्व चित् उत्पत्तिचोदनया येन चित् प्रकृतिलिङ्गेन किंचिद्विकृतित्वमवधारितं, तस्य कर्मणः अन्यथातिदिष्टस्य ऊहेन अन्यदेवतात्वेऽपि न तद्धेतुकं कर्मान्तरविकृतित्वं भवति, पूर्वावधारितकर्मविकृतित्वं वा अपैति, अवधारिताङ्गविशिष्टस्यैव अतिदेशात् । यथा अग्नीषोमीयपशुपुरोडाशस्य 'अग्नीषोमीयस्य वपया प्रचर्य अग्नीषोमीयं पशुपुरोडाशमनु निर्वपति' इति अग्नीषोमीयपशुप्रकरणे उत्पन्नस्य अग्नीषोमीय इति प्रकृतिलिङ्गसंयोगेन दार्शपौर्णमासिकाग्नीषोमीयपुरोडाशविकृतित्वेन अवधारितस्य आग्नेये सवनीये, ऐन्द्राग्ने च निरूढपशौ अतिदिष्टस्य ऊहेन आग्नेयत्वे ऐन्द्राग्नत्वे च सत्यपि तत्र प्रत्यक्षचोदनाऽभावेन चोदनालिङ्गासंभवात् प्राकृतस्यैव पशुपुरोडाशयागस्य प्रकृतौ अग्नीषोमीयमिति चोदनालिङ्गेन अवधारितं दार्शपौर्णमासिकाग्नीषोमीयपुरोडाशविकृतित्वं न बाध्यते, इति तदीयमेव अनुमन्त्रणादि भवति इति, धूर्तस्वाम्यादेः 'सवनीये आग्नेयस्य पशुपुरोडाशस्य आग्नेयविकृतित्वं, निरूढे च ऐन्द्राग्नस्य पशुपुरोडाशस्य ऐन्द्राग्नविकृतित्वं' इत्यभिधानं उपेक्ष्यमेव । यत्तु तद्बलमकमापस्तम्बसूत्रं, तदपि 'अङ्ग वा समभिहारात्' इतिवत् श्रुतितदनुसारिन्यायविरोधात् बाध्यम् । अत एव कातीया नैतदनुमन्यन्ते इति । धाळ. २१९-२२१.

* अष्टमे वत्सरे उपनीतो द्वादश वर्षाणि वेदमधीत्य विंशतिवयस्को विवाहं कृत्वा जातपुत्रः अग्निमादधीत । वि. ६।७।१३.

* अष्टमादीनां पञ्चानामध्यायानां विषयसंगती । (सप्तमेन विकृतीनामतिदेशेन धर्मा भवन्तीति प्रतिपाद्यते) अष्टमेन विशेषः । नवमेन विशेषातिदेशः प्रसङ्गेनारभ्यते किं मन्त्रोऽभिसरूपप्रकाशनार्थमुपादेयः, उताभिस्वरूपमविवक्षितं, तस्मादियं प्रयोक्तव्यः इत्यतिदेशप्रकार एव चिन्त्यते । स च सामान्यापारमनुमन्यमान एव आत्मानं लभते । तथा च प्रधानमुखयानुनिष्पादिनी शेषेयत्ताचिन्ता । इयत्ताप्रसङ्गेन चैकादशः प्रयोगेयत्ताविचारार्थमारभ्यते । तन्मात्रापेन ईदृश्यामियत्तायां प्राप्तायां तदपवादत्वेन द्वादश आरभ्यते । अन्यादृशी इयत्ता प्रसङ्गेन भवति । ... तद्बलेन (सामान्यातिदेशबलेन) विशेषातिदेश-ऊह-बाधानामारम्भः । पर्यनुयोगाविरोधाय दशमानन्तर तन्त्रावापप्रसङ्गाः प्रस्तूयन्ते । टुप्. ७।१।१।१ पृ. १५२३-२४.

* अष्टौ हवींषि चातुर्मास्येषु वैश्वदेवपर्वणि 'आग्नेयमष्टाकपालं निर्वपति, सौम्यं चरुं, सावित्रं द्वादशकपालं, सारस्वतं चरुं, पौष्णं चरुं, मारुतं सप्तकपालं, वैश्वदेवीमामिक्षां, द्यावापृथिव्यमेककपालं' इति । वि. १।४।११.

* 'अष्टावध्वर्युरुत्तरे विहारे हवींष्यासादयति, मारुतीमेव प्रतिप्रस्थाता दक्षिणस्मिन्' इदं वचनं वरुणप्रघासेषु । तत्र विहारद्वये भेदेनाङ्गानुष्ठानम् । वि. ११।२।९. विहारद्वये आहवनीयद्वय श्रुतम् । तत्र नव हवींषि विहितानि । भाट्ट. ११।२।८.

● ' अष्टाग्रभृति ' आज्यानि गृह्णाति । तत्र एकं चातुर्थं प्रयाजार्थं, द्वितीयं तु अनुयाजार्थम् । वि. ४।१।१५, ● ' अष्टाग्रभृति ' इति अष्टसंख्याकमेकं ग्रहणं न विधीयते, किंतु चतुःसंख्याकग्रहणयोर्द्वयम् । ४।१।१७. ● ' अष्टाग्रभृति ' इत्येतद्वाक्यात्साम्यचतुष्पदद्वयसाहित्यपरस्पत्थ्येकालम्बस्यापि बाधः पूर्वपक्षे । भाट्ट. ५।१।८, ● ' अष्टाग्रभृति गृह्णाति ' इति अर्थाज्यानि आज्यानि प्राकरणिकद्रव्यापेक्षार्थत्वेन विनियुज्यन्ते ' अष्टाग्रभृति गृह्णाति अनूयाजेभ्यस्तत् ' इति वचनेन सलार्थत्वेन विनियोगात् औपभृतस्य अनूयाजमात्रार्थत्वम् । यत्तु ' अष्टाग्रभृति गृह्णाति प्रयाजानुयाजेभ्यस्तत् ' इति वचनं, तत्र प्रयाजत्वानूयाजत्वयोः उद्देश्यताऽवच्छेदकत्वे वाक्यभेदापत्तेः अनूयाजानां प्रयाजोपदस्यानुवादमात्रम् । इति प्राप्ते, उभयथाऽप्यनुवादत्वाश्रयणे समानपनादिविष्कहृदानुरोधेन शुद्धानूयाजनक्तस्यैवानुवादत्वम् । अतश्च औपभृतं प्रयाजानूयाजार्थमिति सिद्धम् । ४।१।१६. ● ' अष्टाग्रभृति गृह्णाति ' इत्यत्र चतुष्टचद्वयकल्पनं अर्थवादप्रामाण्याधीनम् । सु. पृ. ६६. ● ' अष्टाग्रभृति गृह्णाति प्रयाजानूयाजेभ्यस्तत् ' इतिदर्शपूर्णमासयोः औपभृतं विहितम् । भाट्ट. ४।१।१५.

● अष्टरात्रः अहीनः । ' अथैतस्याष्टरात्रस्य विश्वजिदभिजितौ एकाहौ अभितः, उभयतोज्योतिर्मध्ये षडहः, पशुकामो ह्येतेन यजेत ' । अत्र स्वतन्त्रस्य एकाहस्य विश्वजितो धर्माः प्रथमेऽहनि विश्वजिति अतिदिश्यन्ते । तस्मात् सर्वस्वं देयं इति भाष्यकारस्य मतम् । वार्तिककारस्तु द्वादशशतं इत्येव सिद्धान्तितवान् । विश्वजिद्व्यतिरिक्तेषु सप्तसु अहःसु चोदकप्राप्ता सर्वस्वदक्षिणा बाधनीया, अहर्गणस्य एकैव दक्षिणा इति दशमे वक्ष्यमाणत्वात् । सूत्रकारस्तु नामातिदेशस्य प्राबल्यप्राप्तिमात्रं न्युत्पादितवान् इति द्रष्टव्यम् । वि. ६।७।८.

● अष्टरात्रस्य अहीनस्य विश्वजित् प्रथममहः ततोऽभिप्लवः षडहः, ( ज्योतिर्गौरायु- गौरायुर्ज्योतिः इति । सोम. ) ततोऽभिजित् । शा. ६।७।८. ● अष्टरात्रे अभिचयनं कर्तुं शक्यते । भा. १०।५।२२।७८, १०।८।११।२३. ● अष्टरात्रे ' पृष्ठ्यः षडहः द्वौ स्वरसामानौ ' इति विहिते स्वरसामानौ अनन्यगतिकत्वलिङ्गवशात् गवामयनगतस्वरसाम्नोः विकारौ भवतः । वि. ७।३।१०, ● अष्टरात्रे विश्वजित् प्रथममहः । तस्मिन् प्रकृतिभूतात् एकाहस्य विश्वजितः सर्वस्वं प्राप्तम् । ततः अभिप्लवः षडहः । तत्र प्रकृतेर्ज्योतिष्टोमात् अहतं वासः प्राप्तम् । ततः अभिजित् अष्टममहः । तत्रापि चोदकात् वासः प्राप्नोति । तत्र कौपीनार्थं वासो योग्यं, प्रावरणे च त्वक् योग्या इति उभयोः समुच्चयः, न प्रसङ्गः । १२।३।१.

¶ अष्टरात्रगतेऽपि विश्वजिति सर्वस्वदानम् ॥

अहर्गणे च तद्धर्मः स्यात्, सर्वेषामविशेषात् । ६।७।८।१४॥

भाष्यं— अस्ति अहर्गणोऽष्टरात्रः ' अथैतस्याष्टरात्रस्य विश्वजिदभिजितावेकाहावभितः, उभयतोज्योतिर्मध्ये षडहः, पशुकामो ह्येतेन यजेत ' इति । तत्र संदेहः किं अहर्गणस्यापि सर्वस्वमेव दक्षिणा स्यात्, आहोस्वित् द्वादशशतमिति । किं प्राप्तं ? सर्वस्वम् । कुतः ? सर्वेषां विश्वजितां अविशेषात् । य एव प्रकृतौ विश्वजितो धर्मः, स एव चास्य चोदकेन भविष्यति । तस्मात् सर्वस्वं देयमिति ।

टुप्— अस्मिन्नधिकरणे ( भाष्योक्त— ) सिद्धान्तदूषणम् ( उच्यते ) । नहि अहर्गणगत. ( विश्वजित्, एकाहकाण्डपठितात्— ) विश्वजितः चोदकेन नामधेयेन वा धर्मान् गृह्णाति । यत् कारणं, प्रयोगाङ्गं दक्षिणा कर्मानतिरेकेण । विश्वजिदर्थे च कर्तार उपादीयन्ते । यच्च फलवत्, तद्विश्वजितम् । अहर्गणः फलवान्, न केवलो विश्वजित् । तस्मात् पृथक्त्वेन समुदायिभिः दक्षिणा अपेक्ष्यन्ते । प्रत्यक्षवचनविहिता द्वादशाहे दक्षिणाः सहस्रं प्रभृ चतुर्यत्तेभ्यः इत्येवमादयः । द्वादशाहप्रकृतित्वात् तद्दक्षिणा प्राप्नोति ।

रत्न—गणार्थत्वात् दक्षिणायाः, गणस्य च द्वादशाहप्रकृतित्वेन तद्दक्षिणा प्राप्नोति । तदन्तःपातिनो विश्वजितोऽपि सैव युक्ता इति पूर्व. पक्षः । प्रतिकर्मावस्थितत्वात् चोदकानां, विश्वजिति च नाम्ना सर्वस्वदाने

प्राप्ते मुख्यक्लीयस्त्वे गति सर्वस्वदक्षिणैव देया इति सिद्धान्तः।

द्वादशशतं वा, प्रकृतिवत्। १५॥

भाष्यं—द्वादशशतं वा देयमिति। प्रकृतिवत् कर्तव्यम्। ज्योतिष्टोमश्च प्रकृतिः। तत्र धर्मा विहिताः विश्वजिति कृत्स्नाः प्रतीयन्ते। तस्मात् द्वादशशतमत्र देयमिति।

अतद्गुणत्वात्तु नैवं स्यात्। १६॥

भाष्यं— तुशब्दः पक्षं व्यावर्तयति। नैवं भवितुमर्हति। कुतः? नैव यतो विश्वजितो गुणो द्वादशशतम्। नामधेयेन हि अत्र धर्मग्रहणम्। तस्मात् विश्वजितो ग्रहीष्यति, न ज्योतिष्टोमात् इति।

लिङ्गदर्शनाच्च। १७॥

भाष्यं— लिङ्गं चास्यापि दर्शयति। किं लिङ्गं भवतीति? एवमाह, 'हीयते वा एष पशुभिर्यो विश्वजिति सर्वस्वं न ददाति' इति नियतं सर्वस्वदानं दर्शयति अहर्गणे।

शा— 'गणेषु द्वादशाहस्य विध्यन्तः स्यात्प्रवर्त्यते। द्वादशं च शतं ज्योतिष्टोमात्तत्रातिदिश्यते॥ विश्वजित्यपि सैव स्याद्दक्षिणा गणवर्तिनी। नामातिदेशप्राबल्यात् सर्वस्वं स्वेन दक्षिणा॥' इद च प्रासङ्गिकमपरमधिकरणम्। प्राप्तं विश्वजिति सर्वस्वं बाधित्वा इतरेषां सत्तानामह्नां द्वादशशतदक्षिणाया भूयसा साधर्म्यात् द्वादशशतमेव देयं, एकैव च तन्त्रेण सर्वेषामेकप्रयोगवर्तिनां दक्षिणा न पृथक्पृथक् प्रदातव्या। तस्मात् भूयोऽनुग्रहाय द्वादशशतमेव देयम्।

सोम— एकाहविश्वजिति सर्वस्वदाने अहर्गणान्तर्गतेऽपि तथा इति प्रत्यवस्थानात् संगतिः। वस्तुतो नामप्राबल्यात् सर्वस्वप्राप्तिरस्ति इत्येवं प्रतिपादनमात्रे तात्पर्यम्। सूत्रार्थस्तु अहर्गणे विद्यमानोऽपि विश्वजित् सर्ववेदसधर्मयुक्तः सर्वेषां विश्वजितामविशेषात् इति।

वि— 'विश्वजित्यष्टरात्रादौ किं शतं द्वादशाधिकम्। सर्वं वा, ऽऽद्यश्चोदकोक्तेः, अन्त्यो नामातिदेशतः॥' 'एतत्साध्ये वार्तिके तु तत्तद्गुणानुजिघृक्षया। आद्यः सिद्धान्तितः प्रक्षिप्तश्च येनेदमीरितम्॥'

भाट्ट— अस्ति अष्टरात्रः अहीनः। तस्य विश्वजित् प्रथममहः, ततोऽभिप्लवः षडहः, ततोऽभिजित्। 'पशुकामो ह्येतेन यजेत' इति श्रुतेः। तत्र विश्वजिति प्रकरणान्तराधिकरणोक्तन्यायेन (२।३।११) कर्मान्तरे नामातिदेशेन एकाहकाण्डपठितविश्वजितो धर्मः सर्वस्वं, अन्येषु तु गणत्वात् द्वादशाहतो ज्योतिष्टोमिकी दक्षिणा। द्वादशाहेऽपि च प्रतिमुख्यं भेदेनातिदेशेऽपि प्रयोगैकत्वेन कर्मैकत्वस्य दशमे वक्ष्यमाणत्वात्। तदानन्तर्यायाः दक्षिणाया अपि तन्त्रेण आदावन्ते वा देयत्वप्रसक्तौ 'अन्वहं द्वादशशतं ददाति' इत्यनेन आवृत्तिफलकः अन्वहकालो विधीयते। द्वादशशतस्यापि विधाने वाक्यभेदापत्तेः। प्राकृतदक्षिणामात्रोपलक्षणं तत्। तेन या दक्षिणा तन्त्रेण देयत्वेन प्रसक्ता, तां प्रत्यहं ददाति इति तद्वाक्यार्थः। तदिह अष्टरात्रे नामातिदेशप्राप्तस्यापि विश्वजिद्धर्मानुग्रहप्राप्तानपि भूयोऽनुग्रहस्य न्याय्यत्वात् द्वादशशतस्यैव तन्त्रेण उपकारकत्वप्रसक्तेः तस्यैव अन्वहं इत्यनेन आवृत्तिकरणात् द्वादशशतमेव प्रत्यहं देयं इति वार्तिककाराशयः। भाष्यकाराशयस्तु अष्टरात्रप्रकरणस्थेनैव 'हीयते वा एष पशुभिर्यो विश्वजिति न सर्वस्वं ददाति' इति अनन्यथासिद्धलिङ्गोपष्टम्भप्राप्यस्थानिना तत्कल्प्यविधिनैव वा सर्वस्वविधानात् आद्य एव सर्वेषु वा अहःसु सर्वस्वं देयमिति।

मण्डन— 'देयं सर्वगणेऽपि तत्।' सर्वगणे अहर्गणे। तत् सर्वस्वम्।

शंकर— 'तत्र विश्वजिदन्तरे (भाष्यमतेन)।' ९. 'भूयस्त्वात् तत्र बाध्येत (वार्तिकमतेन)।' १०.

अष्टरात्रगते विश्वजिति सर्वस्वगहृत्वासत्वोः समुच्चयः॥

विश्वजिति सर्वत्वहृद् नामधेयादितरथा तन्त्रभूयस्त्वादहृतं स्यात्। १२।३।१।१॥

भाष्यं— अस्ति अष्टरात्रोऽहीनः 'तस्य विश्वजिदभिजितौ अग्निष्टोमावभितः, उभयतोज्योतिर्मध्ये षडहः, पशुकामो ह्येतेन यजेत' इति। विश्वजिति एकाहे यत्पत्वक् परिधानार्थमाम्नाता 'अवभृथादुदेत्य तस्मान्वं परिधत्ते' इति। ज्योतिष्टोमे अहतं वासः।

व्यापारो गम्यते । यथार्थात् गम्यते, न च श्रौतः । यश्च न श्रौतः, न स वाक्यात् गम्यते । कथमसौ प्रकरणं बाधिष्यते । आह प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः इत्याचार्योपदेशात् कर्ता शब्दार्थः, कर्म च इत्यवगम्यते । 'कर्तरि शप्' 'कर्मणि यक्' इति प्रत्ययार्थे कर्तारं कर्म च समामनन्ति आचार्याः । तस्मात् शब्दार्थः कर्ता कर्म चेति । उच्यते, न आचार्यवचनात् सूत्रकारवचनाद्वा शब्दार्थो भवति । प्रत्ययादसौ गम्यते । अनुष्ठेया च क्रिया प्रतीता सती कारकाणि प्रत्याययति इत्यवगतमेतत् । अपिच नैव कर्ता प्रत्ययार्थः कर्म च इत्याचार्या आहुः । ननु कर्तरि कर्मणि च लकारः श्रूयते । नासौ कर्तरि कर्मणि वा श्रूयते, किंतु एकस्मिन् एकवचनं द्वयोर्द्विवचनं बहुषु बहुवचनं इति तत्र अपरं वचनम् । तत्र एवमभिसंबन्धः नियते एकस्मिन् कर्तरि, द्वयोः कर्त्रोः बहुषु कर्तृषु इति । एवं कर्मणि एकत्वादिसंबन्धः । तत्र नैव भवति 'कर्तरि भवति, एकस्मिंश्च' इति । कथं तर्हि ? कर्तरि एकस्मिन् एकवचनं, कर्तुरेकत्वे इत्यर्थः । एवं द्वित्वे बहुत्वे, कर्मणि च । एवं वर्ण्यमाने लौकिकन्यायानुगतः सूत्रार्थो वर्णितो भवति । सूत्राक्षराणि च न्यायानुगतानि भवन्ति । आगमोऽपि च अयमेव, यदा एकत्वादयो विभक्त्यर्थाः तदा कर्मादयो विशेषणत्वेनेति । ननु एतदपि अविरुद्धं, यदा कर्मादयो विभक्त्यर्थाः, तदा एकत्वादयो विशेषणत्वेन इति । उच्यते । अर्थप्राप्ता हि कर्मादयः, ते न भवन्ति शब्दस्याभिधेयभूताः । न तु एकत्वादयः अर्थात् प्राप्नुवन्ति । तेन ते शब्दार्थभूताः । तस्मात् यद्यपि विशेषणं एकत्वादयः, तथापि विशेषणमेवाभिधीयते । यथा 'हिरण्यमालिन ऋत्विजः प्रचरन्ति' इति हिरण्यमालित्वं विशेषणत्वेन, तथापि तदेव विधीयते । तस्मात् कर्तुरेकत्वं शब्दार्थः, न कर्ता । ननु कर्तुरेकत्वादेकवचनं, कर्तुर्द्वित्वात् द्विवचनं, कर्तुर्बहुत्वात् बहुवचनं, तेन नूनं कर्ता शब्दार्थः इति गम्यते । उच्यते । नैतदनुमानात् शक्यम् । कर्ता अनुष्ठेयक्रियावगमादेव अवगम्यते इति प्रत्यक्षम् । तत् तावत् येन चित्त गम्यते । एकवचननिर्देशे कर्त्रेकत्वं गम्यते, द्विवचननिर्देशे कर्तृद्वित्वं, बहुवचननिर्देशे कर्तृबहुत्वम् । तदपि प्रत्यक्षम् । कर्तारमनुमानं बाधितुमर्हतीति । यथा आकृतिवचने शब्दे द्विवचने द्रव्यभेदोऽवगम्यते एकवचने द्रव्यैकत्वं, एवमिहापि द्रष्टव्यम् । तस्मान्न श्रौतः (पुरुषप्रयत्नः) । न चेच्छ्रौतः, न प्रकरणं बाधिष्यते । शा. ३।४।४।१३ पृ. ९१३-९४०.

* आख्यातगतकर्त्रादिलक्षकत्वविचारः । ननु इदं (प्रथमप्रयोगविषयक यदुक्तं, तत्) आख्यातस्य कृतिवाचिनः कर्तृलक्षकत्वे सिध्येत् । तत्र तु प्रमाणाभावः इति चेत् । पचति इत्युक्ते कीदृग्विधः इति प्रश्नस्यैव तत्र प्रमाणत्वात् । नहि धर्मिज्ञानं विना धर्मविशेषप्रश्नो युज्यते । न च धर्मिज्ञानं अन्यतः संभवति, पचतिपदार्थपाकप्रकारकानुकूलतासंसर्गकाख्यातार्थविशेष्यकप्रमाणवाक्यार्थबोधस्यैव जननात्, प्रथमाऽन्तपदजन्योपस्थितिरूपकारणाभावेन कृतिप्रकारकाश्रयविशेष्यकबोधस्य जनयितुमशक्यत्वात् । यद्यपि भवन्मते कृतिप्रकारकबोधं प्रति आख्यातपदज्ञानत्वेनापि कारणता अस्ति, तथापि तत्कार्यताऽवच्छेदकं यदि कृतिप्रकारकबोधत्वं, तदा आश्रयज्ञानाभावात् धर्मिज्ञानाभावः सुलभ एव । यदि तु कृतिप्रकारकाश्रयविशेष्यकबोधत्वं, तदाऽपि तत्र प्रथमाऽन्तपदजन्योपस्थितेरपि दण्डत्वादिवत् समुच्चित्य कारणत्वात् तदभावेन अभाव. सुलभः । अतः अवश्य प्रश्नोत्पादकधर्मिज्ञानार्थं प्रथमाऽन्तपदाध्याहारार्थं च आश्रयज्ञानं वाच्यम् । तच्च शाब्दं मानसं स्मरणं वा इति विप्रतिपत्तिः । तत्र 'लः कर्मणि च भावे चाकर्मकेभ्य.' (पा॰ ३।४।६९) इत्यनुशासनात् शाब्दमेव । अत्र चकारात् 'कर्तरि कृत्' (पा॰ ३।४।६७) इतिसूत्रीयस्य कर्तरि इत्यस्य अनुकर्षणात् कर्तर्यपि लकारलाभः । इदं हि न लकारस्य कर्त्रादौ शक्तिः इत्येवंपर, पदार्थे वृत्तौ च तात्पर्यकल्पने गौरवात् । लाघवेन कृतौ शक्तौ अवधारितायां तदनुशासनस्य निरूढलक्षणयैव व्याख्येयत्वाच्च । कर्तृवाचित्वे तत्र संख्याऽन्वयानुपपत्तेः, 'पचति' इत्येतावन्मात्रश्रवणे कर्तरि एकत्वसंशयापत्तेश्च । 'पचति इति याचकः' इत्येवं कृदर्थविनाशाच्च । अतः आश्रयज्ञानस्य शाब्दत्वमुक्तम् । युक्तं चैतत्, आख्यातोपात्तसंख्याप्रकारकशाब्दबोधं प्रति

आख्यातपदस्य प्रथमाऽन्तपदापेक्षया उपस्थितत्वेन आख्यातपदजन्योपस्थितित्वेन कारणत्वकल्पने लाघवात् । अतः लाघवात् अनुशासनाच्च धर्मिज्ञानानुरोधात् आख्यातस्य कर्त्रादौ लक्षणा ।

एतेन एकत्वादेः अस्मन्मते कर्त्रादिघटितसामानाधिकरण्यसम्बन्धेनैव भावनाऽन्वयात् कर्त्रादेः सार्थकविषयितयैव बोधः इत्यपास्तम् । 'पाककर्ता एको न वा' इत्यस्य संशयस्य 'पचति' इत्यतः व्युदासानुपपत्तेः । धर्मितावच्छेदकविशिष्टधर्मिज्ञानाभावात् 'पाककर्ता कः' इतिसंशयानापत्तेश्च । न च क्वचिदपि शक्तिमात्रजन्यशाब्दबोधाभावे तस्यैव पदस्य अर्थान्तरलक्षकत्वासंभवः, इत्यत्र प्रमाणमस्ति, मुख्यार्थासंभवस्यैव अर्थान्तरबोधानुपपत्तेरेव व्यवहारतर्कग्राहकतायाः लक्षणातात्पर्यग्राहकत्वात् । तत्रापि यगादिविकरणस्थले कर्तरि, यगादिविकरणस्थले च कर्मणि, इत्येवं व्यवस्थया लक्षणा । लक्ष्यतावच्छेदकं च आश्रयत्वं कर्तृत्वकर्मत्वाद्यखण्डोपाधिर्वा । कर्तृत्वादिकं हि कृत्याश्रयत्वादिभिन्नमनियतः अखण्डधर्मः अनुगतव्यवहारसाक्षिकः, न तु कृत्याश्रयत्वादिकमेव । तथात्वे 'चैत्रेण पाकः क्रियते' इत्यत्र 'चैत्रेण पाकः' इत्येतावतैव 'चैत्रनिष्ठकृतिसाध्यः पाकः' इत्यर्थबोधोपपत्तेः, पुनः 'क्रियते' इति कृतिवाचकपदप्रयोगवैयर्थ्यापत्तेः । अतः कर्तृत्वादिकं अखण्डमेव तृतीयाऽऽद्यर्थः । तस्य च आश्रयत्वादिवदेव कृत्यादिनिरूपितत्वादिधर्मकल्पनात् 'चैत्रनिष्ठकर्तृत्वनिरूपककृतिसाध्यः पाकः' इत्यर्थबोधोपपत्तिः । इदं च परमतेनोक्तम् । स्वमते 'उक्तकृतिसाध्यत्व पाकवृत्ति' इत्येवं शाब्दबोधस्य धर्मप्रमाणत्वात् । सर्वथा कर्तृत्वादिकं अखण्डोपाधिः । इष्टं चैतत् प्राचां, दम्पत्योः व्यासज्यवृत्तिकर्तृत्वसिद्ध्यर्थं, अग्नीषोमयोः व्यासज्यवृत्तिदेवतात्वसिद्ध्यर्थं च । अन्यथा कृत्याश्रयत्वरूपकर्तृत्वस्य, त्यज्यमानद्रव्योद्देश्यत्वरूपस्य च देवतात्वस्य आश्रयभेदेन भिन्नतया व्यासज्यवृत्तित्वसिद्धान्तानुपपत्तेः । अतः कर्तृत्वं कर्मत्वं च लक्ष्यतावच्छेदकीकृत्य कर्तृकर्मणोः आख्यातस्य लक्षणा । इदं च श्रीमतीनां रीतिमनुसृत्योक्तम् । यत्र यथोक्तन्यायेन आश्रयानेकत्वग्राहकं प्रमाणान्तरमस्ति यथा दम्पत्योः, तत्र विधिवाक्ये एकवचनश्रवणात् आख्याते नाश्रयलक्षणा, एकत्वानन्वयापत्तेः । अतस्तत्र द्वित्वलक्षणायां प्रमाणाभावात् आख्यातेनैव लाघवात् कर्तृत्वत्वेन कर्तृत्वं लक्ष्यते, न तदाश्रयोऽपि, तस्य अर्थादेव बोधोपपत्तेः । इष्यते च कर्तृत्ववादिना कर्तृत्वबोधः तृतीयाऽऽदौ । स परं शक्त्या तत्र, अत्र तु लक्षणया इत्येतावान् भेदः । तत्रैव च साक्षात् सम्बन्धेन एकत्वान्वयः न तु आश्रये, तस्य द्वित्वात् । यद्यपि तत्र आख्यातसमानाधिकरणं स्वर्गकामपदं, तदपि न कर्तृपरं, अपितु लक्षणया उपस्थितस्वर्गाख्यभाव्यपरमेव । प्रथमा च तत्त्वा लक्षणया कर्मत्वार्थिका, इति न तत्सामानाधिकरण्यबलेनापि आख्याते आश्रयलक्षणा । प्रथमाप्रयोगकं तु सर्वत्र कर्तृत्वोक्तिरेव । सा परं कर्तृत्वप्रकारिका कर्तृत्वविशेषिका वा इत्यन्यदेतत् ।

अतः सिद्धा आख्यातेऽपि कर्तृत्वादिलक्षणा । रहस्य. पृ. ३५–३८.

* आख्यातत्वं दशसु लकारेषु विद्यते । ( तत्र भावनावाचकतावच्छेदकम् ) । मीन्या. पृ. १७. * आख्यातपदार्थवृत्तिलक्षणः वाक्यभेदः वाजपेयगुणविधौ । बाल. पृ. १८१. * आख्यातप्रत्ययविधिः धात्वर्थस्य साध्यस्वभावद्योतनाय । श्रि. २।१।१ वर्णकं २. * आख्यातभेदानुसारेण अपूर्वभेदानुगमे सर्वत्र प्राप्ते तदपवादार्थं ( तानि द्वैधं इत्यधिकरणेन ) गुणप्रधानविवेकारम्भः । वा. २।१।३।६ पृ. ४०५. * आख्यातलक्षणं– 'येषां उत्पत्तावर्थे स्वे प्रयोगो न विद्यते । तान्याख्यातानि' येषां तु शब्दानां उच्चारणोत्पत्तौ स्वे अर्थे प्रयोगो न विद्यते, प्रयोगकाले येषामर्थो नोपलभ्यते इत्यर्थः । तानि आख्यातानि इति भावशब्दात् पर्यायशब्देनोपदिशति । भा. २।१।१।४. * आख्यातवाच्यः कर्ता इति व्याकरणं, कृतिः इति न्यायः, भावना इति मीमांसा । पं.

* आख्यातवादः । आख्यातस्य व्यापाररूपभावनाया शक्तिः । ननु धातोरेव व्यापारवाचितया धात्वर्थातिरिक्तभावनायां मानाभावः । न च अस्तिभवत्यादिधातुतः फलस्यैव प्रतीतेः व्यापाराप्रतीतेश्च तत्सामा-

न्येन पच्यादीनामपि फले एव शक्तिः, न व्यापारे इति वाच्यम्। तथापि 'अस्मादावपि कर्तरि माव्येऽस्त्येव हि भावना' इत्यादिवैयाकरणोक्तरीत्या, 'व्यापारनाशे घट आत्मानं मारयति' इति वार्त्तिकोक्तरीत्या च तदौचित्यात्। नापि फलमात्रे तस्य (धातोः) शक्तिः सम्भवति, व्यापारोपरमे 'पाको क्रियते' इति प्रतीतेः, 'ग्रामो गमनवान्' इति प्रयोगस्य चापत्तेः। यत्नादिसमभिव्याहारस्य व्यापारप्रत्यायकत्वकल्पने फलान्वयप्रतिबन्धकत्वकल्पने वा गौरवं, 'पच्यर्थो विक्लित्ति' इति प्रयोगापत्तिश्च। यत्नादेर्व्यापारवाचित्वकल्पना तु सर्वेषां प्रत्ययानां धात्वर्थातिरिक्तवाच्याभावनियमेन निरस्ता। अतो न फलमात्रं धात्वर्थः। नापि व्यापारमात्रं, त्यजिगम्योः पर्यायताऽऽपत्तेः। अतः फलव्यापारौ धात्वर्थः। पच्यादिधातोर्विक्लित्त्यादिफले अनुकूलव्यापारे च प्रत्येकं शक्तिः, न विशिष्टे, व्यापारस्य एकदेशत्वापत्त्या कारकानन्वयापत्तेः। व्यापारश्च आत्मनिष्ठः प्रयत्नः, फूत्कारादिः शरीरगता चेष्टा च। अनुकूलत्वस्य सर्वमर्यादात्म्यकत्वात्, न तत्र शक्तिः। यावत्सु च व्यापारेषु पचति इति प्रयोगः, तावत्सु प्रत्येकं शक्तिः। शक्यताऽवच्छेदकं च तावदन्यतमत्वं, फलानुकूलत्वं तत्त्वं वा। एतेन 'प्रयत्नस्य अन्यथासिद्धत्वेन अवचनात् प्रयोगव्यापारस्य तत्त्वे स्पन्दितत्वादीनामपि समहापत्तिः।' इति परास्तम्। न च धात्वर्थव्यापाराश्रयत्वस्य कर्तृतया सर्वेषां कारकाणां कर्तृतापत्त्या तृतीयाऽऽपत्तिरिति वाच्यम्। विवक्षाया एव नियामकत्वात्। अत एव तत्तत्कारकव्यापारस्य धात्वर्थत्वविवक्षया 'काष्ठं पचति' 'स्थाली पचति' इत्यादिप्रयोगोपपत्तिः। न चैवं प्रत्ययनैरर्थ्यं, प्रकृत्युपात्तफलव्यापारान्यतराश्रयस्य आख्यातत्वेन निर्देशादिना वा, एकवचनादिना च एकत्वादिसंख्यायाः, लडादिना वर्तमानत्वादेश्च तदर्थत्वात्। तथापि लाघवेन आश्रयत्वेनैव शक्यताऽवच्छेदकत्वं यत्नकृतत्वादीनां गुरुत्वात्। अत एव फलव्यापाराश्रयस्य तिङर्थत्वात् अनभिहिताधिकारे 'कर्मणि द्वितीया' (पा० २।३।२) इत्यादिशास्त्रबोधिततृतीयाद्वितीयाऽनन्तरं कर्तृकर्मणोर्युज्यते। अन्यथा तिङा कर्तृकर्मानभिधायकत्वेन सर्वदा द्वितीयातृतीयाऽऽद्युत्पत्तिप्रसङ्गेन 'देवदत्तः पचति' इत्यादीनामसाधुत्वप्रसङ्गः। तथापि धात्वर्थव्यापारस्य मुख्यविशेष्यत्वं, सर्वकारकाणां फलस्य वर्तमानत्वादिकालस्य च व्यापारविशेषणत्वं, एकत्वादिसंख्यायाश्च कर्तृकर्मणोः, कर्मणश्च फले। एवं च कर्माख्याते 'तण्डुलनिष्ठविक्लित्तिजनकः एकाश्रयको व्यापारः' इति, कर्माख्याते न एकाश्रयकफलजनको व्यापारः इति बोधः। प्रथमाऽन्तपदोपस्थाप्यस्य आख्यातोपस्थाप्यकर्तृकर्मभ्यां अभेदेन अन्वयः। 'स्थीयते' इत्यादौ भावाख्याते संख्या अनन्वितैव, धात्वर्थान्विता वा। अनुशासनाच्च द्विवचनादीनामसाधुत्वम्। न च प्रत्ययार्थाश्रयस्य धात्वर्थव्यापारविशेषणत्वे 'प्रकृतिप्रत्ययौ सहार्थं ब्रूतः तयोः प्रत्ययार्थस्य प्राधान्यं' इति प्रत्ययार्थप्राधान्यबोधकस्मृतिविरोधः, तस्याः 'भावप्रधानमाख्यातं' (निरुक्त. १।१) इति विशेषस्मृत्या बाधात्। किंच नात्र प्रत्ययार्थोद्देशेन प्राधान्यविधिः, लिङ्गसंख्ययोर्व्यभिचारेण विधेयस्य उद्देश्याव्यापकत्वात्। नापि प्राधान्योद्देशेन प्रत्ययार्थत्वविधिः, नामसु प्रातिपदिकार्थप्राधान्येन व्यभिचारात्। अत एव तस्याः (स्मृतेः) प्रमाणान्तरसिद्धप्राधान्यानुवादकत्वम्। इति वैयाकरणाः।

अत्र गौतमीयाः। आख्यातस्य यत्नो वाच्यः, यत्नार्थककरोतिना विवरणात्। 'किं करोति' इति प्रश्ने 'पचति' इत्युत्तरस्य यत्नार्थकत्वं विना अनुपपत्तेः। कृतश्च यत्नाभिधायकत्वं, पचाङ्कुरयोः कृत्यकृतिव्यवहारात्। कृदन्तकर्तृपदस्य कृत्याश्रयवाचकत्वम्। अन्यथा क्रियाऽऽश्रयत्वाविशेषात् कारकमात्रं कर्तृपदार्थः स्यात्। अतः 'कृताकृतविभागेन कृतरूपव्यवस्थया। यत्न एव कृतिः पूर्वापराऽस्मिन् सैव भावना॥' इति यत्न एव आख्यातार्थः। 'रथो गच्छति' इत्यत्र अनुकूलव्यापारे, 'जानाति इच्छति यतते करोति' इत्यादौ आश्रयत्वे, 'अपचीयते नश्यति भविष्यति' इत्यादौ प्रतियोगित्वे, सर्वत्र अनुकूलव्यापारे वा निरूढा लक्षणा। अत्र शक्यताऽवच्छेदकं च जीवनयोनिनिवृत्तिजनकयत्नभिन्नत्वम्। यतते करोति इत्यनुव्यवहारात्। शक्यताऽवच्छेदकं च

छन्नं तिप्त्वादिकं वा । तस्य प्रत्ययार्थत्वात् धात्वर्थनिरूपित विशेष्यत्व प्रत्ययार्थप्राधान्यबोधकसूत्रे. । आख्यातार्थाभिहितप्रत्यया च आख्यातार्थविशेष्ये आख्यात तात्पर्यविषयविशेष्ये वा अन्वेति । स च प्रथमाऽन्तपदोपस्थाप्यः । 'चैत्र. पचति' इति कर्त्राख्याने, 'तण्डुलः पच्यते' इति कर्माख्याने, 'पच्यते ओदन. स्वयमेव' इति कर्तृकर्माख्याते प्रथमाऽन्तविशेष्यकशाब्दबोधानुभवात् । आख्यातार्थयत्नस्य समवायेन चैत्रे स्वजन्य व्यापारजन्यफलवत्त्वसम्बन्धेन प्रथमाऽन्तपदोपस्थाप्ये तण्डुलादौ वा प्रकारत्वात् । एतेन अनभिहिताधिकारकत्वानुपपत्तिकृता 'तण्डुलं पच्यते' इत्यादिप्रयोगापत्तिः अपास्ता । कर्तृकर्मनिष्ठसंख्याऽनभिधानस्यैव अनभिहिताधिकारार्थत्वात् । न च व्यापार एवाख्यातार्थ इति वाच्यम् । व्यापारत्वस्योपाधितया यत्नत्वजातेः वाच्यताऽवच्छेदकत्वे लाघवात् । अत एव न कर्ता वाच्यः, आक्षेपलभ्यत्वाच्च । तदुक्तं 'आक्षेपलभ्ये संबन्धे नाभिधानस्य कल्पना । संबन्धमात्रलाभेऽपि साकाङ्क्षेण व्यवस्थितिः ॥' इति । अतो यत्न एवाख्यातार्थः ।

रत्नकोशकारस्तु व्यापारो धात्वर्थः । उत्पादनम् आख्यातार्थः । तेन 'रथो गच्छति जानाति नश्यति' इत्यादौ न लक्षणा । 'उत्पादयति' इत्यत्र प्रत्ययार्थः अनुवादकः । अनुत्पादवाचिधातूत्तरप्रत्ययस्य चोत्पादवाचित्वं इत्याह ।

सिद्धान्तस्तु कृञो न यत्नार्थकत्वं, 'बीजेनाङ्कुरः कृतः' 'स्वर्गादिना सुखं कृतम्' इति यत्नं विनापि व्यवहारात् (एतादृशस्य प्रयोगस्य गौणत्वात् न करोतेर्यत्नार्थकत्वमपगच्छति इति केचित्) । कर्तृपदस्य कर्मादिपदवत् रूढत्वात् । रूढिश्च कृत्याश्रये व्यापाराश्रये वा । अन्यथा प्रकृतिप्रत्ययार्थयोः कृतिकृत्याश्रययोः अनन्वयापत्तिः । अतः कृञा विवरणेन आख्यातस्य यत्नार्थकत्वं गर्भस्रावगलितम् । किंच 'यतते, करोति' इत्यत्र प्रकृतिप्रत्ययार्थयोः अनन्वयापत्तिः पौनरुक्त्यं च । 'पश्यति, ददौ, अय.' इत्यादाविव प्रत्ययस्य अनुवादकत्वं वा । अयत्नार्थकधातूत्तराख्यातप्रत्ययानां यत्नार्थकत्वं वा । 'रथो गच्छति' इत्यादौ अचेतने, 'जानाति, इच्छति' इत्यादौ कृत्यजन्ये च आख्यातप्रयोगस्य गौणत्वं, अनुकूलत्वमात्रे वा लाक्षणिकत्वं प्राचीने श्रोत्रियपदस्येव कल्पयितुं युक्तम् । एवं मध्यमोत्तमपुरुषयोः युष्मदस्मदोः चेतनार्थकतया अचेतनार्थे अनुपपत्तिः । अतः कृञो व्यापारोऽर्थः, तेन विवरणाच्च आख्यातप्रत्ययानां तत्रैव शक्तिः । एवं सति फलानुकूलव्यापारस्य धात्वर्थत्वेऽपि न यत्नस्य तदर्थत्वम् । 'पाके यतते,' 'पाकं करोति' 'पाकं भावयति' इत्यादिषु पाकात् पृथक्करणेन यत्नभानानुपपत्तेः । अतो विवरणबलेन भासमानस्य यत्नस्य धातुवाच्यत्वासम्भवात् फलजनकव्यापारस्य उक्तरीत्या वा व्यापारस्यैव धातुवाच्यत्वम् । न च अन्ते त्यजिगम्यो. पर्यायता, तत्तद्धातुसमभिव्याहृतद्वितीयाया एव संयोगादिरूपफलविशेषबोधकत्वाङ्गीकारात् । सर्वत्र कृता द्वितीयाऽऽदार्थत्वस्य, आश्रयत्वजन्यत्वादीनां च संसर्गत्वस्य अङ्गीकारात् । केचित्तु विक्लित्त्यादिफलजनकताऽवच्छेदकतया व्यापारसमुदायनिष्ठ अतिप्रसङ्गापादनिष्ठो वा वैजात्य अखण्डोपाधिर्वा पच्यर्थः । कर्मकर्तृत्वादिकमपि जातिरूप अखण्डोपाधिरूपं वा । अत एव तस्य व्यापारत्वशक्तित्व सङ्गच्छते । एवं देवदत्तत्वमपि । अतः प्रयोज्यव्यापारवाचिषु 'भवति विक्लिद्यति' इत्यादिषु प्रयोज्यव्यापारजनकस्य, प्रयोजकव्यापारवाचिषु पच्यादिषु विक्लित्त्यनुकूलवादेः, आक्षेपेण भानात् यत्नभिन्नफलानुकूलव्यापाराणां तत्तद्धातोरर्थत्वे अखण्डोपाधेर्वा धातुवाच्यत्वम् । यत्नस्य तु उक्तरीत्या धात्वर्थत्वासम्भवात् पारिशेष्यात् प्रत्ययवाच्यत्वम् । तथापि न यत्नत्वेन वाच्यता, किंतु अनुकूलव्यापारवाचिकरोतिना विवरणात् 'रथो गच्छति' इत्यादिसाधारण्याय अनुकूलव्यापारत्वेन वाच्यता । करोतेश्च सकर्मकर्तृकर्मकत्वात् णिजन्तभवतिसमानार्थकत्वम् । तादृशकरोतिना विवरणेन अन्योपादानुकूलत्वेन यत्न एव शक्तिः, सैव भावनेति । केचित्तु स्पन्दमूर्तत्वजन्यताऽवच्छेदके समवेतत्व उक्तरीत्या अन्याय्यत्वात् यत्नार्थककृञा विवरणाच्च यत्नत्वमेव वाच्यताऽवच्छेदकम् । ननु एवं करोतेः भवतिसमानार्थकत्वे

फलसमानाधिकरणव्यापारवाचितया अकर्मकत्वापत्तिः । उत्थानिरूपकफलव्यधिकरणव्यापारवाचित्वेन ज्ञानादिवत् सकर्मकत्वे तु पततेरपि सकर्मकत्वापत्तिः । 'एधाञ्चक्रे' इत्यादिवत् अनुप्रयोगापत्तिश्च । न च 'कृञ् चानुप्रयुज्यते लिटि' (पा० ३।१।४०) इति कृधातोरेव अनुप्रयोगविधानात् न तदापत्तिः इति वाच्यम् । अनेन प्रत्याहारात्मकः- धातिव्यापारसामान्यवाचिधातुना अनुप्रयोगविधानात् । अत एव प्रत्याहारान्तर्गतपदे नानुप्रयोगः । इति चेन् । विवक्षाऽविवक्षाभ्यां धातोः सकर्मकाकर्मकत्वे पच्यास्योरपि 'पचति, मासमास्ते' इत्यादौ अतिप्रसङ्गात् नोक्तं सकर्मकत्वम् । किंतु अविवक्षाविरहविशिष्टकर्माकाङ्क्षधातुत्वम् । तेन अकर्मके विशेषणाभावेन अकर्मकत्वस्य, विशेष्याभावेन सकर्मकत्वस्य च अक्षतिः । आकाङ्क्षायाः शब्दैकनिरूप्यत्वात् एकस्य धातोः अर्थभेदेन सकर्मकत्वाकर्मकत्वम् पर्यायाणामपि तदन्यादृशत्वम् । एवं अविवक्षाविरहविशिष्टकर्मद्वयाकाङ्क्षधातुत्वं द्विकर्मकत्वं, इति द्विकर्मकस्यापि एककर्मत्वे नितायेत्यादौ न क्षतिः । अनुप्रयोगस्तु शब्दसामर्थ्यत्त्वव्यापारसामान्यवाचकत्वादिधातोरेव उपपादनीयः । एवं च पतनिर्याणादेऽपि कृञः सकर्मकत्वोपपत्तिः तदर्थयागादिविषयुपपत्तेः 'निष्क्रते पत्रः स्वयमेव' इत्यादिप्रयोगोपपत्तिः । अतो यत्नत्वेन वाच्यताऽवच्छेदक इत्याहुः । 'जानाति इच्छति यतते करोति भवति नश्यति' इत्यादौ आश्रयत्वप्रतियोगित्वादौ निरूढलक्षणा । न च आश्रयत्वं सत्ताः इति वाच्यम् । नामार्थधात्वर्थयोः अभेदातिरिक्तसम्बन्धेन अन्वयस्य अव्युत्पन्नत्वात् । अन्यथा 'तण्डुलः पचति, चैत्रः पच्यते तण्डुलः' इत्यादौ अन्वयबोधापत्तेः । धात्वर्थाऽवच्छेदक स्थानिकं स्थानिवृत्ति । तिवादिप्रत्ययात् अर्थप्रत्ययस्तु आदेशिस्मरणात् इति केचित् । अन्ये तु स्थानिभूत लादिक अजानतोऽपि अर्थप्रत्ययात्, तिबादीनां साधुत्वार्थं कल्पितत्वेन शक्तिकल्पनं मिथ्या वेत्र च तत्र शक्तिग्रहासंभवात्, आदेशवृत्तिवैचित्र्यादिकमेव तत्ताऽवच्छेदकम् । 'गच्छ' इत्यादौ शपादिविकरणवृत्ति तत् इत्याहुः ।

तत् सिद्धं व्यापारत्वेन यत्नत्वेन वा प्रत्ययवाच्यो यत्नो भावनेति । स च नित्यं सकर्मकः, नित्यसकर्मकेण कृञा णिजन्तभावितेन न विवरणात् । एवं च 'स्वास्थ्यकाम. स्वपेत्' इत्याद्यकर्मकधातूनामपि स्वास्थ्यादिभाव्यकत्वोपपत्तिः, तस्य भावनायां कर्मत्वेन अन्वयात् । तस्याश्च मुख्यविशेष्यत्वेनैव अन्वयः । न च 'चैत्रः पचति' इत्यादौ तस्याः प्रथमाऽन्तपदोपस्थाप्ये चैत्रादौ प्रकारतया अन्वयानुभवात् न मुख्यविशेष्यत्वं सम्भवति इति वाच्यम् । 'स्थाल्या पचति' 'काष्ठैः पचति' 'खादिरं वीर्यकामस्य यूपं कुर्यात्' इत्यादौ प्रथमाऽन्तपदाभावेऽपि शाब्दबोधानुभवेन भावनाप्रकारकशाब्दबोधे प्रथमाऽन्तपदोपस्थितेः हेतुत्वस्य वक्तुमशक्यत्वात् । न च तत्र प्रथमाऽन्तकर्तृवाचिपदाध्याहारः, प्रत्ययवाच्यसंख्यायाः समानपदोपस्थाप्यकर्मान्वयसम्भवेन अध्याहारापेक्षया लक्षणाया लघुत्वेन च आख्याते कर्तृलक्षणाया एव युक्तत्वात् । एतेन "आख्यातार्थविशेष्ये आख्याततात्पर्यविषयविशेष्ये वा प्रथमाऽन्तपदोपस्थाप्ये वा संख्याऽन्वयः, 'गगनेन स्थीयते' इत्यत्र प्रथमाऽन्तपदाभावात् संख्या अनन्वितैव" इत्यपास्तम् । 'काष्ठे पचति' इत्यत्रापि अनन्वयापत्तेः, 'पचति' इत्यत्र कृतिविशेष्यकबोधस्वीकारे अननुगमाच्च, आख्यातार्थविशेष्यत्वादिना हेतुत्वस्य आख्यातजन्योपस्थितेः हेतुतापेक्षया गुरुत्वाच्च । एवं च यत्र प्रथमाऽन्तपदोपस्थाप्यः अस्ति, तत्रापि आख्यातार्थकर्तरि अभेदेन तस्यान्वयः, न भावनाविशेष्यत्वम् । न च कारकाणां भावनायां प्रकारत्वेन अन्वयः, भावनायाश्च प्रथमाऽन्तपदोपस्थाप्ये, इत्यनेकमुख्यविशेष्यकत्वापत्तिः । एतेन 'कारकाणां धात्वर्थे, तस्य वर्तमानत्वादीनां च भावनायां, तस्याश्च प्रथमाऽन्तपदोपस्थाप्ये प्रकारत्वेन अन्वयः' इति परास्तम् । किंच 'पश्य मृगो धावति' इत्यत्र दर्शनभावनायां धावनभावनायाः एव कर्मत्वेन अन्वयः, मृगस्य प्रथमाऽन्तत्वेन (वेऽपि) तदनुपपत्तेः, अध्याहारे वाक्यभेदात् । सा च अन्यविशेषणीभूता न संभवति, इत्यतोऽपि मुख्यविशेष्यत्वम् । न च मृगनिष्ठत्वस्य अनुमेयत्वेन साक्षाद्भावनाकर्मत्वं न

न च भावनाद्वये द्विवचनापत्तिः एकवचनस्यैव साधुत्वात्। अतो युक्तः परम्परया भावनाऽन्वयः। 'पचनेन स्थीयते' इत्यादौ आख्यातस्थे आश्रयत्वे संख्याऽन्वयः, अनन्वितैव वा संख्या इत्यप्याहुः। कर्तृत्वकर्मत्वयोरपि भावनायामन्वयः। तत्र कर्माख्याते आख्यातलक्षितकर्तृत्वस्य सामानाधिकरण्येन, कर्माख्याते तद्वाच्यप्रकरणप्रयोज्यतया लक्षितफलस्य सामानाधिकरण्येन अन्वयः। तदाश्रिताश्रयाभेदेन प्रथमाऽर्थो पदस्थाऽन्वयः। एवं च 'तण्डुलाभिन्नाश्रितत्वकर्मत्व समानाधिकरणफलप्रयोजको व्यापारः' इति कर्माख्याते, कर्माख्याते 'देवदत्तनिष्ठकर्तृत्वसमानाधिकरणः पाकानुकूलो यत्नः' इति बोधः। कर्तृत्व च तृतीयार्थः। एवं 'ओदनः पच्यते स्वयमेव' इति कर्तृकर्माख्याते ओदननिष्ठयोः कर्तृत्वकर्मत्वयोर्विवक्षणात् 'ओदननिष्ठकर्मत्व समानाधिकरणफलप्रयोजकौदननिष्ठकर्तृत्वसमानाधिकरण – पाकानुकूलभावना' इति बोधः। तत्र कृतेर्बाधात् व्यापारे लक्षणा। न चैवं 'ओदनः स्वयं पचति' इति प्रयोगापत्तिः, 'कर्मवत् कर्मणा तुल्यक्रियः' (पा० ३।१।८७) इति यगादिविधानेन तादृशस्य असाधुत्वात्। अत एव तत्र चैत्रे न प्रथमा न तृतीया, किन्तु षष्ठी इति संप्रदायः। तस्मात् 'भावप्रधानमाख्यात' इति स्मृत्यैव सर्वकारककर्तृत्वादिनिरूपित प्राधान्यं भावनायाः इति सिद्धम्। किंच अनयैव स्मृत्या प्राधान्ये भावनाया बोधिते प्रधानस्य गुणाक्षेपकत्वनियमेन भावनाया एव कर्तृत्वकर्माद्याक्षेपकत्वं युक्तं, न वैपरीत्यम्। अनन्यलभ्यस्य शब्दार्थत्वाच्च नाक्षेपलभ्ये कर्त्रादौ शक्तिः, किन्तु आक्षेपकभूतायैव। अत एव यत्र नाक्षेपकत्वं, तत्र नामैव शक्तिः यथा संख्याऽऽदौ।

न चैवं पक्ता पचमानः पचः इत्यादिकृत्संज्ञकानामपि भावनावाचित्वं स्यात् इति वाच्यम्। नामार्थयोर्भेदान्वयानुपपत्तेः। अतस्तत्र 'कर्तरि कृत्' (पा० ३।४।६७) इत्यादानुशासनिकी आश्रये शक्तिः। न च आक्षेपेण तद्बोधो लक्षणया वा, शक्त्या च सिद्धि अप्रयोगे तात्पर्यज्ञानेन लक्षणाया असिद्धेः। अतस्तत्र नामार्थेन सत्त्वप्राधान्यबोधकस्मृत्या लिङ्गसंख्याऽन्वययोग्यस्य प्रधानभूतस्य कृत्याक्षेपकत्वबोधनम्। न च कृतो लक्षणा कर्तरि शक्तिः, लाघवस्यापि प्राधान्यविरोधित्वेन अप्रयोजकत्वात्। तत् सिद्धं कर्तृकर्मकृता कृतिबोधशक्तिरिति। भावकृता तु 'पाको यागः' इत्यादौ 'क्रियते क्रियते' इत्यादिकृतिवाचिपदाध्याहारेण बोधः। अन्यथा धात्वर्थमात्रप्रतीतेः तत्र कारकान्वयानुपपत्तेः। अतस्तत्र धात्वर्थमात्रे शक्तिः, कृतेस्तु आक्षेपः एवेति सिद्धम्। अतो धात्वर्थातिरिक्ता कृतिरूपा भावना आख्यातार्थः।

आश्रयस्तु आक्षेपलभ्यः। आक्षेपलभ्यत्वादेव वैयाकरणोक्त कर्तृकर्माद्यभिधानं अपास्तम्। 'लः कर्मणि च भावे चाकर्मकेभ्यः' (पा० ३।४।६९) इति स्मृतिरपि 'लः' इति षष्ठ्यन्तमाश्रित्य 'द्व्येकयोर्द्विवचनैकवचने' (पा० १।४।२२) 'बहुषु बहुवचनं' (पा० १।४।२१) इत्यनुशासनैकवाक्यतया लादेशतिबादीनां कर्तृकर्मगतैकत्वादिनिमित्तया एकवचनादिविधानपरा व्याख्येया। अनभिहिताधिकारस्मृतिरपि (पा० २।३।१) कर्मादिगतसंख्याऽनभिधाने द्वितीयातृतीयाऽऽदिविधानपरा। 'कर्तरि कृत्' (पा० ३।४।६७) इति स्मृतिस्तु नामार्थयोर्भेदान्वयानुपपत्तिभयेन न कृत्यभिधानपरा किन्तु कर्त्रभिधानपरैव। इति दिक्। मणि. पृ. १०३–११५.

० आख्यातविशेषाणां मन्त्रपाठेन विधिशक्तिः तिरोधीयते इति नायमेकान्तः। दृष्टाश्च मन्त्रगता अपि विधायकाः 'वसन्ताय कपिञ्जलानालभते' इत्यादयः। शा. २।१।६।३० पृ. ४३१. ० आख्यातशब्दाः ये शक्नुवन्ति गुणवचनसहिताः गुणं कर्म च विधातुं, शक्नुवन्तितरां ते केवलं गुणं विधातुम्। यो हि पाषाणान् भक्षयति, ईषत्कराः तस्य गुडसक्तवः इति। शा. १०।३।२।८. ० प्रकृतीनामपि अभिधायकाख्यातवचनेन ऐदमर्थ्यं निरूप्यते इति आख्यातशब्दाभिव्यक्तिचोदनाः विमर्थाः पुनः प्रकृतीरुपादातुं शक्नुवन्तीति। शा. ३।४।७।२२ पृ. ९०१. ० आख्यातशब्दस्य न व्यक्त्याकृतिवाचिता। ११।१।७।१६ पृ. २८०. ० आख्यातशब्दानां मन्त्रगतानां ब्राह्मणगतानां च येषां सन्दर्भेण विधिविनियोगगन्धोऽपि तेषामभिधायकत्वम्। ३।१।६।१२

धनाकाङ्क्षत्वं ‘ पच ’ इत्यादौ साकाङ्क्षत्वं , तथैव यततेः कर्मानाकाङ्क्षत्वं करोतेश्च कर्मसाकाङ्क्षत्वं अविरुद्धम् । पच्यादेश्च स्वरूपेण कर्मसाकाङ्क्षत्वेऽपि अविवक्षादशाया अकर्मकत्वात् अविवक्षाविरहेति । अत एव ‘ ओदनस्य पच्यते ’ इति भावेऽपि प्रयोगः । आसादिधातूना च स्वरूपेण अकर्मकत्वामपि मासादिकालयोगे कर्मसाकाङ्क्षत्वात् सकर्मकत्वात् ‘ चैत्रेण आस्यते मासः ’ इति प्रयोगोपपत्तिः । एवं एकस्यैव गमधातोः चैत्रनिष्ठव्यापारनाशितरत्वधर्मपुरस्कारेण कर्मसाकाङ्क्षत्वात् सकर्मकत्वं , पुष्पनिष्ठव्यापारवाचित्वेन कर्मानाकाङ्क्षत्वात् अकर्मकत्वं च द्रष्टव्यम् । अतो यत्नार्थकत्वेऽपि करोतेः सकर्मकत्वं सिध्यते , तेन विवियमाणाख्यातस्यापि यत्नार्थकत्वम् । एवं च ‘ रथो गच्छति जानाति इच्छति प्रयतते ’ इत्यादौ यत्र यत्नस्य बाधः, तत्र अनुकूलव्यापारस्य आश्रयत्वस्य वा लक्षणा इति द्रष्टव्यम् । ‘ नश्यति ’ इत्यादौ प्रतियोगित्वे लक्षणा ।

तद् सिद्धं भावमुख्यत्वाभ्युपगमेन सर्वत्र धात्वर्थोपरि‌रिणा भावना आख्यातार्थः इति । नव्यास्तु शक्ततावच्छेदकं करोतीति विवियमाणाख्यातत्वम् । अतश्च पचतीत्यादौ करोतिना विवरणाभावेन भावनाऽभावात् धात्वर्थे एव कारकान्वय , परम्परासम्बन्धेन कर्त्रन्वयश्च इति प्राहुः । वस्तुतस्तु लाघवात् आख्यातत्वमेव शक्ततावच्छेदकम् । भजतीत्यादौ आश्रयत्वे लक्षणा । एवं च कारकान्वये न प्रयत्नान्तरकल्पनाऽपि । शक्ततावच्छेदकं च ( आख्यातत्व ) न लत्वम् । यथाकथञ्चित् लत्वपरिचयेतरत्वादपि भावनोपस्थित्यापत्तेः । नापि आदेशोपस्थापितत्वस्य शानजादेरपि उपस्थापितत्वादपि शक्त्या भावनाबोधापत्तेः । नापि तिबाद्यादेशोपस्थापितत्वं , तथात्वे तिबादीनामनेकेषां प्रवेशात् शक्ततावच्छेदकाना अननुगमेन शक्यनेकत्वापत्ते । तत् वर तिबादिनैव प्रत्येकं शक्तिः । अत एव तिबादिना लकारानुपस्थितावपि शाब्दबोधः, अन्यथा अनेकेषु तिबादिषु शक्तता शक्तिग्रहणाणा वारणकल्पने गौरवात् । एतेन ‘ आख्यातत्वमेवैकं शक्ततावच्छेदकं , तच्च शक्यत्वसम्बन्धेन आख्यातपदवत्त्वम् । तद्वन्तः च तिबादिषु इति ते शक्ता. ’ इत्यपि अपास्तम् । तिबादिषु आख्यातपदवाच्यत्वाज्ञानेऽपि तिप्त्वेन पचतीत्यादौ शक्तेऽपि भावनाबोधात् । अतः सिद्धं आख्यातार्थो भावनेति । रहस्य. पृ. ४९–५२.

* आख्यातार्थः यत्र स्वविधानार्थमुपादीयते , तत्र विधेयस्य विशेषणं , यत्र परविधानार्थमुपादीयते यथा ‘ दध्ना जुहोति ’ इति दधिसम्बन्धविधानार्थं होम उपादेयो , तत्र द्वितीयस्य दर्शनम्भो नास्ति , वाक्यभेदप्रसङ्गात् । टुप्. ६।४।६।२३ पृ. १४४४. * आख्यातार्थस्य मुख्यविशेष्यत्वं इति व्युत्पत्तिः । रहस्य. पृ. २४. * आख्यातार्थे प्रधानभूते सङ्ख्या विशेषणं भवति , परार्थे पुनः विभज्य इति । उच्यते । प्रधानभूते आकृतिर्गुणो वा तत्सम्बन्धार्थमुच्यते , तत्रोभयविशेषणविशिष्टः एकस्मादाख्यातादवगम्यते । तद्विशिष्टं च कृत्वा कृती भवति । अन्यतरविशिष्टं कुर्वन् अकृत कुर्यात् । यत्र पुनः आकृतिलक्षिते द्रव्ये आख्यातार्थः कीर्त्यते , तत्र सर्वेष्वेव तज्जातीयेषु उक्तो भवति । न तत्र एकस्मिन् निर्वृत्ते कृती मन्येत , अपरस्मिन्नपि हि आकृतिलक्षिते तदुक्तमेव । तयोश्च , अप्रतिषिद्धं च क्रियते न त्रियेत । आख्यातार्थे पुनः प्रधाने न तस्य आकृतिलक्षितेन सम्बन्धः । तत्र यदाकृतिरूपेऽपि अनुपादीयमानेऽपि कृत्स्नमेव प्रधानम् । तदुण च प्रधानं भवति । न च किंचित् गुणं प्रतीयेतेति । तस्मात्तत्र विशेषणं युक्तम् । भा. ६।४।६।२३ पृ. १४४१–४२. * आख्यातार्थत्वेन कर्तृत्वस्य स्थापितत्वात् । रहस्य. पृ. १३७. * आख्यातार्थविषये कर्तृविवरण सर्वं द्रष्टव्यम् । के.

* आख्यातविषयो विभक्तयः पचति पचतः पचन्ति इत्यादयः । भा. २।१।३।४.

* आख्यातम्— ‘ इत्र येरि. ’ इत्यादि । भा. २।१।७।३२

* आख्यातविकारस्वरूप च ‘ तुभ्यं इ जुहु० ’ इति । भा. २।१।८।३३.

* आख्याविकारन्यायः । न च अर्थप्रकरणशब्दान्तरैः विमर्शः समानाधिकरण्यमस्ति । येन केन चित् वर्णसामान्यात् आख्याविकारन्यायेन गौणत्वेन वा

तद्विषयत्वं अध्यवसीयेत । शा. २।२।३।३ पृ. ४७६ । सु– विद्वद्वाक्ययोः प्रकृतयागानुवादित्वाभावे पौर्णमास्यमावास्याशब्दयोः तद्वाचकाख्योगिप्रकृतयागनामत्वानवगतेः, तयोर्वा लक्षणया प्रकृतयागप्रवृत्तावपि दर्शपूर्णमासशब्दयोः तात्पर्यावधारणहेतुसामानाधिकरण्याभावात्, पूर्णमासशब्दस्य किंचिद्वर्णसाम्यात् वाचकपौर्णमासीशब्दोपस्थापनेन, आख्याभूतपौर्णमासीशब्दविकारत्वाद्वा ततोऽनन्यत्वेन दर्शशब्दस्य जघन्यवृत्तिग्यसाम्यात् गौणशब्दोक्त्या विरुद्धलक्षणया अमावास्याशब्दैकार्थ्यकल्पनात् दर्शपूर्णमासशब्दस्य प्रकृतपौर्णमास्यमावास्याकाख्योगित्वातिविषयत्वाध्यवसानं न भवतीत्यर्थः । पृ. ७२५.

आख्यतापिटकन्यायः । यथा मूषकोऽमपिटकं भक्षणीयद्रव्याधारविशेषं पातयितुमेव शक्नोति, तदुद्धर्तुं सम्यक्संपादयितुं वा न प्रभुते इत्यर्थविषयेऽस्य प्रवृत्तिरिति । लाट्यी. ८०१.

* आगन्तवः अनुनिर्वाप्याः श्रुतिविशेषात् । एवं हि श्रूयते 'पशुपुरोडाशमनु निर्वपति' इति । शा. १२।१।२।३.

आगन्तुकानामन्ते निवेशः इति वा, आगन्तुन्यायः इति वा, आगन्तूनां न्यायः इति वा, आगन्तूनामन्ते निवेशः इति वा न्यायः । एतदर्थक एव 'अन्ते तु बादरायणः' इति न्यायः प्राग्गतः । एतन्न्यायप्रतिपादकमधिकरणं 'नारिष्ठन्यायः' इति भिन्दी द्रष्टव्यम् । फे.

* आगन्तुकानामन्ते निवेशः इति नारिष्ठाधिकरणप्रतिपाद्यः "अन्ते तु बादरायणः" इति सूत्रेण (५।२।१९) उक्तः न्यायः । फे. * अभिचयने सावित्रादीनां आगन्तुकानां दीक्षणीयादिनक्षत्रस्य अन्ते निवेशः इति प्राप्ते । भाट्ट. ५।२।११. * 'आगन्तुकानामन्ते निवेशः' इति न्यायेन अदेह्सूत्रे गुणदोषर वृद्धिवदोपश्लिष्या तत्साहचर्येण सूत्रस्वरूपपरत्वं तस्य' इत्यादि विवरणे स्पष्टमित्यलं बहुना । साहस्री. ४७५. * यत्र फलद्वारेन स्मृतौ पदार्थविधिः, न तु स्मार्तविशेषाम्नानं, तत्रापि आगन्तुकानामन्ते निवेशः इति न्यायेन अन्ते एवानुष्ठानम् । कौ. १।३।३।७ पृ.३५. * आगन्तुकानामन्ते निवेशः इति न्यायाच्च असाधारणस्थानहीनानां वरुणादीनां तदिदानन्तर्यं युक्तम् । न्यायनिर्णयः ४।३।३ प्रभू. * समाजेषु पूर्वे निविष्टेषु केषु चित्, अन्ये अवकाशाभावात् न निविशन्ते, तत्र आगन्तुन्यायः प्रवर्तते । रत्न. १०।५।१. * यत्र प्राथमिकपदार्थनिवेशो निश्चितः, तत्र आगन्तुन्यायात् अन्त्यशेषः । सोम. १०।५।१. * समाजेषु समाजेषु च ये आगन्तवो भवन्ति, ते पूर्वोपविष्टान् अनुपमृद्यैव निविशन्ते । शा. १०।५।१।१, * समाजेषु समाजेषु च आगन्तुर्जनो वास्तव्याननुपमृद्यैव निविशते । १०।५।१।४, वास्तव्यैराक्रान्ते देशे आगन्तुजनः असंभवात् अन्ते निविशते । १०।५।१।४. लोकपृणायाः पूरणार्थत्वेन मध्यमैकचितिविषयाणां इष्टकानां आगन्तूनां न्यायेन प्राप्तो निवेशो बाधितुं न शक्यते इति पूर्वः पक्षः । रत्न. ५।३।८. * आगन्तूनामन्ते निवेशः । दर्शपूर्णमासयोः 'एकविंशतिमनुब्रूयात् प्रतिष्ठाकामस्य' इत्यत्र सामिधेनीषु अधिकानां पञ्चानामृचां अन्ते निवेशः । वि. ५।३।१ * आगन्तूनां स्तोमानां रथंतरमाने पर्यासोत्तरकालत्वात् । शा.५।३।४।७–१२, माध्यंदिनार्भवपवमानयोस्तु साम्नां गायत्र्यादिष्वेव निवेशः । ५।१।५।१३–१४. * पूरणप्रत्ययेन स्तोकस्याहारस्य ऐन्द्रिकत्वेऽपि आपौरुषेये वेदे तदयोगात् आगन्तूनामन्ते निवेशः इति न्यायेन अभिधारणोत्तर पश्चार्धादवदेय आमवन्यानां पठ्यन्ते इति पूर्वपक्षः । संकर्ष. २।२।८.

* आगमः साम्नान्तराणां विधृदस्तोमके मतो श्रुतसंख्यासंपत्तये । शा. १०।५।६।१५–२५, * आगमेन संख्यापूरणं प्रथमोत्तमे त्रिरभ्यस्य अवशिष्टानां सामिधेनीविवृद्धौ । १०।५।८।२७–३३. * आगमेन संख्यापूरणे समाम्नायपाठक्रमेणैव ऋचः आगमयितव्याः, एकत्रिंशे त्रिणवे त्रयस्त्रिंशे चाविशेषे । ५।१।६।१३. * आगमस्य आनन्त्यात् उपदेशः अर्थवान् । बृहती. पृ २७०. * आगमस्य न्यायविषये तात्पर्याभावात्, तद्विषयत्वाभावेऽपि न्यायविरुद्धार्थाभिधायित्वात् तदाधकत्वं भविष्यति (इति चेन्न) तात्पर्यं विना आगमस्य प्रामा-

ष्वाभावात् बाधकत्वायोगात् । सु पृ. १४१८. * तत्र नाम आगमविरोधो युक्तः उद्भावयितुं, यत्र न्यायागमौ समानविषयौ भवतः । वा. ५।४।४।१३ पृ. ९२२, * आगमविरोधे न्यायः बाधकक्षमो न भवति । ३।४।४।१३ पृ. ९३८.

* आगामिसंनिहितस्यापि अतीतसंनिहितस्येव संनिहितत्वाविशेषात् एतच्छब्देन परामर्शः संभवति । यथा 'अथैष ज्योतिः' 'अथैष विश्वज्योतिः' 'अथैष सर्वज्योतिः' इति । वि. २।२।८.

* आग्रयणं ( प्रकरण ) मत्र, अप्रवृत्तस्य विश्वजिद्विधिः । भा. ६।४।११।३२-३३.

* आग्नावैष्णव एकादशकपालः प्रथमे त्रिसंयुक्ते प्रथमं हविः गायत्रे । भा. ११।४।१।२, * आग्नावैष्णवमष्टाकपालं निर्वपेदध्वरकल्पाय प्रातश्च माध्यंदिने च तृतीयसवने च प्रथम हविः । ११।३।८।१९ * 'आग्नावैष्णवमेकादशकपालं' इति अध्वरकल्पाया आग्नावैष्णवस्य अग्नीषोमीयपुरोडाशविकारत्वम् । भाट्ट. ८।१।१. * 'आग्नावैष्णवमेकादशकपालं निर्वपेत् सरस्वतीमाज्येन यजेत' इति श्रुतेः मुख्यस्य आग्नावैष्णवस्य विकल्पेन आग्नीषोमीयैन्द्राग्नविकारत्वात् पौर्णमास्यमावास्यावत्त्व प्राप्तेनैव नैराकाङ्क्ष्यात् पाक्षिकत्वस्य सारस्वतस्य उपांशुयाजविकारत्वहेतुकपौर्णमासतन्त्रनियमः ( म ) प्रवृत्तिः द्वादशाधिकरणे वक्ष्यते । सु. पृ. ११०१ * 'आग्नावैष्णवमेकादशकपालं निर्वपेत् सरस्वतीमाज्यस्य यजेत' इति । तत्र आग्नावैष्णवः ऐन्द्राग्नस्य विकृतिः । ( पूर्वपक्षरीत्या उक्तमिदम् )। वि. १२।२।८. * आग्नावैष्णवस्य प्रथमं निर्वापः ततो बार्हस्पत्यचरोर्निर्वापः, वैकृतमुख्यक्रमानुरोधात्, अध्वरकल्पायाम् । भाट्ट. ५।१।१०. * अध्वरकल्पायामाग्नावैष्णवस्य ऐन्द्राग्नविकारत्वे 'अग्निः प्रत्नेन मन्मना० सोम गीर्भिष्ट्वा वयं०' इति वृधन्वतौ आज्यभागयोरनुवाक्ये । अग्नीषोमविकारत्वे तु वार्त्रघ्नौ 'अग्निर्वृत्राणि० त्वं सोमासि०' इति । के.

* आग्नावैष्णवद्वादशकपालः अध्वरकल्पायां दार्शिकैन्द्राग्नविकारः । बाल. पृ. १४१.

* आग्नावैष्णवन्यायः । प्रधानेषु समसंख्येषु धर्मविरोधे प्रथमपठितस्यैव धर्मस्यानुग्रहः ॥

मुख्यं वा, पूर्वचोदनाल्लोकवत् । १२।२।८।२३॥

भाष्यं— यत्र तुल्यसंख्यानां प्रधानानां धर्मविप्रतिषेधः, तत्र मुख्यधर्मः कर्तव्यः । यथा 'आग्नावैष्णवमेकादशकपालं निर्वपेदध्वरकल्पे, सरस्वतीमाज्यस्य यजते' इति । तत्र मुख्यस्य आग्नावैष्णवस्य कल्पो भवति । कुतः ? पूर्वचोदनात् पूर्वचोदितत्वात् । पाठक्रमेण पूर्वमाग्नावैष्णवः कर्तव्यः । तस्य धर्मा अप्रयत्नीकाः प्राप्नुवन्ति । उत्तरस्य तु पूर्वेण विरुद्धाः । तदुत्तरकाले हि तस्य प्राप्तिः, तद्धर्माणां च । पूर्वस्य कृते कल्पे उत्तरस्य तेनैव कृतार्थत्वात् स्वकल्पो निवर्तते । एतदधिकरणं केचित् मन्यन्ते । तेषां पक्षद्वयेऽपि मुख्यधर्मानुग्रह एव ।

टुप्— मुख्यं वा पूर्वचोदनात् लोकवत् इति समसंख्ययोः ( प्रधानयोः ) धर्माणां ( विरोधे मुख्यस्य स्वाधर्म्यं अनेन सूत्रेणोच्यते । अल्पभूयोविरोधे भूयसां साधर्म्यं, अल्पे तु तद्धर्मजनितमुपकारं प्रसङ्गादुपजीवन्ति, समसंख्याविरोधे तु मुख्यस्यैव साधर्म्यं इतरे तु प्रसङ्गोपजीविनः, इति यस्मादेवं न्याययोर्विषयभेदः— ) तस्मात् भिन्ने एवैते अधिकरणे, न तु वाक्यसंदर्भभञ्जनमात्रेण ऐकाधिकरण्यं वृत्तिकारान्तरकृतं सम्यक् ।

तथा चान्यार्थदर्शनम् । २४ ॥

भाष्यं— अन्यार्थोऽपि पूर्वे प्राप्तस्य बलीयस्त्वं दर्शयति । अध्वरस्येव पूर्वमथाग्नेयीध्यते रूपाऽपि होत्र धर्मं यदाग्निकर्मेति । ( विकल्परीत्या तु— अध्वरस्य पूर्वमथाग्नेः उपावि होतत् कर्म यदग्निकर्म इति— इति पाठ. ) इदं चापि, यथा वै पूर्वाक्षाविणो जघन्या गाविणं नोन्नीयन्ते ( नेनीयन्ते इति विकल्पकारीये ) गावद्याग्नन्तीत्येवमेवैतत् इति । ( अत्र 'अध्वरस्येव' इत्यारभ्य 'त्रिकर्म' इत्यन्तं श्रुतिवाक्यम् । 'इति । इदं चापि' इति भाष्यपदानि । 'यथा' इत्यारभ्य 'मेवैतत्' इत्यन्तं श्रुतिवाक्यं, 'इति' इति भाष्यपदम् । अत्र ५।२।९.२० सूत्रभाष्ये 'अध्वरस्य पूर्वमथाग्नेरेव यत् कर्म, यदग्निकर्म' इति मुद्रयित्वा 'पश्चात् समाम्नातस्य पश्चात् प्रयोगं

दर्शयति' इति भाष्यं मुद्रितम्। १०।३।४।२९ सूत्रभाष्ये तु 'अध्वरस्य पूर्वमथाग्नेः, उपांशु होतत् कर्म यदग्निकर्म' इति वाक्यं, भाष्यं च 'पूर्वमध्वरस्य, अथाग्नेः इति व्यपदेशः समुच्चये अवकल्पते नावति विशेषे' इति मुद्रितम्। सर्वथाऽपि एतच्छ्रुतिवाक्यपाठः समीचीनो दुर्लभः। घे. )

शा— यत्र समसंख्याना धर्मप्रतिषेधः, तत्र कस्य स्वधर्मलाभः, कस्य वा अन्यधर्मोपजीवनं इति चिन्तायां अनियमप्राप्तौ मुख्यस्य स्वाधर्म्यमित्याह। तस्य हि धर्माः असञ्जातविरोधावस्थायां निर्विघ्नमवगम्यते, जघन्यस्य तु तद्विरुद्धत्वान्न धर्मा ग्रहीतुं शक्यते। न चात्र अवगतस्य त्यागे, अनवगतग्रहे च किंचित् कारणं भूयस्त्वं प्रधानधर्मत्वं वाऽस्ति। तस्मादत्र मुख्यस्य स्वाधर्म्यं इति। किमिहोदाहरणं? अध्वरकल्पायां श्रूयते 'आग्नावैष्णवं द्वादशकपालं निर्वपेदपराह्णे, सरस्वतीमाज्यस्य यजेत' इति। तत्र आग्नावैष्णवस्य औपभृतश्वकल्पादिदैवत्याद्— द्वादशकपालत्वात् ऐन्द्राग्नविकारत्वात् दार्शिकं तन्त्रं, आज्यस्य तु उपांशुयाजविकृतित्वात् पूर्णमासधर्मापेक्षा। तत्र पूर्ववत् आज्यभागमन्त्रयोर्विरोधे मुख्यधर्मत्वात् वृत्रघ्नवत्यौ ( अग्निः प्रत्नेन मन्मना॰ सोम गीर्भिष्ट्वा॰ ) ग्रहीतव्ये। ऐकाधिकरण्यं तु एकीयमतत्वेन उपन्यासात् ( 'ऐकाधिकरण्यं तु एके मन्यन्ते' इति भाष्ये ) अन्याय्यत्वाच्च परमतमेव। नहि अल्पवैगुण्ये सम्भवति भूयोवैगुण्यं प्रयोगवचनः क्षमते, अवगतमपि कारणान्तरवशात् बाध्यते एव। यथा उपरितने अधिकरणे मुख्यमपि प्रोक्षणीयाधर्मत्वं हित्वा प्रधानधर्मत्वबलेन सुचां काञ्चिः पशानुग्रहीष्यते, तथा भूयस्त्वेनापि। तस्मात् द्वे एवाधिकरणे ( तिमितिविद्धमार्गाणा॰ इति, मुख्य ना॰ इति च )।

सोम— पूर्ववदिह भूयस्त्वस्य नियामकस्याभावात् अनियमः इत्युपितेः ( प्रत्युदाहरण ) संगतिः। सूत्रार्थस्तु— मुख्यं अनुग्राह्यधर्मकं स्यात् तस्य पूर्वचोदितत्वेन तद्धर्मस्य प्रथमावगतत्वात्। लोकवत् प्रथमावगतस्यैव लोके परिग्राह्यत्वादिति।

वि— 'आग्नावैष्णवसारस्वतयोरिच्छाऽथ मुख्यगम्।, आद्यो नियमसाम्याद्वा, दन्त्यः प्राथम्यतो भवेत्॥'

भाट्ट— यत्र तु समसंख्याकयोर्विरोधः, यथा अध्वरकल्पायां 'आग्नावैष्णवं द्वादशकपालं सरस्वत्याज्यभागाऽपराह्णे' इति। अत्र हि द्वादशकपालत्वात् आद्यः ऐन्द्राग्नविकारः, तत्रापि वैकल्पिकद्वादशकपालत्वात्। सरस्वती तु पूर्ववत्। तत्राज्यभागाभिमर्शनमन्त्रयोरनियमः, परस्य वा प्राबल्यम्। इति प्राप्ते, सत्यपि भिन्नवाक्यत्वे उभयत्र वा अतिदेशकल्पनाऽवश्यंभावे, अन्यतः उपकारलाभनिमित्तस्य प्रसङ्गस्य आद्ये असम्भवेन अन्त्ये एव पुरःस्फूर्तिकत्वात् आद्ये एव धर्मानुग्रहात् तन्नित्वं, अन्त्ये च तद्बाधात् प्रसङ्गः। श्रुचिकारान्तरैः भूयस्त्वं न मुख्यत्वस्यापवादकं किंतु पशुकामेष्ट्यामेव भूयस्त्वेन पूर्वपक्षमभिधाय मुख्यत्वेन सिद्धान्तयित्वा ऐकाधिकरण्येन सूत्रद्वय व्याख्येयमित्युक्तं, तत् त्वेकं प्रथममल्पपुरुषापकृष्टस्यापि दुर्गस्य पश्चादागतैरपि बहुभिर्दोषदर्शनादुपेक्षितम्।

मण्डन— 'धर्मेतु मुख्यधर्मः स्यात्।'

शंकर— 'मुख्य साधर्मकं साम्ये।'

* आग्नावैष्णवन्यायेन इष्टेः प्रथमपठितत्वात् दीक्षणीयेष्टिः पर्वणि अनुष्ठेया, तदनुसारेण दिनान्तरे सुत्याया उत्कर्षः इति पूर्वपक्षः। वि. १२।२।९. * आग्नावैष्णवादीनां राजसूयगतानां पृथग्दक्षिणायुक्तानां अङ्गानि न तन्त्रम्। भा. ११।४।१।१-३.

* आग्निमारुतं शस्त्रं सोमाङ्गम्। एकादश अनुयाजाश्च सवनीयपश्वङ्गम्। नानयोरङ्गाङ्गिभावः। तस्मात् 'आग्निमारुतादूर्ध्वमनुयाजैश्चरन्ति' इति कालोपदेशार्थः संयोगः। वि. ५।३।१५. * आग्निमारुतादूर्ध्वे अनुयाजादिकाण्डमुत्कृष्यते, अग्नीषोमीये पशौ च प्रयाजान्तकाण्डमपकृष्यते। भा. ५।१।१२।२३-२४.

इ॰ आग्निमारुतादूर्ध्वं अनुयाजोत्कर्षेण उत्कृष्यमाणे सूक्तवाके सवनीयपुरोडाशदेवतापदानामपि उत्कर्षः॥

उत्कर्षे सूक्तवाकस्य न सवनीयदेवतानामुत्कर्षः, पश्वनङ्गत्वाद् यथा निष्कर्षेऽनन्वयः । ११।३।१६। ५५ ॥

भाष्यं — अनुयाजा उत्कृष्यमाणाः सूक्तवाकमप्युत्कर्षन्ति । तत्र सवनीयानां पुरोडाशानां देवताः संकीर्त्यन्ते ‘ भूरग्निरिन्द्राय हरिवते धानाः, पूषण्वते करम्भं ’ इत्यारभ्य । तासामुत्कर्षः, नेति संदेहः । किं प्राप्तम् ? उत्कर्षे सूक्तवाकस्य, न सवनीयदेवतानामुत्कर्षः । कुतः ? पश्वनङ्गत्वात् । अनुयाजाः पशोरङ्गमुत्कृष्यमाणाः पश्वङ्गमेवोत्कर्षमर्हन्ति, न सोमाङ्गम् । सोमाङ्गं च सवनीयदेवताः । तस्मात्तासामनुत्कर्षः । यथा निष्कर्षे अनन्वयः । यथा पौर्णमास्यां सूक्तवाकस्य प्रयोगे पूर्णमासीदेवताना निष्कर्षे अमावास्यादेवतानामनन्वयः, इतरेण चेतरासाम् । तत् कस्य हेतोः, इतरेतरस्यानङ्गत्वात् । तद्वदिहापि अनुत्कर्षः ।

टुप् — सवनीयानां या देवताः, ताः सूक्तवाकोत्कर्षेऽपि नोत्कृष्यन्ते । पश्वनङ्गत्वात् सवनीयानाम् । यथा पौर्णमास्यां प्रयुज्यमानः सूक्तवाकः अमावास्यादेवता नोत्कर्षति, एवमिहापि ।

वाक्यसंयोगाद्वोत्कर्षः, समानतन्त्रत्वादर्थलोपादनन्वयः । ५६ ॥

भाष्यं — अथवोत्कर्ष एव स्यात् । कुतः ? वाक्यसंयोगात् । सूक्तवाकस्य एकदेशभूतानि सौमिकदेवतासंकीर्तनानि, ‘भूरग्निरिन्द्राय हरिवते धानाः, पूषण्वते करम्भं, सरस्वतीवते परिवाप भारतीवते यजमान ’ इति संवध्यते । तथा, ‘ इन्द्राय हरिवते धानाभिः, पूषण्वते करम्भेण, सरस्वतीवते परिवापेण सूयवसा अत्र देवो वनस्पतिरभवत् ’ इति संवध्यते । तान्येतानि सूक्तवाकस्य मध्ये उच्यमानानि अर्थवन्ति । निकृष्टानि चेतराणि अनर्थकानि भवन्ति । न च सवनीयानां सूक्तवाकोऽस्ति, यत्रैतान्युत्कर्षेरन् । यावुक्त एव सूक्तवाकस्तेषां प्रसङ्गसिद्धः । अतस्तत्र एतद्देवतानां संकीर्तनं युक्तम् । स चोत्कृष्यते । तस्मात्तासामप्युत्कर्षः । अर्थेनैवमनुग्रहीष्यते ।

यत्तु ‘ यथा निष्कर्षेऽनन्वय. ’ इति, समानतन्त्रत्वादर्थलोपादनन्वयः । समानतन्त्रौ दर्शपूर्णमासौ । तयोः साधारणं सूक्तवाकाम्नानम् । तद्यथार्थं निविशते । अर्थलुप्तं च अमावास्यादेवताना पौर्णमास्यां संकीर्तनं, इतरस्यां चेतरत् । यत्कारणं, या इह देवतास्ताः संकीर्तनेन प्रत्यवेक्ष्यन्ते, इयमपीष्टा न काचिदन्तरितेति । तस्मात्, यथा निष्कर्षेऽनन्वय इत्यदृष्टान्तः ।

टुप् — प्रस्तारस्तावत् प्राकृतिकः एषाम् ( सवनीयानाम् ) । यदर्थश्च प्रस्तरः, तदर्थमेव ( तत्संस्काररूपं ) प्रहरणम् । प्रहरणाङ्गं ( च ) सूक्तवाकः । तस्मात् सूक्तवाकोऽपि परार्थः ( पश्वर्थः ) । सूक्तवाकमध्ये ( च ) सवनीयदेवतापाठात् तेन सह एकवाक्यता ( तासामवगम्यते ) । अपकर्षे ( च ) एकवाक्यता बाध्येत । अपिच अपकृष्टानि साकाङ्क्षत्वादनर्थकानि भवेयुः । न च तत्पदाना ( अग्निमद्य होतारमवृणीत इत्यादीना ) अपकर्षः ( लभ्यते ), येन निराकाङ्क्षीभवेयुः, परार्थत्वात् सूक्तवाकस्य । पौर्णमास्याममावास्यायां च तन्त्रेण ( साधारण्येन ) सूक्तवाकः ( विनियुक्तः, प्रकरणाविशेषात् ) तत्रापकर्षो युक्तः । [redacted] तु उत्कर्षे सूक्तवाकस्य ( तत्पदानामपि उत्कर्षात् ) उत्कृष्टा एव सवनीयानां देवता प्रकाशयिष्यन्ते ।

श्री — पूर्वं प्राजापत्यप्रचारस्य उत्कर्षे अभिहिते प्रसङ्गात् सवनीयपुरोडाशदेवतापदानामपि उत्कर्षः प्रतिपाद्यते इति भेदस्य ( सङ्गतिः ) । १९.

सोम — सूत्रे ‘ यथा निष्कर्षे अनन्वयः ’ इत्यस्य ‘ यथा पौर्णमास्यमावास्ययोः तत्तद्देवतापदानां निष्कर्षे सति इतरदेवतापदानामनन्वयः तद्वत् ’ इत्यर्थः । १८.

वि — ‘ सवनीयपुरोडाशे देवोत्कर्षो न विद्यते । अस्ति वा, पश्वनङ्गत्वात्, न्याय्यत्वतोऽस्ति नः ॥ ’ तस्मादुत्कर्षोऽस्ति ।

भाट्ट — सवनीये [redacted]ो प्राकृतस्य सूक्तवाकस्य विकृतः पाठः समाम्नातः । स चानुयाजोत्कर्षात् आग्निमारुतादूर्ध्वमुत्कृष्यते इति स्थितम् । तत्र च सवनीयपुरोडाशदेवता ‘ भूरग्निरिन्द्राय हरिवते धानाः ’ इत्यादिना संकीर्त्यन्ते, हरिवदादिपदैश्च तत्तद्देवता इन्द्र एव लक्षणया

प्रकाश्यते । यद्यपि आपस्तम्बानुक्तरीत्या निर्वापे हविरादीनामप्युद्देशः प्रतीयते, तथापि त्यागवेलाया इन्द्रोद्देशस्यैव वाचनिकत्वाल्लक्षणया सूक्तवाके तत्प्रतिपादनं न्याय्यम् । पाशुक तन्त्र मसनीयेषु पुरोडाशेषु प्रगच्यते इति वक्ष्यते । तत्रोत्कृष्यमाणे सूक्तवाके पुरोडाशदेवतापदानामप्युत्कर्षो, न वेति चिन्तायां, पुरोडाशदेवतापदानां पशुनद्भावया पाशुकानूयाजैर्बन्धकमत्वाभावेन दाक्षिणाग्निकहोमवदनुत्कर्षात् तानि तावत् सवनीयपुरोडाशेडाभक्षणोत्तरकाले पठनीयानि । अतश्च तदेकवाक्यतापन्नानां तन्त्रपदानामपि तद्गुणत्वात् तत्र पाठावश्यकता । ततश्च तेषां पशुदेवतापद प्रत्यपि गुणत्वादावृत्तिः इति प्राप्ते, तन्त्रपदापेक्षितत्वादेषां न तावत् केवलानां प्रयोगाशङ्का । तदनुरोधेन तन्त्रपदावृत्तिकल्पना तु पुरोडाशनिरपेक्षतन्त्रपदानां पशुप्रयुक्तानामेवोपकारलाभेन प्रयोजकशक्तिकल्पनागौरवापत्तेरयुक्तैव । नहि प्रधानभूतपुरोडाशदेवतापदानां अनूयाजोत्तरकाल प्रयोगे किञ्चिद्वैगुण्यम् । इडाभक्षणोत्तरकालस्यच प्रकृतिदृष्टस्य इहाप्यव्याघातात् । अव्यवहितत्वानत्वर्थस्य च प्रकृतौ अप्रयस्तत्वात् । प्रधानप्रत्यासत्तिरप्यभ्यासाभानाऽपि प्रयोजकशक्तिकल्पनागौरवभिया नैव दुष्यति । अतस्तेषामप्युत्कर्षः । १५.

मण्डन— ' उत्कृष्येरन् देवताः सूक्तवाके । '

शंकर— ' सूक्तवाकेन्द्र उत्कर्षः । ' इन्द्रे उत्कृषिः उत्कर्षः ।

* आग्निमारुतादूर्ध्वं सवनीयपुरोडाशीयपिष्टलेपफलीकरणहोमयो. पशुधर्मानुयाजैः सह नोत्कर्षः । वि. ५।१।१५.

* आग्निवारुण्या इष्टेः क्रमे अतीते सोमारौद्राणामनागते मनोर्ऋचः, ताः सामिधेनीषु धाय्या इत्युच्यन्ते । यथा ' पृथुपाजाः ' ' स समिधो ' इति द्वे धाय्ये कल्प्येते । भा. ३।२।७।२०.

* आग्नीध्र ( ऋत्विक् ) अग्नि ' उरुयाचाय नमाभाय ' इति पुनरभ्युत्तीने द्वितीये होमे यजति । भा. ३।२। १२।३०, * आग्नीध्रः प्रैषार्थः, आध्वर्यव. प्रैषः । ३।८।१२।२४, * आग्नीध्रः समानत्वादुत्तमदेशस्य ( वरुणप्रघासेषु उत्तरवेदिदेशेऽपि ) तत्रान्वित एव प्रत्याश्रावणेन उभौ कर्तारौ ( अध्वर्यु प्रतिप्रस्थातार च ) अनुगृह्णाति । अतोऽसौ न भिद्यते । ११।२।१०।४५, * आग्नीध्रं ( मण्डपं ) आग्नेय्या उपतिष्ठते प्रकृतया, न तु दाशतयीस्थया, ज्योतिष्टोमे । ३।२।८।२१–२४. * आग्नीध्रात् ( अग्नेः ) धिष्ण्यान् विहरन्ति ( सोमे ) । संकर्ष. ३।२।१५. * आग्नीध्रमण्डपसंमर्शनं हिरण्यकेशिन. ' अग्न नो अग्निः ' इत्यनया ऋचा कुर्वन्ति, बौधायनाश्च ' अग्निर्मूर्धा ' इत्यनया । मीन्या. * आग्नीध्रमण्डपोपस्थानं प्रकृतया ' अग्न आ याहि वीतये ' इत्याग्नेय्या ऋचैव कर्तव्यम् । न दाशतयीस्थया कया चित् । वि. ३।२।८.

ॾ आग्नीध्रशालान्यायः । ( तात्स्थ्यात् ताच्छब्द्यम् ) ननु आग्नीध्रशालान्यायेन शालास्थितऋत्विगादीनामपि आग्नीध्रशब्दवत् प्रधानेऽपि आत्मशब्दप्रयोगदर्शनात् । श्रीकर. २।१।७ ब्रसू.

* आग्नीध्रीयः नाम अग्निर्ज्योतिष्टोमे । स च आग्नीध्रीये मण्डपे भवति । के. * आग्नीध्रीये (मण्डपे) प्राचीनवंशगतो धिष्ण्यैर्वर्जनहोमवदूर्ध्वं प्रणेतव्यः । वि. ५।१।१४. * आग्नीध्रीयमप्ययनं औत्तरवेदिकाग्निप्रणयनोत्तरम् । ( सोमे ) । संकर्ष. ३।२।१४, * आग्नीध्रीयाग्निः वसतवन्वादिहोमाधिकरणम् । ३।२।१४, * आग्नीध्रीयाग्नेः अपि आहवनीयैकदेशत्वमेव । ३।२।१४, * आग्नीध्रीयाग्नेः शालामुखीयादेव प्रणयनं औत्तरवेदिकात् । ३।२।१४.

* आग्नेयः अग्निष्टोमः । भा. ३।६।७।१८. * आग्नेयः इति यो निरपेक्षाग्निदेवत्यः सोऽभिधीयते । न च द्विदेवत्ये निरपेक्षोऽग्निर्देवता । तेनाथ तद्धितो नाग्नीषोमाविगताग्निशब्दादुत्पद्यते, इति न तदर्थस्य देवतात्वमाह । यत्र तु असौ निरपेक्षो देवता, स शक्य. आग्नेय इति वक्तुम् । वा. ३।१।१५।२७. * ' आग्नेयः कृष्णग्रीवः ' ऐकादशिनेषु प्रथमः पशुः । वि. ८।१।७, * ' आग्नेयः कृष्णग्रीवः, सारस्वती मेषी, बभ्रुः सौम्यः, पौष्णः श्यामः ' इत्याद्यैकादशिन्यां देवतानामनेकत्वात् ' मेषपतिभ्यो मेषं ' इत्येकवचनान्तमन्त्रस्य ऊहः । ९।३।१४. * आग्नेय. पशुः अग्निष्टोमे आलभ्य, सवनीयः । भा. ३।६।७।१८, * आग्नेयः पुरोडाशः

प्रकृताः परित्यज्येरन् । न च भाष्यकारेण त्रयः पक्षाः प्रदर्शिताः । किं तर्हि ? अविशेषपक्ष एव आदौ अपि शब्दरहितेन अप्रकृतशब्देन परिगृहीतः, येन अप्रकृता एवेति भ्रान्तिर्भवति । यत्तु तत्र प्रमाणं, तत् अविशेषपक्षमेव साधयति । तथा च परस्तात् विवृतं 'अप्रकृतेऽपि प्रत्ययो भवति,' 'प्रकृतमपि उपाददीरन्' इति च ( अत्र प्रथमं वाक्यं, 'दाशतय्यामपि मन्त्रव्यक्तौ भवति प्रत्ययः' इत्यस्य भाष्यस्य तात्पर्यम् । द्वितीयवाक्यं तु यथाश्रुतमेव भाष्यम् ) । यदि तु अनर्थं तृतीयोऽपि पक्षः समर्थनीयः, तत एतावती थोनिविशेषपपत्तिः, प्रकृतस्य कार्यान्तरोपयोगेन यातयामत्वादग्रहणम् । अथवा सामान्यविधानमिदम् । तानि तु आग्नेयीविशेषविधानानि । परिहृत्य च विशेषविधिविषयं सामान्यशास्त्राणि प्रवर्तन्ते । यदि तु तत्रापि विशेषग्रहणं न स्यात्, ततस्तदपि अनेनैव तुल्यं इत्युदाहरणत्वेन एधेत । तस्मादप्रकृता एव ग्रहीतव्याः । अथवा आग्नेयादिशब्दैः अविशेषप्रत्ययो जातः । न चान्यत् प्रकृतग्रहणक्षमं विशेषणं पश्यामः । प्रकरणस्य ग्राहकत्वेन अविशेषकत्वात् । सन्निधिलक्षणलौकिकप्रकरणस्य च यौगिकश्रुतिजनिताविशेषप्रत्ययेन बाध्यमानत्वात् । तस्मात् सर्वप्रत्ययः ।

'उपदिष्टोपदेशो हि न न्याय्यः' इति ( भाष्ये ) इह उपदिष्टस्यैव इत्यर्थः । 'एवंजातीयकस्य' इति विशेषणरहितस्येत्यर्थः । 'कथंजातीयकस्य' इति, अग्नि विनाऽपि विशेषणेन विशेषग्रहणप्रमाणं प्रकरणं इति सिद्धान्तवादी मन्यते । परः पुनः स्वाभिप्रायेणैव सिद्धान्तवाद्यभिमतां विशेषग्रहणोपपत्तिं ( वस्तुतः ) अनभिमतामेव परिकल्प्य 'कथं ? यदि तत् लिङ्गं शब्दोपलक्षणत्वेन' इत्याह । न चात्र उभयोः यक्ष्यमाणदेवताभिधानाभिप्रायेण लिङ्गपदं युक्तम् । किं तर्हि ? आख्यातप्रत्ययसामर्थ्यं तद्विहितत्वं वा, तदुपलीयमानौ तस्मिन् विप्यमाकमण्डोरन्यासात् । 'नासौ सामान्येन लिङ्गेन' इति अग्निना चिह्नेन, सर्वासु प्रतीयमानासु स्फुटेन विशेषणेन विना न शक्यो मन्त्रविशेषः प्रतिपत्तुं इत्यभिप्रायः । तदिह यदि विशेषणमिष्यते, ततो दार्शपौर्णमासिकनिर्वापालम्भन्यायेन ( ३।३।५।१२ ) कर्तव्यतावचनेन लिङ्गेन विशेषणम् । तद्धि अकर्माङ्गभूतेभ्यो दाशतयेभ्यो निवृत्तं अत एव विशेषणम् । तथा च दर्शयति 'येन अनेन एवंलिङ्गेन एतत् करोति' इति कर्तव्यम् । येन अनेन एवंलिङ्गेन अग्निलिङ्गेन इन्द्रलिङ्गेन वा किंचित् करोतीति, आख्यातप्रत्ययविहितत्वेन उपलक्षितेन आग्नीध्रोपस्थानमिति, ततो विधायकस्य उपलक्षणत्वेन उपक्षीणत्वात् नोपदिष्टो भवति । 'अथोपदिश्येत' आग्नेय्यादिना 'करोति' इति, 'ततो न' विशेषितो भवति । ततश्च अविशेषिताग्नेयीमात्रग्रहणप्रसङ्गः । 'तेन उपदिष्टस्य' एव तदुपलक्षितस्य 'पुनरुपदेशः' इत्यप्रमाणकम् । तस्मात् कर्तव्यतावचनवर्जितकेवलाग्न्यादिदेवतोपलक्षणसामर्थ्यात् पुनः दाशतया अपि ग्रहीतव्या इति । 'ननु प्रकरणसामर्थ्यात्' इति सिद्धान्ताभिप्रायेणोक्तम् । लिङ्गं प्रकरणात् बलीयः इति लिङ्गशब्देन अत्र देवतासंबन्धात् यौगिकी श्रुतिरभिधीयते न सामर्थ्यमात्रम् । उपरिष्टात् बहुप्रयोगगतोऽपि लिङ्गशब्दः एवमेव यौगिकश्रुतिवचनो व्याख्येयः । 'आह, विरोधे सति' इति यदि प्रकृतमनाग्नेयं गृह्णीमः, ततो विरोधो भवेत् । प्रकृताग्नेयग्रहणे तु द्वयमपि अनुगृह्यते । तथा तद्भूताधिकरणे श्रुतिवाक्ययोः अविरुद्धत्वमुक्तम् ( १।१।७ श्लो. वा. ३४७-३४८ ) । 'नैतदेवं' इति । दाशतयानामपि विकल्पेन प्राप्तानां न युक्तः प्रकरणानुरोधेन बाधः । तस्मात् नोभयमनुग्रहीतव्यमिति । सामान्यस्य प्रतिव्यक्ति समाप्तेः, प्रकृतायामपि व्यक्तौ समस्तपदार्थसंभवात् न कश्चिद्विरोध इति मत्वा आह 'तल्लिङ्गवत्ता अनेनानुग्रहीतव्या' इति । तस्मात् लिङ्गयुक्तस्य वाक्यस्य सामान्यविषयत्वात् प्रकरणेन तदाकाङ्क्षितविशेषसमर्पणात् असति समवायविरोधे न युक्तो बाधः । इदन्तु व्यक्त्यभिधानाभिप्रायेण दाशतयप्राप्तिनिवर्तनात् विरोध समर्थ्यते ( सत्यमेवमेतत् इत्यादिना ) । 'ननु व्यक्तिःपदार्थः' इति अभिप्रायमन्यादेशः । परस्तु आह, 'एतदेव न विजानीम. तल्लिङ्गवत्ता' सामान्यभूता 'अथ अप्रन येति ।' यदि हि गवादिवत् व्यक्त्यभिधानासीमनः, ततः सामान्यचोदनायां सर्वा अप्रुत-

व्यक्तिग्रहणानुपङ्गिणि प्रकृतव्यक्तिग्रहणेऽपि अदोषः । अथ तु देवता उपलक्षिता, व्यक्तिरेव शब्दार्थः, ततः प्रकृतग्रहणे सति श्रुतिजनितप्रत्ययैकदेशबाधः स्यात् । सा चेद् 'व्यक्तिरेव साधनं, न सामान्यं नाम किंचित्' । किं पुनरिदानीं आकृत्यधिकरणोक्तसामान्यापह्नवं भाष्यकारः करोति ? नेति ब्रूमः । तस्य अङ्गन्यायभ्रममात्रमाह इति केचित् । तदयुक्तम् । तथा सति व्यक्तीनामश्रुतत्वात् अपरिग्रहेऽपि दोषाभावात् । अतः प्रकृतापेक्षया सामान्यमपह्नूयते इति वक्तव्यम् । व्यक्तिशब्दो ह्यत्र यौगिकत्वात् ( आग्नेय्या इति ) न जातिशब्दत्वं प्रतिपद्यते । न चात्र जातिः का चित् प्रतीयते । नानारूपासु नानाछन्दस्कास्वपि च देवतैकत्वमात्रेण आग्नेय्यादिशब्दप्रयोगात् । नहि 'अग्न आ याहि वीतये' 'अग्निं होतारं मन्ये दास्वन्तं' इत्येतयोः देवतान्यतिरिक्तं किंचित् सामान्यं दृश्यते । देवतासंबन्धमेव एव न व्यभिचरति । व्यभिचरति तु ऋग्जातिं, द्रव्यकर्मादिष्वपि प्रयोगात् ( आग्नेयशब्दस्य ) । अतो देवतैवात्र समाना इत्याह । समन्यस्तु समानः सन्नपि न अभिधेयत्वेन अर्थसिद्धत्वात् भाष्यकारेणोपन्यस्तः । तस्या एव च देवतायाः समानत्वात् व्यक्त्यानन्त्यादिदोषनिवृत्तिः । पूर्वाभिहितेऽपि च विशेषणे प्रकृतिप्रत्ययोः शक्तिभेदात् प्रत्ययेन विशेष्याभिधानं अविरुद्धम् । यत्र तु शब्दान्तरेण, उभयत्र व्यापारविरोधः, तत्र विशेष्यानभिधानं यथा गवादौ । न चात्र विशेषणाभिधानमात्रस्य अभिप्रायस्य यत्र क्वचिदपि विशेष्येषु प्रयोगः, नापि आग्नेयीशब्दस्य अग्नौ, यतो विशेष्य भावम् नीयेत । यदि चेह विशेषणमात्रमभिधीयेत शब्दान्तरेण कार्यसंबन्धात् नैव विशेष्यं परिगृह्येत । तस्मात् व्यक्तय एवात्राभिधेयाः । तदुक्तं ( ३।१।६।१२ ) पिङ्गाक्ष्यैकहायनीशब्दयोः । तदत्र पक्षे प्रकृतमपि उदाहरन् । 'ननु एतदुक्त' इति आचार्यस्याभिप्रायेण । ननु तथैव यत्नसामर्थ्यादिदोषात् तदनुवादादनुक्तम् । परन्तु मध्यमपक्षं परिगृह्य आह । केवलप्रकृतग्रहणे हि प्रकरणस्य मुख्यादिभिरनुग्रहः स्यात्, विरोधोऽभिहितः । मध्यमे तु न नियोगतः स एवात्र आग्नेप्राधुपस्थाने, किं तर्हि अविशेषवचनेन ? न अन्यथा इत्यविशेषः । 'ननु एतद् दुष्यति' इति विना कारणेन प्रकरणपीडामसहमानो वदति । परन्तु देवतालिङ्गयुक्तश्रुतिबलीयस्त्वमेव उत्तरं ददाति । 'अपि च न लिङ्गं' यौगिकश्रुत्यात्मकं 'प्रकरणं च अनुग्रहीतव्य' इति लोकस्य अतिरमुग्धा वाचोयुक्तिं निराकर्तुमुपन्यस्यति । सर्वप्रमाणव्यवहारेष्वेव न प्रमाणमनुग्रहीतुं पुरुषाः प्रमेयेषु प्रवर्तन्ते, किं तर्हि ? आत्मानम् । ततः किमिति चेद् अत आह, 'एतदपो भवति' । यद्यपि एकरूपं प्रमाणं क चिदनुगृहीतं इति कृतार्थत्वात् न पुरुषार्थौपयिकान्यपि सन्ति अर्थान्तराणि न लभन्ते । सदृग् प्रयुक्तं वा कार्यं फलभूयस्त्वार्थिनामपि न भूयः प्रयोगो भवेत् । तस्मात् प्रमाणानुग्रहमनादृत्य आत्मानुग्रहार्थं यथातथं प्रवर्तितव्य इति अविशेषग्रहणसामर्थ्यम् । 'लिङ्गप्रकरणविरुद्धत्वात्' इति अत्रापि लिङ्गशब्दः तस्मिन्नेव प्रयुक्त इति द्रष्टव्यम् । सूत्रमपि अवदानग्रहणं करोति इति न अवदानमात्रनियमार्थमिति व्याख्येयम् । तथा अन्येषु तु असंवाद एवेति न परामृश्यन्ते ।

तदाख्यो वा प्रकरणोपपत्तिभ्याम् । २२ ॥

भाष्यं— तदाख्यः ज्योतिष्टोमसमाम्नात एव ग्रहीतव्यः । कुतः ? प्रकरणोपपत्तिभ्याम् । प्रकृतो ह्यसौ । प्रकृतान्वयश्च न्याय्यः । कथं ? न ज्योतिष्टोमं प्रति मन्त्रस्य व्यापारविधानमुपपद्यते प्राप्तत्वादेव । व्यापारविशेषविधानं तु उपपद्यते, अप्राप्तत्वात् व्यापारविशेषस्य । अनपेक्ष्य च प्रकरणं स्तावने विधीयमाने वाक्यं भिद्येत उत्थानं च कुर्यात्, इत्थं प्रकरणसंबन्धेनेति ।

वा— अग्निरत्राख्यः अग्निदैवतसूक्तम् इति । ( एव मादिना सौत्रतदाख्यपदं व्याख्यायते ) । अथवा तेन आख्यायते इत्येवं तदाख्यः । तदीयत्वेन वा य आख्यातः स ग्रहीतव्य इति । कुतः 'प्रकरणार्थविशेषोऽयं मन्त्रस्यास्योपदिश्यते । सामान्यप्राप्त्यपेक्षश्च विशेषो नियम्यते ॥' 'आग्नेय्या आग्नीध' इति हि न आग्नीध्रस्वरूपप्रयुक्तमुपस्थानम् । नापि स्वतन्त्रं पुरुषार्थं पञ्चश्रवणात् । अतः अवश्य एवमाश्रयितव्य, ज्योतिष्टोमापूर्वसिद्ध्यर्थं आग्नीध्रोपस्थानं करोतीति । ततश्च ज्योति-

होमकार्यविशेषविधानमेतत् इति निश्चीयते । स च विशेषः सामान्यप्राप्तौ सत्यां शक्यो विधातुं नान्यथा । तत्र यदि द्वावपि सामान्यविशेषसम्बन्धौ इदमेव वाक्यं कुर्यात्, ततो वाक्यं भिद्येत । ननु च अनेन विशेषमात्रं आग्नीध्रसम्बन्धः क्रियते, प्रकरणात् सामान्यसम्बन्धः सेत्स्यति इति । सत्यं प्रकरणात् सिध्यति, न तु श्रुतिमकल्पयित्वा । सा च श्रुतिः अन्यस्याः अन्या कल्पयितुं न शक्यते । ननु विशेषे विधीयमाने अर्थादेव सामान्यसम्बन्धो भविष्यति । न अर्थस्यापि ( श्रुतार्थापत्त्याख्यस्य ) प्रकरणतुल्यत्वात् । यदि तु आग्नीध्रसम्बन्धे कृते, भोजनादिवत् तृप्तिः, ज्योतिष्टोमसंबन्धो नान्तरीयकत्वेन अनुनिष्पादी स्यात्, ततः शास्त्रं न आश्रयेत् । अयं तु द्रव्यस्वरूपेण सम्बन्धस्य निष्फलत्वात् प्रथमतरमाश्रीयते । न च शास्त्रादृते नचुपपद्यते, इति अस्येव अश्रुतकल्पनाक्लेशः । किंच 'लौकिकेऽप्युपपन्नत्वात् संबन्धोऽयं यथाश्रुतः । नैकान्तात् कर्मसंबन्धमुपपादयितुं क्षमः ॥' तेन अस्य प्रकरणानुमितैव श्रुतिः कल्पयितव्या । सर्वत्र च एवमादौ अर्थापत्तेः प्रामाण्यम् । सा चान्यथाऽनुपपत्त्या भवति । तद्यदि इद विशेषसम्बन्धवाक्यं सामान्यसंबन्धश्रुतिं अकल्पयत् नोपपद्येत, ततः कल्पयेत् । उपपद्यते तु अस्य कल्पसामान्यसम्बन्धासु श्रुतु स्वार्थमात्रविधानम् । तावता च सिद्धार्थत्वात् न गुर्वी कल्पनामवलम्बते । तद्दर्शयति 'न ज्योतिष्टोम प्रति मन्त्रस्य व्यापारविधानमुपपद्यते' अन्यत्र एव प्राप्तत्वात् । यथा वसन्तादिश्रुतिभिः प्राप्तैः ■ कामश्रुतयः आधानाक्षेपसमर्थाः इति आहिताग्नेरधिकुर्वन्ति, तथा एताः प्राप्तज्योतिष्टोमसंबन्धाधिकारिण्यः इत्यभिप्रायः । इतरथा यदि तावत् अप्रकृता एव गृह्यन्ते, ततो गत्यन्तरसम्भवे सति वेदेन अनभ्युपगतः सन् अतिभारः निष्प्रमाणक आपद्येत । अथ अविशेषग्रहणं, तथापि एकत्र प्राप्तसामान्यसम्बन्धानुवादेन विशेषमात्रकरणात्, अन्यत्र च सामान्यविशेषप्रापणात् वैरूप्यलक्षणोऽपि वाक्यभेदः स्यात् । प्रकृतग्रहणे न कश्चित् दोषः । एवं न प्रत्याख्येयप्रत्ययविप्रकर्षो ■ भविष्यति । ननु च प्रकरणेऽपि यथाऽभिहितः सामान्यसंबन्धो नैव कस्य चिदस्ति । यद्यपि स्यात् तथापि कार्यान्तरे विनियुक्तः, इत्यादि विरुध्येत । उच्यते । नैष दोषः । कार्यान्तरविनियुक्तानामेव ग्रहणात् । ननु एवं सति सामान्यसम्बन्धप्राप्तिवाचोयुक्तिः न घटते । कथं न घटते ? यदा सर्वविशेषेषु सामान्यमन्वगतं, तेन यत्तत् विशेषरूपं, तद्विशेषान्तरे अनुपयुज्यमानत्वात् अविवक्षितं कृत्वा तद्-द्वारसिद्धसामान्याश्रयणमविरुद्धम् ।

यत्तु भाष्यकारेण वाक्यभेदो दर्शितः, स सर्वोत्पत्तिविधानेषु तुल्यः । यागं कुर्यात्, तं च सोमेन इत्यपि शक्यं दर्शयितुम् । अपूर्वकर्मविधानाच्च नापरन्येभ्यो विशिष्टविधानेभ्यो न्यूनतरो विज्ञायते । सिद्धान्तेऽपि च अन्यलिङ्गानाश्रयणात् 'तथैवलिङ्गेन' इत्येतदप्येव । नहि अविधीयमानः प्रकृतोऽपि एतल्लिङ्ग उपस्थानाङ्गम् । तस्मात् यथाकथंचित् पूर्वोक्त एवात्र वाक्यभेदो योजयितव्यः, ( विधिगौरवरूपः ) । तत्र 'उपस्थानं च कुर्यात्' इत्येतत् ज्योतिष्टोमकार्यविशेषप्रदर्शनम् । 'तथ एतल्लिङ्गेन' इति प्रकरणनिरपेक्षाप्राप्तज्योतिष्टोमसम्बन्धदेवतालिङ्गोपलक्षितमन्त्रमात्रप्रदर्शनार्थम् ।

अनर्थकश्चोपदेशः स्यादसंबन्धात् फलवता, नह्युपस्थानं फलवत् । २३ ॥

भाष्यं—ननु च प्रकरणात् ज्योतिष्टोमस्योपकारकं स्यात् । यदि उपस्थानज्योतिष्टोमसम्बन्धो विधास्येत, तदा उपस्थानं ज्योतिष्टोमे उपदिश्येत । प्रकरणात् तेन एकवाक्यतापत्तेः । यदा तु तत्र उपस्थानस्य सम्बन्धो विधास्यते, सर्वोपस्थानेषु तदा मन्त्रः प्राप्नोति प्रकरणबाधितः । न प्रकरणं विशेषकं भवितुमर्हति । उभयसंबन्धे वाक्यभेदः । अस्मत्पक्षे न पुनरयं दोषः । येन आग्नेयेन ऐन्द्रेण वा ज्योतिष्टोमे व्यापारः क्रियते, तेन उपस्थानव्यापारविशेषः तदा ज्योतिष्टोमिनो विधीयते, अन्यत् सर्वमनूद्यते इति न दोषो भवति । अथवा आग्नीध्रविधानमद्धसंबन्धमात्र विधीयते । उपतिष्ठते इत्यसमर्थवादः । अनेन मन्त्रेण आग्नीध्रमुपतिष्ठते इति समासीनति इत्यर्थः । तस्मात् प्रकृता मन्त्रा एतस्मात् पदान् उपादातव्या इति ।

वा—अथ वाक्यभेदं परिहर्तुं यथाश्रुताग्नीध्रोपस्थान सम्बध्यमानमित्युच्यते तदाह, (सूत्रकारः) 'अनर्थकश्चोपदेशः स्यादसम्बन्धात् फलवता' इति । 'ननु प्रकरणात् ज्योतिष्टोमस्य उपकारकः स्यात्' इति अन्यतः सामान्य संबन्धसिद्धिं मन्यते । न तु असावपि अविधीयमानः सम्भवति इति दर्शयति । 'यदि उपस्थानज्योतिष्टोमसम्बन्धो विधीयेत' ततः 'तेन एकवाक्यताभिधानात् । यदा तु ततु' तमविधाय उपस्थानमन्त्र विशिष्टविधानेन वा मन्त्रसम्बन्धो विधीयेत, तदा लौकिके निष्फले युद्धे एवोपस्थाने मन्त्रः प्राप्नोति अननुमितश्रुतिप्रकरण बाधित्वा । नहि तदा प्रकरणात् विशेषप्रत्ययः । अस्मत्पक्षे तु प्रथममेव ज्योतिष्टोमेन स्वीकृतत्वात् नान्यत्र प्राप्तिः, इति अर्थवत्ता एषा च । अथवा आग्नीध्रादीनां कर्माङ्गभूतानां मन्त्राणां च करणानां संबन्धे विधीयमाने उपस्थानमपि अनूद्यते इति स्फुटतरम् ।

सर्वेषां चोपदिष्टत्वात् । २४ ॥

भाष्य— यदप्युक्त उपदिष्टा हि ते प्रकृतौ, कार्यान्तरे इति, तदुच्यते । उक्तोत्तरमेतत् (न ज्योतिष्टोम प्रति मन्त्रस्य व्यापारविधानमुपपद्यते इति ग्रन्थेन २१ सूत्रे) । अपि च न चैतल्लभ्यते यत्रोपदिष्टा । सर्वे पाल्लस्तोमे आश्विने (च) शस्यमाने सूर्ये अनुयाति । तेन न प्रकृते कश्चिद् विशेषः । तस्मात् प्रकृतस्यैव ग्रहणम् ।

वा— ननु यातयामत्वात् सामान्यविशेषबाधाद्वा न प्रकृतग्रहणमिति, तन्न । मननात् यातयामविधानात् गुणभूतमन्त्राभ्यासे च समुच्चये सति विरोधाभावात् उभयमपि अदोषम् । तथा येन एवंलिङ्गेन एव कुर्यात् इत्येषाऽपि यातयामवादिनः नाभीष्टो, येषां च छिद्रुपदिष्टत्वेन अविशेषगत्वात् । यत्तु प्रत्ययेन विशेषणमिति, तदन्यथैव विशेषसिद्धेः अर्थवदध्यारोपणमात्रमेव शोभते । तथाहि 'यदप्यदमूषां कुर्यां प्रत्ययेन विशेषणम् । तथापि नैव मुच्येय सर्वासां ग्रहणादिह ॥ सर्वा ह्यध्ययनस्थेन प्रत्ययाश्रितेन च । यागस्तोमाश्विनायागतेन विहिता हि ताः ॥ अतो नैवेदमासङ्गमात्रपातेन विशेषणम् । तत्सत्यय एव स्यात् कृतेऽपि हि विशेषणे ॥' तस्मात् अर्थापत्तिप्रतिबन्धमात्रेणैव प्रकृतप्रत्ययसिद्धिः ।

(यातयामवचनं 'सुचा दर्व्यादयो मन्त्रा यातयामाश्च नद्धृताः । न ते निर्माल्यतां यान्ति विनियोज्याः पुनः पुनः ॥' इति ।)

शा— 'तत्राग्नेयी-(त्ये)तिशब्देन सर्वासामभिधानतः । अविशेषो, न वा सिद्धिः प्रकृतग्रहणे प्रमा ॥' इति प्राप्तेऽभिधीयते, 'प्रकृता एव गृह्णेरन् प्रसिद्धवस्तुसंगमाः । तासां कार्ये विशेषो हि सुसमन्त्रोपदिश्यते ॥'

पूर्वं लिङ्गस्य सामान्यसंबन्धापेक्षित्वमुक्तं तत्प्रसङ्गात् श्रुतेरपि सति सम्भवे सामान्यसंबन्धे अन्यतः सिद्धमपेक्ष्य विशेषमात्रपरत्वं सम्भवति इति प्रतिपाद्यते इति लिङ्गाधिकारेऽपि श्रुतिविनियोगश्चिन्तितः ।

सोम— अवान्तरसंगतिः प्रासङ्गिकी । सूत्रार्थस्तु— अधिकारे प्रकरणे यो मन्त्रविधिः, स अतदाख्येषु प्रकरणानाख्यातेषु चकारात् प्रकरणाख्यातेषु च स्यात् आग्नेयीशब्देन सामान्येन शिष्टत्वात् इति ।

वि— 'आग्नेय्याऽऽग्नीध्रमित्यग्निदेवताका ऋचोऽखिलाः । उपस्थाने प्रयोक्तव्याः प्रकृता एव ता उत ॥, साधारण्येन शब्दोक्तेः सर्वाभिस्तदुपस्थितिः । , विशेषे विधिसम्भाव्या प्रकृताभिरितीष्यताम् ॥'

भाट्ट— ज्योतिष्टोमे 'आग्नेय्या आग्नीध्रमुपतिष्ठते' इत्यत्र प्रकृताप्रकृतसाधारण्येन ऋङ्मात्र आग्नीध्रोपस्थानाङ्गत्वं प्रकृता एव याः सोमप्रदानेऽपि विनियुक्ताः, ता एव इति चिन्तायां, आग्नेयीपदस्य अविशेषेण सर्वपरत्वात् प्रकरणस्य तन्नियोजकत्वानुपपत्तेः अग्निदेवत्यऋङ्मात्रस्यैव विशिष्टविध्युपस्थानविशेषणविधिना आग्नीध्रोपस्थानाङ्गत्वेन विधानम् । यदि अत्र आग्नेयी उद्देश्या, येन आनर्थक्यभिया व्रीहिवत् प्रकरणेन संकोच्येत, तदा उपादेयत्वावगमात् । यत्र च उपस्थानस्वरूपे आनर्थक्याशङ्का, तत्र प्रकरणानुप्रवेशोऽपि न आग्नेयीपदस्य प्रकृतपरतापत्तिः । न च आग्नेयीपदस्य यौगिकत्वात् तद्धितान्तशब्दः संनिहितपरः, यौगिकानां अवयवार्थविशिष्टवाचित्वात् संनिहितवाचि ते

प्रमाणाभावात्। तद्धितस्य तद्वाचित्वेऽपि प्रकृतानामृचाम् एकप्रकरणस्थत्वेऽपि प्रदेशान्तरस्थत्वेन सन्निहितत्वाभावात्। अस्तु वा प्रकरणसन्निहितस्यैव तद्धितेन ग्रहणं, तथापि यत्र न तद्धितश्रवणं यथा ब्रह्मौदनप्राशनादौ 'चतुरो ब्राह्मणान् भोजयेत्' इत्यादौ, तत्र प्रकृतऋत्विग्ग्रहणे प्रमाणाभावः। न च प्रकृतानाम् अपूर्वार्थत्वस्य क्लृप्तत्वात् केवलं द्वाररूपाग्नीध्रोपस्थानसम्बन्धकल्पने लाघवात् अप्रकृतानाम् उभयकल्पने गौरवापत्तेः प्रकृतनियम इति वाच्यम्। प्रकृतग्रहणेऽपि उपस्थानस्वरूपस्य द्वारत्वे तत्कार्यापत्ते ऊहाद्यनापत्तेः अपूर्वसाधनत्वलक्षणाया आवश्यकत्वात्। नहि प्रकृतविषयेऽपि प्रकरणेन वाक्यान्तरकल्पनया अपूर्वार्थत्वबोधः, तथात्वे व्रीहीणां स्वरूपेण द्वारत्वापत्तौ यथाता तदनापत्तेः। अतो लाघवात् अपूर्वसाधनीभूतस्तोत्रत्वेनैव उद्देश्यता। तावता च अपूर्वसाधनीभूतोपस्थानार्थत्वस्य अलाभात् अस्त्येव प्रकृतग्रहणेऽपि तद्विधौ अपूर्वसाधनलक्षणा। अपि च स्तोत्रापूर्वसाधनत्वकल्पनायामपि नोपस्थानजन्यज्योतिष्टोमापूर्वसाधनत्वलाभः प्रकृतानाम्। अतः सर्वासामेव ग्रहणं अप्रकृतानामेव वा कार्यसाकाङ्क्षत्वात्। इति प्राप्ते, अप्रकृतग्रहणे तासां अपूर्वसाधनीभूतोपस्थानार्थत्वान्यथाऽनुपपत्त्या अपूर्वार्थत्वस्यापि व्रीह्यादिवत् कल्पनीयत्वापत्तेः, प्रकृतानां च कार्यान्तरसम्बन्धबोधकविधौ एव अपूर्वार्थत्वस्य क्लृप्तत्वात् लाघवोपजीविना प्रकृतनियमः। संभवति च प्रकृतानामपि आग्नेयीनां वाङ्नियमनद्वारेण स्तोत्रद्वारा ज्योतिष्टोमापूर्वसम्बन्धसंभवेऽपि कार्यान्तरद्वारा सः। आग्नेयीनां स्तोत्रादौ विनियोगेऽपि पार्थक्येन ज्योतिष्टोमप्रकरणे पाठादेव तावदपूर्वसम्बन्धागमः। अयमेव च ब्रह्मौदनप्राशने ऋत्विक्त्वनियामकन्यायः। न चैवं 'आग्नेयाय हिरण्यं ददाति' इत्यत्रापि तन्नियमापत्तिः। ऋत्विक्त्वात् आग्नेयत्वस्य निगमेन अप्राप्तेः। अत एव च 'अग्निमुपनिधाय स्तुवीत' इत्यादौ आरोपणीयस्तोत्रापूर्वसम्बन्धस्य आहवनीयादौ अप्राप्तत्वात् न तन्नियमः, अपि तु विना वचनं आयतनवद्धिर्मावायोगात् लौकिकस्यैव इति वक्ष्यते (७।३।१२)। अत. सिद्धं लाघवानुरोधेन प्रकृतस्यैव ग्रहणम्।

**मण्डन**—'आग्नेयमन्त्रः प्रकृतः प्रयोज्यः।'

**शंकर**—'श्रुतश्च सति संभवे।' श्रुतः प्रकृतो मन्त्रः।

* यत्र यजमानः न स्वरूपेण उपयुज्यते परन्तु गुणभूतः, यथा औदुम्बरीसंमानादिषु, तत्रापि **आग्नेयीन्यायः**। भाट्ट. ९।१।१४. * आग्नेयीन्यायेन ब्रह्मसंस्थानकृतः प्रकृतसर्वगोचरत्वस्य कृतत्वात् (पूर्वपक्षे)। कल्पतरुः. ३।४।२।२० भाट्ट. * अध्वाधकक्रयब्राह्मणादिकर्तृकावेष्टयाविप्रयोगे दक्षिणापेक्षायां सति संभवे तत्प्रधानाङ्गत्वेन अवगताया दक्षिणायाः एव उपस्थितत्वात् आग्नेयीन्यायेन ग्रहणं, न तु अन्तःक्रतुप्रयोगे बाधितायाः अन्वाहार्यदक्षिणायाः इति वक्ष्यते। अस्तु वा तत्रापि सा। भाट्ट ११।४।१–२, * 'आग्नेयाय हिरण्यं ददाति' भात्र आग्नेयीन्यायेन देवतासंपादकऋत्विगभेदस्यैव ग्रहणं, आग्नेयत्वस्य अपूर्वसाधनताऽवच्छेदकत्वेन अवगतेः तन्न्यायाभावात्। १०।३।१५ * न च प्रसङ्गासंभवेऽपि आग्नेयीन्यायेन प्रकृतानामेव (स्रुचां) उपादानशङ्का, तस्य (न्यायस्य) प्रकृतिप्रापणानाकाङ्क्षीयत्वनाभकृतवैगुण्यप्रसङ्गेन अनुपपत्तेः। कौ. २।३।५।१२ पृ. ८५. * विशेषाश्रुतेः 'इमे व्रीहयः कल्पसामान्यसंभवाः, न इमे' इति विशेषाम्नानात् **आग्नेयीन्यायानुपपत्तेः** प्रकरणस्यैव विशेषकत्वं वाच्यं, न च तत् संभवति। सु. पृ ६२६, * प्रक्षेपस्य प्रकृतयागोपयुक्तद्रव्यप्रतिपत्तित्वात् प्रकृतद्रव्यावरुद्धत्वेऽपि त्यागोद्देश्यान्याद्यस्य प्रतिपत्त्यौपयिकतया प्रक्षेपेण अनपेक्षणात् तद्-गतोक्तदेवताग्रहणनियमानुपपत्तेः चतुरवत्तशब्दस्य प्रकृतापेक्षसंस्कारनिमित्तस्य शब्दस्य देवताविषयस्य अभावेन **आग्नेयीन्यायाभावात्**। पृ. १५३०.

ॐ **आग्नेय्यधिकरणम्** । ( आग्नेयीन्यायः )

आग्नेय्या आग्नीध्रमुपतिष्ठते। आग्नीध्रादीनां मन्त्राणां च प्राप्तत्वात् उभयोरपि संबन्धविधानस्य 'यत्रोभौ अप्राप्तत्वेन, तत्र स्वशब्देन संबन्धो विधीयते' इति जाघन्याधिकरणभाष्ये वक्ष्यमाणत्वात् (३।३।१०।२१ पृ. ८६९) धात्वर्थविधानेऽपि च प्रत्ययार्थभूताया भावनायाः विशेषणपरेऽपि विधौ विध्यनुपगमात् तदन्यथाऽपि अप्राप्तस्य कारकयोः सम्बन्धस्य विधिः भावनायाश्च

अवच्छेदकधान्यर्थापेक्षाया आत्मनेपदालोचनया अभि धाऽऽत्यधात्वर्थो यच्छिन्नत्वावगमात् ' आग्नेय्या आग्नीध्र अभिदध्यात् ' इति वाक्यार्थप्रतीतेः ' अग्न आ याहि ' इत्यादिभिश्च संनिहितनिपयामन्त्रणविभक्त्यादियुक्तेः ( कस्यानुक्तेः ? ) समीपस्थानं विना अभिधानादर्शनात् अग्नस्य समीपस्थानस्य अनुवादोपपत्तेः तस्यापि सामान्यान्वयवत् अभिधानं इति अतिलाघवम् । सु. ११३२.

* आग्नेय्यधिकरणे ' आग्नेय्या आग्नीध्रमुपतिष्ठते ' इत्यादौ अन्यत्र विनियुक्तोऽपि प्रकृत एव मन्त्रो ग्राह्यः, न तु दाशतय आगमयितव्यः इत्युक्तम् । (३।२।८।२१–२४) के. * आग्नेय्यधिकरणे यौगिकानां पदानां सन्निहित-मानवाचकत्वस्य निराकृतत्वात् ( पार्थसारथिना ) । के.

* ( आग्नेय्या आग्नीध्रमुपतिष्ठते इति ) आग्नेयी-वाक्ये सामान्यसम्बन्धबोधकप्रकरणेन प्रकृतप्रसङ्गसाधारण्य प्रवृत्तश्रुतिसंकोचभङ्गः ( आग्नेय्यधिकरणे प्रति-पादितः ) । कु. ३।२।९।२२. * जङ्गम-मानशब्दस्य यौगिकत्वेन व्यक्तिवाचित्वात् आग्नेयीशब्द-वत् सर्वनामार्थवृत्तित्वाभावेन सन्निहितार्थवाचित्वाभावात् आग्नेय्यधिकरणपूर्वपक्षन्यायेन सर्वव्यक्तिवाचित्वाव-गतेः । सु पृ १५६६. * हविर्धानविशेषसंबन्धपरे वाक्ये सामान्यसम्बन्धशक्तिमपि कल्पयतः आग्नेय्यधि-करणोक्तो वाक्यभेदो योग्य । वा. ३।७।७।१६. * आग्नेय्यधिकरणोक्तगौरवलक्षणवाक्यभेदापत्ते । सु ३।७ पृ. १५. * द्रवानदाने स्वाभाविकसामर्थ्येन स्रुवस्य झटिति प्राप्तत्वात् तेनैव निराकाङ्क्षे विधौ, इतरासे ( स्वधितिहस्त-रूपादे ) सामर्थ्यकल्पने गौरवापत्ते. आग्नेय्यधिकरण-न्यायेनापि स्रुवस्यैव ग्रहणमवसीयते । कौ. १।४।२०।३० पृ. ३००. * श्राद्धे अनग्निकस्य विप्रपाणौ होमः, विप्रश्च आग्नेय्यधिकरणन्यायेन प्रकृत एव । श्राद्धमयूखः पृ.४९. * होमस्यापि संज्ञाया समासिपर्यन्तत्वात् सर्वान्तेऽशे प्रक्षेपे चोद्यमाने त्यागतदेवतोद्देशयो. किं अपूर्वयोः अर्थापत्त्या विधिः कल्प्यता, उत कुतश्चित् प्राप्तयोरेव आश्रयणं क्रियता इति । तत्र आग्नेय्यधिकरणन्यायेन रापवे सति गौरवस्याप्रमाणत्वात् अवगतत्यागोद्देशाश-द्यानि अष्टाकपालादीन्येव गृह्यन्ते । या. ३।४।१४।४१ पृ. ९८१.

* आग्नेय्यधिकरणन्यायस्वरूपं (३।२।८।२१–२४) ' विनियुक्तस्यापि वचनात् विनियोगः ' इति । के.

**आग्रयणं एकस्मिन्नपि संवत्सरे सस्यभेदेन भिन्नमेव कर्तव्यम् ॥**

' नानाबीजेन ' इति श्रुतौ ग्राम्यौषधीनां मध्ये व्रीहिधान्येनाग्रयणं विधाय ' संवत्सराद्धयेतदधि भवति ' इति श्रुतम् । तत्र ' इत्येन ' इत्येकवचनात् व्रीहिधान्यस्यैवा-ग्रयणम् । अत एव संवत्सरोत्तरमेव पुनःकरणश्रुतिरुप-पद्यते । वसन्ते यवैराग्रयणकरणे तु कालमध्ये एव तदा वृत्तेस्तद्विरोधः । अतो नास्त्येव यवाग्रयणं इत्यौडुलोमि-राचार्यो मन्यते । इति प्राप्ते, स्यादेव यवाग्रयणं, ' उभा-भ्यामाग्रयणेन यजेत ' इति श्रुतेः । न चेयं फाल्गुन्या-फाल्गुनविषया, ' तस्मात् तासामुभाभ्यामग्निहोत्रं जुहोति उभाभ्यां दर्शपूर्णमासाभ्यां यजेत ' इत्यत्र व्रीहियवयोरेव प्रकृतत्वात्, अन्यासां तन्मध्ये पाठात् । ' व्रीहिसस्ये वा यवसस्ये वाऽऽग्रते ' इति स्पष्ट कौषीतकिश्रुतेश्च ( ४। १४ ) । ' संवत्सराद्धयेतत् ' इति तु व्रीह्याग्रयणपरत्वेना-प्युपपन्नम् । अत एव ' द्विर्वा एष आदित्यः संवत्सरा-दावर्तते तमेताभ्यामाग्रयणाभ्यामर्वाञ्च च पराञ्चं चाभि यजते ' इति श्रुतौ प्रत्ययनमाग्रयणोक्तिः । ' व्रीहिभि-रिष्ट्वा व्रीहिभिरेव यजेत आ यवेभ्यः, यवैरिष्ट्वा यवै-रेव यजेत आ व्रीहिभ्यः ' इत्यनेन तत्तदाग्रयणोत्तरभावि-दर्शपूर्णमासयोर्द्रव्यनियमश्च, श्यामाकव्रीहियवानां प्राशने मन्त्रत्रयविधानं च संगच्छते । संकर्ष. ३।१।८.

**आग्रयणं नवान्नबुभुक्षाऽभावेऽपि कर्तव्यम् ॥**

नवान्नाशनस्य बुभुक्षाजन्यभोजनपूर्वकत्वेन अन्यतरा-भावे इष्टिपरिमितनवान्नलाभेऽपि नैनाग्रयणेऽधिकारः । तस्यानिष्टाग्रयणत्वेऽपि प्रतिषेधातिक्रमाभावेन प्रत्यवाया-भावात् । इति प्राप्ते, नवान्नप्रथमाशनप्रागभावविशिष्ट-वसन्तादिकालजीविनस्यैव अधिकारिताऽवच्छेदकत्वेन बुभुक्षाऽऽदेस्तद्घटकत्वे मानाभावादप्रतिहतोऽधिकारः । संकर्ष. ३।१।१४.

* आग्रयणानि चत्वारि श्यामाकाग्रयणं, व्रीह्याग्रयणं, यवाग्रयणं, वेणुयवाग्रयणं चेति । तत्र वेणुजन्यानि गोधूमसदृशानि बीजानि वेणुयवा उच्यन्ते । के.

■ आग्रयणस्य आधानोत्तरमेव प्राप्तौ तदकरणे नवान्नभक्षणनिषेधः ॥

वसन्ते नवान् पक्वान् प्राशितवता पश्चादग्न्याधाने कृतेऽपि यवाग्रयणं कर्तव्यम्। पूर्वमधिकाराभावेऽपि संग्रथ-विकारसपरया तत्प्राप्तेः । इति प्राप्ते, नवान्नप्रथमप्राशनस्यैवानिष्टाग्रयणं प्रति प्रतिषिद्धत्वात्, तस्य च वृत्तत्वेन द्वितीयादिप्राशने निन्दाऽभावेन शास्त्रस्य न तत्राधिकारः । सङ्कर्ष. ३।१।१३.

■ आग्रयणे अन्वाहार्यस्थानापन्नेऽपि वत्से पाकस्य बाधः ॥

दाने पाकोऽर्थलक्षणः । १०।३।८।३६ ॥

**भाष्यं**— तत्रैव 'वत्सः प्रथमजो दक्षिणा' इति । तत्रैतत् समधिगतं, अन्वाहार्यधर्माः कर्तव्या इति । तदत्र संशयः किं वत्से पाकः कर्तव्यः, उत नेति । किं प्राप्तम् ? चोदकानुग्रहाच्छक्यत्वाच्च कर्तव्य इति । एवं प्राप्ते, ब्रूमः । वत्सस्य दाने पाको न कर्तव्यः । अपक्वो हि वत्सो वत्स एव । वत्सश्च श्रूयते, न मांसम् । परिक्रयाय च श्रूयते, न पुरुषसंस्काराय । तस्माच्चोदकः पाकं न प्रापयति । यद्यपि पाकः क्रियेत, अभुतः प्राणिवध आचारविरुद्धोऽनुष्ठीयेत । तस्मात् पाको न कार्यः ।

**शा**— अन्वाहार्यपाको वत्से कर्तव्यो नेति संशये चोदकानुग्रहाय पक्त्वा वत्सं, तदीयं मांसं दक्षिणात्वेन देयमिति मन्यते । श्रुतं तु वत्सद्रव्यं पाकेन नश्येत्, अश्रुतं च मांसं दीयेत, वत्सशब्दो वा मांसलक्षणार्थः स्यात्, न चैतत् न्याय्यम् । तस्मान्न वत्सस्य पाकः ।

**सोम**— यदर्थं पूर्वं प्रसिद्धत्वा तन्निरूप्यते इति संगतिः । सूत्रार्थस्तु- प्रकृतौ दाने अन्वाहार्यसिद्धयर्थं पाकः अर्थसिद्धः, इह तु न तथा, इति नात्रौ कर्तव्यः इति ।

**वि**— 'पाकोऽस्ति नो वा वत्से, स्यादन्वाहार्यस्य दर्शनात् ।, न वत्सत्वप्रयुक्तौ दक्षिणा मांसदानतः ॥'

**भाट्ट**— वत्से स्थानापत्त्यतिदेशबललभ्यः पाको निवर्तत एव, प्रकृतौ तस्य दक्षिणासाधनीभूतद्रव्यनिष्पादकतया वत्से अर्थलोपात् । न च वत्सस्यापि प्रकृतिद्रव्यत्वेन विधिः, साक्षाद्दक्षिणासाधनत्वसमवे परंपरयाऽङ्गीकारे प्रमाणाभावात् । अतिदेशप्राप्तपाकानुरोधेन तदाश्रयणे अन्योन्याश्रयात् । अतः श्रुतवत्सत्वविरोधाच्च पाकः ।

**मण्डन**— 'वत्से न पाकः क्रियते विरोधात् ।'

**शंकर**— 'वत्से पाकस्य बाधः स्यात् ।'

■ आग्रयणे, अन्वाहार्यस्थानापन्नेऽपि वाससि पाकस्य बाधः ॥

पाकस्य चान्नकारितत्वात् । १०।३।९।३७ ॥

**भाष्यं**— तत्रैव श्रूयते 'वासो दक्षिणा' इति । तत्रायमर्थः समधिगतः अन्वाहार्यधर्माः कर्तव्या इति । अथ पाकः कर्तव्यो नेति संशयः । अर्थापत्तेः कर्तव्यः । इति प्राप्ते, ब्रूमः । न कर्तव्यः । अन्नकारितत्वादिति । अन्नकारितो हि पाकः । न च वासोऽन्नम् । न तत्र पाकः शक्यते कर्तुम् । तस्मादत्र पाको न कर्तव्य इति ।

**सोम**— पूर्ववत् श्रुतद्रव्यस्य पाकेन नाशाभावात् (वाससि पाकः कर्तव्य इत्युत्थानात् प्रत्युदाहरणसंगतिः) । ननु कथं प्रयोजनाभावः, पाकजन्यविकारलक्षणस्य प्राकृतप्रयोजनस्य सद्भावात् । भवति वाससोऽपि पाकेन शुक्लरूपोत्पत्तिलक्षणो विकारः इति (चेन्न) प्रकृतौ न विकारमात्रं पाकस्य प्रयोजनं, किंतु अदनीयद्रव्यसिद्ध्यर्थतया लोकसिद्धत्वात् पाकस्य अन्नलक्षणदक्षिणाद्रव्यसिद्धिः प्रयोजनम् । इह च वाससोरूपद्रव्यस्य पाकं विनाऽपि सिद्धेः प्रयोजनाभावः इति । सूत्रे निवृत्तिः इति शेषः ।

**वि**— 'वाससोऽस्ति न वा पाको, विनाशाभावतोऽस्त्यसौ ।, वैयर्थ्यादन्नजन्यत्वात् पाको वाससि नोचितः ॥'

**भाट्ट**— वाससि विरोधाभावेऽपि पाकस्य प्रकृतौ दक्षिणाद्रव्यनिष्पादकत्वादिह तदभावेऽपि निष्पत्तेः प्रयोजनाभावात् वैयर्थ्यादकरणम् । सिद्धमपि चेदं शिष्यहितार्थमुच्यते इति द्रष्टव्यम् ।

**मण्डन**— 'पाको न पच्येत न हीदमन्नम् ।'

**शंकर**— 'पाकबाधश्च वाससि ।'

. ५ आग्रयणे उपदिष्टवासोवत्सदक्षिणया अतिदिष्टान्वाहार्यदक्षिणाया बाध. ॥

वासोवत्सं च सामान्यात् । १०।३।६।३४॥

भाष्यं— 'आग्रयणं भवति, हुताद्याय यजमानस्यापराभावाय नवानामैन्द्राग्नः, पुराणानामाग्नेय, सौम्यः श्यामाकः, वैश्वदेवः पयसि चरुः, द्यावापृथिव्य एककपालः' इति । तत्र श्रूयते 'वासो दक्षिणा, वत्सः प्रथमजो दक्षिणा' इति । अस्ति तु प्रकृतौ 'अन्वाहार्यो दक्षिणा' इति । स चोदकेन प्राप्यते । तत्र संशयः किं वासोवत्समन्वाहार्यस्य निवर्तक, उतानिवर्तकमिति । किं प्राप्तम् ? चोदकानुग्रहाद्विरोधाभावाच्च अनिवर्तकमिति । एवं प्राप्ते ब्रूमः । वासोवत्सं च सामान्यात् । उक्तमश्वस्तात् आधानदक्षिणाना पुनराधेये निवृत्तिरिति । यथान्वेनान्वादेशः क्रियते । अन्वाहार्यस्य निवृत्ति । कुत. ? कार्यसामान्यात् । दक्षिणाकार्ये अन्वाहार्यः प्रकृतौ । इह वासोवत्सं तस्मिन् कार्ये, दक्षिणाशब्दश्रवणात् । तस्मान्न समुच्चय, निवृत्तिरिति । प्राप्तिर्नोत्तरविवक्षया क्रियते इति ।

वि-- 'वासोवत्सं समुच्चेयमन्वाहार्येण वा न वा ।, अविरोधात् समुच्चेय, न कार्यैक्याद् विरोधत. ॥'

भाट्ट— श्यामाकाग्रयणे 'वासो दक्षिणा' इति श्रुतम् । व्रीह्याग्रयणे च 'वत्सः प्रथमजो दक्षिणा' इति । सा प्राकृतस्यान्वाहार्यस्य निवर्तिका इत्यविवादमेव । न च यथाग्नामिव आनत्यातिरेकार्थत्वकल्पनया प्राकृतवैकृतयो समुच्चयोपपत्ति, कल्पितत्वोपपत्तिपर्याप्तानतिरूपकार्यैक्येनैव सिद्धौ आनत्यातिरेकस्य निष्प्रयोजनत्वात् । तथा पशानतेरभाग्या करणे व्रीहियवयोर्नीहिविषयत्वोत्र समुच्चयापत्ते: । क्रयेषु तु 'दशभि: क्रीणाति' इति वचनात् समुच्चय । अत. प्राकृतदक्षिणा वैकृतदक्षिणया बाध्यते इत्युत्तरविवक्षया प्राप्यते ।

मण्डन— 'वत्सादि पूर्वस्य निवर्तक स्यात् ।'

शंकर--- 'वत्सोवत्से प्राग्बाध. ।'

आग्रयणे ऐन्द्राग्नवैश्वदेवयोर्द्यावापृथिव्यानुरोधेन वैश्वदेविकतन्त्रनियमो नास्ति । आग्रयणेष्टिन्याय (द्वितीयः) ॥

तत्प्रवृत्त्या तु तन्त्रस्य नियमः स्यात्, यथा पाशुकं सूक्तवाकेन । १२।२।१५।३५ ॥

भाष्यं— तस्य प्रसूनस्य प्रवृत्त्या वैश्वदेविकं तन्त्रं नियम्यते । यथा पाशुकं तन्त्रं सूक्तवाकस्य प्रैषेण वैशेषिकेण नियतम् ।

न वाऽविरोधात् । ३६ ॥

भाष्यं— न वा नियम्यते । कुतः ? अविरोधात् । अविरुद्धोऽयं धर्म इतरेषामपि हविषाम् । तेन न वैशेषिक । अवैशेषिकत्वाच्च ततोऽन्यतरत् नियन्तु शक्नोति । वैशेषिकस्तु सूक्तवाक । तस्मात् सोऽन्यतरन्नियन्तुमुत्सहते ।

अशास्त्रलक्षणाच्च । ३७ ॥

भाष्यं— किंच न न शास्त्रविहिताः प्रसूनाः । किं तर्हि ? चोदकप्राप्ताः । निमतः ? यदि शास्त्रविहिता भवेयु, ततस्तेन प्रकृतिलिङ्गेन वैश्वदेविके तन्त्र नियम्येत । अथवा द्यावापृथिवीयधर्मत्वात् प्राप्तानामेव प्रसूनानां पुन वैचनमानर्थक्यपरिहाराय रक्षणया वैश्वदेविकस्य तन्त्रस्य विधान विज्ञायते प्रसूनादि तत्र भवतीति, न तच्छास्त्रलक्षणम् । तस्मान्नास्ति तन्त्रस्य नियम इति ।

सोम— पूर्वोक्तप्रसूननियमोपजीवनेन अस्य प्रवृत्त्या संगति । सूत्रे तच्छब्दः प्रसूनपरः ।

वि— 'द्यावापृथिव्यतन्त्री स्यात् सर्वे वा तन्त्रिणो, ऽग्रिम. । प्रैषन्यायात् प्रसूनस्य तन्त्रवादकत्वत. ॥, प्रसूनस्य नोपदिष्टमविरोधात् समाश्रितम् । तन्त्रिनियतो यत्र नात. सर्वेऽत्र तन्त्रिण. ॥'

भाट्ट— न चैव विरुद्धेष्वपि नवप्रयाजत्वादिषु द्यावापृथिव्यस्यैव धर्मानुग्रहादितरयो. प्रसङ्गसिद्धिः, इतराभ्यां धर्मानुसरणेन प्रसूनमयत्वस्य तदनुपकारकत्वेन तयो इतरयो प्रसङ्गित्वाभावात् । अतश्च नवप्रयाजत्वादिविरुद्धधर्मविषये गुरुत्वबहुत्वाभ्यामितरयोरेव तन्त्रित्वादेकपाल्य प्रसङ्गित्वमेव । अविरुद्धसर्वधर्मांशे तु तन्त्रित्वमेव, सहोपक्रमेण अप्रमाणविशेषत्वात् । अत्र नवत्पद्मानामविरोधात् नवप्रयाजत्वमपि न विरोधीति प्रतिभाति । याज्ञिकास्तु तथा नानुतिष्ठन्ति । पञ्चप्रयाजत्वे तु यत्र उत्तमप्रयाजादिना एकमात्रविनोपता, तत्र विरुद्धाविरुद्धोभयांशेऽपि प्रसङ्ग एव ।

मण्डन-- ' न द्यावापृथिवीयस्य तन्निता ऽऽग्रयणे भवेत् । '

शंकर-- ' सर्वेषा तन्नितेह च । '

आग्रयणे दक्षिणारूपयोर्वासोवत्सयोः प्राकृतान्वाहार्यधर्माः कर्तव्याः ॥

अर्थापत्तेस्तद्धर्मा स्यादनभिधानात् ऽभिसंयोगात् । १०।३।७।३५ ॥

भाष्यं-- तत्रैव वाससि वत्से च संशयः अन्वाहार्यधर्माः कर्तव्याः, उत नेति । किं प्राप्तम् ? न तावन्न्याय उच्यते कर्तव्या इति । तेन अकर्तव्या इति मन्यामहे इति । एवं प्राप्ते ब्रूमः । अर्थापत्तेस्तद्धर्मा वत्सः स्यात् तद्वर्गेक च वासः । साधनविशेषनिबन्धना हि ते धर्माः, नान्वाहार्यनिबन्धनाः । तस्मादन्यस्मिन्नपि तत्कार्यापन्ने भवितुमर्हन्तीति । कथं पुनर्वासोवत्स तत्कार्यापन्नमिति ? निमित्ततया आख्याय परिक्रयेण, दक्षिणेति तया अभिसंयोगो भवति ' वासो दक्षिणा ' ' वत्सः प्रथमजो दक्षिणा ' इति । तस्माद्वासोवत्सौ अन्वाहार्यधर्मकौ स्यातामिति ।

सोम-- सूत्रार्थस्तु- वासोवत्सं अन्वाहार्यधर्मकं स्यात् अन्वाहार्यकार्यपरिक्रयनिमित्तदक्षिणाशब्दसंयोगात् इति ।

वि-- ' अन्वाहार्यस्य धर्मोऽत्र न कार्यः क्रियतेऽथवा । , न तद्धर्मत्वतो, मैव साधनत्वप्रयुक्तितः ॥ '

भाट्ट-- वैकृती दक्षिणा प्राकृतदक्षिणाकार्यापन्नत्वात् प्राकृतान्वाहार्यादिदक्षिणाधर्मान् लभते इत्यपि तथैव ।

मण्डन-- ' वत्सादिरन्वाहरणादिधर्मा । '

शंकर-- ' तत्रान्वाहार्यधर्मता । '

* आग्रयणे द्यावापृथिव्य एककपालः । आ. ७।१।८। २१, * आग्रयणे द्यावापृथि०ैककपाले चातुर्मास्यवैश्वदेविकद्यावापृथिव्यैककपालनिष्पन्नस्य अतिदेशः । ७।३। १०।२६-२७.

आग्रयणे वासोवत्सयोः अन्वाहार्यस्थानापन्नयोरपि अभिघारणस्य बाधः ॥

तयाऽभिघारणस्य । १०।२।१०।२८ ॥

भाष्यं -- आग्रयणे श्रूयते, ' वासो दक्षिणा ' ' वत्सः प्रथमजो दक्षिणा ' इति । तत्रायमर्थः समधिगतः अन्वाहार्यधर्मा वाससि वत्से च कर्तव्या इति । अथायमर्थः सांशयिकः, किमभिघारणं कर्तव्यं नेति । किं तावत्प्राप्तम् ? अर्थापत्तेः कर्तव्यमिति । एवं प्राप्ते ब्रूमः । तथाऽभिघारणस्य । किम् ? अक्रियेति । अभिघारणं हि अन्वाहार्ये स्वादिम्ने क्रियते । स्वादिमा हि ओदनस्य परिक्रये उपकरोति । न च वाससि वत्से च स्वादिम्ना प्रयोजनम् । तस्मात्तत्राभिघारणं न स्यादिति ।

सोम-- इह तु अदृष्टार्थत्वाय प्रयोजनं इत्युत्थितेः संगतिः ।

वि-- ' अभिघारोऽस्ति नो वाऽन , शक्यत्वाद्वत्सवाससोः । अस्त्यन्वाहार्यवत् , मैवं स्वादुताया असंभवात् ॥ '

भाट्ट-- अभिघारणस्य तु प्रकृतौ अदृष्टार्थत्वात् वासोवत्सादावपि करणे प्राप्ते, ओदनस्वादिमाऽर्थत्वेन दृष्टार्थत्वसंभवे अदृष्टार्थत्वकल्पनाऽनुपपत्तेः स्वादिम्नश्चेह प्रयोजनाभावादकरणमेव ।

मण्डन-- ' न चाभिघारो वसने च वत्से । '

शंकर-- ' उभयोरभिघारस्य । ' बाधः इत्यनुषङ्गः ।

आग्रयणेषु तत्तत्संवत्सरोत्पत्तिकालावधिकः संवत्सरो ग्राह्यो न चान्द्रादिः ॥

' संवत्सरादपेतदधि भवति ' इति श्रुतौ ' द्वादश मासाः संवत्सरः ' इत्यादिश्रुत्यन्तरसिद्धचान्द्रादिसंवत्सरान्यतमः एव विकल्पेन ग्राह्यः । इति प्राप्ते , ' संवत्सरे सम्यानि पच्यन्ते ' इत्यादिषु लोके पक्वसस्यपाकावधिसमानसस्यपाकावधिकालस्यापि संवत्सरत्वेन व्यवहारात् सस्यपाकनिमित्तकर्मसु तस्यैवोपस्थित्या नियमसंभवे विकल्पायोगात् द्वादशमासन्यूनातिरेकयोरपि ' संवत्सरादधि ' इति वाक्यं । ( ' परुत् परारि ऐषमोऽ ( मस् ) ब्दे पूर्वे पूर्वतरे यति ' इत्यमरः । परुत् पूर्वे अब्दे, परारि पूर्वतरे अब्दे, ऐषमः यति वर्तमाने अब्दे ) । सङ्कर्ष. ३।१।१७.

आग्रयणेषु तत्तद्द्रव्यकालयोर्नियमो न विकल्पः ॥

' आग्रयणेनान्नाद्यकामो यजेत ' इति विधाय वाक्यान्तरेण कालानां द्रव्याणां च विधानात् अग्निहोत्रद्रव्याणामिव विकल्पः स्यात् । इति प्राप्ते , मतो-

ऐन्द्रेन कालद्रव्याद्यनेकगुणविधाने वाक्यभेदात् विशिष्टविधित्वावश्यंभावेन त्रयाणामपि आग्रयणानां अभ्यासाद्भेदः। नैमित्तिकानामपि अत्राद्यत्रयाणामन्येन काम्यत्वाऽपि। कौपीनकिंनाशणे तु श्यामाकाग्रयणं विधाय ‘ सप्तदश सामिधेन्यः, सद्वन्तावाज्यभागौ ’ ( ४।१२ ) इत्यादिना प्राकृताङ्गानि उद्दिश्य गुणविशेषान् विधाय, यवाग्रयणादीन्सतो विधाय ‘ एतत्तस्यैवैतद् ब्राह्मणं ’ ( ४।१२ ) इति वाचनिकातिदेशकथनात् स्पष्टः कर्मभेदः, अतो न द्रव्यविकल्पः, नापि कर्मविकल्पो निमित्तभेदात्। ‘ द्विर्वा एष आदित्य. ’ इत्यादिना अयनभेदेन आवृत्तिश्रुतेश्च। संकर्ष ३।१।१६.

## आग्रयणस्थव्रीहिस्तुत्या प्रकृतौ द्रव्यविधि. ॥

‘ व्रीहिभिरिष्ट्वा व्रीहिभिरेव यजेत आ यवेभ्य ’ इत्यनेन व्रीहिकाल्यवकालान्तराले व्रीह्याग्रयणाभ्यासो विधीयते यजिशब्देन प्रकरणिनः एवोपस्थितेः। इति प्राप्ते, अन्तरालकाले नित्यप्राप्तयोर्दर्शपूर्णमासयो द्रव्यनियमविधिपरत्वे संभवति अत्यन्ताप्राप्ताभ्यासपरत्वमयुक्तम्। ‘ व्रीहिभिरेव ’ इत्येवकारेण यवनिरासप्रतीते.। संकर्ष. ३।१।१५

## आग्रयणाकरणे ग्राम्यधान्यभक्षणस्य निषेध.॥

‘ तस्मान्निष्ट्वा आग्रयणेन , नवस्याशितव्यम् ’ इति निषेध. फालकृष्टारण्यासनस्येव , न व्रीहियवाशनस्य ‘ या फालकृष्टास्तासामितरेण ’ इति वाक्यशेषे फालकृष्टकीर्तनेन विशेषे व्यवस्थापनात्। तस्मात् फालकृष्टातिरिक्ताना ग्राम्याणां भक्षणं अनियतम्। इति प्राप्ते, अशनस्य द्रव्यसामान्येन करणाद्भेदेन प्रवृत्ते विशेषैक विषयत्वेन सामान्यस्य विशेषे पर्यवसानाय वाक्यशेषापेक्षत्वेऽपि निषेधे नवधान्यसामान्याशनविषयकतानुपपत्तेरभावेन विधिना अनाकाङ्क्षितस्य वाक्यशेषेण अवमर्शनात् फालकृष्टपदं छन्निवत् लक्षणया ग्राम्यमात्र इति सर्वग्राम्याणामेव भक्षणप्रतिषेध.। संकर्ष. ३।१।१०.

## आग्रयणाकरणेऽपि मुद्गादिशमीधान्यानां भक्षणनिषेधो नास्ति ॥

मुद्गादिशमीधान्यानामपि पक्वौषधित्वाविशेषेण निषेधे प्राप्ते, तेषां अयागयोग्यत्वादेव न निषेध। संकर्ष. ३।१।१२.

## आग्रयणाकरणेऽपि शाकपक्वौषधीनां भक्षणे न दोषः ॥

‘ तस्य नाश्नीयात् ’ इति वचनान्तरेण शाकादीनामपि भक्षणनिषेधे प्राप्ते, तेषां यागयोग्यत्वाभावेन ‘ देवा ओषधीषु पक्वासु आजिमीयु., ता इन्द्राग्नी प्रथममुज्जयता ’ इत्युपक्रम्य नवाशननिषेधेन देवेभ्यो यागयोग्यानां धान्यानां पक्वानामेव तेभ्य. अनिष्ट्वा भक्षणस्य निन्दया पक्वशाकानां हरितयवादीनां च भक्षणे याथाकाम्यम्। संकर्ष. ३।१।११.

## आग्रयणेष्टिन्याय । कांस्यभोजिन्यायः ।

आग्रयणे यथान्यायद्यावापृथिव्यानुरोधेन मुख्यस्य ऐन्द्राग्नादेरपि तिरोभावाभावात् प्रभूतबर्हिषो नियम. ॥

अधिकश्च गुण साधारणेऽविरोधात् कांस्यभोजिवदमुख्येऽपि । १२।२।१४।३४ ॥

भाष्य— आग्रयणे द्यावापृथिव्य एककपाल. । स वैश्वदेविकैककपालप्रकृतिः । तस्य धर्म प्रभूतं बर्हि । इतरेषां प्रभूतमप्रभूतं वा । तत्र किंनियमः, उत प्रभूतमेवेति विचार । आग्रयणे तु ऐन्द्राग्नस्य मुख्यत्वात् अनियमे प्राप्ते, उच्यते । साधारणे तस्मिन्, दार्शपौर्णमासिकैन्द्राग्नादीना योऽयमधिको गुणो द्यावापृथिवीयस्य वैशेषिक, स अमुख्येऽपि सति द्यावापृथिवीये नियम्येत अविरोधात् । कांस्यभोजिवत् । तत्रथा शिष्यस्य कांस्यपात्रभोजित्वनियम., उपाध्यायस्य न नियम । यदि तयोरेकस्मिन् पात्रे भोजनमापद्यते, अमुख्यस्यापि शिष्यस्य धर्मो नियम्येत, मा भूद्धर्मलोप इति । एवमिहापि न स्यादनियम. ।

सोम— पूर्वत्र अनियमाभावेऽपि इह तथाविधबाधकाभावात् अनियमोऽस्तु इत्युच्यते. सगति । प्रभूत पृथिव, इतरेषात् पुनरल्पत्व वा । अप्रभूतस्य न तत्त्वेन ( अप्रभूतत्वेन ) अङ्गता , किंतु बर्हिर्मात्रत्वेन । ततश्च

अप्रसूनत्वस्य बाधेऽपि शास्त्रार्थस्य बर्हिर्मात्रस्य बाधाभावात् न कस्य चिद्वैगुण्यम्। सूत्रार्थस्तु— तन्त्रसाधारण्ये अधिको गुणः प्रसूनत्वलक्षणः गुणिनि अमुख्येऽपि सति विरोधाभावात् नियम्येत। यथा शिष्यस्य कांस्यभोजित्व-नियमः, उपाध्यायस्यानियमः। यदि द्वयोरेकस्मिन् पात्रे भोजनमापतेत, तत्र अमुख्यस्यापि शिष्यस्य धर्मोऽनुरुध्यते तद्वत् इति।

वि— 'बर्हिराग्रयणे किं चित् प्रसूनं वा, बहुत्वतः। प्राधान्यादन्त्ययो, नैवमलोपात् कांस्य-भोजिवत्॥'

भाट्ट— आग्रयणे 'ऐन्द्राग्नो द्वादशकपालः वैश्वदेवश्चरुर्द्यावापृथिव्य एककपालः' इति त्रयो यागाः श्रुताः। तत्रैककपालो वैश्वदेविकैककपालप्रकृतिक इत्युक्तम्। तेन तत्र प्रसूनमयं बर्हिः। आद्ययोर्द्वयोर्दर्शपूर्ण-मासातिदेशादनियमः। तत्र अपन्यैककपालद्यावापृथिव्यानुरोधेन मुख्ययोरनेकयोरपि प्रसूनमयत्वनियमः एव। नहि तयोरनियमो नाम कश्चित् पदार्थोऽस्ति, येन अपन्यैक-श्रुतित्वान्नियमो बाध्येत, बर्हिर्मात्रं तु नवकम्। अतश्च कांस्यभोजिन्यायेन दुर्बलानुरोधेनापि प्रसूनमयत्वग्रहणे न कश्चिद्दोषः।

मण्डन— 'अमुख्योऽपि गुणो ग्राह्यो येनान्येऽपि गुणान्विताः।'

शंकर— 'बर्हिः सूनं त्वाग्रयणे।' सून प्रसून पुष्पितम्।

● आग्रयणेष्टयां सामिधेनीसाप्तदश्यम्। भा. १०।८।९।१७.

( प्राचीनः आग्रयणशब्दः यागविशेषपरः, अग्रे तु सोमयागस्थग्रहविशेषपरः )

● आग्रयणग्रहो ज्योतिष्टोमे प्रातःसवने गृह्यते। वि. २।३।१, ● आग्रयणपात्रात् षोडशी ग्रहो ग्राह्यः। उक्थ्यग्रहणोत्तरं च तद्ग्रहणम्। १०।५।१०. ● आग्रयणस्थाली द्विदेवत्यशेषः आदित्यस्थाल्याः सकाशात् आगच्छति। आग्रयणस्थाल्याः पात्नीवतो गृह्यते। ३।२।१३. ● आग्रयणाग्राणि अहानि व्यूढे द्वादशाहे। पे.

☛ आग्रयणाग्रताया विषुवति निवेशः॥

जगत्साम्नि सामाभावादृक्तः साम तदाख्यं स्यात्। ५८॥

भाष्यं— ज्योतिष्टोमे श्रूयते, 'यदि रथन्तरसामा सोमः स्यादैन्द्रवायवाग्रान् ग्रहान् गृह्णीयात्, यदि बृहत्सामा शुक्राग्रान्, यदि जगत्सामा आग्रयणाग्रान्' इति। आग्रयणाग्रानित्येतदुदाहरणम्। तत्र संशयः किमाग्रयणाग्रतायाः प्रकृतौ निवेशः, उत विकृताविति। किं प्राप्तम्? प्रकरणानुग्रहात् प्रकृताविति। यदि जगत्सामेति ज्योतिष्टोमः एवोच्यते, येन केनचिदभिसंबन्धेन गुणेन क्रियया वा। एवं प्राप्ते, ब्रूमः। जगत्साम्नि श्रूयमाणेऽपि ऋक्तः साम तदाख्यमित्यध्यवसीयते। कुतः? सामाभावात्। नहि कृत्स्नेऽपि सामवेदे जगन्नाम सामास्ति। तस्माद्यत्र जगत्यामुत्पन्नं साम, स जगत्सामा। स विषुवान्। ननु शुक्राग्रो विषुवानित्युच्यते। नैष दोषः। स कामाय भविष्यति। तस्माद्विकृतौ विषुवति निवेश इति।

सोम— यथा ( चतुर्थेचतुर्थेऽहनि इति ) वीप्सायां यथाकथंचिदनुवादत्वं तथा, एवं ज्योतिष्टोमे एव जगत्सामशब्दस्य कथंचिदन्वय इत्युपपादनात् ( दृष्टान्त- ) संगतिः। जगत् साम अस्येति बहुव्रीहिः। जगत्या साम अस्येति व्यधिकरणबहुव्रीहिरपि संभवति। अत्र जगतीशब्दपर्यायो जगच्छन्दः, छान्दस ईकारलोपो वा बोध्यः। सूत्रार्थस्तु— 'यदि जगत्सामा' इत्यत्र जगत्साम्नः अभावात् ऋक्तं साम ऋक्संबन्धात् तदाख्यं जगच्छन्दाभिधेयं स्यात् इति। एवं वदतः सूत्रकारस्य समानाधिकरणसमास एवाभिप्रेतः।

वि— 'प्रकृतौ विकृतौ वा स्याद् ग्रहेष्वाग्रयणाग्रता।, आद्यः प्रकरणा, दन्त्यो जगत्सामत्वसंभवात्॥'

मण्डन— 'मतेऽन्त्यसाम सर्गे विकृते।'

शंकर— 'विषुवाग्रयणाग्रता।' १६.

पे— 'विभ्राड् बृहत् पिबतु सोम्यं मधु' इति जगतीच्छन्दस्कायामृचि उत्पन्नं साम जगत्साम।

● आग्रयणाग्रत्वं ज्योतिष्टोमविकृतिभूते विषुवति बृहत्स्तोत्रस्य जगत्सामत्वे सति कर्तव्यम्। वि. २।३।१, ● आग्रयणाग्र पर्यायेषु, द्वादशाहे व्यूढे चतुर्थस्य-

वादः । भा. २।२।५।१३–१६. * आघारशब्द. क्रियावाची, न द्रव्यवाची । वि. २।४।८, * आघारशब्दः यौगिकं कर्मनामधेयम् । यस्मिन् कर्मणि नैर्ऋतीं दिशमारभ्य ऐन्द्रीं दिगमवधि कृत्वा सतत्या धृतं क्षार्यते, तस्य कर्मण एतन्नामधेयम् । आघारशब्दश्च 'घृ क्षरणदीप्त्योः' इत्यस्माद्धातोरुत्पन्नः क्षरद् धृतमाचष्टे । २।४।८.

**आघाराग्निहोत्रमरूपत्वात् । २।२।५।१३ ॥**

'आघारमाघारयति' इति श्रूयते । तथा 'ऊर्ध्वमाघारयति' 'ऋजुमाघारयति' 'सततमाघारयति' इति । इदं च– 'अग्निहोत्रं जुहोति' तथा 'दध्ना जुहोति' 'पयसा जुहोति' इति । तत्र संदेहः किमूर्ध्वमाघारयति, दध्ना जुहोतीत्यादिभिराघारा होमाश्च विहिताः, तेषां 'अग्निहोत्रं जुहोति, आघारमाघारयति' इत्येतौ समुदायानुवादौ उतापूर्वयो राघारहोमयोर्विधातारौ इति । पूर्वमेव वाक्यत्वानुरोधेन दिव्यादियुक्तानां अर्थवादत्वेनैव अन्वयोपपत्ते अन्ताराबाक्यस्यैव विधित्व, न समुदायानुवादकत्वमित्युक्तम् । इह तु तथाभूतदोषाभावात् पुनः सम्पवतिष्ठते । अभाव पूर्वपक्षिणोऽभिसन्धि – 'आघारमाघारयति' इत्यनेन सह 'ऊर्ध्वमाघारयति' इत्यादीनां न तावदेकवाक्यत्व प्रतीयते । नापि 'अग्निहोत्रं जुहोति' इत्यनेन सह । 'दध्ना जुहोति' इत्यादीनां तावत् श्रुतिः प्रकाश्यते । अतो नापेक्षादानम् । तेनोर्ध्वादियुक्तवाक्यानामूर्ध्वादिगुणविशिष्टाघारकर्मविधायकत्व, दध्यादियुक्तानां च दध्यादिगुणविशिष्टहोमविधायकत्वमिति । तदुक्तं 'न चापामेकवाक्यत्वं न च स्तुतिपरा श्रुतिः । ऐकान्तिको विधिस्तेन गुणवत् कर्मगोचरः ॥' इति । (वा. पृ ४९७) तथा सति ऊर्ध्वादिगुणवाक्यविहितानामाघारकर्मणां 'आघारमाघारयति' इति समुदायानुवादः । नैव, ऐतस्य गुणविधानासंभवात् । प्रवर्तनात्मको हि विधिः क्रियायामेव पुरुषं प्रवर्तयति । गुणश्च न क्रिया । अतः कथं गुणो विधीयते ? किन्तु गुणान्तरयो विधिभूयते, किंतु आख्यातपदस्य । न च समानपदस्थधात्वर्थभावनापरित्यागेन न पदान्तरस्थं गुणं विधातुमर्हते । न च गुणस्य कारकतया भावनाविशेषणत्वात् भावनास्थेनापि विधिना गुणो विधास्यते इति वाच्यम् । यतस्तत्रापि किं भावनां विहाय निष्कृष्ट एव गुणः कारकतया विधातव्यः, उत भावनाकारकतया ? न तावन्निष्कृष्टो गुणो विधातुं शक्यते, विधेः क्रियाश्रयत्वस्योक्तत्वात् । भावनाकारकतया च विधानं भावनामन्तरेण न सम्भवतीति भावनाविशिष्टो विधीयते इत्युपपद्यते । तेन यस्तुत. शब्दतश्च सर्वत्र गुणविशिष्टभावनाविधानमेव वाच्यम् । न तु क्वापि केवलगुणविधानमिति । तदुक्तं 'विधित्वं प्रत्ययोपात्तं न नामपदमृच्छति । तद्विधिर्भावनातश्चेत् सैव पूर्वं विधीयताम् ॥' इति । (वा पृ. ४९७) ननु ऊर्ध्वादिवाक्येषु न द्रव्यं, नापि देवता समस्ति । दध्यादियुक्तवाक्येषु च द्रव्यसद्भावेऽपि देवता नास्ति । द्रव्यदेवते हि कर्मणो रूपम् । अतः कथमेभिः कर्मविधानम् ? कथं वा 'आघारमाघारयति' 'अग्निहोत्रं जुहोति' इति वाक्यद्वयेन समुदायद्वयानुवादः इति निश्चीयते ? न च वाच्यम्– 'चतुर्गृहीतं वा एतदभूत्तस्याघारमाघार्य' इत्यनेन आघारेष्वाज्यद्रव्यविधानम् । 'इत इन्द्र ऊर्ध्वो अध्वर इत्याघारमाघारयति' इत्यनेन विहितमन्त्रद्वारेण मान्त्रवर्णिकी देवताप्राप्तिः । तथा 'यदग्नये च प्रजापतये च सायं जुहोति' 'यत् सूर्याय च प्रजापतये च प्रातर्जुहोति' इत्येताभ्यां दध्यादिहोमेषु कालभेदेन देवताविधान' इति । यतो नायमपूर्वपक्षी येनलगुणविधानं किंचिदपि पश्यति, सर्वत्रैव विधेः क्रियाश्रयत्वोक्तत्वात् । तेन सर्वाण्येवैतानि वाक्यानि गुणविशिष्टविधायकान्येव, न तु वाक्यान्तरस्थविधानुवादेन केवलगुणविधायकानि । अतोऽत्र यस्मिन् वाक्ये क्रियापदमस्ति, तत्र सैव क्रिया गुणविशिष्टा विधीयते । यत्र नास्ति, तत्र अध्याहृतैव क्रिया गुणविशिष्टा विधीयते । न चैवं सति विशिष्टविधायकानि गुणस्याक्रियारूपत्वेन विधिसंस्पर्शाभावात् कथं विधिदोषणीभूतगुणोपादानमिति वाच्यम् । यतोऽयम्यः पूर्वपक्षी एव मन्यते 'निष्कृष्टगुणविधानं हि न संभवति । यदा तु भावनाख्यो विधिस्तेनैव व्यापारेण भावनाविधानं सद्गुणविशेषणविशिष्टमेव विधत्ते, न तु विशिष्टविधिं पश्यति, तदा न किंचिद्दुष्यत्यम् ।' अतः कथं पूर्वपक्ष. ? इति ।

चान्स्वाहा इत्याघारमाघारयति ' इति वचनेन मन्त्रविधानात् मान्त्रवर्णिकदेवताल्याभः। तथा अग्निहोत्रेऽपि दध्यादिवाक्यैर्द्रव्यविधानं स्फुटमेव । तथा ' अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा इति सायं जुहोति, सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति प्रातर्जुहोति ' इति वचनद्वयविहितमन्त्रद्वयबलेन सायंप्रातर्होमयोर्मान्त्रवर्णिकाग्निसूर्यदेवताप्राप्तिः। तथा ' यदग्नये च प्रजापतये च सायं जुहोति, यत्सूर्याय च प्रजापतये च प्रातर्जुहोति ' इति वचनद्वयेन सायंप्रातर्होमयोरेव प्रजापतिदेवताऽन्वयः। तेन सायंहोमे अग्निश्च प्रजापतिश्च देवता, प्रातर्होमे सूर्यश्च प्रजापतिश्च देवतेति। न च ' यदग्नये च प्रजापतये च, यत्सूर्याय च ' इति वचनद्वयेनैव अग्निप्रजापत्योः सूर्यप्रजापत्योश्च सायंप्रातर्होमयोर्विधानमिति वाच्यम् । प्राप्ते कर्मण्येकेन वाक्येन नानेकगुणविधानं संभवति, अन्यथाविधाने सति अग्निसूर्ययोर्मान्त्रवर्णिकप्राप्तिदर्शनेन प्रजापतिमात्रविधानात् । अतो वाक्यद्वये प्रजापतिरेवैको विधीयते । अन्यत् सर्वमनूद्यते इति । प्रयोजनं पूर्वपक्षे आघाराग्निहोमानां बहूनामनुष्ठानं, सिद्धान्ते तु नैवमिति । सूत्र तु– आघाराग्निहोत्रयोः कर्मचोदना कर्मविधानभावनारूपस्य शब्दार्थस्य प्रयोगभूतत्वात् तत्संनिधेः भावनासंनिधानात् गुणार्थेन गुणविधानार्थेन पुन श्रुतिः निधेः पुनरुच्चारणमित्यर्थः । मीमा.

☒ आघाराग्निहोत्रमरूपत्वात् । २।२।५।१३ ॥

आघारश्च अग्निहोत्रं च तयोः समाहारः आघाराग्निहोत्रम् । ' ऊर्ध्वमाघारयति ' ' संतत्तमाघारयति ' ' ऋजुमाघारयति ' इत्युक्तानां ऊर्ध्वादीनां समुदायस्य ' आघारमाघारयति ' इत्यनुवादः । तथा ' दध्ना जुहोति ' ' पयसा जुहोति ' इत्यादिभिरुक्तानां समुदायस्य ' अग्निहोत्रं जुहोति ' इत्यनुवाद, नापूर्वविधिः । कुतः ? अरूपत्वात् । स्वकीयेन द्रव्यदेवतात्मकेन रूपेण रहितत्वात् । प्रकृतानां च रूपवत्त्वात् एतौ प्रकृतानुवादौ इति पूर्वः पक्षः ।

आघाराग्निहोत्रमरूपत्वात् ( २।२।५।१३ ) इत्यत्र आघाराग्निहोत्रयो द्वन्द्वसमासाभावेन ' अभ्यर्हितं पूर्वं निपतति ' इत्यस्याविषयत्वात् अल्पत्वात्–तरत्वेन आघारशब्दस्य पूर्वनिपातो युक्तः । सु. पृ. ७८८, पूर्वाधिकरणपूर्वपक्षसूत्रात् पौर्णमासीवत्पदानुषङ्गेण आघाराग्निहोत्रं पौर्णमासीवत् समुदायानुवादः इत्येवमेतत् सूत्रं व्याख्यातं भाष्येण । पृ. ७६०, आघाराग्निहोत्रवाक्योत्पादितयोः अज्ञातरूपयोः कर्मणोः फले विधानाशक्तेः कथंभावाकाङ्क्षाप्रकरणायोगात् अधिकारान्तरस्य च प्रकरणस्य वाक्येन अनपेक्षणात् विरोधः सिद्धान्ते । पृ. ७६४.

संज्ञोपबन्धात् । १४ ॥

' अग्निहोत्रं जुहोति ' ' आघारमाघारयति ' इति अग्निहोत्रसंज्ञकं होमं जुहोति, आघारसंज्ञकं कर्म करोति इति संज्ञायाः कर्मनामधेयस्य उपबन्धो भवति । न नाम कर्मस्वरूपं ज्ञायते । तस्मात् प्रकृतानुवादौ आघाराग्निहोत्रशब्दौ इति पूर्वपक्षे हेत्वन्तरम् ।

अप्रकृतत्वाच्च । १५ ॥

द्रव्यदेवतयोः प्रकृतत्वाभावात् प्रकरणाम्नातवाक्यान्तरेणापि अनवगतत्वात् ' अग्निहोत्रं जुहोति ' ' आघारमाघारयति ' इत्यनयोः विधायकत्वं न संभवति, किंतु प्रकृतानुवादकत्वं इति पूर्वपक्षे हेत्वन्तरमुक्तम् ।

अत कुतूहल– ननु ' दध्ना जुहोति ' इत्यादिवाक्ये गुणविधानात् विशेषावगमः संभवति इत्यत आह । प्रकृते कर्मणि दध्यादिगुणविधिः इति वक्तव्यम् । तच न संभवति, कस्य चित् कर्मणः अप्रकृतत्वात्–इति ।

अत्र वार्तिकं– ननु च प्रकरणात् विशेषोऽवगम्यते । अत आह अप्रकृतत्वाच्च इति । नहि उत्पत्तिवाक्ये अस्ति कर्मणां प्रकृतम् । फलसम्बन्धोत्तरकालभेदः कथंभावाकाङ्क्षस्य प्रकरणस्य प्रयोगवाक्याधीनत्वमुत्थानात् । ननु च ( आघारे ) प्रकरणाद्विशेषो लभ्यते । तथापि सूत्रम् । नहि आघारः प्रकृतः, परप्रकरणपतितत्वात् । दर्शपूर्णमासप्रकरणमेतत् सकलं, नान्यस्य प्रकरणस्य अन्यथाऽवकाशः । संनिधेर्विशेषावगम इति चेत्, अनारभ्य सूत्रम् । न कल्पनीयत्वेन अत्र प्रकृतेरपि संबन्धात् । तस्मात् समुदायानुवादौ–इति ।

चोदना वा, शब्दार्थस्य प्रयोगभूतत्वात्, तत्संनिधेर्गुणार्थेन पुनःश्रुतिः । १६ ॥

प्रादेशिकत्वात् । आत्मैव यत् शरीरशून्ये देशे नोपलभ्यते, तत्रापि प्रादेशिकत्वेन ज्ञानस्य हेतुः । यत्रैव ज्ञानं तत्रैवोपलभ्यते इति । परिहरति– ) चलनात्मिका क्रिया अङ्गीकृत्य अनित्यक्रियता उक्ता, न पुनर्भोगोपचावपि । तस्मात् मुमुक्ष्यते कर्तृभोक्तृत्वैवात्मेति । तस्मादुपपन्नोऽयं ग्रन्थः 'अहमिदमदर्शं' इति । विषयप्रत्यभिज्ञा च प्रत्यभिज्ञाया इति शब्दाधिकरणे उपन्यस्यते (स एवायं गकार इति येयं प्रत्यभिज्ञा, सा पूर्वापरानुभवानुवर्तिस्थिरानुगामिप्रत्यभिज्ञानिमित्ता इति शब्दाधिकरणसमीपे प्रत्यभिज्ञेयं उपन्यस्यते, स्थिरेऽनुभवितरि सिद्धे विषयप्रत्यभिज्ञा यथा स्यादिति ) । 'प्रत्यगात्मनि नैतद्भवति' इति कस्यार्थस्य सिद्धये? भोक्तृत्वस्यैव । कथं? प्रत्यगात्मनि भोगदर्शनात् । यदि परोऽपि अहंप्रत्ययस्य विषयतामापद्यते भोक्तृत्वमपि प्राप्नोति । भोक्तृता चात्मा क्युक्तम् । 'न परम' परो ह्यसौ योऽन्योऽनुद्दिष्टवानिति प्रत्यभिज्ञाऽनुपपत्तिं च । 'यथायमहंशब्दः' इति अहंशब्दोपन्यासः तर्हि किमर्थः? यदि परमपह्नवाय ('न वयं अहं इतीमं शब्दं प्रयुञ्ज्मानं अस्मिन्नर्थे हेतुत्वेन व्यपदिशामः' इत्येनं अपह्नवं कर्तुम्) । नापह्नवाय, (किंतु) परप्रतिपत्तये । किमिति तर्हि अपह्नवः? साक्षात् हेतुत्वाशङ्कानिराकरणाय । परेण हि साक्षात् हेतुता मन्यमानेन आत्मन्यपि अहंशब्दोऽस्ति इति प्रदर्शितं 'परत्रापि अहंशब्दो भवन्या दृश्यते' इत्येवमादिना । 'न वयं' इति न साक्षात् हेतुतया इदमुपन्यस्तं इति प्रकटितम् । हेत्वर्थप्रदर्शनार्थस्तु शब्दप्रयोगः (प्रत्यय एव तु साक्षात् हेतुः) । ननु च 'अहं गच्छामि' इति न हेत्वर्थप्रदर्शनमात्रतया शक्यते परिहर्तुम् । अत्र हि अहंप्रत्ययोऽपि व्यभिचार्येव उपलभ्यते अनात्मात्मकत्वादात्मनः । तस्मात् भ्रान्त एवात्मावलम्बनतामापद्यते इत्याशङ्कनीयमिदम् । किमिति निराशङ्केन गम्यते? (उत्तर– ) किमत्राशङ्कनीयम् (नास्त्येवाशङ्कनीयम् । कस्मादित्याह– ) इदंप्रत्ययप्राप्तं हि कार्यकरणम् । प्रत्ययान्तरप्राप्ते च वस्तुनि विरुद्धप्रत्ययान्तरालम्बनता औपचारिकी भवति, गौर्वाहीक इति यथा (न कदाचिदपि वाहीकः गोत्वप्रत्ययविषयतामापद्यते) । गौणः उपचारो इति चेत्, परिहृतं त्वयैव । तस्मात् असम्भिन्नेदंप्रत्यय एव अहंप्रत्ययः आत्मालम्बनम् । ब्राह्मणमपि अमुमेवार्थमनुवदति 'अशीर्यो न हि शीर्यते' इति अशीर्यतया भोक्तृत्वमात्मनः । विनश्वरं च विज्ञानं इति तद्व्यतिरिक्तालम्बनतामापादयति । व्यामोहोऽयं अहंकारग्रन्थिः इति न शक्यते वक्तुं 'यस्य च दुष्टं करणं, यत्र च मिथ्येति भवति प्रत्ययः, स एव असमीचीनः प्रत्ययो नान्यः' इति सिद्धान्तवादसार्थस्य । यदि परं ब्रह्मविदामेव निश्चयः 'यदुपलभ्यते तदसत्, यन्नोपलभ्यते तत् सत्' इति तमस्तेभ्यः । 'विदुषि नोत्तरं वाच्यं' इति अत्र परिहारः । तस्मात् यथार्थोऽयमर्थवादः 'स एष यज्ञायुधी यजमानः' इति ।

'आह यदि विज्ञानादन्यदस्ति विज्ञातृ, विज्ञानमपास्य तन्निदर्श्यतां इदं तत्, ईदृशं चेति' किमिदं चोद्यते? इदमत्र चोद्यते, तदेव न ज्ञायते (इति) । कथं न ज्ञायते? किं वा स विज्ञानस्य आत्मनोऽहंप्रत्ययः प्रमाणतया उपन्यस्तः, येनेदमुच्यते विज्ञानमपास्य तत् निदर्शयितव्यमिति, अनेकालम्बनालम्बनं हि यत्र ज्ञानं, तत्रेदं युज्यते वक्तुं 'इदमपास्य इदं निदर्शयितव्यं' इति, इदं तु एकात्मरूपेव संवित् । तस्मात् इदं व्युदसनीय इति तमसि पदम् (असमीक्ष्य प्रवृत्तम्) । अत्रोच्यते । अयमस्याभिप्रायः, ज्ञेयत्वे ह्यात्मनः ज्ञानज्ञातृणी न व्यतिरिक्ते शक्येते वक्तुम् । न च अपास्यैव ते वर्तिष्यतीति सिद्धम् । तस्मात् ज्ञानज्ञातृणी व्युदस्य पृथक्प्रमेयतया निदर्शयितव्यम् (इति) । 'अत्रोच्यते, स्वसंवेद्यः स भवति, नासौ अन्येन शक्यते द्रष्टुं' इति । किमिदमस्योत्तरमुपपद्यते? किमिति वा नोपपद्यते? सैवेयं पूर्वोक्ता (शुक्तिकारजते) एकालम्बनानेकाकारता प्रत्ययस्य अभ्युपगता भवति । अविवेकापराधोऽयं, नात्र आयुष्मतो दोषः । (एकग्रन्थेनाह– ) ननु च अहंप्रत्ययोऽयं 'अहमिदमदर्शं' इत्युपन्यस्तः, नाहमहमदर्शं इति । एवं च सति केयमनेकाकारता? तस्मात् 'अविवेकः परमापदां पदम्' (भारवि. २।३०) । यदि हि आत्मशब्दात्मनात्मा ज्ञेयतया उपन्यस्तः प्रमेयान्तरान्यता वा, तदा एतन्नोद्यमभविष्यत् । न तु सर्वथैवमनुः-

तेनैव संविदुपलम्भात् । तस्मात् प्रतिपत्तोरन्यत्र प्रसाधनम् । यच तेनैव तत् साध्यते । नहि यत् यस्यैव साध्यं, तत् तस्यैव साधकं भवितुमर्हति । तस्मात् साध्यमुत्तरम् । 'यथा पश्चिमसुम्भान्' इति अनेनापि निदर्शनेन कर्तृकरणान्तरनिषेध एव निर्धारितः ।

ननु चात्र कर्मान्तर ( पुरुषः ) करणान्तर ( चक्षुः ) सिद्धे भेदात् ( रूपात् ) निमित्तं निदर्शनं ? कर्मान्तराभावसामान्यात् । तस्मात् कारणदोषरहिता अविपरीता च संवित् आत्मासिद्धे हेतुः, भवतु कर्मान्तर मा वा ( अस्ति च आत्मन्यपि संवित् । अतः आत्मात्मा यद्यपि कर्मान्तर नास्ति ) उक्तं च 'यथाऽवगम्यन्ते अर्थाः तथा भवन्ति । न तथा, यथा नावगम्यन्ते' इति । अथापि ब्राह्मणं भवति 'शास्त्रातो वाधि' इति । व्याहृते अन्यत्र कर्तृतया कथ कर्तृकरणान्तराभावे गम्यते इति प्रश्नः । वाग्ग्रहणं च करणान्तराभावनिदर्शनार्थम् । 'आत्मज्योतिः सम्राडिति होवाच' इत्ययमर्थः पूर्वोत्तरपक्षभङ्ग्या प्रदर्शितः । एवं च 'अगृह्यो न हि गृह्यते' इति आत्मागमुपपन्नम् । ननु चात्र अप्रमादतेरोऽन्यथा । ( उत्तर– ) ननु न श्रुतं भवता 'आत्मज्योतिः सम्राट्' इति, इदमपि किं न श्रुतं द्वयोः श्रुत्योः तदनुरोधेन ( स्वयंज्योतिष्ट्वानुरोधेन ) अस्य अग्रहणश्रुतिः आपेक्षिकी, न पुनः आत्मग्रहणं अन्यथा ( परपुरुषाभिप्रायेण ) व्याख्यायते इति । का युक्तिः ? स्वयंज्योतिर्ग्रहणे गुणपादन्यासम्भवात्, अग्रहणे च आपेक्षिकतया उपपत्तेः । आत्मा ज्ञातव्यो मन्तव्यः इति चाविरोधात् । एवं न स्वयंज्योतिष्ट्वमुपपद्यते इति । ननु चैवं सति कथं परस्मै प्रतिपादयितुं शक्यते ? परस्य चार्थे वाक्यमारम्भः शास्त्रकाराणां श्रुतीनां च । स्वसंविदेव अभ्युपगमता प्रतिपद्यते । स च आत्मना संवेद्यते न परेणेति । सर्वपुरुषेषु च प्रत्यगात्मा सन्निहित इति सिद्धं । परसंवित्प्रतिषेधमुखेन चोपदेशाना तदुपदेशात्, तदिदं 'नेति नेति' इत्युपपन्नम् । ननु च सुखादयोऽपि स्वसंवेद्या एव, तेऽपि परेण नैव परस्य संवेद्यन्ते । कथं तेभ्योऽन्यतया परस्मै उपदिष्ट आत्मा भवति । तत्र भाष्यकारेण लिङ्गान्तरम्यतया परेणावगम्यन्ते एवेत्युक्तम् । तद्युक्तमिव, आत्मनोऽपि प्रसङ्गात् । तत्रापि चेष्टाऽनुमानगम्यमुपलभ्यते । अतः प्रतिपत्तोऽप्यसौ कथं निर्दिश्यते ? तदिदमनुपपत्तिनिरूपणम् । चेष्टा हि कारणदोषनिराकरणतया उपन्यस्ता । सुखादयस्तु धूमादिनेव लिङ्गादिगम्याः । यः पुनरनयोर्विशेषः ? अनेनापि ( चेष्टाऽनुमानेन ) परस्यैव ( आत्मनः ) संविदनुमीयते । अकार्यतया इति विशेषः । ( चेष्टा हि ज्ञानकार्यम् । तेन चेष्टातो यदनुमानं, न तथा सुखादीनां धूमादीनां सुखादिकार्यत्वात् अनुमानं कार्यतः । तेन चेष्टातो आत्मा प्रतीयते, धूमादिलिङ्गेषु सुखादयः प्रतीयन्ते । तेन परात्मा नानुमानतोऽपि परेणावगम्यते, सुखादयस्तु अवगम्यन्ते इति विशेषः ) । कथं पुनः अनवद्युपलभ्यते ( यदि अकार्यभूता चेष्टा आत्मनः, तदा कथं आत्मना असंवद्धा सती आत्मानमुपस्थापयति ), कथं वा अनुपलम्भितः पुरुषान्तराभिनिवेशः स्वात्मनि विपर्ययाशङ्कां निरस्यति । ( उत्तर– ) निर्विषयाशङ्कारिति ब्रूमः । ( प्रयत्नेनापि अन्विष्यमाणो यदा पुरुषान्तरे विपर्ययो नावगम्यते, तदा स्वविषये या विपर्ययाशङ्का, सा निवर्तते एव । चेष्टाऽनुमानेन हि यादृशी मम आत्मप्रतिपत्तिः, तादृश्येव अन्यस्यापीति प्रतिपत्तिः सदृशी प्रतीयते । अन्यस्य आत्मनः न विपरीतत्वमवगम्यते इति शङ्कानिवृत्तिः ) न चासद्रूपे संवन्धिना उपयुज्यते इत्युक्तम् । तत्तादुपपन्नमिदं श्रावय वचः । उपमाऽन्यत्र कथनो पालनमेरोस्यसत्ता । कथनं च प्रमाणान्तरपूर्वकं इति न व्यवहारयोर्विरोधः ।

यदप्युच्यते 'विज्ञानमयस्य सन्दिग्धता' इति, ननु च दृष्टोत्तरमेतत् 'स्वसंवेद्यः स भवति' इति । दृष्टोत्तरस्य च पुनरभ्यासो नोपपद्यते । अथायमभिप्रायः, नैवेदमात्मोत्तरम् ( इति ) । कस्य तर्हि तदुत्तरम् । यदि न कस्यचिदुत्तरं, किमेतावता तदुत्तरेण भवितव्यम् ? । ( दूषणवादी आह– ) ननु च तदनन्तराभिधानात् तदुत्तरमिति गम्यते । ( एकदेश्याह– ) पुनः प्रश्नाभिधानात् नोत्तरमवेहि । लिङ्गं कस्मात् बलीयः । ( सिद्धान्ती आह– ) तदिदमापातभ्रान्तम् । उभयं तथ्यैवोत्तरम् । 'स्वसंवेद्यः स भवति' इतीदमपि लिङ्गादेव उत्तरमवसीयते । व्याख्यातं चास्य तद-

प्राकरणसामर्थ्यम् । पुनः प्रश्न इदानीं किमर्थः ? अस्ति किं चिदनवलग्नम् । ( अवलग्नमाह— ) तस्य 'इदमहं वेद्मि' इति यदेतत्, नाकारान्तरकल्पना । विज्ञानविविक्तस्य तु ग्रहणं न प्राप्नोति व्यापृतावगमात् ( विषयज्ञानद्वारा अवगम्यते इति विज्ञानरहितस्य आत्मनो ग्रहणं न प्राप्नोति इति विज्ञानस्यापि ग्रहणेन भवितव्यम् ) । विज्ञानापगमे च रूपान्तरानुपलब्धेः पुनरपि शून्यता । ( विज्ञानं हि गृह्यमाणं केन चित् रूपेण ग्राह्यं, रूपरहितस्य ग्रहणाभावात् । तत्र च नीलादिव्यतिरिक्तरूपान्तरानुपलब्धेः तस्यैव नीलादिरूपता प्राप्नोति । ततश्च अर्थशून्यता ज्ञानानां प्राप्नोति ) । तस्मात् ( विज्ञानग्रहणनिबन्धने ग्रहणार्थे अवस्थिते ) विकल्प एवायं अहंकारग्रन्थिः । ( इदं तदवलग्नम् ) इति पुनरुपन्यासः ।

'यदि उपायेनैव प्रतिपेत्स्यति' इति किमभिप्रेतमुत्तरवादिनः ? इदमभिप्रेतं, साक्षानुकारिता हि ग्रहणस्योक्ता, न साक्षानुकारिता व्यापृतावस्था अनुपायतयैव ( उपायनयैव इति ऋजुपाठः ) उपन्यस्ता । कथं अनुपाय उपेयं शक्यते कल्पयितुमिति । तदिदमाह — 'यदि उपायमेव प्रतिपेत्स्यति न शक्यते उपायमन्तरेण उपेतव्यमुपेतुम् । अयमेवाभ्युपायो ज्ञातृज्ञानमर्थानामिति । 'तद्यथा, कः शुक्लो नाम ? यत्र शुक्लमस्ति' इत्यनेन किं समर्थितम् ? इदं समर्थितं, यथा न शुक्लतामन्तरेण शुक्लोऽवगम्यते । तथा न ज्ञानमन्तरेण ज्ञेयमवगम्यते इति । ननु नैवं शुक्लतापुरःसरैव शुक्ले बुद्धिः ( एवं ज्ञानपुरःसरैव ज्ञेयेऽपि बुद्धिः ) एवं अनभिप्रेतोऽर्थः समर्थितो भवति । न अनभिप्रेतः । एतावदनेनोक्तं, नोपायमन्तरेण उपेयानामुपेयत्वमिति । यस्य यथैवोपायस्तथैव तस्य, ज्ञानस्य तु उपायत्वेऽपि तत्पुरःसरा संवित् इत्युक्तम् । तस्मात् सर्वविज्ञानानां ज्ञेयता आत्मनः स्थिता भवति 'अहमिदमदर्शं' इति ( तस्मात् सर्वज्ञानविषयता स्थिता आत्मनः अहमिदमदर्शं इति भाष्येण ) । इयान् विशेषः, अनुमानादिष्वपि प्रत्यक्षता ( साक्षात्त्वेन प्रतिभासमानत्वात् आत्मनः अनुमानादिष्वपि प्रत्यक्षतैव ) । विषयभेदादि प्रमाणभेदः, न प्रमातृभेदात् । प्रमातृरूपता ज्ञानस्य अनाशङ्कनीयैव, अनाशङ्कितत्वात् ( केन चिद्वादिना ) । युक्त चेद यत्राशङ्कित कर्मप्रवणत्वात् कर्मणः सकर्मकस्य ( सकर्मिकायाः क्रियायाः कर्मप्रधानत्वात् ) । यदपि ज्ञातृत्वैव ज्ञानादृते न शक्यतेऽवगन्तुमिति, तदधीनत्वात् तदवगतेः । यदुक्तं 'न च रूपान्तरोपलब्धिः' इति, तदपि प्रत्युक्तं 'कामं विज्ञानमपह्नुवीत नार्थः' इति । तस्मात् सिद्धमात्मनत्त्वं इति । यत् पुनर्ब्राह्मणं 'न प्रेत्य संज्ञाऽस्ति' इति, तत् पूर्वोत्तरभङ्ग्या स्वयमेव ब्राह्मणान्तरेण व्याख्यातम् । एवं च अर्थवादार्थता उपपन्नैवेति । 'न चैष विधिशब्दः' इत्यपि प्रत्युक्तम् । ननु च स एष इत्युपचारो, 'स्वर्गं लोकं याति' इति कथं, अधिकृतकामसिद्धेः सिद्धम् ।

यदुक्तं 'अहंकारममकारौ अनात्मनि आत्माभिमानो' इति, मृदितकषायाणामेवैतत् कथनीयं, न कर्मसङ्गिना इत्युपरम्यते । आह च भगवान् द्वैपायनः 'न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम्' ( भगी. ३।२६ ) इति रहस्याधिकारे । तस्माच्च विवृतमत्र भाष्यकारेण भगवता वचनान्तरानुरोधात्, नाज्ञानात् इति । बृहती-ऋजु. पृ. १४७.

० आत्मवादः । यत्तु प्रत्यक्षविरुद्धं वचनमुपन्यस्तं 'स एष यज्ञायुधी यजमानः अञ्जसा स्वर्गं लोकं याति' इति एतत् शब्देन प्रत्यक्षं शरीरं यज्ञायुधसंयुक्तं उपदिशति इति । तदभिधीयते, अर्थवादत्वात् अस्य अन्यपरत्वात् न स्वार्थे प्रमाणान्तरविरोधो दोषः । न च विरोधोऽपि विद्यते । नहि अनेन शरीरस्य स्वर्गगमनमुच्यते, किं तर्हि ? आत्मनो यस्य एतत् शरीरं, सोऽपि हि शरीरशरीरिणोः अभेदोपचारेण शरीरत्वेन यज्ञायुधित्वेन प्रत्यक्षत्वेन च व्यपदिश्यते । आत्मनो स्वर्गगमनं शरीरे उपचर्यते इति नास्ति विरोधः । यजमानशब्दोऽपि तस्यैव भागस्वामित्वात् कर्तृत्वाच्च वाचकः । न च शक्यते तस्य कादाचित्कत्वं अकर्तृत्वं वक्तुं, श्रुतिविरोधात् । सर्वत्र हि कर्तृभोक्तृशब्दयोः सामानाधिकरण्यं दृश्यते । यथा अत्रैव 'यजमानः स्वर्गं लोकं याति' इति । यथा 'य एवं विद्वानग्निं चिनुते अश्नोदेव' 'स एवं विद्वान्

द्विरात्रेण यजते स्वर्गमेव लोकमेति'। तथा उपनिषत्स्वपि 'संकल्पादेवास्य पितरः समुत्तिष्ठन्ति' इति कर्तृत्वाभिधायिन्या श्रुत्या आत्मनः संकल्प प्रति कर्तृत्वमुक्तम्। संभवति च सर्वगतस्यापि आत्मनो याग-दान-प्रदान-संकल्पादिषु साक्षादेव कर्तृत्वम्। नहि वयं स्पन्दमेव क्रियामुपगच्छामो वैशेषिकवत्, येन आत्मनः कर्तृत्वं न स्यात्। धात्वर्थमात्रस्य क्रियात्वात्। स्पन्देऽपि प्रयोजकत्वेन आत्मन एव कर्तृत्वं संभवति। प्रयत्नेन हि असौ शरीरं स्पन्दे प्रयोजयति। साक्षात्तु न संभवति, सर्वगते स्पन्दस्यासंभवात् इत्यनेन अभिप्रायेण पुराणेषु उक्तिः पश्च न आत्मनि कर्तृत्वासङ्गः।...(सर्वगतोऽपि—) प्रतिशरीरं भिन्ना एवात्मानः सर्वगता नित्याः। एवं च यदसुखादि-व्यवस्थाऽपि युक्ततरा भवति। शा. तर्कपादे पृ. ११९–१२५.

● आत्मपादेन (औपत्तिकसूत्रस्यभाष्यगतेन) स्वर्गगमनसमर्थः आत्मा साधितः। बाल पृ. ७

● आत्मविषयको विचारः अपूर्वाधिकरणे वार्तिके भूयसा कृतः। सः 'अपूर्वाधिकरण' इति हिन्दी वार्तिके द्रष्टव्यः। पे

※ आत्मसमारोपणपक्षेऽपि अरण्योरेव प्रत्यवरोहणम्॥

प्रत्यवरोहणं तु आत्मसमारूढस्य लौकिकेऽग्नावेव 'यस्याहिताग्नेरग्निर्मथ्यमानो न जायते, यत्रान्यं दीप्यमानं पश्यत्तत्र आहृत्य होतव्य' इति विधिना लौकिकेऽग्नावपि होमविधानात्, पूर्वं लौकिकस्यापि मन्त्रेण प्रत्यवरोहणोत्तरं तस्यैव संस्कृतत्वेन वैदिकत्वसंभवात्। 'यस्याहिताग्नेरग्निर्मथ्यमानः' इत्यविशेषेण मथनश्रवणेऽपि तस्यारणिसमारोपपक्षाभिप्रायेण व्यवस्थापयितुं युक्तत्वात्। 'उपवेषेणाङ्गारमपोहति' इत्यविशेषेण श्रवणेऽपि सानाय्यपक्षे एवोपवेषस्य व्यवस्थादर्शनात्। आत्मनि आरोपितस्य अरण्योरुपावरोहणेन मथने आत्मारोपस्यैव वैयर्थ्यापत्ते, शुक्लत्वपक्षयोर्विकल्पायोगात्। इति प्राप्ते, आत्मारोपपक्षेऽपि अरण्योरेव उपावरोहणम्। अरणिमथनस्य प्रत्यवरोहणसाधनत्वेन नित्यवच्छ्रुतस्य पाक्षिकत्वकल्पनाऽयोगात्। उपवेषस्य सान्नायनिष्पन्नत्वेन तस्य सानाय्याभावे अप्रसक्तादेव व्यवस्थितत्वेऽपि प्रकृते तदयोगात्। अपि तु लौकिकाग्नौ अरण्योर्वा उपावरोहणस्य अनियमप्रसङ्गे मन्त्रविधिवशादेव आधारनियमस्य वक्तुं युक्तत्वात्। प्रत्यवरोहस्य संस्कारत्वाभावेन लौकिकस्यात्र वैदिकत्वायोगात्। यत्रान्यं दीप्यमानमिति तु होमशास्त्रविषयमेव नान्यस्य वचनेन तस्मात्तस्य होमस्य तत्र विधानमित्यदोषः। शुक्लत्वोरपि पक्षनिमित्तसंयोरूभयोरिव विकल्पो युक्त एव। तस्मादात्मसमारोपपक्षेऽपि अरण्योरेव प्रत्यवरोह मथनम्। या तु स्मृतिर्लौकिकेऽग्नौ प्रत्यवरोहणस्य गृह्यान्तरसाधारणी, सा तु स्वरूपच्युतेर्मूलिनीति। सरणि ३।२।१६.

※ आत्मार्थे पृथिवीं त्यजेत् इति न्यायेन प्रधानविरोधिना बहूनामपि गुणानां बाधनं न्याय्यम्। उपक्रमोपसंहारकल्प्यानन्तवेदान्तप्रतिपाद्याद्वैतविरोधिनां बहूनामपि ... वचनपदगमनिनमन्त्रनिमित्तभूतधर्मांशांशबाधाभ्युपगमात्। सुश्रुतादिरादिप्रधानभूतद्रव्यविरोधिनां अवघातादीनां बहूनामपि बाधस्य पूर्वतन्त्रे (द्रव्यसंस्कार० ६।३।१८।३८ भा.) प्रतिपादनात्। पराक्रम ६११, ● न च 'आत्मार्थे०' इति, ततोऽपि (स्वनैवैकं० इत्यस्मात्) बलवता न्यायेन प्रधानविरोधिनां बहूनामपि गुणानां बाधनं न्याय्यम्। ५५।२.

※ आत्माश्रयन्याय। स्वापेक्षत्वमात्माश्रयः। स चोत्पत्तिज्ञप्तिनिश्चयसिद्धारा त्रेधा। साहस्री. ६०९

● कारणदोषरहिता अविपरीता च संवित् आत्मान्यस्तित्वे हेतुः। बृहती. पृ. १७१.

● आत्रेयः मुनि°, अनधिकृतः अग्निहोत्रादिषु शूद्र° इति मन्यते स्म। शा ६।१।७।२६. ● आत्रेयाय हिरण्यदानं ऋतुयाज्यावरणं च ज्योतिष्टोमे अदृष्टार्थं क्रियते। तनेश्वापि अदृष्टार्थं कर्तव्यमेव। आत्रेय अग्निगोत्रोत्पन्न°। वि १०।२।२६.

● आग्नेयी हत्वा भ्रूणहा भवति। आत्रेयीमापन्नगर्भामाहु। अत्र कुक्षौ अन्यस्य. विद्यते इत्यात्रेयी (इति पूर्वपक्षे ६।१।३।७)। न च आपन्ना आत्रेयी, गोत्रमेतत्। नहि अत्रशब्दात् अय तद्धित उत्पन्नः।

समर्थाना हि तद्धित उत्पद्यते। न च अजशब्दस्य सामर्थ्यमस्ति। भा. ६।१।३।९.

* आथर्वणं सूक्तं = 'छन्दोगाय बृहद्रथाय' इत्यादि। सत्सर्गमयूखः पृ. १. * आथर्वणस्य (वेदस्य) त्रयीभिन्नप्रस्थानरूपता। शा. १।३।३ पृ. २७. * आथर्वणसर्वानुक्रमण्यां 'यत्र सर्वाणि छन्दांसि इत्युच्यते, तत्र गायत्र्यादिसप्तसप्तान्तानि सप्त छन्दांसि जानीयात्' इत्युक्तम्। संकर्ष. ४।२।२.

आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथेति न्यायः। जगत् उत्पत्तेः प्राक् नासीत्, प्रलयात् परं च न भविष्यति, इति मध्ये दृश्यमानमपि तात्त्विकं न भवति इति। साहस्री. २९२.

* आदित्य एक एव, न नाना। भा. १।१।६।१९, * आदित्यः नित्यः। 'नित्यः कश्चिदर्थः प्रजापतिः स्यात् वायुः आकाश आदित्यो वा।' १।२।१।१०.

* 'आदित्यः प्रायणीयः पयसि चरुः' इति पयसि प्रणीताधर्माः उत्पवनादयः कर्तव्याः, न तु सांनाय्यधर्माः वत्सापाकरणादयः। (आदित्यः अदितिदेवताकः) वि. ९।४।१०. * 'आदित्यः प्रायणीयश्चरुः' इत्यत्र चरुशब्दस्य ओदनः इत्यर्थः, न तु स्थाली। 'अदितिमोदनेन' इति वाक्यशेषात्। शा. १।३।९ पृ. ३५.

* 'आदित्यो यूपः' इति अशक्यत्वात् यूपकार्यसाधने यजमानस्य यजमानकार्यसाधने वा यूपस्य, विध्यन्तरभावाच्च न विधिः, किंतु यूपस्तुत्यर्थः अर्थवादः। भा. १।४।१२।२३-२ पृ. ३१२. * 'आदित्यो यूपः' इत्यत्र आदित्यशब्देन यूपस्य स्तुतिः सारूप्यात्। वि. १।४।१५.

* आदित्यश्चरुः प्रायणीये आग्नेयविकारः। के

आदित्याज्जायते वृष्टिः इति न्यायः। प्रजापतेस्तनूनां मध्ये अन्नपत्नी नाम तनूः। स चादित्यः। 'अन्नस्य पत्नी पालयित्री सूर्यमूर्तिः। आदित्यात्' न्यायेन पालयितृत्वम्।' देभामा. २४।६।१७.

* आदित्यस्य (उदयास्तमनकाले) अनीक्षणं कर्तव्यं इति मनसा संकल्पयति, अतः अनीक्षणस्य मानसो व्यापारः अविनाभूतः। भा. ४।१।१।२.

* आदित्यानामयनप्रभृतीनि संवत्सरसत्राणि। तेषु गवामयनस्य विध्यन्तः, न द्वादशाहिकः। भा. ८।१।११।१८.

आदित्यगतिन्यायः। यथा आदित्यगतिः सती प्रत्यक्षेण नोपलभ्यते देशान्तरप्राप्त्या अनुमीयते, तथा राद्ध्वावृक्षयोः यद्यपि लिङ्गं सूक्ष्मत्वात् प्रत्यक्षेण अशक्यं ग्रहीतुं तत्कार्यदर्शनादनुमीयते, एवं प्रकृतेऽपीति 'स्त्रियाः' पा० ४।१।३ इति सूत्रभाष्ये स्पष्टम्। साहस्री. ५७८

आदित्यपयोऽधिकरणम्। प्रायणीयन्यायः। ज्योतिष्टोमे प्रायणीयेष्टौ अदितिदेवताकचरुपयसि प्रदेयधर्मा न कर्तव्याः॥

प्रदानदर्शनं श्रपणे तद्धर्मः, भोजनार्थत्वात् संसर्गाच्च मधूदकवत्। ९।४।९।२२॥

भाष्यं— ज्योतिष्टोमे समाम्नायते 'आदित्यः प्रायणीयः पयसि चरुः' इति। तत्र संदेहः किं प्रदानार्थाः पयोधर्माः पयसि कर्तव्याः, उत नेति। यदि प्रदानार्थमेतत् पयः, ततः कर्तव्याः। अथ श्रपणार्थं, न कर्तव्याः। कथं संशयः? सप्तमीनिर्देशाच्छ्रपणार्थं पय इति गम्यते। देवतासंबन्धस्य तु चरोरधिकरणे पयसि श्रूयमाणे वाक्यभेदाशङ्का। अतः संशयः। किं तावत् प्राप्तम्? प्रदानार्थमिति। कथम्? आदित्यश्चरुर्भवति, स च पयसि इत्येव अनेकार्थविधाने वाक्यं भिद्येत। द्वावपि चेमौ अर्थौ अतो वाक्यात् अवगम्येते, अतो न वाक्यभेदः। यथा च न वाक्यभेदः, तथा व्याख्यातव्यम्। तत्र अधिकरणसंबन्धे विधीयमाने देवतासंबन्धावगतिः नावकल्पेत, प्रमाणान्तरेण अप्राप्तत्वात्। देवतासंबन्धे विधीयमाने हि ये निर्दिश्येते चरुपयसी, तयोर्निर्देशसामर्थ्यात् वाक्येन संबद्धे गम्यते, तथ देवतया संबध्यते। तत्र अर्थात् पयआधारश्चरुर्भवति। (पयः आधारो यस्य सः)। आह। वाक्येन द्वे चरुपयसी गम्येते। न तयोः संसर्गः। उच्यते। यदा द्वे गम्येते, तदा प्रयोगवचनेन यौगपद्येनसोमंस्यते। तथार्थात् संसर्गः। एकस्याश्च वाक्यस्य समुदयः। तेनात्र निर्देशः एव विवक्षितः, नापि करणसंबन्धो गम्यमानोऽपि विधीयते। एवं तु

निर्देशः क्रियते, संसृष्टे चरुपयसी कथं गम्येयातामिति। तत्र चरुसंसृष्टं पयः चरौ लभ्यमाने नियतं लभ्यते। तदस्य प्रदानदर्शनं भवति। पयसा अप्यमाणस्य तस्य प्रदानं कथं स्यादिति सप्तमी निर्दिश्यते। तस्माद्भोजनार्थं यागार्थमेतत् पयः। भोजनमिति सारूप्यात् यागमाह। तस्माच्च पयः प्रदानार्थं पयोधर्मैः संबध्यते। आह। न त्यागमात्रं यागः। देवतामुद्दिश्य यस्त्यागः, स यागो भवति। उच्यते। अयमपि अदितिदेवतामुद्दिश्य यागः क्रियते इति। आह। न पयसः अदितिर्देवता। नहि उद्देश्यमात्रेण देवता भवति। या यस्य श्रूयते, सा तस्य देवतेति। चरोश्चैषा श्रूयते, न पयसः। उच्यते। उभयस्य निर्देशात्। उभयेन देवता संबध्यते संसृष्टेन मधूदकवत्। यथा 'दधि मधु घृतं धाना उदकं सत् संसृष्टं प्राजापत्यं' इति भवति। एवमेवेदं द्रष्टव्यं यद्यपि सप्तमीनिर्दिष्टं, *सप्तम्यर्थस्याविवक्षितत्वात्, निर्देशमात्रस्य* विवक्षितत्वात्। यथौदने दधि दत्त्वा अभ्यवहर्तव्यमिति, ओदनस्य निर्देशमात्रं विवक्ष्यते, नाधिकरणत्वम्। एवमिहापि द्रष्टव्यम्। तस्मात् प्रदानार्थं पयः। प्रदानार्थाश्च पयोधर्माः कर्तव्या इति।

संस्कारप्रतिषेधश्च तद्वत्। ३३॥

भाष्यं— एवं च कृत्वा प्रदेयसंस्कारस्यैषा चित् प्रतिषेध उपपन्नो भवति। 'अमनुष्या वत्सानपाकरोति' 'अपवित्रवति मा दोहयति' इति। प्राप्ते हि प्रतिषेधो न्याय्य इति।

तत्प्रतिषेधे च तथाभूतस्य वर्जनात्। ३४॥

भाष्यं— तत्प्रतिषेधे च प्रतिषेधे, तथाभूतमपि लोके वर्ज्यते। पयसा मिश्रं, पयः शृतं च। न चैव श्रपणार्थस्य द्रव्यस्य धर्मः। यथा श्रपणार्थं पानीयम्। तत्प्रतिषेधे, तैले पीते पानीयं न पातव्यमिति निषेध्यं यवागूश्च पीयते। च तथाभूतस्य वर्जनात् पयो लोके एव भवति। भोजनार्थं हि सत्। यथा हि लोके पयः, तद्वदिहापि भवितुमर्हतीति सामान्यतोदृष्टं व्यपदिष्टम्।

अधर्मं स्वप्रदानात्, प्रणीतार्थे विधानादतुल्यत्वादसंसर्गः। ३५॥

(अत्र सर्वपुस्तकेषु अधर्मं स्वप्र० इत्येव पाठ उपलभ्यते। भाष्ये तु 'अधर्मत्वं तु पयसः' इति मूले मुद्रित, 'अधर्मकं तु पयः' इति टिप्पण्यां पाठः प्रदर्शितः। अस्य तावत् सिद्धान्तसूत्रत्वात् तुशब्द आवश्यक एव। पठितश्चासौ भाष्ये। परन्तु सार्वत्रिकपाठे तु-शब्दो न लभ्यते। तस्मात् सार्वत्रिकः पाठो न समीचीनः इति स्पष्टम्। एवं सति 'स्वप्रदानात्' इति लब्धम्। ततः पूर्वं तु अधर्मत्व इति वा अधर्मं इत्येव वा पदं स्यादिति चिन्तायां, प्रथमसूत्रे पूर्वपक्षीये 'तद्धर्म' इति गृहीतेन समजस्य अनिश्चयान्तस्य पदस्य पाठात् सिद्धान्तसूत्रेऽपि अधर्मं इति अनिश्चयान्तमेव पठितुं युक्तं, न तु अधर्मत्वं इति, वैरूप्यात्। तद्धर्म-अधर्मं इति हि युक्ता विप्रतिपत्तिः, न तु 'तद्धर्म-अधर्मत्वं' इति। तस्मात् अत्र 'अधर्मं स्वप्रदानात्' इत्येव पाठः स्वीकृतोऽस्माभिः। *निरुक्तकरीयेऽपि अधर्मं स्वप्र०* इत्येव पाठः)।

भाष्य— अधर्मं तु पयः, नास्य प्रदेयधर्मा भवेयुः, इत्यर्थः। (अत्र 'अधर्मत्वं तु पयसः नास्य' इति भा-पाठः। 'अधर्मकं तु पयः नास्य' इति भा-टिप्पणी पाठः। किंच 'प्रदेयपयोधर्माः' इति भा-पाठः, 'प्रदेयधर्माः' इति तु भा-टिप्पणीपाठः। एवं सति भाष्ये अस्माद्दृश एव पाठः अनुमितोऽस्माभिः) कुतः? अप्रदानात्। नहि इदं प्रदीयते। ननु चरौ प्रदीयमाने प्रदास्यते इत्येवमर्थं पयसि श्रपणमुच्यते। नैतदेवं, घृतश्चरुः कथं स्यात् इत्येनमर्थं हि तत् क्रियते। शृतेषु तण्डुलेषु प्रयोजनमस्ति। नहि अन्यथा चरुर्भवति इति। *न तु प्रदेयेन पयसा नैतदवलम्ब्यं श्रूयते।* कस्मात्? प्रणीतार्थे विधानात्। ननु वाक्यभेदः एवं भवतीति परिहारमिदं एव पक्षः। संसृष्टमत्र हविर्भवतीत्युक्तम्। उच्यते। अतुल्यत्वादसंसर्गः। अतुल्ये चरुपयसी। प्रत्यक्षतोऽधिकरणत्वेन पयः श्रूयते, प्रदेयत्वेन चरुः। पयसो यत् वाक्येन प्रदेयत्वं गम्यते, तत् अधिकरणश्रुत्या बाध्यते। यत्तु वाक्यभेदप्रसङ्ग इति, तत्र। नहि पयसि चरुरिति संबन्धो भविष्यति। कथं तर्हि? पयसि आदित्य इति। उभौ आदित्यशब्देन संबन्ध्येते। आदित्य-

पयसि, आदित्यश्चरुरित्युभौ चरुपयःशब्दौ आदित्यप्रधानौ इत्येकं वाक्यं भविष्यति, न वाक्यभेदप्रसङ्गः। पयआधार आदित्यो भविष्यति। तस्मान्न पयसि प्रदेयधर्मा भवितुमर्हन्ति।

**परो नित्यानुवादः स्यात्। ३६॥**

**भाष्यं**— अथ यल्लिङ्गमुक्तं, 'अयजुषा वत्सानपाकरोति' 'अपवित्रवति गा दोहयति' इति। नैतदेवं सति अस्यार्थस्य साधकं भवति। किं तर्हि? एतन्नित्यानुवादकम्। नित्यमेतमर्थं सन्तमनुवदति। नैव अप्रदेयत्वात् यजुषा वत्सा अपाक्रियन्ते, न पवित्रवति गौर्दुह्यते। ननु नित्यानुवादोऽनर्थकः। उच्यते। न वयं प्रयोजनवत्तामप्रयोजनवत्तां वा विचारयामः। किमेतस्माद्वाक्यात् गम्यते इति परीक्षामहे। अस्माच्च वाक्यादिदं गम्यते, न यजुषा वत्सा अपाक्रियन्ते, न पवित्रवति गौर्दुह्यते इति। तच्च अस्य अप्रदेयत्वात्प्रमाणं यजुः पवित्रं चेति।

**विहितप्रतिषेधो वा। ३७॥**

**भाष्यं**— अथवा विहितस्यैव प्रतिषेधो द्रष्टव्यः। विहितं केषाञ्चित्, यजुषा वत्सानपाकरोति, पवित्रवति गा दोग्धीति। तस्य प्रतिषेधः अर्थवानेव भवतीति।

**वर्जने गुणभावित्वात् तदुक्तप्रतिषेधात् स्यात्, कारणात् केवलाशनम्। ३८॥**

**भाष्यं**— अथ यदुक्तं, पयःप्रतिषेधे, पयसा सिक्तं पयसा संसृष्टं च वर्ज्येते इति। तत्र ब्रूमः। युक्तं हि लोके गव्यस्य गव्येन, तदेव हि तत्र प्रतिषिध्यते। नित्यं हि उपसर्जनीभूतं भोजने पयः प्रचरति। यच्च प्रचरति, तत्प्रतिषेधोऽर्थवान्। यत्र प्रचरति, तस्य हि अप्रसङ्गात् प्रतिषेधोऽनर्थकः। ननु केवलमपि लोके पय उपभुज्यते। उच्यते। कारणात् केवलाशनं, प्रतमौषधं वा यस्य, स केवलमुपभुङ्क्ते। न त्वेतत् प्रचुरम्। तस्मात् प्रायेण गुणभूतत्वात् पयसः पयोयुक्तमेव न भक्षयितव्यमिति एवमर्थः पयःप्रतिषेध उच्यते।

**व्रतधर्माच्च लेपवत्। ३९॥**

**भाष्यं**— अथ कस्मात् अयमन्यः परिहारः? उच्यते। व्रतदेवत् दृश्यमिति। यथा 'ब्रह्मचारिणा मांसं न भक्षयितव्यं' इत्युक्ते दर्विगतमपि लेपं वर्जयन्ति, एवमिहापि 'पयो न पातव्यं' इत्युक्ते पयसा सिक्तं पयसा संसृष्टं वर्जयिष्यन्तीति।

**रसप्रतिषेधो वा, पुरुषधर्मत्वात्। ४०॥**

**भाष्यं**— न वैष परिहारः। परिहारान्तरनिवृत्त्यर्थो वाशब्दः। कुतः? पुरुषधर्मत्वात् व्रतस्य। अदृष्टार्थं ब्रह्मचारिणो मांसभक्षणम्। तत्र तावदपि यो भक्षयति, यावति मांसरसमात्रं विदितं भवति, तस्यापि दोषः, न श्लेष्मकोपादि किञ्चित् दृष्टमपेक्षते। न तु पयःप्रतिषेधे तथा। तस्मात् पूर्व एव परिहार इति।

**शा**— 'चरोर्देवतया योगं पयसश्चरुसंगतिम्। विदधद्भिद्यते वाक्यमर्थद्वयविधानतः॥' (तस्मात् पयः प्रदेयधर्मैर्वत्सापाकरणादिभिः संबध्यते)। इति प्राप्ते ब्रूमः 'चरुणाऽऽधारभूतेन पयसा च विशेषतः। द्रव्यदेवतसंबन्धः पक्षोऽर्थोऽत्र विधीयते॥' तस्मान्न पयसि प्रदेयधर्माः। १०.

**सोम**— दर्शार्थोद्धरणस्य अग्निहोत्रार्थत्वाभावेन तदुद्धरणधर्मप्राप्त्यभावेऽपि पयसः प्रदानार्थतया प्रदेयधर्मप्राप्तिः इत्युक्तेः संगतिः। सूत्रार्थस्तु— सह श्रपणे प्रदानमपि सह दृश्यते, चरोः पयसा सह त्यज्यमानत्वानुभवात् 'दधि मधु घृतमापो धानाः' इत्यादिवत्। प्रसङ्गात्वाच्च पयसोऽपि यागार्थद्रव्यत्वात् प्रदेयधर्माः स्युः इति।

**वि**— 'प्रदेयधर्माः स्युर्नो वा पयसि प्रायणीयगे। चरुवत् स्युः, पाकहेतुः पयस्त्वात् स्युर्न ते ततः॥'

**भाट्ट**— 'आदित्यः प्रायणीयः पयसि चरुः' इत्यत्र पयसि इत्यधिकरणत्वनिर्देशात् न पयसो हविष्ट्वं, अपि तु चरोरेव, तद्धितसामानाधिकरण्येन तस्यैव देवतासंबन्धात्। पयसस्तु श्रपणाधिकरणत्वमात्रं, अतो न तत्र प्रदेयधर्माः। प्रणीताधर्मास्तु तत्र भवन्तीति प्राञ्चः। वस्तुतस्तु संयवनार्थत्वात्तेषां, चरौ च तदभावात्, तेऽपि न भवन्त्येवेत्युक्तम्। प्रदेयधर्मप्राप्त्याशङ्का तु यद्यपि नान्या काचित्, तथापि आदित्यप्रकरणे 'अयजुषा वत्सानपाकरोति, अपवित्रवति गां दोहयति' इत्यादिवत्सापाकरणाद्यनुवादेन यजुरादिपर्युदासविधित्व अर्थसिद्धस्य समस्तपर्यायविरुद्धत्वपर्यवसायकः अग्निहोत्रे-

वत्। इति प्राप्ते, नित्यानुवादत्वेनापि अस्योपपत्तेर्न सप्तम्यर्थविवक्षा। वस्तुतस्तु लौकिकसिद्धपयोग्रहणस्यैव सदा प्रवर्तकदोहनादिविवर्तत्वतया अप्राप्तत्वेन अवश्यविधेयत्वेऽपि इतरस्य उभयथैव नित्यानुवादत्वात् न सप्तम्यर्थविवक्षा। अतो न सन्न प्रदेयधर्माः। अभ्युदितेष्टौ तु उत्तराधिकरणे वक्ष्यते।

मण्डन— 'नादित्ये पयसो धर्माः।'

शंकर— 'पयः प्रदेयं नादित्ये।' १०

* आदित्यवत् (आदित्यवद् यौगपद्यम्)। यत्तु एकदेशस्य सतो नानादेशेषु युगपद्दर्शनमनुपपन्नमिति, आदित्यं पश्य देवानांप्रिय ('सूर्यं' इत्यर्थः), एकः सन् अनेकदेशावस्थित इव दृश्यते,... एवं शब्देऽपि। भा. १।१।६।१५. * आदित्यवद् यौगपद्यम् (१।१।६।१५)। नापि एकदेशेन सम्बन्धाविमाः सन्तश्च प्रासादशब्दाः संभवन्ति शब्दैकत्वप्रत्यभिज्ञानात्। तथा चोक्तं 'आदित्यवद् यौगपद्यं' इति। अत्र एकत्वप्रत्यभिज्ञानमुक्तम्। वा. १।३।१२।२६. * आदित्यवद् यौगपद्यम्। यथा आदित्यस्य नानादेशेषु युगपदुपलम्भेऽपि न भेदः, तथा शब्दस्यापि इति सूत्रार्थः। सु पृ. ९६०. * आदित्यस्थाल्याः पुनः आग्रयणस्थाली द्वितीयसवने आगच्छति। आग्रयणस्थाल्याः पात्नीवतो गृह्यते ज्योतिष्टोमे। वि. ३।२।१३. * 'आदित्यात्मा' नाम साम अनुक्रम्। बाल. पृ. ७२. * आदित्यादयो ग्रहाः ज्योतिष्टोमे तृतीयसवने। वि. ३।६।१९.

* आदेशाः वस्तुस्वभावापेक्षिणो भवन्ति। बृहती. येन वस्तुस्वभावं ज्ञात्वा तेषामर्थो वर्णनीयः। ऋजु पृ. २४१.

* 'आदौ यच्छ्रद्धया सिद्धं, पश्चान्न्यायेन साधितम्' इति न्यायः। ननु 'मन्तव्यश्चोपपत्तिभिः' इतिस्मृतिगतोपपत्तिशब्दस्य 'मतिर्वादयुक्तता' इति स्मृतिव्याख्यानशब्दस्य 'श्रोतव्यः श्रुतिवाक्येभ्यः' इति श्रुतिशब्दस्येव सामान्यवाचकत्वेन आदौ० इति न्यायेन युक्त्यनपेक्षश्रद्धामात्रेण प्रतिपाद्यं अयमस्य, वाक्यस्यार्थः इति गुरुमुखात् वेदार्थग्रहणं श्रवणं, पश्चात् न्यायानुसन्धानं मननं इति भेदसंभवे युक्तिभ्यैव श्रवणमननभेदकथनायोगः इति चेन्न। (आदौ प्रथमतः यत् तत्त्वं श्रद्धया श्रद्धापूर्वकेण वेदान्तादिश्रवणेन सिद्धं ज्ञातप्रभूतं, तदेव पश्चात् न्यायेन न्यायविचारात्मकेन मननेन साधितं भवति इति न्यायस्यार्थः। के.) अद्वैत. पृ. ३।४।३२-३७.

* आद्यं मुख्यं, अन्त्यं जघन्यम्। मुख्यजघन्ययोः अन्यतरस्मिन् लोप्तव्ये जघन्यो लुप्येत, मुख्योऽनुग्रहीतव्यः। भा. १०।५।१।१. * आद्यानां ग्रहणं अन्त्यलोपः विकृतिषु एकदेशग्रहणे यावत्संख्यम्। यथा 'आश्विनं द्विकपालं' 'वैष्णवं त्रिकपालं' 'आग्नेयमष्टाकपालं' इति अष्टाकपालस्य यदाद्यं द्वयं, तस्य धर्माः आश्विने द्विकपाले ग्राह्याः इत्यादि। के. १०।५।१।१-५.

* आद्यग्रहणापवादाधिकरणम्। १०।५।५।१४। आनुपूर्व्यवता० इत्यधिकरणे आद्यग्रहणं अन्त्यलोपः इति सिद्धान्तितं, तस्यायं 'अपूर्वासु तु संख्यासु०' (१०।५।५।१४) इति अपवादः क्रियते।

* आधातृवत्। यथा अन्यत्रापि ऋत्विजां संस्कारो विधीयते आधाने 'यस्तं योऽग्निमाधापयन् स्यात्, स एतां रात्रिं व्रतं चरेत्' इति 'न मांसमश्नीयात्, न स्त्रियमुपेयात्' इति वचनात् अध्वर्योर्नियमो विधीयते, तथा ज्योतिष्टोमे 'सर्वे ऋत्विजः उपवसन्ति' इति ऋत्विजामुपवासो विधीयते, तद्वत् इहापि (सत्रे) ऋत्विजामेव संस्कारो भविष्यति। (आधाता आधानकर्ता अध्वर्युः। इति पूर्वपक्षः)। भा. १०।६।१९।५२.

* आधानं अग्निचयनगते काम्ये वाऽऽधाने वा अग्नौ नास्ति पूर्वसिद्धत्वात्, संस्कारानुपयोगाच्च। वि. १२।८।१९ * आधानं अग्न्युत्पत्त्यर्थं न कर्माङ्गम्। सर्वकर्मार्थाग्नेः आश्रयः इति सर्वार्थमित्युच्यते। भा. ३।६।५।१५, * आधानं 'अष्टसु प्रकारेषु ब्राह्मणोऽग्निमादधीत, एकादशसु राजन्यः, द्वादशसु वैश्यः' (प्रकामः एकपदो द्विपदो वा)। ६।१।७।२८, * आधानं आरम्भेव यजमानस्य धारणं कर्तव्यम्। ११।३।१४।४९-४३. * आधानं गुणकर्म नैमित्तिकम्। बाल. पृ. ८१. * आधानं 'चक्षुर्निमितमादध्यात्' (इति पञ्चान्तरम्। चक्षुषा दृष्ट्वैव स्थलनिश्चयः कर्तव्यः।

इति ) भा. ६।१।७।३१. * आधानं न क्रत्वर्थं, न पुरुषार्थं इति तन्त्ररत्ने द्रव्यार्जनवर्णके ( ४।१।२।२ वर्णकं ३ ) उक्तम् । ' आधानं न पुरुषार्थं ' इति सिद्धान्तवार्तिक तन्त्ररत्ने ' प्रत्यक्षेण द्रव्यार्जनस्य यथा पुरुषार्थता अवगम्यते नैवं आधानस्य ' इत्यभिप्राय व्याख्यातम् । बाल. पृ. ८१. * आधानं न यजमाने-ष्ट्यर्थम् । भा. ३।३।४।११-१३, * आधानं-पुनरा-धानं प्रायश्चित्त उभयाग्निनाशे । ६।४।८।२६-२७. * आधानं प्रकृतौ न विनियते, किंतु आधानसंस्कृताना-मग्नीनां अग्निहोत्राद्युत्तरक्रतुषु विनियोगः । वि. ३।६।५. * आधानं प्रधानं, सामगाने गुणः । भा. ३।३।२।९ पृ. ८१०, * आधानं भार्यायुक्त श्रूयते । ६।८।२।१३, * आधानं यथा अग्नेर्गुण, तत्परार्थैः, एवं पव-मानहवींष्यपि अग्नेरेव गुणभूतानि । ३।१।१२।२२.

■ आधानं सर्वकर्मणां सम्यं, न तु प्रतिकर्म पृथक् ॥

द्रव्यस्य पाकर्मकालनिष्पत्तेः प्रयोगः सर्वार्थः स्यात्, स्वकालत्वात् । ११।३।२।२ ॥

भाष्यं— ' वसन्ते ब्राह्मणोऽग्निमादधीत, ग्रीष्मे राजन्य, शरदि वैश्यः ' इति श्रूयते आधानम् । तत् कर्मार्थमित्यभ्युपगमः । किं कारणं ? अकर्मत्वात् । ' आहवनीये जुहोति ' ' गार्हपत्ये हवींषि श्रपयति ' दक्षिणाग्नौ अन्वाहार्यश्रपणादि करोति इति तेषामग्नीनां कर्मसंबन्धोऽयः । तत्र विचार्यते किं तन्त्रस्य कर्मणोऽर्थेन भेदेन आधानं कर्तव्यं, अथवा सर्वेषां वैदिकपाकयज्ञसोमि-कहविर्दोषिकाणां कर्मणां तन्त्रं इति । किं प्राप्तं ? द्रव्यस्य अग्नेः, अकर्मकालनिष्पत्तेः वसन्ते ग्रीष्मे शरदि इति, प्रयोगः आधानं, सर्वार्थं स्यात् । कुतः ? स्वकालत्वात् । स्वोऽस्य कालो वसन्तादिः । न कस्य चित् कर्मणः काले श्रूयते । तत्र न गम्यते विशेषः अस्मै कर्मणे इदमाधानं नास्मै इति । अगम्यमानविशेषत्वाच्च तन्त्रभावो न्याय्यः । ननु आधानानन्तरं यस्य कर्मणः प्रयोगः, तदर्थं तदा-धानं इति गम्यते विशेषः । न खलु गम्यते विशेषः, किं तु आनन्तर्यमकारणम् । यदाऽपि सर्वार्थं तदाऽपि आरब्धं कस्य चित् कर्मणः पूर्वं प्रयोगः, यौगपद्यासंभ-वात् । उभयेन आनन्तर्ये उभो हेतुः सर्वार्थत्वे एकार्थत्वे च । समत्वादहेतुर्भवति । न वा आधानेन कर्माणि उपक्र-म्यन्ते, यथा प्रणयनेन । यदि उपक्रम्येरन् ततः यदनन्तरं कर्म, तस्योपक्रमो विज्ञायेत, नोत्तरेषाम् । तेन व्यवहितत्वात् तदपवर्गे चापवृज्येत प्रणयनवत् । न ह्यनेन किं चित् कर्म प्रक्रम्यते अप्राप्तकालत्वात् । अत उत्तरकाला हि कर्म-प्रक्रमाः । किं तर्हि अनेन क्रियते ? द्रव्यमर्ज्यते ऽग्निविशेषः । यथा कश्चित् लोहं सुवर्णं वा अर्जयेत् अनेन स्वाधीनेन यथोपपन्नं कर्म करिष्यामीति, स तेन यथाशक्ति इष्ट दानादि करोति । एवमयं अग्निविशेषमर्जयति, अनेन स्वाधीनेन यथोपपन्नं कर्म करिष्यामीति । तत्र न गृह्यते विशेषः अस्मै कर्मणे इदमर्जितं, अस्मै नेति । सर्वेभ्यश्च युज्यते । तस्मात् सर्वार्थम् । अपि च नित्यकाम्यनैमित्तिकानि कर्माणि यथोपपत्तिकालानि । तेषां वसन्ते आहितेना-ग्निना कार्यम् । न च अन्यस्मिन् ऋतौ शक्यः वसन्तेऽ-ग्निराधातुम् । सोऽयमसंयोगो भवति भेदेनाधाने । अथ तु सर्वकर्मणामर्थे तन्त्रमाधानं, नैव विरोधो भवति । तस्मादपि तन्त्रम् ।

शा—आधानमग्निहोत्रादीनामत्र इति कृत्वा चिन्त्यते ।

' प्रयाजादिवदस्यावावृत्तिः स्यात् प्रतिक्रियम् । आनन्तर्याद् विशेषश्च गृह्यतेऽतो न तन्त्रता । स्वकालत्वात्त तन्त्रत्वं विशेषाग्रहणाद्भवेत् । आनन्त-र्याद् विशेषश्चेदाधानसमयेऽस्त्यसौ ॥ '

सोम—पूर्वोक्तमिलकान्त्योपजीवनेन सिद्धान्तप्रवृत्तेः संगतिः । सूत्रार्थस्तु—आधानस्य स्वकालत्वात् वाच निकधर्मादिकालत्वात् द्रव्यस्य आधानसाध्यस्याग्नेरपि अकर्मनिष्पन्नस्यैव कर्मोपयोगित्वात् आधानप्रयोग. सर्वार्थः स्यात् इति ।

वि—' प्रतिकर्म पृथक् कार्यमाधानं यदि वा सकृत् । अन्याङ्गवत् पृथक्, मैवं स्वकालत्वसमत्वतः ॥ '

भाट्ट— आधानस्य अग्निमात्राङ्गभूतस्य स्वातन्त्र्य-प्रयोगविधिपरिगृहीतस्य उत्तरभावनाङ्गत्वात् वस्तुनः तत्त-त्क्रतुभेदेन अनावृत्तिरेव । अङ्गत्व तु पृथक्चिन्तायामपि न प्रयाजादिवत् प्रतिक्रत्वावृत्तिः, तदङ्ग प्रयोगान्तःपाता-भावात् स्वतन्त्रप्रयोगत्वात् । स्वतन्त्रप्रयोगत्वं हि

अर्थवद्भविष्यति । नहि दर्शपूर्णमासार्थस्य आधानस्य वसन्तकालत्वं प्राप्तं प्रत्यर्थमास प्रयोगप्रसक्तेः । नापि अग्निहोत्रेतरदर्विहोमार्थस्य पौर्णमास्यमावास्याकालप्राप्तिः । न च प्रयोगसाधारण्यं स्वकालत्ववचनादृते सिध्यति, इति भावनीकरणम् । अत एवं व्याचष्टे ( भाष्यकारः ) न कस्य चित् कर्मणः प्रकरणाधानम् । किं तर्हि ? द्वितीया-संयोगात् अग्न्यर्थमेव । ते तु 'अग्नयश्च स्वकालत्वात्' ( ३।७।३९ सू. ) इत्यनेन सर्वार्था भविष्यन्ति इति तद्-द्वारेण सर्वार्थत्वमित्युच्यते । स्वकालत्वात् इत्यपि स्वातन्त्र्येणाम्नानात् इत्यर्थः । यत्तु इतरानारभ्य वादवदिति, तन्नाभिधीयते । 'सिद्धेऽङ्गत्वे ततस्तेषां किमर्थत्वं विचारितम् । न तु कर्माङ्गभावे हि प्रमाणं किं चिदस्ति नः ॥' खादिरत्वादीनि स्रुवा-दीनि सयुक्तान्यपि तत्स्वैरप्रयुक्तत्वं न प्रतिपद्यन्ते । स्रुवादिशब्दानां आकृतिवचनत्वात्, विनाऽपि खादि-रत्वादिभि उपपत्तेश्च । अग्न्यादिरोऽपि हि तदाकारयुक्तः स्रुवशब्दवाच्यो भवेत । तत्र प्राक् कर्मार्थत्वात् न जातिनियमस्य प्रयोजनमस्ति इति युक्तं स्वरूपासिद्धघनम् । इह तु आहवनीयादिशब्दानां संस्कारनिमित्तत्वात् न आधानाद्विना प्रवृत्तिरुपपद्यते इति शब्दप्रवृत्ति निमित्तत्वेनैव अर्थवत्ता विज्ञायते । यच्च तेन विनाऽपि कर्माणि अविगुणान्येव भवेयुरिति, नैव तदभावेन तत्कृत वैगुण्यं भवति, किं तर्हि ? आहवनीयाद्यसत्त्वकृतम् । यदि हि आधानमकुर्वतः तावन्मात्रमेव न स्यात् ततो नैव वैगुण्यं भवेत् । तदभावे तु आहवनीयादयोऽपि न भवन्ति । ते च एकान्तेन कर्मणामङ्गम् । अतस्तत्कृता वैगुण्यप्रसक्तिः । यदि च अग्निमात्रेण कर्माणि संभाव्येरन् ततः तत्स्वरूपस्य अन्तरेणाप्याधानं निष्पत्तेः अप्रयु-ज्यमाना भवेत् । 'यदाहवनीये जुहोति' इत्येवमादिचोद-नाभिः पुनः न कदा चित् आधानमन्तरेण संभाव्यते । तेन कर्माणि कुर्वता तदपि अवश्यं कर्तव्यम् । तस्मादन्यर्थम् । यत्तु 'द्रव्यस्याकर्मकालनिष्पत्तेः' ( ११।३।२।२ ) इति, सा कृत्वाचिन्ता इति तत्रैव वक्ष्यते । एतेन पव-मानेष्टीनामपि अन्यर्थत्वं व्याख्यातम् । आधानप्रयोगस्य उत्तरेणाधिकरणेन व्याख्यते ।

शा- 'ह्रियतेऽनारभ्यवादत्वे संप्रत्येतद्विचा-र्यते । किमाधानं प्रकृत्यर्थमग्निमात्रार्थमेव वा ॥ तत्र पर्णमयीन्यायेन प्राप्ता प्रकृतिगामिता । उच्यते श्रुतिसंयोगादाधानस्याग्निशेषता । प्रसिद्धक्रतु-शेषत्वं प्रकृतावुपदिश्यते ॥ पर्णत्वमन्यथा दोषो द्विरुक्तिः स्यादितीह तु । न कस्य चित् क्रतोरङ्ग-मिदं श्रुत्याद्यभावतः । वाक्यं लक्षणया स्याच्चेत्ता-स्यङ्गस्योपपत्तितः ॥'

सोम-- अवसरसंगतिः । अत्रेदमवधेयम् । जुहू-द्वारा पर्णमयत्वस्येव अग्निद्वारा आधानस्य क्रत्वर्थत्वेऽपि न प्रकृतिमात्रार्थत्वम् । यत विकृतिषु प्रत्यक्षोपदिष्टो होमः तादृशविकृतिसाधारण्यस्य अग्नीनां अग्निपादे वक्ष्यमाणतया तद्द्वारस्याधानस्यापि तद्वदेव साधारण्य-संभवात् । ततश्च यथाप्राप्त उपदेशेन प्राप्नुवन्ति तदर्थ-त्वेन पूर्वपक्षः प्रवर्तयितुं युक्तो, न तु प्रकृत्यर्थत्वेनेति । प्रयोजनं पूर्वपक्षे आधानस्य क्रत्वर्थत्वेऽपि ऋतु-कालत्वं वसन्तादिकालविधानेन सर्वक्रतुप्रयोगात् बहि-रेवानुष्ठेयत्वात् । ततश्च आधानानुष्ठानमात्रेण सर्वेषां प्रकृतिविकृतियागानां काम्यनित्यनैमित्तिकानामुपक्रान्त-त्वात् काम्यानामपि अवश्यानुष्ठेयत्वप्रसङ्गः, सिद्धान्ते तु नेति ।

वि — 'आधानं किं प्रकृत्यर्थं वह्निमात्रेण वा युतम् ।, संस्कृताग्निप्रधानत्वेन पर्णवत् प्रकृतौ स्थितम् ॥, लौकिकाग्निसमाप्तत्वे विफलत्वात् कृतौ युतिः । पर्णस्या-हवनीयादौ शास्त्रीयेऽस्तु स्वतन्त्रता ॥'

भाट्ट— तदाधानं अग्निरेव पर्णतान्यायेन अव्यभि-चरितक्रतुसंबन्धान्यद्वारेण क्रत्वङ्गत्वावगतेः द्विरुक्तता-दोषभियैव प्रकृत्यर्थम् । इति प्राप्ते, आधानस्य क्रत्वङ्गत्वे प्रमाणाभावात् । स्रुवादयो हि आकृतिविशेषरूपाः पर्णताऽऽदिव्यतिरेकेणापि वाग्यन्तरेण जायमानाः आनर्थक्यभयात् युक्तं यत् पर्णताऽऽदेः स्वजन्यापूर्वार्थता बोधयन्तीति । आहवनीयादयस्तु अदृष्टविशेषरूपाः आधानं विना तदुत्पत्तौ प्रमाणाभावात् आनर्थक्याभावेन स्वस्वरूपार्थत्वमेव आधानस्य बोधयन्ति । अत एव तत्र नाग्निशब्दे अपूर्वसाधनत्वलक्षणा । अतः क्रत्वर्थ-

यति–) किमस्मिन् (तूष्णींहोमे) अग्निहोत्रधर्माः प्राप्यन्ते न वेति। केचिदाहुः, अग्निहोत्रधर्मा नाम्ना प्राप्यन्ते यथा कौण्डपायिनामयने ( मासमग्निहोत्रं जुहोति इति ) । तदयुक्तम् । ' तूष्णीं होतव्यं ' इत्यनेन ( अत्र ) कर्म विधीयते । तस्मिंश्च विधिवाक्ये अग्निहोत्रशब्दो नास्ति, येन धर्मातिदेशको भवेत् । ( इतश्च न धर्मातिदेशक इत्याह–) तूष्णींहोमः अग्निसंधुक्षणार्थं क्रियते (अग्निसंस्कारार्थम् । ततः किं भवति–) एतदतो भवति, अन्वर्थो होमः इत्यवगते यः अग्निहोत्रशब्दः अत्र वाक्ये अर्थवादत्वेन प्रवृत्तः, स योगेन प्रतीते अग्नये होमम् क्षिपन् इति । अतो योगस्य विद्यमानत्वात् नास्ति नामधेयम् । ( नहि दण्डकादिपदानि नामधेयमित्युच्यते ) नामधेयाभावाच्च अतिदेशो नास्ति ।

अनन्तरं व्रतं तद्भूतत्वात् । २२ ॥

भाष्यं— यत्तु ' आहिताग्निर्न किञ्चन दाह आप्यादध्यात् ' इत्येवमादि, श्रुतं तत्र, यदाहितमात्रेषु क्रियते आहिताग्नेः, तद् व्रतमुच्यते । स च आहितमात्रेषु आहिताग्निः संवृत्तः । तस्मात् अनन्तरं व्रतं स्यात्, तद्भूतत्वात् ।

पूर्वं च लिङ्गदर्शनात् । २३ ॥

भाष्यं— अथ यदुक्तं आहितमात्रेषु अग्निहोत्रं दर्शयति पूर्वमिष्टिभ्यः इति, तत्र कः परिहारः ? इति आमाण्याऽन्त सूत्रम् ।

अर्थवादो वाऽर्थस्य विद्यमानत्वात् । २४ ॥

भाष्यं— अर्थवाद एषः । कुतः ? अर्थस्य विद्यमानत्वात् । विद्यमानो हि तत्र अन्य एव अग्निहोत्रहोमः । कथं ? ' होतव्यमग्निहोत्रं, न होतव्यमिति मीमांसन्ते ब्रह्मवादिनः, यद् यजुषा जुहुयादयथापूर्वमाहुती जुहुयात्, यदि न जुहुयादग्निः परा पतेत्, तूष्णीमेव होतव्यं ' इति । तस्य तूष्णींहोमस्य प्रशंसार्थोऽयमर्थवादः ।

न्यायविप्रतिषेधाच्च । २५ ॥

भाष्यं— न्यायविप्रतिषेधश्च भवेत् यदि अनन्तरं अग्निहोत्रहोमादयः स्युः । यः पूर्वोक्तो न्यायः, स विप्रतिषिध्येत ' न वा तासां तदर्थत्वात् ' ( ३।६।४।१२ ) इति । तस्मात् स्वकाले कर्माणि भवेयुरिति ।

शा— आधानप्रकरणे पवमानहवींषि विहितानि । तानि आधानादिप्रक्रम्यन्ते ' द्वादशसु रात्रीषु अनु निर्वपेत् ' इत्यादिभिः ।

सोम —पूरणार्थत्वस्यवचनात् आगन्तुना लोकंपृणाऽऽनन्तर्येऽपि इह वचनाभावात् न पवमानहविरानन्तर्ये इति प्रत्यवस्थानात् संगतिः । ननु भाष्यकारमते पवमानहविषामपि अग्निनिष्पादकत्वस्य, वार्तिककारमते तेषामाधानाङ्गत्वस्य च तृतीये प्रतिपादनात् मतद्वयेऽपि आधानस्य पवमानहविःसापेक्षत्वात् इह कथं निरपेक्षत्वाभ्युपगमेन पूर्वपक्षप्रवृत्तिः इति चेत् । उच्यते । भाष्यकारमते पवमानहविषामपि अग्न्युत्पादकत्वेऽपि आधानेन विकल्पसंभवात् । वार्तिककारमतेऽपि यथा बृहस्पतिसवस्य वाजपेयाङ्गत्वेऽपि स्वकाले वसन्ते कर्तव्यबृहस्पतिसवात् पूर्वमेव शरदि वाजपेयानुष्ठानमात्रेण तादर्थ्य परमापूर्वमुत्पद्यते, उत्पन्नं च परमापूर्वं बृहस्पतिसवेन पश्चात् फलमुपनीयते, तथेहापि आधानमात्रादेव अग्नयो निष्पद्यन्ते, पवमानहविर्भिस्तु तेषां फलसाधनसंपादनमात्रं इत्यपि संभवात् मतद्वयेऽपि पूर्वपक्षप्रवृत्तिरप्यूह्येव ।

वि— ' आहिते पवमानेष्टिसंस्कृते वाऽग्निहोत्रकम् ।, आधानेनाग्निनिष्पत्तेस्तन्माने कर्म संभवेत् ॥, आधानस्यानपेक्षस्य नाग्न्युत्पादकता मता । समुच्चितस्य हेतुत्वात् कर्म स्यादिष्टिसंस्कृते ॥ '

भाट्ट— आधानस्य नैरपेक्ष्येण उत्पत्तिवाक्ये अग्निनिष्पादकत्वावगमात् आधानमात्रेणैव अग्निनिष्पत्तिः इति सिद्धत्वात् अग्नीनां आधानमात्रानन्तरमेव उत्तरक्रतुषु प्रवृत्तिः । पवमानेष्टयस्तु यदि भाष्यकारमतात् अग्न्यङ्गं, तदा सिद्धेष्वेवाग्निषु स्वोत्तरभाविक्रतूपयोगितया संमार्गवत् संस्कारविशेषाधायकाः । यदि [illegible] वार्तिककारमतात् आधानाङ्गं, तदा बृहस्पतिसववत् एता अग्नीनां स्वामिका इति केचित् प्रत्नाः आधानानन्तरमेव करणेऽपि न पवमानेष्टीनां वैयर्थ्यमपि । ' अग्निं वै सृष्टमग्निहोत्रेणानुद्रवन्ति ' इति पवमानेष्टिभ्यः

प्रागेव अग्निहोत्रप्रवृत्तिं दर्शयति । अतश्च 'आहिताग्निं किल्न दारु अभ्यादध्यात्' इत्याद्याहिताग्निव्रतनदेव आधानोत्तरमेव क्रतुप्रवृत्तिः । इति प्राप्ते, भाष्यकारमते मानत् तत्तद्भ्यये नैरपेक्ष्यश्रवणेऽपि एकस्योत्पादकत्वं, इतरस्य संस्कारकत्वं इत्यत्र प्रमाणाभावः । प्रत्युत पवमानेष्टीनामेव स्वविनियोजकवाक्ये आहवनीयोपादकत्वावगते. आधानस्य गुणवाक्याद्गवाहवनीयोत्पादकत्व विकल्पोपस्थितिरेव । न चैवं उभयोरुत्पादकयोर्विकल्पः, 'सद्यो निर्वपेत्' 'द्वादशसु रात्रिषु अनुनिर्वपेत्' इत्यादिकालविधिवशादेव समुच्चयसिद्धेः । वार्तिकमते तु साक्षादेव आधानस्य उत्पादकत्वात् न तदभावे अग्निसिद्धिः । न च ज्ञापकं वृहस्पतिसवस्य पवमानेष्टीनां, आधानप्रयोगमध्यपातित्वेऽपि तद्धस्य आधानकरणकभावनानिविष्टत्वासंभवेन ज्ञापकत्वकल्पनाऽनुपपत्ते । अत पवमानेष्ट्यनिरपेक्षमाहवनीयनिष्पत्तेरभावात् तदनन्तरमेव अग्निहोत्रादीनि । आहितानिमित्तेषु तु आधानोत्तरमेव पुरुषस्य आहिताग्निपदवाच्यत्वोपपत्ते. तदनन्तरं करणम् । यत्तु निदर्शनमुक्तं, तत् तूष्णींहोमस्य आधानाङ्गभूतस्य स्तुत्यर्थं, नाग्निहोत्रस्य पूर्वप्रवृत्तिसूचकम् । तूष्णींहोमो हि नाग्निहोत्रहोमः, प्रमाणाभावात् । नापि अग्निहोत्रधर्मकः, अर्थवादगतस्य नाम्न अनतिदेशकत्वात् । एतद्धोमस्यापि आधानद्वारा अग्निप्रयोजकस्य अग्निसंनिधावनिर्देशात्, प्रायणीयादिपदवत् अनतिदेशकत्वाच्च । अत अपूर्वस्यैव होमस्य इय स्तुतिः इति नाग्निहोत्रस्य पूर्वप्रवृत्तौ लिङ्गम् । भिन्नप्रयोगपरिगृहीतानामपि न पौर्वापर्यमात्र प्रसङ्गात् निरूपितम् । •पवहितान्यव्यवहितसाधारण्येन पौर्वापर्यमेव अध्यायार्थ इत्यपि ध्येयम् ।

मण्डन— 'सपावमानेऽग्नौ धर्मे ।'

शंकर— 'अग्निहोत्रादीष्टित. परम् ।' अग्निहोत्रादि इष्टित पर कर्तव्यम् ।

ञ्ञ 'आधानस्याप्राप्तकालत्वात् । इति न्याय । 'अवकीर्णिपशुश्च तद्वदाधानस्याप्राप्तकालत्वात्' इति । 'अवकीर्णिपश्वधिकरण' इति विदो द्रष्टव्यम् । (६। ८।४।२२) विवाहात् प्राक् ब्रह्मचारिण आधान न संभवति आधानकालस्य तदानीमप्राप्तत्वात् इति न्यायार्थः । के.

० आधानस्य आवश्यकत्व अवगम्यते 'नानाहिताग्निरिष्टिं यजेत' इति वाक्यात् । सु. पृ ९९५. ० आधानस्य इष्टिपूर्वत्वपक्षे आग्नेयस्य पौर्णमासीगताग्नीषोमीयस्य हविष सोमात्पूर्वमुत्कर्ष । पौर्णमासेष्टेरेव उत्कर्षः इत्येकदेशिमतम् । भा. ५।८।४।१०.

ञ्ञ आधानस्य इष्टिपूर्वत्वसोमपूर्वत्वयोर्विकल्प ॥ वचनादिष्टिपूर्वत्वम् । ५।४।३।५ ॥

भाष्यं— (आधानस्य-) इष्टिपूर्वत्वं समाम्नातम् । तत्र सदेह. किमिष्टिपूर्वत्वं सोमपूर्वत्व वा विकल्प्यते, अथवा इष्टिपूर्वत्वमेवेति । किं प्राप्त ? इष्टिपूर्वमेव स्यात् । कुत. ? वचनात् । वचनमिद भवति, 'एष वै देवरथो यद् दर्शपूर्णमासौ, यो दर्शपूर्णमासाविष्ट्वा सोमेन यजते, रथस्पष्ट एवावसाने वरे देवानामवस्यति' (रथेन स्पष्टे वरे श्रेष्ठे देवानामवसाने स्थाने अवस्यति समाप्यते विपूर्वात्स्यर्थ) । इति । नास्ति वचनस्यातिभार । तस्मात् इष्टिपूर्वत्वमेवेति ।

सोमश्चैकेषामग्न्याधेयस्यर्तुनक्षत्रातिक्रमवचनात्तदर्थेनानर्थकं हि स्यात् । ६ ॥

भाष्यं— इष्टिपूर्वत्वमित्येतत् गृहीम. । किंतु सोम एकेषां पूर्वो दर्शपूर्णमासयो स्यात् । कुत ? अग्न्याधेयस्य ऋतुनक्षत्रातिक्रमवचनात् । 'य सोमेन यक्ष्यमाणोऽग्नीनादधीत, नर्तुं प्रतीक्षेत नक्षत्रं' इति । य सोमयाग करिष्यमाणोऽग्नीन् आदधीत, स न प्रतीक्षेत नक्षत्रं, नापि ऋतु, तावेव आदधीतेति आनन्तर्यमुच्यते । इतरथा ऋतुनक्षत्रातिक्रमवचन अनर्थकं स्यात् । आनन्तर्ये अनपेक्ष्यमाणे यथैव ऋतुनक्षत्रे उक्ते तथैव तयोरनादरे कीर्तितं स्यात् । तस्मादस्ति सोमाधानयोरानन्तर्यमिति । अपि च विस्पष्टा चात्र तृतीया विभक्तिः 'सोमेन यक्ष्यमाण' इति । यदा वा इष्टिपूर्वत्वमनुत्पाद्य विवक्ष्यते, न तदा अनन्तरकालविवक्षा, तत्र शब्दो विप्रतिषिध्येत । तस्मात् आनन्तर्यविवक्षा इत्यवगम्यते ।

टुप्—पापणि दर्शपूर्णमासाभ्या कर्तव्य सोम । कथ ? 'सोमेन यक्ष्यमाणोऽग्नीनादधीत' [णोऽग्नि-

मादध्यात्०इति रत्नपाठ. ] इति हि (आधानोत्तरकाले सोम ) श्रूयते । स च ( सोमस्य कर्मान्तरेभ्यः ) असाधारण्ये ( सति ) उपपद्यते । यदि आधानोत्तरकाले ( प्रागेव दर्शपूर्णमासाभ्याः ) सोमेन यजेत , न दर्शपूर्णमासोत्तरकाले , एवं ( सति ) असाधारणः संबन्धः ( स्यात् ), इतरथा दर्शपूर्णमासपशुबन्धादिभिः सर्वैव ( पुरुषो ) यक्ष्यते । तत्र सोमेन यक्ष्यमाण इति विशेषणं नावकल्पेत । न नैवंविध ( पुरुषः ) अस्ति , यः सोमेन नैव यक्ष्यते, यदपेक्षया ( सोमेन यक्ष्यमाण इति ) विशेषणं भवेत् । नित्यो हि सोमः । ( सूत्रस्यार्थमाह— ) ऋतुनक्षत्रप्रतिषेधश्च सोमाधानानन्तर्ये एव घटते ( नान्यथा ) । सोमस्य हि कालः ( 'वसन्ते ज्योतिष्टोमेन यजेत ' इति ) विहितः । स यदि प्रतिषिध्येत , किमर्थं तस्य विधानम् । यदि (तु ) आधानोत्तरकालस्य सोमस्य ( नर्तुं पृच्छेत् इति ) कालप्रतिषेधः, ततो दर्शपूर्णमासोत्तरकाले ( सोमे ' दर्शपूर्णमासौ इष्ट्वा सोमेन यजेत ' इति विहिते ) वसन्तकालविधानं कृतार्थं भवति । ( उपसंहरति— ) तस्मात् सोमस्य द्वौ कालौ प्राक् दर्शपूर्णमासयो , ऊर्ध्वं च । ( एवं स्थिते अधिकरणे किमाधानानन्तर भाव्यत् किं विकल्पेन सोम एव कर्तव्यः, उत अन्तराऽपि किं चित्करणीयेन इति संशये, न किं चित् कर्तव्य आनन्तर्यावगमात् सोमाधानयोः इति प्राप्ते पक्षान्तरमाह— ) न च आधानानन्तरं अस्मात् न किं चिदनुष्ठाय सोम एव कर्तव्यः ( इति मन्तव्य ), किं तर्हि पवमानेष्टि—ग्राम्यपशु-अग्निहोत्राणि कृत्वाऽपि सोमो दर्शपूर्णमासयोः प्राक् कर्तव्यः इत्येतदपेक्षया ' सोमेन यक्ष्यमाणः ' इत्यसाधारण्यमुपपद्यते एव । ( तदिदं भाष्यकारो न स्पृशतीत्याह— ) यथा भाष्यकारेणोक्तं, तथा ग्राम्यपशुः सोमाद्रन्यात् भवति, पवमानेष्टयोऽपि अग्निसंस्कारत्वात् भवन्त्येव । अग्निहोत्रं तु नास्ति । ( ये तु इष्टिपूर्वकल्पपक्षे एव माम्यपशुं स्मरन्ति , तेषां किं मूलमिति न विद्मः । रत्न. )

तदर्थवचनाच्च नाग्निहोत्राद् तदर्थत्वम् । ७ ॥

भाष्यं— इतश्च सोमाधानयोः आनन्तर्यम् । कुतः । तदर्थवचनात् । ' यः सोमेन यक्ष्यमाणोऽग्निमादधीत ' इति च सर्वैरप्यसौ यक्ष्यमाणः अग्निमाधत्ते सोमेन अग्निहोत्रादिभिश्च । नासति सोमस्य विशेषे सोमार्थता स्यात् । असावसौ विशेषः स्यात् , यत् आनन्तर्यं सोमाधानयोरिति ।

अयक्ष्यमाणस्य च पवमानहविषां कालनिर्देशादानन्तर्याद् विशङ्का स्यात् । ८ ॥

भाष्यं— सोमेन अयक्ष्यमाणस्य च पवमानहविषां काले निर्दिश्यते । ' यः सोमेनायक्ष्यमाणोऽग्निमादधीत , स पुरा संवत्सराद्धवींषि निर्वपेत् ' इति । न खलु कश्चिदयक्ष्यमाण , सर्वस्य विहितत्वात् । तस्मात् अनन्तरमयक्ष्यमाण इति गम्यते ।

इष्टिरयक्ष्यमाणस्य तादर्थ्ये सोमपूर्वत्वम् । ९ ॥

भाष्यं— इदं प्रयोजनसूत्रं वर्ण्यते । क्षीणमधिकरणम् । किं प्रयोजनं चिन्तायाः । इष्टिः अयक्ष्यमाणस्य सोमेन , निरभिसंधिके आधाने । तादर्थ्ये सोमपूर्वत्वम् । सोमार्थतायां तु आधानस्य सोमपूर्वत्वं स्यात् ।

सोम— पवमानेष्टिभिर्ग्राम्यपशुना च आधानाङ्गत्वभावेन आधानानन्तर्यविषयलाभात् , अर्थादपि सोमस्य न दर्शपूर्णमासापेक्षया पूर्वत्वम् । एवं चात्र आनन्तर्यक्रमस्य केनापि बाधः इति प्रत्यवस्थानात् संगतिः । ' सोमेन यक्ष्यमाणः ' इति वाक्ये सोमस्य आधानस्य च अन्यतः प्राप्तेर्लक्षणया सोमस्याधानानन्तर्यमेव विधेयं, अन्यथा वाक्यानर्थक्यात् । तत्र पवमानेष्टीनां आधानाङ्गत्वात् ग्राम्ययोः सोमाधिकारसिद्ध्यर्थत्वाच्च न व्यवधायकत्वम् ।

वि— ' दर्शादीष्ट्वा सोमयागः क्रमोऽयं नियतो न वा ।, तत्रैतस्यो , न सोमस्याधानानन्तरताश्रुतेः ॥ '

भाट्ट— आधानप्रकरणे ' यः सोमेन यक्ष्यमाणोऽग्निमादधीत नर्तुं पृच्छेन्न नक्षत्र ' इति श्रुतम् । न च तेन सोमस्य आधानानन्तर्यं विधातुं शक्यं, आनन्तर्यस्याश्रवणात् वाक्यभेदप्रसङ्गाच्च । अतो विहितकालानादरमात्रं आधानोद्देशेन विधीयते । ' सोमेन यक्ष्यमाणः ' इति तु अनुवादः । तेन ' दर्शपूर्णमासाभ्यामिष्ट्वा

सोमेन यजेत ' इत्येतद्वाक्यविहितदर्शपूर्णमासोत्तरकालत्वमेव सोमस्य । इति प्राप्ते, आधानमात्रोद्देशेन विहित फाल्गुनादरविधाने ' सोमेन यक्ष्यमाण. ' इत्यस्य वैयर्थ्यापत्तेः । आधानकर्तुश्च सर्वस्यापि सोमयागाधिकारित्वात् विशेषणस्य व्यावर्त्याभावेन वैयर्थ्यापत्तेः, सोमेन आधानानन्तरं यक्ष्यमाणः अग्निं इत्यर्थावगतिः । न च रथकाराधानव्यावृत्त्यर्थं विशेषणोपपत्तेः नानन्तर्यकल्पना युक्तेति वाच्यम् । यक्ष्यमाण. इति अद्यतनवाचिप्रत्ययश्रवणेन आनन्तर्यस्य अकल्पनीयत्वात्, रथकाराधानस्य अदृष्टार्थत्वेन अग्निं इति द्वितीयाऽनुपपत्तेश्च । रथकाराधाने फाल्गुनादरस्य ' यद्दश्रैनै ' इति वचनेनैव सिद्धतया तस्य प्रसक्त्यभावेन निवारणीयत्वानुपपत्तेश्च । अतोऽत्र सोमाव्यवहितपूर्वकालीनाधाने निमित्ते विहित फाल्गुनादरो विधीयते । कर्तृमन्त्राधिकरणेन भाष्यकारोदाहृतेन यच्छब्देन निमित्तत्वावगते, सकलकारकान्वयस्य अनुत्पत्त्याम न विशिष्टोद्देशे वाक्यभेदः । अतश्च सिद्धवन्निर्देशान्यथाऽनुपपत्त्या कल्पितेन विध्यन्तरेण ' उपरि हि देवेभ्यो धारयति ' इतिवत् सोमाङ्गतया आधानानन्तर्यं विधीयते । अथवा ' अपहतपाप्मा मन्त्र, असौ खलु वादित्य उद्यन्नेव पाप्मानमपहन्ति, तस्मादुद्यत्येवैन भद्रोदनमेत् अथादधीत अथ यजेत ' इति वचने ' अथ यजेत ' इत्यनेन आधानानन्तर्यं सोमे विधीयते, यजेत इत्यनेन सोमस्यैव परामर्शात् । अत एव ' अथादधीत ' इत्यनेन आधाने एव फाल्गुनाध इति वक्ष्यते । अतश्च न निमित्तश्रुत्यन्यथाऽनुपपत्त्याऽपि विध्यन्तरकल्पना । अत एव इष्टिपूर्वत्वे एव यदा इष्टपुनर अग्निविनाशादिनिमित्ताधानाव्यवहितोत्तरसोमकरण, तदा सोमे फाल्गुनादरविधानोपपत्तेः. न विध्यन्तरकल्पनया विकल्पाश्रयीकरणं युक्त इत्यपास्तम् । प्रत्यक्षविधिनैव अपूर्वाधानानन्तर्यस्य विहितत्वात् । नहि ' अथादधीत ' इत्यत्र पुनराधानप्रसङ्गोऽस्ति, तस्य निमित्तवशवर्तित्वेन तत्र फाल्गुनादरविधिवैयर्थ्यात् । अतश्च अपूर्वाधानानन्तर्ये एव फाल्गुनादरविधानात् इष्टिपूर्वत्वस्य सोमपूर्वत्वेन युक्त एव विकल्प. । के चित्तु ' सोमेन यक्ष्यमाण. ' इति भिन्नं वाक्य, ' नर्तुं पृच्छेत् ' इति भिन्नम् । तत्र आद्येन प्रकरणात् तृतीयविधिप्रकारे लाघवाच्च आधानोद्देशेन सोमाव्यवहितपूर्वकालत्वं विधीयते, सोमपूर्वकालत्वमात्रविधाने वाक्यवैयर्थ्यात् । अतश्च वाचनिकेन सोमपूर्वत्वेन इष्टिपूर्वत्वस्य विकल्प इत्याहुः । तन्न । वाक्यभेदे प्रमाणाभावात्, आधानाङ्गभूतसोमपूर्वत्वेन सोमाङ्गभूतेष्टिपूर्वत्वस्य विकल्पापादनायोगाच्च । किंच एवं अस्मिन्नेव वाक्ये विशिष्टाधानविधिः, आधानमात्रविधिर्वा अस्तु, ' सोमेन यक्ष्यमाण. ' इत्यस्य ' ऐन्द्राग्नमालभेत् ' इतिवत् अनुवादोपपत्तेः । न चेष्टापत्ति., वसन्तादिवाक्यानां निमित्तार्थत्वापत्तेः । न च ' यच्छब्दस्य धात्वर्थे एव विधिप्रतिबन्धकत्व, न विशेषणांशे ' इत्यत्र प्रमाणमस्ति, प्रसङ्गाभे एव तस्य प्रतिबन्धकत्वात् । न च अस्याधानोत्पत्तिविधित्वे अग्निं इत्येकवचनात् आधानस्य एकाग्न्युत्पादकत्वापत्ति, अग्निगतस्यैकत्वस्य बहुत्वस्य वा उद्देश्यगतत्वेन प्रमाणान्तरसिद्धसङ्ख्योपलक्षणार्थत्वात् । अनेकाग्न्युत्पादकत्व तु ' आयतनेषु सम्भारान् निदधाति ' इति आयतनबहुत्वविधानादवगत इत्युक्त ग्रहैकत्वाधिकरणे ( ३।१।७।१३–१५ ) कौस्तुभे । किंच एवं विहितफाल्गुनादर. शुद्धाधानेऽपि स्यात्, न सोमाव्यवहितपूर्वाधाने एव । उत्तराधिकरणवक्ष्यमाणरीत्या फाल्गुनादरस्य सोमाङ्गत्वेऽपि स इष्टिपूर्वत्वपक्षेऽपि स्यात्, न सोमपूर्वत्वपक्षे एव । अतश्च अस्मदुक्तप्रकार एव श्रेयान् । आधानानन्तर्येऽपि न पवमानेष्टिभि न वा अधिकारव्यवधान, तेषां सोमोपकारकत्वात् । अत एव सोमाधानपक्षे परमेष्ठिना सद्य एव करणं, सोमेन यक्ष्यमाणस्यैव संवत्सरादिकालाम्नानात् ।

मण्डल— ' इष्टिं कृत्वा सोमयागं न कुर्यात् । ' ३ ' यदा सोमः पूर्वमिष्टेरपि स्यात् । ' ४.

शंकर— ' विकल्पः सोमपूर्वत्वे । '

* आधानस्य इष्टिपूर्वत्वसोमपूर्वत्वयोर्विकल्पो न क्षत्रियवैश्ययोरेव, किन्तु ब्राह्मणस्यापि । भा. ५।४।८ १०–१४, १७–१८. * आधानस्य उपनयनाध्ययनदारपरिग्रहपुत्रजननोत्तरकालत्वम् । सोम ६।७।१३-

० आधानस्य काम्यत्वाभावः । सु.पृ. ९१४. ० आधानस्य कालः 'वसन्ते ब्राह्मणोऽग्निमादधीत, ग्रीष्मे राजन्यः, शरदि वैश्यः' ( वर्षासु रथकार आदधीत । ) भा. ११।३।२।२, ० आधानस्य च श्येनस्य च न कश्चिदस्ति संबन्धः । अग्नीनामाधानं अग्नयश्च श्येनस्य । तस्मान्न पवमानहविःषु इतिनयनीतम् । ३।८।२०।३८. ० आधानस्य न पृथक् स्वर्गादिप्रयोजनकत्वम् । सोम. ६।८।२, ० आधानस्य यत् साक्षात् फलं अग्निसत्तारूपं तस्य कर्तृगामित्वासम्भवात् आहवनीयाद्यग्निसाध्यक्रतुफलस्य कर्तृगामित्वे एव आधानवाक्यगतात्मनेपदपर्यवसानादेव दर्शादिष्वपि फलस्य कर्तृगामित्वसिद्धेः, 'यजेत' इत्यात्मनेपदं न तु गवानग्निसाध्यगोदोहनादिगुणफलस्य कर्तृगामित्वार्थम् । ६।२।२. ० आधानस्य वाक्येन आग्न्यर्थता अवगता । वा. ४।१।२।२ वर्णके ३ पृ. ११९७. ० आधानस्य सर्वकालत्वात् सोमकालस्याग्रहः स्यात् । नैवाधाने कश्चित् कालनियमोऽस्ति 'यदहरेवैनं श्रद्धोपनमेत् तदहरादधीत' इति । भा. ५।४।५।१६.

आधानस्य सोमपूर्वत्वे सोमकालस्य बाधः, नाधानकालस्य ॥

स्वकाले स्यादविप्रतिषेधात् । ५।४।५।१५ ॥

भाष्यं— अन्तरा चिन्ताऽस्माद् वक्ष्यते । 'यः सोमेन यक्ष्यमाणोऽग्निमादधीत, नर्तुं प्रतीक्षेत न नक्षत्रम्' इति । अत्र संदेहः किं आधानस्य अत्र कालविशेषबाधः, उत सोमस्येति । किं प्राप्तम् ? आधानस्य कालबाधः, स्वकाले स्यात् सोमः । कुतः ? अविप्रतिषेधात् । अङ्गमाधानम् । तस्य कालबाधो न्याय्यः, न प्रधानस्य । 'अङ्गगुणविरोधे च तादर्थ्यात्' ( १२।२।९।२५ ) इति वक्ष्यते ।

अपनयो वाऽऽधानस्य सर्वकालत्वात् । १६ ॥

भाष्यं— अपनयो वा सोमकालस्य स्यात् । कुतः ? आधानस्य सर्वकालत्वात् । नैव आधाने कश्चित् कालनियमोऽस्ति 'यदहरेव एनं श्रद्धोपनमेत् तदहरादधीत' इति । अत्रापि तत् आधानस्य, यत् प्रतिषिध्यते । तस्मात् सोमस्य कालबाधः इति ।

वि— 'नर्तुमित्याहितेः कालो बाध्यः सोमस्य वा, ऽग्रिमः । अङ्गमाधानात्, पूर्वोऽस्य बाधात् सोमीयबाधनम् ॥'

भाट्ट— 'यः सोमेन यक्ष्यमाणोऽग्निमादधीत, नर्तुं पृच्छेन्न नक्षत्रं' इत्यनेन विधीयमानः कालानादरोऽपि प्रकरणात् आधानोद्देशेनैव विधीयते, न तु सोमोद्देशेन, अङ्गगुणविरोधन्यायेन ( १२।२।९।२५ ) उपकारके आधाने एव कालबाधस्य न्याय्यत्वात् । तेन स्वकाले सोमं कुर्वता अव्यवहितपूर्वं आधाने क्रियमाणे नाधानकालप्रतीक्षा कार्या । इति प्राप्ते, अस्यामेव शाखायां 'यदहरेवैनं श्रद्धोपनमेत् अथादधीत' इति वचनान्तरेण आधानमात्रे कालानादरस्य विहितत्वात् तत एव सोमाव्यवहितपूर्वाधानेऽपि कालानादरप्राप्तेः अनेन वाक्येन स्ववाक्योपस्थितस्य सोमस्यैव उद्देश्यवाचकपदकल्पनया उद्देश्यत्वं इति तस्यैव कालानादरः । यत्तु शतपथे 'अपहतपाप्मानो वै' इत्यादिवचनेन उभयोरपि कालानादरविधानं, तत् शाखाऽन्तरस्थत्वात् आधानकालबाधे इव न दोषः । यत्तु मस्तु तत्र 'अथ यजेत' इति वचनेन आधानानन्तर्यमेव सोमस्य विधीयते । 'अथादधीत' इति पूर्ववचनेन तु आधाने एव कालबाधः इत्युक्तमेव । अत्र च 'अर्धमस्तमेति' इतिवत् लक्षणया विहितकालमात्रस्य अनादरविधानात् पौर्णमास्यादिपर्वणोऽपि अनादरः इति के चित् । नक्षत्रायनर्तुवैयर्थ्यात्तु वाक्यभेदमपि अङ्गीकृत्य ऋतुनक्षत्रमात्रानादर एव । *अन्यथा एकाहत्वादेरपि बाधापत्तेः इति तत्त्वम् ।*

मण्डन— 'सोमाधाने सोमकालस्य बाधः ।' ६.

शंकर— 'सोमेऽप्यृत्वादिबाधः स्यात् ।'

० आधानस्य सोमार्थत्वे सोमपूर्वत्वं, सोमार्थत्वाभावे तु इष्टिपूर्वत्वम् । भा. ५।४।३।९.

आधाने आहवनीयः गार्हपत्यात् प्रणीय आधीयते ॥

सान्येऽपि शीर्षादिकस्यात् सोऽपि एव आधीरन् इति प्राप्ते, 'अयं ते योनिर्ऋत्वियो, अग्ने पूर्वो भव, तत-स्तमपत्त, एष सोऽस्य योनिरित्यग्नादेयोऽधिक्रियते'

इति श्रवणाद् गार्हपत्यादेव आहवनीयाधानम् । संकर्ष. ३।२।२.

● आधाने 'उत्पत्तिविधिमालोच्य साम्नां वेदान्तरीयता । साङ्गप्रधानसंबन्धादुपांशुत्वं तु गम्यते ॥' यदि हि यजुर्वेदे एव एषामुत्पत्तिः स्यात्, तत्स्वरूपनिमित्तमेव उपांशुत्वं स्यात् । एतेषां तु सामवेदोत्पन्नानां स्वरूपतः उच्चैस्त्वप्रसङ्गे प्रधानसंस्पर्शनिमित्तमुपांशुत्वं इति प्रधानधर्मता । वा ३।३।२९ पृ. ८१०. ● आधाने 'क्षौमे वसानौ अग्नी आदधीयाताम्' इति । अत्र दंपत्यभिप्रायं द्विवचनम् । एकस्मिन्नाधाने एकस्यैव सपत्नीकस्य पुंसोऽधिकारः, न द्वयोः पुरुषयोः । वि ६।१।५. ● आधाने दक्षिणाना अपरिमितत्व पूर्वोक्तमत् एकादिसहस्रान्तसंख्यया. सकाशात् संख्याऽन्तरम् । भा ६।७।१०।२२.

✠ आधाने दक्षिणानां अपरिमितत्व सहस्राधिकत्वम् ॥

अनियमोऽविशेषात् । ६।७।११।२३ ॥

भाष्य— अपरिमिते ( अपरिमितं देयं इत्यत्र ) कल्पान्तर इति समधिगतम् । अथेदानीमिदं संदिह्यते किं सहस्रादून अपरिमितं, उत सहस्रादधिकमिति । किं तावत् प्राप्तं ? अनियमोऽविशेषात् । न कश्चिद् बहुत्वे विशेष आश्रीयते सहस्रादूनमधिकं चेति । अनाश्रीयमाणे यथाकामं स्यात्, यथाकृतं साधु । तस्मादनियम ।

अधिकं वा स्याद्, बह्वर्थत्वादितरेः संनिधानात् । २४ ॥

भाष्य— नैतत् पक्षव्यावृत्तिः । नैतदस्ति अधिकमूनं वा सहस्रादिति । किं तर्हि ? अधिकमेवेति । कुतः ? बह्वर्थत्वात् अपरिमितशब्दस्य । बहुषु हि इमं शब्दं उपचरन्ति इत्येतदुक्तम् । बहुत्वं चापेक्षिकं, किंचिदपेक्ष्य ततोऽधिकं बहु इत्युच्यते । असत्यामपेक्षायां अपरिपूर्णमेतत् । यथा पुनः इति किंचिदपेक्ष्य भवति, नान्यथा । तत्र प्रकृतं संनिहितं चापेक्ष्य निर्णयः, सहस्रं च संनिहितम् । तस्मात् ततोऽधिकं अपरिमितमिति ।

अर्थवादश्च तद्वत् । २५ ॥

भाष्य— कथमेवं ? तत्र 'ऊनं वै अपरिमितं' इति कदनूनता सहस्रस्य दर्शयति ।

शा — 'आपेक्षिको हि बह्वर्थः सहस्रापेक्षया भवेत् । तस्यानन्तरनिर्देशात् सहस्रादधिकस्ततः ॥'

सोम— पूर्वोक्ते विशेषविचारात् संगतिः ।

वि— 'अर्वागपि बहुत्व तत् सहस्रादूर्ध्वमेव वा ।, संभवादग्रिमो, ऽन्त्यः स्यात् सहस्रानन्तरोक्तितः ॥'

भाट्ट— ( दशमाधिकरणे एव एकादशस्यान्तर्भावात् न पृथक् किंचित् ) ।

मण्डन— 'सहस्रादधिकं दद्य ।'

शंकर— 'सहस्राधिकमेव तत् ।' १३. उभयत्र तत्शब्दस्य अपरिमितत्व इत्यर्थः ।

✠ आधाने दक्षिणानां संख्यासु विकल्पः ॥

संख्यासु तु विकल्पः स्याच्छ्रुतिविप्रतिषेधात् । १२।४।५।९ ॥

भाष्य— आधाने दक्षिणाविषयः 'एका देया, षड् देयाः, द्वादश देयाः' इत्येवमादयः । तेषां किं समुच्चयो विकल्पो वा इति विचारणा । तत्र अदृष्टार्थत्वात् कर्माङ्गग्राहिणा प्रयोगवचनेन समुच्चये प्राप्ते उच्यते । संख्यासु तु विकल्पः स्यात् । कुतः ? श्रुतिविप्रतिषेधात् । 'एका देया' इत्येकसंख्यापरिच्छिन्नं द्रव्यं परिक्रयसाधनं श्रूयते । तथा 'षड् देयाः' इति षट्संख्यापरिच्छिन्नम् । यदि एका च षट् च समुच्चीयेरन् ( तदा ) संख्याऽन्तरं सप्तसंख्या उत्पद्यते । तत्परिच्छिन्नेन द्रव्येण परिक्रयः कृतः स्यात् । तत्र एकश्रुतेः षट्श्रुतेश्च विप्रतिषेधः स्यात् । ननु नैवात्र परिक्रयः श्रूयते, किं तर्हि ? दानं, एका देया षड् देया इति । अत्रोच्यते । दानं नाम आत्मीयस्य द्रव्यस्य परस्वत्वापादनम् । तच्च परः स्ववान् स्यात् इत्येवमर्थम् । स्ववानेनासौ तस्मान्निश्रयं करोति, तेन चास्य दातुरर्थः । एव दृष्टार्थो भवति । अथ दानमात्रं कल्प्यते, ततः अदृष्टं कल्पयितव्यम् । परिक्रये एव एकादीनां भवनम् । तत्र यः सप्तभिः परिक्रीयते, न तेन एकया षड्भिर्वा परिक्रीतो भवति । नहि ते एव

इत्यामनन्ति, न पठिति, किं तर्हि ? वसेति । स एष श्रुतिविप्रतिषेधः । तस्मात् विकल्पः संख्यासु ।

**सोम**— पूर्वनदिहापि समुच्चयः इति उत्थितेः संगतिः ।

**वि**— 'एका देया समुच्चेय विकल्प्यं वाऽऽद्य भानतेः । सौलभ्या, दन्तिमो नैरपेक्ष्यात् संख्याऽन्तरादपि ॥'

**भाट्ट**— अग्न्याधेयाङ्गदक्षिणाना 'एका देया, षड् देयाः' इत्यादीना निरपेक्षतापन्नत्वात्, समुच्चये संख्याऽन्तरोपजननापत्तेः, विकल्प एव । न च एकवाक्यतालाभाय उपजायमानसंख्याऽन्तरे एव लक्षणा सर्वेषामिति वाच्यम् । प्रत्यक्षविधिभञ्जनेन वाक्यभेदस्यैव प्रामाणिकत्वात् ।

**मण्डन**— 'षडेकादौ विकल्पः स्यात् ।'

**शंकर**— 'नाग्न्याधेये दक्षिणासु ।' समुच्चयः । ५.

‡ आधाने दक्षिणाग्निः निर्मन्थ्यः गार्हपत्याद्वा ॥

दक्षिणाग्निशब्दस्यापि दिक्पदघटिततया दक्षिणदिशः सकाशादाहृतलौकिकाग्निपरत्वात् लौकिक एव कल्पितः । इति प्राप्ते, 'निर्मन्थ्यात् दक्षिणाग्निमादधीत' इति शाखाऽन्तरे श्रवणात्, गार्हपत्यस्य सर्वयोनित्वात् वा ततः एवाधानम् । सकर्ष. ३।२।४.

* आधाने पवमानहविर्भ्यः प्राक् द्वादशसु दिनेषु तूष्णींहोम । 'तूष्णीमेव होतव्यमग्निहोत्रम्' इति विधानात् । तत्र च 'होतव्यमग्निहोत्रं न होतव्यमिति मीमांसन्ते' इत्यादिः अर्थवादः । वि. १०।८।५.

‡ आधाने पवमानहविषां काम्यप्रयोगे प्रथमस्य तन्त्रभेदः उत्तरयोस्तन्त्रं, ब्रह्मवर्चसकामत्वे नित्यप्रयोगे च त्रयाणामपि तन्त्रम् ॥

**पवमानहविःष्वैकतन्त्र्यं प्रयोगवचनैकत्वात् । ११।४।४।११ ॥**

**भाष्यं**— आधाने पवमानेष्टय. 'अग्नये पवमानायाष्टाकपालं निर्वपति, अग्नये पावकाय, अग्नये शुचये' इति । तत्र विचार्यते किमासां ऐकतन्त्र्यं, भेदो वेति । किं प्राप्तं ? पवमानहविःषु ऐकतन्त्र्यं स्यात् । कुतः ? प्रयोगवचनैकत्वात् । एक आसां प्रयोगवचनः 'अह्नो निरुप्याणि' इति । प्रयोगवचनैकत्वात् सहप्रयोगः । तत्र न श्रूयते विशेषः । तस्मादैकतन्त्र्यम् ।

**टुप्**— 'अह्नो निरुप्याणि' इति कालवचनं मन्यमानः तन्त्रतामापादयति । यथा पौर्णमास्याः प्रधानाः कालसंयोगात् तन्त्रेणाङ्गानि एवमिहापि ।

**लिङ्गदर्शनाच्च । १२ ॥**

**भाष्यं** — लिङ्गं च सहयोगं दर्शयति 'समानबर्हींषि भवन्ति' इति । अनुवादोऽयं वर्तमानापदेशात् ।

**वचनात्तु तन्त्रभेदः स्यात् । १३ ॥**

**भाष्यं**— न च ऐकतन्त्र्यं स्यात् । किं तर्हि ? तन्त्रभेदः । न च भवन् एव स्यात्, प्रथमायाः भेदः, उत्तरयोस्तन्त्रम् । कस्मात् ? वचनात् । वचनमिदं भवति 'अथ य कामयेत वर्षीयान् श्रेयान् स्यामिति, तस्याग्नये पवमानाय निरुप्य अथ पावकाय शुचये चोत्तरे हविषी समानबर्हिषी निर्वपेत्, यदेनमग्रहीत् तेन [illegible] उत्तर वर्षीयान् श्रेयान् भवति' इति । विभिन्न वचनं न कुर्यात् । नास्ति वचनस्यातिभारः । तस्मादेव कर्तव्यम् । अथ यदुक्तं प्रयोगवचनैकत्वात् इति, तस्य कः परिहारः ? नासौ प्रयोगवचनः, कालवचनोऽसौ 'अह्नो निरुप्याणि' इति । तस्मादहेतुः स भवति ।

**टुप्**— सिद्धान्तवादी तु अहःशब्देन द्यःकर्तव्यानि इति विज्ञायते, न कालं प्रति उपादीयन्ते । अह शब्दस्य कालो न वाच्यः, येन कालं प्रति उपादीयेरन् । तस्मात् भेदो वचनात् ।

**सहत्वे नित्यानुवादः स्यात् । १४ ॥**

**भाष्यं** — यदोक्तं 'समानबर्हींषि भवन्ति' इति समानप्रयोगं दर्शयतीति । अत्र ब्रूमः । सहत्वे नित्यानुवादः स्यात् । इदमपर श्रूयते 'यो ब्रह्मवर्चसकामः स्यात्, तस्य सर्वाणि हवींषि निरुप्याणि' इति । तस्य सहप्रयोगो भवति । तस्मिन् सहत्वे नित्यानुवादोऽयं स्यात् 'समानबर्हींषि भवन्ति' इति । कथं पुनः निरुप्याणि इत्युक्ते सहप्रयोगो विज्ञायते ? 'निरुप्याणि' इति बहुवचनात् प्रयोगो विज्ञायते । तत्र बहूनां उपादेय-

रेण चोदितानां विवक्षितम् । न चैकधा प्रयोगो, बहुसंयुक्तः प्रयोगो भवति । तस्मात् सहप्रयोगो विधीयते ।

टुप्—'समानबर्हींषि भवन्ति' इत्यनुवादः । 'ब्रह्मवर्चसकामस्य सर्वाणि हवींषि सह निरुप्याणि' इति तत्र निर्वापे सह चोदिते वचनात् तन्त्रं भवति । तस्मात् तदपेक्षया अनुवादो भवति ।

सोम—नित्ये प्रयोगे समानतन्त्रता, काम्ये तु प्रयोगभेदः । अनेन प्रयोगद्वयस्य वैरूप्येऽपि पवमानहविःषु न वैरूप्यं श्रुतिविधानात् संगतिः ।

वि—'पवमानेष्टिहविषां तन्त्रं भेदोऽथवा,ऽग्रिम. । साध्यदेशाद्यभेदात्, यो काम्ये भेदोक्तितोऽन्तिमः ॥'

भाट्ट—अनेकप्रयोगता पवमानेष्टयः 'संवत्सरे निर्वपेत्, द्वादशाहे चतुरहे वा, अह्नो निरुप्याणि' इत्यनेन तत्तत्कालविशिष्टैकप्रयोगविधानात् 'पौर्णमास्यां पौर्णमास्या यजेत' इत्यादिवत् एकप्रयोगेणैव कर्तव्या इत्यविवादम् । अत एव 'अह्नो निरुप्याणि' इत्यत्र अह्नः सद्यः आधानसंनिकृष्टानि इत्यर्थाङ्गीकारेण संवत्सरादिकालव्यवधानाङ्गीकारेऽपि संवत्सरवाक्ये कालविवेकावश्यकत्वेन तत्र एकप्रयोगविधेयावश्यकत्वात् । तथैव च आधानसंनिकर्षविधानेन सद्यःपक्षेऽपि एकप्रयोगता सिद्धि । अत एव 'सह निरुप्याणि' इत्यनुवादोऽपि संगच्छते । तदेवं नित्यप्रयोगे सहत्वविधानेऽपि संयोगपृथक्त्वन्यायेन ( ४।३।३।५-७ ) 'यो ब्रह्मवर्चसकामः स्यात् तस्य सर्वाणि सह निरुप्याणि' इत्यनेन फलार्थे सहत्वं दध्यादिवत् विधीयते । तदेवं स्थिते पुनः 'यः कामयेत उत्तरोत्तरं वसीयान् श्रेयान् स्यामिति, तस्याग्नये पवमानाय निरुप्य पावकशुचिभ्यां उत्तरे हविषी समानबर्हिषी निर्वपेत्' इति श्रुतम् । तत्र तथा पवमानप्रयोगोत्तरकालत्वविशिष्टपावकशुचिसमानतन्त्रैकप्रयोगस्यैव फलार्थं विधानात् न त्रयाणामेकप्रयोगता । न च नित्यप्रयोगे त्रयाणामपि सहत्वविधानात् अत्र तथा प्रधानमात्रम् एव दध्यादिवत् फलार्थं विधीयताम् इति वाच्यम् । तथात्वे उत्तरयोरेव समानबर्हिष्कत्वानुवादानुपपत्तेः । न चैवं प्रयोगभेदे कर्तृभेदात् त्वयुक्तसमानकर्तृकत्वानुपपत्तिः, वरणभरणादिभेदेन कदाचिन्नित्य कर्तृभेदे सदपि तदनैक्यमात्रेण पवमानरूपकर्त्रैक्येन वा तदुपपत्तेः । यत्तूक्तम् आधानदक्षिणानां पवमानेष्टिमध्ये एव दानविधानात् तथैव प्रयोगेन कार्यसिद्धेः न पवमानेष्टिषु पृथग्वरणमस्ति । अतस्तत्र कालिकप्रयोगभेदेऽपि कर्तृनैक्यात् तदनुपपत्तिरिति तन्न ।

मण्डन—'पवमानेष्टितन्त्रता ।' न ।

शंकर—'न तेष्टिषु गुणात् पक्षे ।' वा तन्त्रता ।

१७ आधाने पवमानेष्टयः न पवमानेष्टिसंस्कृतेऽग्नौ, किंतु केवलाधानसंस्कृते एव ॥

तासामग्नि. प्रकृतिवत् प्रयाजवत् स्यात् । ३।६।६।१६ ॥

भाष्य—सन्ति पवमानेष्टयः 'अग्नये पवमानाय' इत्येवमाद्या. । तत्र संदेह. किं पवमानेष्टिसंस्कृते अग्नौ पवमानेष्टयः कर्तव्याः, उत नेति । किं प्राप्तं ? तासां तु पवमानेष्टीनां पवमानेष्टिसंस्कृतः अग्निः प्रकृतिवत् स्यात् । कुतः ? चोदकसामर्थ्यात् प्रयाजवत् । यथा आसु प्रयाजा भवन्ति चोदकेन, एवं पवमानेष्टिसंस्कृता अग्नयोऽपि भवेयुः ।

वा—'तस्मा नु स्यात् प्रयाजवत्' ( १०।१।४।६ ) इत्येतदधिकरणन्यायेन पवमानहविःषु संस्कृताग्निसाध्यत्वं तासामस्ति नास्तीति विचारः । तत्र 'हविषु दर्शपूर्णमासयोः प्रवृत्तिः स्यात्' ( ८।१।४।११ ) इत्येव पवमानेष्टीनां दर्शपूर्णमासप्रकृतित्वे सिद्धे यथैव प्रयाजादीनि अतिदिश्यन्ते, तथैव पवमानेष्टिसंस्कृताग्निवर्तित्वमपि । ननु च आहवनीयादयः सर्वकर्मणां प्रत्यक्षश्रुता एव अङ्गत्वं प्रतिपद्यन्ते, इति न चोदकप्राप्यं प्रकृतिवत् इति ( सूत्रे भाष्ये च । ) । नैष दोषः । यथैव प्रत्यक्षश्रुत्या जुहोति, तत्र प्रकृतिसमकाल आहवनीयस्तत्रोऽवकल्पते । यत्र पुनः द्रव्यदेवतासंबन्धात् यजिमात्रे कल्पिते 'चतुरवत्तं जुहोति' इति प्रकृतितो होमः प्राप्नोति, तत्र द्वारस्य प्राकृतत्वात् आहवनीयेनापि प्राकृतेन एव भवितव्यम् । अतः साधूक्तं प्रकृतिवत् इति । ननु याः संस्कारार्थाः क्रियन्ते, तासामपि अन्याः प्राप्नुवन्ति तासामपि अन्याः, इत्यनवस्था प्राप्नोति । नैष दोषः । सर्वासंस्थाना सामर्थ्येन व्यवस्थानात् । यावत्यो

हि अग्निकाले पौर्णमास्यमावास्यादिकं नातिक्रामन्ति तावत्यः करिष्यन्ते ।

**न वा, तासां तदर्थत्वात् । १७ ॥**

**भाष्यं—** न वा इष्टिसंस्कारः अग्नीनां पवमानेष्टिषु स्यात् । कस्मात् ? तासां तदर्थत्वात् । ताः पवमानेष्टयः अग्निसंस्कारार्थाः इत्युक्तम् । यच्च नाम अङ्गभूतं, तत् चोदकेन प्राप्यते । अग्निप्रयुक्तश्च पवमानेष्टिसंस्कारः, न दर्शपूर्णमासप्रयुक्तः । तेन न चोदकेन प्राप्यते । अपि च पवमानेष्टयः इष्टिसंस्कारवर्जिता प्रकृतिमपेक्षन्ते अविहितत्वात् तत्क्रमवत्त्वाया पवमानेष्टीनाम् ।

**वा—** यत्तावत् प्रयाजादि प्रकृतेरङ्गं भवति तदतिदिश्यते, न तु पवमानेष्टयः कर्मोहः, इति आधानन्यायेन (२।३।३।४) साधितम् । अतः 'रूप चाऽशेषभूतत्वात्' (७।३।११।२९) इत्याहवनीयादिस्वरूपमतिदिश्यते, नेष्टयः । आरम्भणीया तु अङ्गं, इति कृत्वा अधिकरणान्तरमारप्स्यते (१०।१।५।९), तदीयश्च एष न्यायः अत्रापि भविष्यति । सत्यपि चाङ्गत्वे यावत् विधीयन्ते, तावत्येवेष्टयः प्रकृतौ दृश्यन्ते । यावत् किं पेनकथंभावैः तद्भावना न पूर्यते तावद्विधिर्न प्रवर्तते । तेन पवमानेष्टिरहितायां प्रकृतौ ताभिरितिकर्तव्यता पठ्यमाना तद्–व्यतिरिक्तधर्मविहितैव चोदकेन ग्रहीतुं शक्यते । अन्यथा हि एकस्मिन् वाक्ये विहितवत् अपेक्षण अविहितस्य विधानं, इति स्वरूपविप्रतिषेधः स्यात् । यस्मात् यावदाहवनीयः प्राक् पवमानेष्टिभ्यः, तावदेव तासां प्राप्तः, इति निष्फलस्याहवनीयस्य प्रयोजनमपेक्षमाणस्य उपदेशेन अतिदेशेन वा अङ्गत्वं शक्यं कल्पयितुम् । एतास्तु तन्निष्पत्त्यर्था एव इति न तत्कृतमुपकारमपेक्षन्ते । न च अनपेक्षितमुपदेष्टुं अतिदेष्टुं वा शक्यते । तस्मात् आधानमात्रसंस्कृतेनाग्निना संबद्धव्याः इति सिद्धम् ।

**शा —** प्रासङ्गिकमिदं पवमानेष्टिषु किं परमानेष्टयः कर्तव्या नेति । 'तत्र प्रकृतितस्तासु पवमानेष्टिसंस्कृतः । प्राप्तोत्यग्निस्तदर्थेन कार्यास्ताश्चेष्टयोऽपि ताः ॥' ननु तास्वदर्शाः, तासामप्यन्याः कार्याः, तासामप्यन्याः इत्यनवस्थाऽऽपत्तिः स्यात् । 'उच्यते नैष दोषोऽस्ति सामर्थ्येन व्यवस्थितेः । यावतीः शक्नुयात् कर्तुं तस्मिन्नहनि, तावतीः ॥ कुर्वतो नानवस्था स्यादिति प्राप्तेऽभिधीयते । न तावदतिदेशेन प्राप्तिस्तासामनङ्गतः । नहि ताः प्रकृतेरङ्गमिति प्रागेव दर्शितम् । प्रकृतौ चोदनायां यत् कथंभावेन संगतम् ॥ तदेव चोदनालिङ्गात् विकृतावतिदिश्यते । चोदकेन ततस्तासां तासु प्राप्तिर्न विद्यते ॥ अङ्गत्वे सत्यपि स्यासां नातिदेशोऽवकल्पते । विधीयन्ते यदा ताः न प्रकृतौ सन्ति तास्तदा ॥'

**वि—** 'संस्कृते पवमानेष्ट्या वह्नौ नेष्टिर्नैव, इयं । वह्नौ तत्संस्कृते कार्या चोदकस्यानुरोधतः ॥, चोदकः पवमानेष्टौ न तां प्रापयितुं प्रभुः । अनङ्गत्वेष्टिस्थितिः स्यादिष्टयस्तदसंस्कृते ॥' तदसंस्कृते पवमानेष्ट्यसंस्कृते, इष्टयः पवमानेष्टयः कार्याः इत्यर्थः ।

**भाट्ट—** पवमानेष्टीनां दर्शप्रकृतिकत्वात् अतिदेशेन प्रयाजादिवदेव अग्नयः प्राप्नुवन्ति, ते च आधानपवमानेष्टिसाध्याः, इति ततः पूर्वं कर्तव्यमेवाधानं पवमानेष्टयश्च । न चानवस्था, यावत्पौर्णमास्यादिकालं करणोपपत्तेः । इति प्राप्ते, न तावत् पवमानेष्ट्यादिकं प्रकृतौ अङ्गं अग्न्याधानार्थत्वस्य स्थापितत्वात् । सत्यपि चाङ्गत्वे तेषां नातिदेशः, पवमानेष्ट्यादिषु यत्किंचिदितिकर्तव्यताकपवमानेष्ट्यपेतसकलाङ्गसंबन्धेनैव प्रकृतेः पूर्णतां परिकल्प्य पवमानेष्टिषु अतिदेशारम्भात् । येषामङ्गानां प्रकृतौ स्वाङ्गसंबन्धेन निराकाङ्क्षता तेषामेवातिदेशः, न पवमानेष्ट्यादीनां, तेषामङ्गविशेषानवगमेन तद्भावनाया अपरिपूर्णत्वात् । अतः अन्वारम्भणीया–(१०।१।८) वैमृध–(४।३।१२) न्यायेनैव नातिदेशः । यद्यनयोः नाङ्गत्वमपि । अग्नीनां ▮ सत्यपि अङ्गत्वे प्राप्यत्वात् नैवातिदेशः । अतश्च हि ये प्रथमतः आधानपवमानेष्ट्यादयः कार्याः, तेभ्यः अग्निसिद्धिरङ्गीकर्तव्या । ततश्च तेभ्यः कार्यसिद्धौ अन्येषामकरणम् । यथा च एवं सति पवमानेष्टिहोमादयः आधानहोमा वा आधानजन्यो त्वरयपूर्वमाहवनीयादौ भवन्ति, तथा कौस्तुभे यावज्जीवाधिकरणे (३।१।१२) अत्र च स्पष्टम् ।

**मण्डन**— ' न पावमानीं प्रति पावमानी । '

**शंकर**— ' इष्टयर्थो नेष्यो मता॰ । '

■ आधाने पवमानेष्टिषु ' अग्नये पावकाय ' इत्यादि शब्दद्वयमेव पठनीय, न तु गुणरहित केवलमग्निपदम् । भा. १०।४।१४।२६–२७, ● आधाने पवमानेष्टिषु अग्निहोत्रहवण्यभावेऽपि पात्रान्तरेण निर्वापोऽनुष्ठेयः । १०।२।२७।६३, ● आधाने पवमानेष्टिषु आज्यभागौ ' वृधन्वान् आग्नेयः कार्यः, पावकवान् सौम्यः ' इति । नाग्नेर्विशेषणं वृधन्वत्ता, किंतु मन्त्रस्य । ' अग्निं स्तोमेन बोधय॰ ' इति । तस्माद् निर्गुणमभिधानं देवतायाः कर्तव्यम् । १०।४।१५।३०–३१.

**※** आधाने पवमानेष्टिषु आज्यभागदेवतावाचकयोः पदयोः गुणवाचकपदरहितयोरेव उच्चारणं कर्तव्यम् । वृधन्वदादिपदं तु मन्त्रबोधकम् ॥

वृधन्वान् पवमानवद् विशेषनिर्देशात् १०।४।१५।३० ॥

**भाष्यं**— अस्त्याधानं, ' य एवं विद्वानग्निमाधत्ते ' इति । तत्र पवमानेष्टयः ' अग्नये पवमानाय पुरोडाशमष्टाकपालं निर्वपेत्, अग्नये पावकाय, अग्नये शुचये ' इति । तत्र आज्यभागौ प्रकृत्य श्रूयते ' वृधन्वानाग्नेयः कार्यः, पावकवान् सौम्यः ' इति । तत्रायमर्थः सांशयिकः किं सगुणं अग्नेरभिधानं कर्तव्यं, उत निर्गुणमिति । तत्रैवं तावत् परीक्ष्यते । किं देवतानिर्देशोऽयं, मन्त्रनिर्देश इति । देवतानिर्देशे सति सगुणमभिधानं, मन्त्रनिर्देशे निर्गुणमिति । किं तावत् प्राप्तं ? सगुणमभिधानमिति । तत्रैतदुच्यते, देवतानिर्देश इति । कुतः ? स्वत एव मन्त्राणां प्राप्तत्वात् विधानमनर्थकं, देवता पुनर्न प्राप्नोति । तस्या विधानं अर्थवद्भवति ' वृधन्वानाग्नेयः कर्तव्यः ' इति । देवतया वृधन्वद्गुणयुक्तया भवति वृधन्वानाग्नेय । तस्मात् सगुणमभिधानम् । यथा पावमानेष्टिषु, ' अग्निः पवमानः ' इति, एवमत्रापि अग्निर्वृधन्वानिति विशेषनिर्देशोऽर्थवान् भविष्यति । तस्मात् सगुणमभिधानमिति ।

मन्त्रविशेषनिर्देशान्न देवताविकारः स्यात् । ३१ ॥

**भाष्यं** – न चैतदेव सगुणमभिधानमिति, निर्गुणं कर्तव्यम् । तत्रैतत् वर्णयन्ति मन्त्रविशेषनिर्देशोऽयमिति । कुतः ? मन्त्रविशेषस्वरूपोऽयं शब्दः । आग्नेयो यो विशिष्टाग्निविशिष्टः स वृधन्वान् कर्तव्यः, नाग्निः । अथ अग्निर्वृधन्वान् क्रियते, तत्र वृधन्वानग्निर्देवता स्यात् । तत्र आग्नेयः इति सापेक्षे तद्धितनिर्देशो न स्यात् । नहि सविशेषणानां वृत्तिर्भवति । न चास्यापि वृत्तस्य विशेषणं प्रयुज्यते । तस्मान्नाग्नेर्विशेषणं वृधन्वत्ता । कस्तर्हि वृधन्वत्तया विशेष्यते ? आग्नेयः । तस्य वृधो मन्त्रः, तेनासौ वृधन्वान् भवति याग॰ । ' अग्निं स्तोमेन बोधय समिधानो अमर्त्यः ' इति । अथवा, मन्त्र एवाभिधीयते, वृधन्वानाग्नेय इति । अथ यदुक्तं, स्वत एव मन्त्र॰ प्राप्नोति, न विधातव्य इति । उच्यते । यः कश्चिदग्न्यभिधानो मन्त्रः प्राप्नोति । तन्नियमार्थमिदमुच्यते वृधन्वान् कर्तव्यः, अग्निं स्तोमेन बोधयेति । एवं चेत्, न देवताविशेषणम् । तस्मान्निर्गुणमभिधानं देवतायाः कर्तव्यम् । एवं चोदकानुग्रहो भविष्यति ।

**वा**— किं वृधन्वत्तया पावकवत्तया च गुणेन सगुणमभिधानं कर्तव्यं ' वृधन्वन्तमग्निमावह, पावकवन्तं सोममावह ' इति, उत अविकारेण प्रकृतिवन्निर्गुणं (' अग्निमावह, सोममावह ' ) इति चिन्त्यते । ( यद्यपि नकारोपसर्गस्य छान्दसत्वात नियमेषु देवतानिर्देशस्योहरूपत्वेन लौकिकत्वात् ' वृधन्वन्तमावह ' इत्येव वक्तुमुचितं, तथापि छन्दसि यो शब्दो दृष्टः, तदनुसारेणैव प्रयोज्य ऊहः इति याज्ञिकैरङ्गीकारात् वृधन्वच्छब्देन विशिष्टत्वात्त ' वृधन्वन्तमावह ' इत्युक्तम् । ' वृधन्वत्तया, वृधन्वत्ता ' इत्यादिः ग्रन्थकाराद्यकारस्तु अनुकरणत्वात् साधु. ) ।

**सोम**— यदि पवमानेष्टिदेवतासु गुणश्रवणे सगुणमभिधानं, तदिहापि गुणश्रवणात् सगुणमभिधानं इत्युक्तितेः ( दृष्टान्त– ) संगतिः । सूत्रार्थस्तु — यथाऽग्नये पवमानाय इत्यत्र सगुणाभिधानं तथा ' वृधन्वान् ' इत्यत्रापि वृधन्वत्तारूपगुणविशेषनिर्देशात् इति ।

**भाट्ट**—पवमानेष्टिषु आज्यभागौ प्रकृत्य ' वृधन्वानाग्नेयः कार्यः, पावकवान् सौम्यः ' इति श्रुतम् । तत्र

नकारश्छान्दसः । वृधन्वानित्यर्थः । तत्र किमियं वृधन्वत्ता पावकवत्ता [redacted] देवताविशेषणत्वेन विधीयते, उत मन्त्रविशेषणत्वेन इति चिन्तायाम् । वृधशब्दोपेतमन्त्रविशेषपरत्वे वृधशब्दस्य शब्दलक्षणापत्तेर्वृधरूपार्थः एव स्वगुणात् विधीयते । न च यद्यपि नाग्निविशेषणत्वेन विधातुं शक्यते, तद्धितार्थे वृधस्याग्निपदस्य विशेषणान्तरासहत्वात्, तथापि आग्नेयपदोच्चार्यमाणोद्देशेनैव वृधारूपगुणो विधीयमानः अग्निरन्यत्राग्निसम्बन्धोद्देशेन विहितत्वात् नाग्निसाधकत्वेन विधीयते, अपि तु तद्विशेषणत्वेनैव । एवं पावकवाक्येऽपि । अतश्च त्यागे आवाहनादिनिगमेषु च वृधादिगुणस्याप्युल्लेखः । इति प्राप्ते, नाग्नेयादिदेवतातद्धितेन यागग्रहणं 'सूक्तहविषोः' इति स्मृत्या सूक्तहविषोरेव नियमात् । नापि आज्यग्रहणं, पुरस्तादनुपपत्तेः । वृधादिदेवतायाः समुच्चयेन बाधेन वा विधाने आज्यभागस्य आग्नेयत्वादिनिर्देशानुपपत्तेश्च । अतः सूक्ततद्धितमङ्गीकृत्य मन्त्रमेव आग्नेयशब्देनानूद्य तदुद्देशेन वृधन्वत्ता विधीयते, न तु यागमुद्दिश्य । तद्धितस्य यागे 'वैश्वदेवेन यजेत' इतिवल्लक्षणाऽऽपत्तेः । न च वृधादिशब्दस्य सत्यपि शब्दपरत्वे लक्षणाऽऽपत्तिः, वृधादिरूपार्थस्यैव प्रतिपाद्यतासम्बन्धेन मन्त्रसंबन्धित्वात् वृधादिरूपार्थपरस्यैव मन्त्रोद्देशेन विधानोपपत्तेः । प्रत्युत देवताविशेषणत्वपक्षे पूर्वोक्तरीत्या शब्दस्यैव विधेयत्वेन शब्दलक्षणाऽऽपत्तिः । न चैव प्राकृतस्यैव मन्त्रस्य लक्षणाऽऽदिना वृधादिरूपार्थप्रकाशनत्वापत्तेर्न वृधादिपदोपेतमन्त्रविशेषविधिरुपसिद्धान्तासिद्ध्यापत्तिः । आज्यभाग-विधिवाक्यस्वारस्यात् पवमानेष्ट्यङ्गभूताज्यभागक्रमे अनेकेषामग्निसोमदेवत्यमन्त्राणां आम्नानाभावेन तैः प्राकृतमन्त्राणां बाधात् । अत एव वैकल्पिकानेकमन्त्रप्राप्तौ तत्तदाज्यभागाङ्गभूतमन्त्रोद्देशेन वृधादिमद्वाक्यत्वविधानात् 'अग्निः स्तोमेन वर्धते' इत्यादिमन्त्रयोरेव नियमसिद्धिः । एवं च मन्त्रान्तरागमस्वरूपः इत्यादि बोध्यम् । यदि तु अत्र अनाश्वासः, तदा वृधन्वत्पावकवन्मन्त्रयोरेव आज्यभागत्वे समाम्नानेन प्राकृतमन्त्रबाधो द्रष्टव्यः । अत एव लिङ्गादेव तत्तन्मन्त्रयोस्तत्तदाज्यभागाङ्गत्वसिद्धेः इद वचनद्वयमनुवाद एव पवमानेष्टिष्वित्यर्थः । अभ्युदयशिरस्कत्वसिद्ध्यर्थं वा विधिः, न तु वृधादेर्देवतात्वविधायकं समुच्चयेन बाधेन वा, तत्र देवताविधौ आग्नेयत्वादिनिर्देशानुपपत्तेः । यत्र तु तत्पदोपेतमन्त्रा दाशतयीष्वेव प्रसिद्धाः, केवलं विकृतिप्रकरणे एवंविधवचनाम्नानं, तत्र तत्तत्कान्तरफलेनैव प्राकृतबाधेन मन्त्रान्तरविधिः । तत्कामत्वे तु प्राकृतमन्त्रे एव लक्षणाऽऽदिना तदर्थप्रकाशनं, प्राकृतमन्त्रस्यैव प्रकाशकत्वसंबन्धेन तदर्थवत्त्वनिर्भ्युपपत्तौ तद्वाचकपदोपेतमन्त्रान्तरविधौ गौरवादिति ध्येयम् । १६.

मण्डन 'वृधन्वान् नाग्निरिष्यते ।' १७.

शंकर— 'वृधन्वान् देवता न च ।' १८.

## आधाने मथितोऽग्निर्गार्हपत्यार्थ एव ॥

आधाने 'मासोदनिके अग्नौ अरणी संताप्य तद्युपोष्य भस्माग्निं मन्थति तेष सोऽग्नेः सततिः' इति मन्थनमाम्नातम् । तच सर्वाग्न्यर्थं अविशेषात् । तेन मथितमग्निं विभज्य सर्वेऽग्नय आधीयेरन् । इति प्राप्ते, मासोदनिकाग्नौ गार्हपत्यत्वश्रवणात् 'तेन संवत्सरमासीत' इति संवत्सरपर्यन्तं एकस्यैवाग्नेर्धारणश्रवणाच्च कृत्स्नेन निर्मथितेन गार्हपत्यः एवाधेयः । सं॰ पं॰ ३।२।१.

● आधाने 'वर्षासु रथकार आदधीत' । रथकारः संकीर्णजातिविशेषः । वैश्यायां क्षत्रियादुत्पन्नो माहिष्यः, शूद्रायां वैश्यादुत्पन्ना करणी, करण्यां माहिष्यादुत्पन्नो रथकारः । न तु अत्र 'रथं करोति' इति व्युत्पत्त्या त्रैवर्णिको रथकारः । रथकारस्याधानकालो वर्षर्तुः । वि॰ ६।१।१२.

● आधाने 'गारस्त्रीणं गायति' इत्यादिना सामानि विहितानि, 'उशीतराः (अचिरस्थायिनः) वा एतस्याग्नयो भवन्ति यस्याग्न्याधेये ब्रह्मा सामानि गायति' इति च निन्दया निषिद्धानि । तस्मात् तत्र साम्नां विकल्पः । ब्रह्मशब्दश्चात्र उद्गातृपरः । भा॰ १०।८।६।९–११. ● आधाने भुवं चैरद्भुतादिकार्यं दर्शपूर्णमासादिनर्वंपकार्थम् । वि॰ ३।१।१२.

## आधाने सभ्यावसथ्यौ लौकिकाग्निरूपौ, न तु आहवनीयात् ॥

सभ्यावसथ्योः आहवनीयादाधानं स्यात् । 'भूर्भुवः सुवरित्युभावेतौ सहायेते स हि तस्य योनिः' इति भुवौ उभाविति पदेन गार्हपत्याहवनीयस्तो, उदाहतौ॰

देययो. तदाधानाभावेन परामर्शायोगात् सम्भावसम्भवपरत्वस्य वक्तव्यतया 'स हि तस्य' इत्यस्य साहित्य यदुभयपरत्वेन आहवनीययोनित्वश्रवणात् । 'यदेव तृतीय ज्योतिस्तदेव तेनाप्यते' इत्याहवनीय प्रकृत्य श्रुत्यन्तराच्च । इति प्राप्ते, तृतीयज्योति-पदस्य औत्तरवेदिकाग्निपरत्वात् 'स हि तस्य' इत्येकवचनेन सहिताग्निद्वयपरत्वायोगेन च गार्हपत्य तस्याहवनीयस्य योनिरित्येव तदर्थकतया श्रुतिरजाभिव तयोर्लौकत एव प्रकृतसिः । संकर्षे ३।२।३.

■ आधानेऽसर्वशेषत्वात् । २।३।३।४ ॥

इदमामनन्ति 'वसन्ते ब्राह्मणोऽग्नीनादधीत, ग्रीष्मे राजन्यः, शरदि वैश्य' इति । तत्र संदिह्यते किं ब्राह्मणादिश्रवण निमित्तार्थं, ब्राह्मणादयश्चेत् आदधानाः, वसन्तादिषु आदधीरन्निति, उत ब्राह्मणादीनामाधानं विधीयते इति । पूर्वाधिकरणे प्राकृतिकप्रयोगभेदः प्रयोगभेदं निरूप्य इदानीं प्रस्तुत एव गुणनिबन्धनः कर्मभेदः प्रतिपाद्यते । अत्राय पूर्वपक्षिणोऽभिसंधि. । सर्वत्रोपपदश्रवणे सति उपपदार्थसंबन्धो विधि धात्वर्थानुवादमपेक्षते इति सिद्धम् । तदपि 'वसन्ते ब्राह्मणोऽग्नीनादधीत' इति वसन्ताद्युपलक्षितशक्तिविधायकं आधानानुवादमपेक्षते । न चाधानमप्राप्त, अग्निहोत्रादिश्रुतिभिरेव आक्षेपत. प्राप्तत्वात् । तथाहि, आहवनीयसाध्याः खलु अग्निहोत्रादय 'यदाहवनीये जुहोति' इति श्रुतेः, 'आहिताग्निराहवनीय.' इत्यर्थवादवशात् आहवनीयश्च आधानसाध्यः इत्याक्षेपात् भवत्येव आधानप्राप्ति. । अथवा 'य एवं विद्वानग्निमाधत्ते' इत्येतस्मादेव अनन्याक्षिप्तशक्तेः विधायकात् आधानस्य प्राप्तत्वात् तदनुवादेन वसन्तादिकालविधानाय निमित्तार्थं ब्राह्मणादिश्रवणमिति । ■ चायं वर्तमानापदेशत्वान्न विधि । 'य एवं सपत्न भ्रातृव्यमधर्मि सहते, य एव विद्वानग्निमाधत्ते' इत्यर्थवादसंबन्धात् विधित्वसिद्धे. । तदुक्त 'सामर्थ्याक्षिप्तमाधानं सामान्यवचनेन वा । तस्माद् वर्णविशेषाणां निमित्तार्था पुनः श्रुति ॥' इति । (वा. पृ. ५८८) । नन्वाधानविशिष्टो ब्राह्मणो ब्राह्मणविशिष्ट वा आधानमत्र निमित्त? उभयथाऽपि च विशिष्टानुवादे वाक्यभेद. । उच्यते । अप्राप्तवसन्तविधौ प्राप्तत्वात् ब्राह्मणाधानयोरनुवादः । तथापि विशेषणतात्पर्यात्, कारकस्य च क्रियाविशेषणत्वात्, ब्राह्मणस्यैव निमित्तत्वान्न वाक्यभेदः । न च निमित्तकालयोर्द्वयोरपि उद्देश्यत्वेन कथमेकस्मिन् वाक्ये समावेशः इति वाच्यम् । कालस्य क्रियाऽन्वयित्वात् निमित्तस्य च कर्तव्यत्वात् वैरक्ष्येन समावेशोपपत्ते. । तेन यथाद्युपलक्ष्यव्यतिरेकेण आधानप्रत्ययेन ब्राह्मणाद्यनुवादार्थवादत्वात् ब्राह्मणादिनिमित्तके आधाने वसन्तकालविधानमिति । एवं प्राप्ते अभिधीयते । भवेदेव, यदि यथाश्रुतस्याधानस्य आक्षेपत प्राप्तिर्भवेत् । अत्र हि 'वसन्ते ब्राह्मणोऽग्नीनादधीत' इत्यात्मनेपदात् कर्तृगामिफलमाधानं प्रतीयते । फल च आधानस्य आहवनीय । तेन अनुवादपक्षे एतावानर्थ., 'कर्तृगमाहवनीयफलमाधान ब्राह्मणेन वसन्ते कर्तव्यम्' । न च अग्निहोत्रादिश्रुतिभिरेव आक्षेपादेवंविधमाधानं लभ्यते, यदनूद्येत । आहवनीयो हि तैराक्षिप्यते, न तु आधानानुष्ठानम् । एतेन आदित्यस्य अन्यैः स्वयमाविनाऽपि उपादानसंभवात् । न च अनुवादगतविशेषदर्शनात् तथाभूतस्यैवाक्षेप इति वाच्यम् । संदेहे सति अनुवाददर्शनादपि निर्णयो भवति । यथा 'ऐर कृत्वोद्गेयम्' इत्यत्र इरापदस्य कस्मिन् स्थाने निवेशः इति संदेहे 'न गिरागिरा' इति निषेधानुवाददर्शनात् इरापदस्य गिरापदस्थाननिवेशो निर्णीत । ■ तु 'आहवनीये जुहोति' इति विनियोगबलात् आहवनीयमन्तरेण क्रतुविध्यसंभवात् भवतु आहवनीयोपादानाक्षेप । स च स्वत. प्राप्त्यभावात् वसन्तादिविशिष्टाधानमेव । ननु मा भूत् क्रतुश्रुत्याक्षिप्तस्यानुवाद । 'य एव विद्वानग्निमाधत्ते' इति प्रत्यक्षेणैव वचन विधायकमस्ति आत्मनेपदयुक्तम् । तत्र कर्तृगामिफलस्यैव आधानस्य प्राप्तत्वात् तदनुवादेन वसन्तादियुक्तवाक्येषु ब्राह्मणादिनिमित्त वसन्तादिकालमात्र विधास्यते । मैवम्, स्यादेव यदि 'य एव विद्वानग्निमाधत्ते' इति विधिर्भवेत् । किं तर्हि? आधानाङ्गभूतोपगानादिसंस्तवनिन्दे वाक्यतया वर्तमानापदेशरूपः कृत्स्न एवायमर्थवाद. । एव हि श्रूयते 'स एव सपत्न भ्रातृव्यमवर्ति

गृह्णते, य एव विद्वानग्निमाधत्ते अप उपस्पृशति ' इति । किंच आदधीतेति अपदिश्य प्रत्यक्षोऽत्र विधि. श्रूयते । तथा सति अग्निहोत्रादिश्रुतेराक्षेप., वर्तमानापदेशस्य विधित्वकल्पनं वा न सम्भवति । तदुक्तं ' प्रत्यक्षविधिसद्भावे लक्ष्यते नानुमानिकः । प्रापकत्वमतो नाथ- वर्तमानापदेशयो: ॥ ' इति । ( वा. पृ. ५८९ ) अतः सर्वथा प्राप्त्यभावात् वसन्तादिवाक्येषु ब्राह्मणादीनां निमित्तार्थं श्रवणं, किंतु कर्तृकालनैकगुणसम्बद्धानि निमित्तैरेव आधानानि विधीयन्ते । ननु अपशूद्राधिकरणे एव आधानाक्षेपो ' य एवं विद्वानग्निमाधत्ते ' इत्यस्य विधित्वं ब्राह्मणादियुक्तवाक्यानां च निमित्तार्थत्वमिति सर्वमुपन्यस्यते । अत. कथमत्राप्य विचार ? इति । उच्यते । तत्र हि प्रधानभूतकर्मणि कर्मश्रुते वर्णचतुष्टयसाधारणत्वात् । तद्बलेन शूद्राधिकारे सति तद्धु पपत्त्यर्थं कर्मश्रुतिभिरेव वर्णचतुष्टयसम्बन्धेनैव आधानस्याक्षेपो भविष्यति । ' अग्निमाधत्ते ' इत्यस्य वर्णचतुष्टयसाधारणाधानविधायकत्वं वसन्तादिवाक्यैश्च त्रैवर्णिकस्यैव कालविशेषविधानात् शूद्रस्यानियतकालीनमेवाधानमिति शूद्रस्यापि आहिताग्नेरधिकारपूर्वपक्षे, सिद्धान्तितं कर्मश्रुतेस्त्रैवर्णिकपरत्वेऽपि अविरोधात् न एतदधिकरणसिद्धवसन्तादिवाक्यानां विशिष्टाधानाक्षेपेण शूद्राधिकारः सम्भवति । तेन कर्मश्रुतेः वर्णचतुष्टयाधिकारपरत्वेन समधिकशूद्राधिकारशङ्कानिरासार्थं तदधिकरणम् । तत्सिद्धं चैतदधिकरणसिद्धमेव सर्वं स्मारितमित्यपौनरुक्त्यम् । प्रयोजनम् पूर्वपक्षे आहितस्यापि अग्नेः कृपणादिलक्षणस्य कर्माङ्गत्वम् । सिद्धान्ते तु आधानोत्पन्नस्यैव कर्माङ्गत्वम् । सूत्रं तु– आधानेऽपि पूर्ववदेव प्रापणवचनानि न निमित्तार्थानि आधानस्य असर्वशेषत्वात् आहवनीयवत् कर्मशेषत्वाभावेन आक्षेपाभावादित्यर्थः । द्वितीयवर्णके सर्वशेषत्वादिति । तथैव व्याख्या, अनुपकर्मादिसर्वसंभारशेषत्वादित्यर्थ. । सौता.

सू आधानेऽसर्वशेषत्वात् । २।३।३।४ ॥

' वसन्ते ब्राह्मणोऽग्नीनादधीत ' ' ग्रीष्मे राजन्यः ' ' शरदि वैश्य. ' इति श्रुतिः आधाने ब्राह्मणादीनां निमित्तमाह, न तु आधानप्रापिका श्रुतिरियं इति तस्मिन्ने पूर्वपक्षे सिद्धान्तमाह । आधाने विषये वसन्तादिवाक्यं ब्राह्मणादिवसन्तादिविशिष्टाधानप्रापकं, न तु प्राप्ताधाने निमित्तसंयोगेन कालविशेषबोधकम् । आधानस्य असर्वशेषत्वात् सर्वकर्मशेषत्वाभावात् सर्वक्रत्वर्थतया आधानविधेः अश्रवणात् । तस्मात् ब्राह्मणादीनां आधानस्य प्रापकाणि श्रवणानि इति सिद्धान्तः । भवदेवेन तु सर्व- असर्वं इत्युभयथा व्याख्यातम् । तत्र सर्वशेषत्वात् सर्वसंभारशेषत्वात् इति वर्णकान्तरेण व्याख्यातम् । के.

* आधाने सामवेदस्यैव प्रधानस्य याजुर्वेदिकत्वात् उपांशुत्वेनैव भवितव्यम् । वा. ३।३।२।९ पृ. ८१०. * आधाने सामवेदोक्तं वारवन्तीयादि साम उच्चैस्त्वेन साम, यजुर्वेदविहितत्वेन उपांशुत्वमाप्त्या बाध्यते । बाल. पृ. १४०. * आधानकाल: सप सोमपिपीषया ऋतुनक्षत्रप्रतीक्षानिषेधेन बाध्यते । वि. ५।४।५.

* आधानस्मारेण ( ३।६।४।११-१३ ) यथाम प्रयाजादि प्रकृतेन भवति, तदतिदिश्यते । न तु पवमानेष्टयः कर्माङ्गं इति साधितम् । वा. ३।६।६।१७.

* आधानपवमानेष्टिभ्यां ( समुच्चिताभ्यां ) आहवनीयसिद्धौ पश्चात् तस्मिन् अग्निहोत्रहोम. । सू. ५।३।९।२१–२५. * आधानपौर्णमास्योर्मध्ये यजमानस्य यदा चित् मरणे पात्राभावेन दाहाभावप्रसङ्गात् आधानमारभ्यैव यज्ञपात्राणि धार्याणि । वि. ११।३।१४, * आधानवत एव सत्राधिकारी नान्यस्य । ६।६।९. * आधानव्रतवत् । आधानव्रतानि आहिताग्निव्रतानि आधानानन्तरमेवारभ्यन्ते, न पवमानेष्ट्यनुष्ठानापेक्षा, तथा अग्निचिद्व्रतान्यपि चयनानन्तरमेव कर्तव्यानीति पूर्वपक्ष. । सू. ५।३।१०।२६–२८. * आधानसमनन्तरं सोमेनायक्ष्यमाण. ' पुरा संवत्सरात् हवींषि निर्वपेत् ' । भा. ५।४।३।८, * आधानसामान्यविहितेरादिदक्षिणायाः बाधः पुनराधानप्रकरणश्रुतदक्षिणया । १०।३।५।२०–२३. * आधानसाम्नां यस्मां चित् सामवेदशाखायां विधिः कर्तव्यः इति येषां चिन्ततम् । सु पृ. ११८४, * आधानसामोत्पत्तेर्वृत्तो याजुर्वैदिकत्वेऽपि सामवेदिकत्वं कृपाचिन्ता । पृ ११७७. * आधानसोमयोरानन्तर्यं-

मपि क्रतुनपुंसकनिकमात्रत्वात् । भा. ५।४।३।६. ● आधानाङ्गं तूष्णींहोमः । भाट्ट ५।३।१. ● आधानाङ्गं पवमानहवींषि नातिक्रमते । सोम. ५।३।१. ● आधानाङ्गत्वेन अपूर्वं एतयं (तूष्णीं) होमः विधीयते । मन्त्रे प्रमाणाभावात् 'तूष्णीमेव होतव्यं' इत्यनुवादः । देवता तु अनादिष्टे प्रजापतिः । याज्ञिकास्तु अग्निहोत्रधर्मातिदेशं मन्यन्ते । तदा च तूष्णींत्वस्यापि विधिः । परन्तु कर्मान्तरत्वे प्रमाणं मृग्यम् । भाट्ट. १०।८।५.

● आधानादिवाक्यस्थायेन 'आधानादिवाक्यानां क्रत्वङ्गभूताग्निसंस्कारप्रतिपादनद्वारेण पुरुषार्थत्व' इत्येवंरूपेण उपनिषदामपि दूरस्थेनैव क्रतुफलेन नैराकाङ्क्ष्यं क्रत्वर्थकर्तृप्रतिपादनद्वारेण । सु. पृ. ७४. ● आधानादिसंस्कारलोपः अग्निचयने आहूयाग्नौ काम्ये । भा १२।४।१।२८–२९.

☒ आधानाधिकरणम् । आधानन्यायः । आधानादिवाक्यन्यायः । आधानाधिकरणन्यायः । आधानस्य ब्राह्मणादीनां प्रापकाणि श्रवणानि ॥

आधानेऽसर्वशेषत्वात् । २।३।३।४ ॥

भाष्यं— इदं समामनन्ति 'वसन्ते ब्राह्मणोऽग्नीनादधीत, ग्रीष्मे राजन्य, शरदि वैश्य.' इति । तत्र संदिह्यते किं ब्राह्मणादिश्रवणं निमित्तार्थं ब्राह्मणादयः आदधानाः वसन्तादिषु आदधीरन् इति, उत ब्राह्मणादीनामाधानं विधीयते इति । कथं निमित्तार्थता स्यात्, कथं वाऽऽधानविधानमिति ? यदि ब्राह्मणो वसन्ते इति पदद्वय परस्परसंबद्धं, ततो निमित्तार्थं श्रवणं, अथ ब्राह्मण. आदधीत इति, आधानविधानं ब्राह्मणस्य । एवं राजन्यादिष्वपि । किं तावत् प्राप्तं ? निमित्तार्थं श्रवणमिति । कुतः ? निमित्तरूपा एते शब्दाः । किं निमित्तरूप्यं ? ब्राह्मणादीनां वसन्तादिभिः समुच्चारणम् । तच्च अविदितं वेद्यते इति । ननु ब्राह्मणादीनां आदधानानाऽपि अस्ति समुच्चारणम् । भवत्वस्ति समुच्चारणं, न तु अमीषां आधानसंबन्धो न विदित. । केन प्राप्तो विदित इति ? कामश्रुतिभिः । काः कामश्रुतयः ? 'अग्निहोत्रं जुहुयात् स्वर्गकामः' 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्येवमादयः । कथमाभिः श्रुतिभिः आधानं प्राप्तमिति । उच्यते, सामर्थ्यात् । यथा अग्निहोत्रं अभिनिर्वर्तयेत् तथा कुर्यात्, यथा दर्शपूर्णमासौ अभिनिर्वर्तेते तथा कुर्यात् । न च गार्हपत्याहवनीयान्वाहार्यपचनादिभ्यो विना एतानि कर्माणि सिध्यन्ति । समामनन्ति हि 'यदाहवनीये जुहोति, तेन सोऽस्याभीष्टः प्रीतो भवति' इत्येवमादि । तेन सामर्थ्यादेतदुक्तं भवति, आहवनीयादि कर्तव्यमिति । तच्च आधानेन विना न सिध्यति, इत्याधानमपि कर्तव्यमिति अवगम्यते । तत् केन कर्तव्यं ? यस्य कामश्रुतयः । ता अविशेषेण ब्राह्मणादीनाम् । तस्मात् अमीषां आधानसंबन्धो विदित इति । अपि च उभाभ्यां ब्राह्मणादीनां संबन्धे विधीयमाने वाक्यं भिद्येत । नहि तदानीमेकोऽर्थो विधीयते । अतो निमित्तार्थाः श्रवणं इत्येवं प्राप्तम् । एवं प्राप्ते ब्रूमः । आधाने असर्वशेषत्वात् । प्रापकाणि आधानस्य एतानि श्रवणानि । कुतः ? सर्वकर्मणां शेषभूतमाधानं इति न श्रुतिलिङ्गादीनामन्यतमेनोच्यते । किं तर्हि ? अग्नीनां सर्वशेषत्वात्, तच्छेषत्वात् आधानस्य । कियतो यत्नेवं ? अग्नयः कामश्रुतिभिः प्राप्नुवन्ति, नाधानमिति । ननु अग्नीनामभ्युपायः आधानमिति । उच्यते । नैतेषामर्जने आधानमेव एकोऽभ्युपायः । किं तर्हि ? यथा अन्येषां द्रव्याणामुत्पादने क्रयणादयश्च अभ्युपायाः, एवं अग्नीनामपीति, न नियोगत. उत्पादनमेव । तेन पक्षे आधानं प्राप्नोति, पक्षे न । यत्तस्मिन् पक्षे अप्राप्ति., ततः पक्षः उत्पत्तिप्रयोजनिष्यति ब्राह्मणादीनामाधानस्य, ब्राह्मण आत्मार्थमादधीतेति । यदा एतद्वचनं, तदा आत्मार्थेन आहिता आहवनीयादयो भवन्ति नान्यथा । एवं च सति न कृत्रिमेण याचितेन वा कर्माणि अग्निहोत्रादीनि अनुष्ठातुं शक्यन्ते इति गम्यते । तेन अकृत्रिम एव केवलोऽग्निः तेषां साधक इति निश्चीयते । कथं च आत्मार्थता आधानस्य गम्यते इति ? कर्त्रभिप्राये हि क्रियाफले आदधीत इत्येतत् आत्मनेपदं संभवति । असति अस्मिन् वचने कामश्रुतिपरिग्रहे नाधानस्य आत्मार्थता भवेत् ।

अपि च सतीषु एतासु आधानश्रुतिषु न कामश्रुतयः शक्नुवन्ति अपरामाधानश्रुतिं कल्पयितुम् । यथा-

प्राप्तस्याधानस्य पुनःश्रुतय एता भवेयुः । अथातीषु एतासु आधानश्रुतिं अपरिगृह्णन्त्यः कामश्रुतयः अनाधयानग्निहोत्रादीन् वदन्ति इति परिगृहीपुराधान-श्रुतिम् । सतीष्वेतासु येषामाधानमुक्तं तानधिकृत्य उत्तर-काला: कामश्रुतयो भवन्तीति गम्यते । अत्राह । अस्ति केवलस्य आधानस्य विधायिका श्रुतिः ‘ एवं संपन्नं भ्रातृव्यमपर्ति सहते , य एवं विद्वानग्निमाधत्ते ’ इति । यथा नामस्य निमित्तार्थानि ब्राह्मणादीनां श्रवणानि भवि-ष्यन्ति । वक्ष्यते , संभारविधानार्था पुनःश्रुतिरेषा । नेति ब्रूमः । भिन्नं हीदं वाक्यं संभारविधानवाक्यात् । अन्यो ह्यर्थः ‘ आधत्ते ’ इति , अन्यः ‘ अप उप-सृजति ’ इति । एकार्थविधाने हि एकं वाक्यं भवति , भिन्नौ चेमावर्थौ । तस्मादत्र वाक्यभेद इति । वक्ष्यते , ‘ वसन्ते ब्राह्मणोऽग्निमादधीत ’ इत्यस्यां श्रुतौ सत्यां पुनःश्रुतिः केवलस्याधानस्य अविधायिका । अपामुप-सर्जनं तु विधीयते । तदेकस्मिन्नर्थे विधीयमाने नानेकार्थं भवति । ननु आधानस्यैतत् विधानं , गुणार्था सा पुनःश्रुतिः । नेति ब्रूमः । या ब्राह्मणादि-संबद्धा प्रथमा श्रुतिः, इयं केवला पुनःश्रुतिः । कुतः ? सा हि शब्देन विदधाति, तत्र लिङमुपलभामहे । इयं प्रशस्तमाधानमित्याह । ततः प्रशस्ततामाधानस्या-नुमन्यामहे । एवं च ‘ वसन्ते ब्राह्मणोऽग्निमादधीत ’ इत्येषा विधायिका श्रुतिः इति ब्रूमहे । नैतत् प्रशंसा-वचनं अलमपूर्वं ज्ञापयते । शक्यते हि , अन्येन विहितं अन्येन प्रशस्तमिति वक्तुम् । यदि तु एतद्विधायक-मित्युच्येत , ततोऽस्यापूर्वं विरुध्येत । कथं ? अज्ञातस्य ज्ञापनं विधानमेवम् । यदि प्रशंसावचनेन अपूर्वं विज्ञा-प्येत , तदा लिङा नापूर्वं ज्ञापितं भवेत् । तत्र अपूर्व-ज्ञापनवचनः शब्द उपरुध्येत । विहितेऽपि हि वाक्या-न्तरेण प्रशंसावचनमाश्रूयते ।

अपि च यद् लिङा विधानं तच्छ्रुत्या , वाक्येन तु प्रशंसा गम्यते , श्रुतिश्च वाक्यात् बलीयसी । ननु इद-मपि वाक्यं ‘ ब्राह्मणोऽग्निमादधीत ’ इति । उच्यते । स्वपदार्थगतं श्रुतिर्विदधाति आधानं ब्राह्मणादिसंबन्धेन , परपदार्थं प्रशंसति ‘ य एवं संपन्नं भ्रातृव्यमपर्तिं सहते ’ इति । ननु अनेकगुणविधानं त्वया वाक्येनाध्यवसितं भवति । नैष दोषः । अगुणविधिपरे हि वाक्ये भवति अनेकगुणविधानं इत्युक्तं ‘ तद्गुणास्तु विधीये-रन्नविभागाद्विधानार्थे न चेदन्येन शिष्टाः ’ ( १।४। ९।१९ ) इति । तस्मात् ब्राह्मणादिसंयुक्ता विधा-यिका श्रुतिः. इयमपि केवलस्याधानस्य पुनःश्रुतिः संभारविधानमुपक्रमयितुं इति सिद्धम् । यदुक्तं अनेक-गुणविधाने वाक्यं भिद्येत इति , यदीमौ गुणौ आधान-विशिष्टौ विधीयेयाताम् , भवेत् वाक्यभेदः । ताभ्यां तु विशेषणाभ्यां विशिष्टमेकमाधानं विधायिष्यते । तेन न भविष्यति वाक्यभेदः । तस्मात् ब्राह्मणादीनां आधानस्य प्रापकाणि श्रवणानि इति सिद्धम् । ४.

वा— ‘ वसन्ते ब्राह्मणोऽग्निमादधीत ’ इत्यादिषु प्राप्त्यप्राप्त्याशङ्कया पूर्ववदेव संदेहः । तत्र यदि कथ-ञ्चिदपि प्राप्तिरस्ति , ततो विनाऽपि यदिशब्दात् निमि-त्तार्थत्वं , तदा च ब्राह्मणवसन्तादिसंबन्धः परस्पर-नियमार्थं फलं भविष्यति । अथ तु अप्राप्तिः, ततः प्रापकाणि ब्राह्मणवसन्तादिविशिष्टस्याधानस्य । तदा च पूर्वपूर्वेण उत्पत्तिवाक्यविहितगुणावरोधात् उत्तरउत्तरो गुणः कर्मान्तरं कल्पयति इति पृथक्प्रधानानि भविष्यन्ति । स्वार्थं एव वा अधयः आत्मनेपदनिर्देशात् निगम्यन्ते । शूद्रस्य चाप्राप्तिः । निमित्तार्थपक्षे तु सर्वं विपरीतमेव । एतेन ‘ वसन्ते ब्राह्मणमुपनयेत् ’ इत्येवमादीन्यपि तुल्य-हेतुत्वात् निवारितानि द्रष्टव्यानि । तत्र एतावान् संक्षे-पार्थः ( अधिकरणस्य ) ‘ सामर्थ्याक्षिप्तमाधानं सामान्यवचनेन वा । तस्माद् वर्णविशेषाणां निमित्तार्था पुनःश्रुतिः ॥ ’ एवंप्राप्ते पूर्वपक्षहेतुः अग्निहोत्रादिचोदनाभिरेव आधाननिष्पाद्याहवनीयादि-साधनत्वात् विना अनुपपद्यमानाभिः प्रापितत्वात् ब्राह्म-णादीनामाधानं निमित्तार्थं श्रूयते इति । यदि तु प्रत्यक्ष-वचने सति सामर्थ्यमप्रापकं इति कल्प्यते , ततः अप्राप्त-गुणावरुद्धत्वात् विधेः अनवरुद्धप्राप्तिः अतो निर्गुणो विधिरस्ति ‘ य एवं विद्वानग्निमाधत्ते ’ इति , तेन प्राप्तेः अप्रापकानीति । सिद्धान्तेऽपि तु ‘ प्रत्यक्षविधि-

अप्राप्तविधित्व श्रुतसंभावनाया अश्रुतकल्पनातोऽनवसरात् । सन्ति च आधानस्य प्रत्यक्षाः श्रुतय, इति नान्याः कल्पयितुं लभ्यन्ते । यदि हि एता न स्युः, तदाधाना-ऽऽहते अग्निहोत्रादीनामशक्यानुष्ठानत्वात् विधयोऽनर्थका भवन्ति इति स्वसिद्धयर्थं आधानश्रुतिं परिगृह्णीयुः । सतीषु [redacted] अश्रुतकल्पनासमयात् येषामेताभिः प्रापितं, तेषामेव कामश्रुतयः प्रयोजिकाः इति न कल्पयन्ति । सर्वपूर्वोक्तदोषपरिहारेण इदानीं प्रत्यवतिष्ठते ( अत्राह इत्यादिना भाष्यं ) प्रत्यक्षं अन्यत् विधायकमस्ति आधा-नस्य वचनम् । यस्मिन् सति निमित्तार्थानि श्रवणानि इति ' य एवं विद्वानग्निमाधत्ते ' इति । तत्र प्रतिविधत्ते 'संस्कारविधानार्था पुनःश्रुतिरेषा ' इति ( भाष्यम् ) । परः पुनः प्रकरणेन समाम्नायत्वं मन्वानः पृथग्वाक्यत्व-माशङ्क्य एतदेव उत्पत्तिवाक्यमित्याह । नहि उदवोप-सर्जनादीनां आधानेन एकवाक्यता संभवति । ( तत्रो त्तर - ) भवेदप्यर्थभेदे नानावाक्यत्वं, यदि आधानं विधीयेत । तत् ब्राह्मणादिसंयुक्तं विहितं इति गुणार्थमेव इह पुनः श्रूयते । कुतो नु खलु निर्णयः । कतरद्वयोः उत्पत्तिवाक्यमिति । तदुच्यते ' ब्राह्मणत्वादिसंयुक्ते प्रत्यक्षं श्रूयते विधिः । इतरत्रार्थवादेन कल्पनीयो भवेदसौ ।।' यदि हि एते द्वे अपि वाक्ये विधातृणी स्यातां, ततः समानविषये सति स्पर्धायां कतरत् विधत्तामिति । अत्र पुनरेकं विधायकं, एकं ज्ञापकम् । न च स्वार्थेन ब्राह्मणादिसंयुक्तस्य विधायकत्वं निवार्यते सदनु-गुणात् । यदि तु ' य एवं विद्वान् ' इत्यपि विधि-सरूपं स्यात्, ततो विहितस्य पुनर्विधानानुपपत्तेः अस्य-स्य निष्फलत्वात् । विहितं तु विहितस्य संनिधापनार्थ-विधिप्ररोचनार्थे तु स्तुतिसहितस्य पुनःश्रवणं इत्यवि-धायकम् । लिङा च तावत् यावदर्थविधानं स्वशब्देन उपात्त-त्वात् श्रौत, प्रामाण्यं पुनर्वाक्येन, ततश्च आनुमा-निको विधिः इति विप्रकृष्यते । ' ननु इदमपि वाक्यं ' इति ब्राह्मणादिपदार्थावस्थितमभिप्रायम् : सिद्धान्तवादी वदति, आधानं तावदस्तु, तेन वाक्येन नाम भवतु, व्यवहितानामनवस्थितेः सन्निधानात् । ' यं दिवसं आगृह्णीयात् ' इत्यादिवदर्थवादेनैव स्तुतिः इति वाक्यम् ।

कर्तृकालविशिष्टप्रधानाधानविधानाच्च वाक्यभेदपरिहारात् सिद्धं प्रापकत्वम् ।

शा— किं ब्राह्मणादीनां आधानोपनयनयोः प्राप्तानां वसन्तादिकालं प्रति निमित्तार्थानि श्रवणानि किंवा ब्राह्मणादीनां अप्राप्तमाधानं उपनयनं च विधीयते । तत्र ' विना नैवाग्निविद्याभ्यां क्रत्वनुष्ठानसंभवः । अग्निविद्ये न च स्यातामाधानोपनयौ विना ।। ' तस्मान्निमित्तार्थानि श्रवणानि । इति प्राप्ते ब्रूमः । ' न तावत् क्रतुसामर्थ्यात् प्राप्तिरैकान्तिकी तयोः । सामान्यवचनं यत् तद्वर्तमानापदेशकम् ।। ' तस्मात् प्रापकाणि वचनानि आधानोपनयनयोः ।

सोम—— इह तर्हि प्रमाणार्थत्वात् निमित्तार्थत्वमस्तु इति प्रत्यवस्थानात् सङ्गतिः । यदि तु अन्यतः आधान-प्राप्त्या ब्राह्मणादिश्रवणं निमित्तार्थं, तदा ब्राह्मणाना-मिव शूद्रस्याप्यस्ति आधानम् । यदि तु ब्राह्मणादिवाक्या-न्येव आधानविधायकानि तदा शूद्रस्य पृथगाधानविध्य-भावात् नाधान इत्यधिकरणप्रयोजनम् ।

सु — ब्राह्मणादेर्गुणस्य विधेयत्वे भेदकता, अवि-धेयत्वे तु अभेदकता इति संदिग्धविधेयत्वस्य गुणस्य भेदकाभेदकत्वनिर्णयार्थे विधेयाविधेयत्वविचारात् अवान्तरसङ्गतिः ।

कौ— पूर्वत्र रथकारस्य अग्निसाध्यकर्तृत्वात् ब्राह्मणादीनां कथमपि अप्राप्ते. गुणस्य विधेयत्वेन भेद-कता । प्रकृते तु आधानस्य उपनयनस्य वा आक्षेपादेव सर्वकालकर्तृत्वोपपत्ते. प्राप्तानां ब्राह्मणादीनां निमित्तत्वो-पपत्तिः इति पूर्वपक्षोत्थानात् अनन्तरा सङ्गति-र्द्रष्टव्या ।

वि— ' वसन्ते विप्र आदध्यात् ग्रीष्मे राजन्य एव तम् । अनुवादः प्रापका वा, अनुवादः फलसिद्धये ।। अन्तरेणाग्निविद्याभ्यां कर्मानुष्ठित्यसंभवात् । सर्वो आधानोपनीती स्यातां विप्रादयस्ततः ।।, शूद्रस्यापि पुनस्तत्र तन्निर्देशोऽपि कल्प्यताम् । कालविशेषादिगुण-संयोगेनानं विधीयते ।। ' वसन्तादिकालविशिष्टे कर्तृविशेषा-न्विते आधानोपनयने अत्र विधीयेते ।

**भाट्ट—** ' वसन्ते ब्राह्मणोऽग्नीनादधीत, ग्रीष्मे राजन्यः, शरदि वैश्यः ' इति श्रुतम् । तथा ' वसन्ते ब्राह्मणमुपनयीत, ग्रीष्मे राजन्यं, शरदि वैश्यं ' इति । तत्र सर्ववर्णसाधारणेना मुना अग्निविद्यासाध्यत्वात् अग्नेश्च उपायभूतस्याधानस्य ' य एवं विद्वानग्निमाधत्ते ' इत्यनेन अनन्याधिकारविशिष्टेन सम्युद्देशेन आधानविधायिना प्राप्तत्वात् आधाने ब्राह्मणादीनां प्राप्तेः निमित्तार्थं श्रवणम् । ब्राह्मणकर्तृकत्वे निमित्ते वसन्तः कालः आधानाङ्गत्वेन विधीयते । अथवा अस्तु एतस्य ' अथ संभारान् संभरति ' इति विध्यन्तरशेषस्य वर्तमानापदेशता । तथापि 'समारोप्याग्निमादधाति' इत्ययं आधान प्रापको विधिः । अत्र हि न संभारा विधेयाः, प्रमाणान्तरप्राप्तत्वात् । नापि तदभिधानार्थं ' अग्निमाधीयमानम् ' इति मन्त्रवर्णादेव प्राप्तत्वात् । अतः आधान मात्रविधिपरम् । अथवा प्रमाधानानुवादेन कालविधेः, आत्मनेपदार्थस्य अनाधानु' आहवनीयत्वाभावरूपस्य च विधिः इति वाक्यभेदापत्तेः ' जातपुत्रः कृष्णकेशोऽग्नीनादधीत ' इत्ययं आधानप्रापको विधिः । उक्तवाक्ये तु अभ्युदयशिरस्कतया मन्त्रवर्णात् पूर्वमेव अधिकरणत्वविधिः । एवं च जातपुत्रवाक्ये वयोवस्थाविशेषलक्षणाऽपि नापद्यते । सर्वथा आधानप्राप्तेः निमित्तार्थानि ब्राह्मणादिश्रवणानि, न भेदकानि । तथा विद्यासाधनतया अध्ययनं तत्साधनत्वेन उपनयनं चार्थप्राप्तम् । अध्ययनस्य ' स्वाध्यायोऽध्येतव्यः ' इत्यनेन नियमोऽपि । अतः सर्वसाधारण्येन प्राप्तोपनयनोद्देशेन ब्राह्मणकर्तृकत्वे निमित्ते वसन्तः कालो विधीयते । इति प्राप्ते, सर्वकर्तृकत्ववत् सर्वकालकत्वस्यापि आधानादौ प्राप्तिसंभवेन ब्राह्मणकर्तृकत्वे निमित्ते कालविधिः, काले वा निमित्ते कर्तृविधिः, इत्यत्र विनिगमनाविरहात् उभयविशिष्टाधानविधिरेव । उपनयनस्य च पक्षेऽपि अर्थतःप्राप्तिकत्वेन सुतरां विध्युपपत्तिः । अत एव विनिगमनाविरहात् कर्तृकालादिरूपस्य प्रयोगान्वयिगुणस्य प्रयोगविध्यापारकत्वासंभवे एतद्विधिविहितप्रयोगानुवादेनैव जातपुत्रादिवाक्येषु वयोऽवस्थाविशिष्टकर्तृविधिः । आत्मनेपदार्थस्य च उपकारान्वयिनो गुणस्य श्रवणात् उपयादिकमपि अर्थेन, न जातपुत्रादिवाक्ये, वाक्यभेदापत्तेः । अध्ययनाद्वा ब्राह्मणवाक्ये एव उपपादि । इतरयोस्तु प्रयोगमात्रम् । तेन सिद्धः अत्रापि गुणात् प्रयोगभेदः । तयोश्च आधानोपनयनयोः अग्निविद्याफलत्वेऽपि अकरणे प्रत्यवायादिश्रवणात् नित्यत्वमपि । एवं च सन्निधिप्रयुक्ताधानोपनयनजन्याग्निविद्यालाभे क्रतुविषयः नाग्निविद्ये तदुपायान् वा प्रयुङ्क्ते, इति न तद्रहितस्य शूद्रादेः अधिकारः इति प्रयोजनं षष्ठे वक्ष्यते ।

**मण्डन—** ' आधानं कर्तृमितीरितम् । '

**शंकर—** ' वसन्ताधानविधिता । '

● दाक्षायणयज्ञेन, साकंप्रस्थायीयेन, संक्रमयज्ञेन इत्यादिषु अयनपदोपस्थितेषु आधानाधिकरणन्यायेन चोदनाऽन्तरं कर्मान्तरस्य विधायकं, न गुणस्य । कस्तूरिरङ्गाचार्यवृत्तिः २।३।४।९–११.

● आधानाधिकरणं ( द्वितीयम् ) ३।६।५।१४–१५। ' विद्याध्ययनपुरुषाधिकारत्वात् प्रयोगश्रुतीनां अध्ययनाक्षेपकत्वस्य द्वितीयाधानाधिकरणोक्तस्य । सु. ३।७ पृ ६३, ● आधानाधिकरणपूर्वपक्षसूत्रेण ' तत् प्रकृत्यर्थं यथाऽन्येऽनारभ्यवादाः ' ( ३।६।५।१४ ) इत्यनेन द्विरुक्तरापत्तिलक्षणो न्यायः आधाने अतिदेशात् दृष्टीकरणेन प्रतिपादितः । ३।७ पृ. ४१.

● आधानाधिकारः रथकारस्य सौधन्वनापरपर्यायस्य, 'वर्षासु रथकार आदधीत' इति वचनात् । भा. ६।१।१२।४४–५०.

● **आधानानन्तरं** अन्यत् किं चिदकृत्वा सोम एव कर्तव्यः, उतान्यदपि किं चिद् भवति इति संशये पवमानेष्टि–भक्त्यपशु–अग्निहोत्राणि कृत्वा सोमो दर्शपूर्णमासयोः प्राक् कर्तव्यः इति वार्तिकं तन्त्ररत्नं च । भाष्यकारमते तु भक्त्यपशुः सोमाङ्गत्वान्नवर्तते । पवमानेष्टयोऽपि अग्निसंस्कारत्वान्नवर्तन्ते, अग्निहोत्रं तु नास्ति इति । केचित् इष्टिपूर्वकत्वपक्षे एव भक्त्यपशुं मन्यन्ते, तन्मूलं इष्टौ तन्त्ररत्नम् । सोमपूर्वत्वपक्षे भक्त्यपशुर्न संभवति, अस्य निरूढपशुप्रकृतिकत्वात् निरूढस्य न दर्शप्रकृतिकत्वात् दर्शस्य चाद्यापि दूरत्वात्, विकृत्यनुष्ठानस्य प्रकृत्यनुष्ठानात् प्राक् असंभवाच्च केचिन्मतमेव युक्तं

भाति तन्नरत्नं तु भाष्यवार्तिकानुसारात् । के. ५।४। ३।५-९.

* आधारे सप्तमीविभक्तिर्भवति । आधारश्च क्रियायाः तत्कारकाणां च निमित्तानां धारणे वर्तते । तस्मात् गुणभूतः । भा. ११।२।१६।६८.

* आधूननं अग्निचयने उखास्थापने । तत्र प्रकरणपठिता येकेचित् चतुर्दश मन्त्रा ग्राह्याः, न तु आर्थिक एव । 'येषीना त्वा पत्नमाधूनोमि' इत्यादयो मन्त्राः । वि. १०।५।५.

* आधेयशक्तिः 'शक्तिमद्वः' इत्यत्र द्रष्टव्यम् । मणि. पृ. ४३-४४, * आधेयशक्तौ अर्थापत्तिः प्रमाणम् । पृ. ६१.

आध्वरिकाहुतीनां दीक्षाऽऽहुतिभिः समुच्चय ॥ 'आकूत्यै प्रयुजेऽग्नये स्वाहा' इत्यादयः 'आकूतिमग्निं प्रयुजं स्वाहा' इत्यादयश्च होमलिङ्गाः षड् षड् मन्त्रा आम्नाताः । तत्र 'षड् जुहोति' इति श्रूयमाणो विधिः अन्यतरषट्कस्य होमेषु विनियोगार्थमाकृतिवादः एव । इति प्राप्ते, द्वयोर्द्वयोः सजातीययोरेकीकरणेन 'द्वादश जुहोति' इति वचनान्तरविहितानामेव 'षाविंशानि जुहोति' इतिवत् पर्यायवाद् । संकर्ष. २।४।२७.

* आध्वर्यवं अध्वर्युणा कर्तव्यम् । भा. ३।७।१९। ४०, * आध्वर्यव इति समाख्यातानि कर्माणि अध्वर्युणा कर्तव्यानि । होत्रमिति च होत्रा । ३।३।६।१२, * आध्वर्यवमिति समाख्याते वेदे जघन्यः समाम्नाताः मन्त्राः अध्वर्युणा करिष्यन्ते । ३।४।९।२७. * आध्वर्यवं न प्रोक्षणादाहरणादि, दर्शपूर्णमासयोः, किंतु आमीत्रम् । वि. ३।८।११, * आध्वर्यवं महाकाण्डं, याजमानं अवान्तरकाण्डम् । ३।८।१०. * आध्वर्यवं वाजसनेयिशाखायां नरकशाखासु च षट्, इत्येनावता नान्यविषयं अप्रमाणीकुर्वन्ति । वा. १।३।८।२७ पृ. २८६. * आध्वर्यवः प्रैषः, आग्नीध्रः प्रैषार्थः । भा. ३।८।१२।२३-२४. * आध्वर्यवः होमः इत्यन्या निरपेक्षया प्रवृत्त्या समाख्यया अध्वर्युरेव सता शाखौ समवेतुर्युयात् । प्रदहोमत्वापूर्वेण कदा विद्वन्तौ समसाधर्यौ तुरुषुः । वि. १।७।२३, * आध्वर्यवाः प्रैषाः इति याज्ञिकसमाख्या । तत्र व्यस्ताः प्रैषा आध्वर्यवाः 'अग्नये समिध्यमानायानुब्रूहि' इत्याद्याः । ३।७।२१. * आध्वर्यवाणेव (पदार्थान्) कुर्वन् "अध्वर्युर्यजति" इत्येवमुच्यते । भा. ६।१।४।१७. * आध्वर्यवेऽपि तु क चिदस्त्येव याज्याऽनुवाक्याऽऽम्नानम् । वा. २।२।४।१० पृ. ४९६, * आध्वर्यवेष्वपि प्रयोक्तृत्वेन यजमानस्य कर्तृत्वम् । ३।१।१४।२४. * आध्वर्यवस्थं द्वादशद्वन्द्वानां दर्शपूर्णमासयोः । भा. ३।८।९।१९-२०. * आध्वर्यवप्रपञ्चनाख्यो यजुर्वेदः । सु. पृ. ७९७, * आध्वर्यवशब्दवाच्यत्वेन अन्वाधानादेः, अध्वर्युशब्दवाच्यत्वेन च ऋत्विजः अन्वाधानादिकर्तृत्वकल्पना भवति । पृ. १२७०. * आध्वर्यवसमाख्याते वेदे समाम्नातानां पदार्थानां अध्वर्योरेव कर्तृत्वावश्यंभावः । संकर्ष. १।१। १४. * आध्वर्यवादि कर्म कुर्वाणेषु हि कर्तृषु कर्मनिमित्ता एता आख्याः प्रसिद्धाः, न याजमानं कुर्वाणेषु । भा. १०।६।१५।५६.

* आध्वर्यवादिसमाख्यायाः अवैदिकत्वेऽपि अनादित्वेन पुरुषनिबन्धनदोषाभावात् मिथ्यात्वं तावन्नास्ति । सु. पृ. ११३०. * आध्वर्यवादिसमाख्यानां वेदे एव प्रयोगात् न लौकिकत्वदोषः भियते । वा. ३।३। ६।१३, * आध्वर्यवादिसमाख्यानात् ज्योतिष्टोमादिषु अदर्शनेऽपि प्राप्नुवन्तु स्वर्गकामाद्येकवाक्यत्वात् अर्थिमात्रविषयत्वं विधीयते । वाक्यं समाख्यायाः बलवत् । ३।३।७।१४ पृ. ८१७.

* आनतिः भूम्यां परिक्रीय यज्ञीकारः । सा च यद्वे ऋत्विजो दक्षिणेजनाः । द्वादशशतादिपरिमाणनियमो मन्त्रवत्नियमश्च अदृष्टार्थः । त्रि. १०।२।८. * आनत्यर्थं ऋत्विग्भ्यो दक्षिणादानं ज्योतिष्टोमादौ । भा. १०।२।८।२२-२८.

* आनन्तर्यमकारणं इति न्यायः । सु. पृ. ७४६ । आनन्तर्यमेकवाक्यत्वे अकारणं अनन्यामाश्रद्धानात् । भा. ३।१।८।१२ पृ. ६८८, ३।१।१४। २४ । 'यस्य येनार्थसंबन्धो दूरस्थस्यापि तेन सः । अर्थतो ह्यसमर्थानामानन्तर्यमकारणम् ॥' सु. पृ. ७४६.

ॐ आनन्तर्यमचोदना । ३।१।१४।२४ ॥

ज्योतिष्टोमे ' मुष्टी करोति, वाचं यच्छति, दीक्षितमावेदयति ' इति, ' हस्तावनेनिक्ते, उलपराजिं स्तृणाति ' इति च श्रूयते । तत्र आनन्तर्येण पाठात् मुष्टीकरणं वाग्यमश्च दीक्षितावेदनाङ्ग, तथा हस्तावनेजनं उलपराजिस्तरणाङ्गं इति सूत्रः पूर्वपक्षः । मुष्टीकरणवाग्यमयोः सर्वकर्मार्थत्वं, हस्तावनेजनस्य च आध्वर्यवसकलपदार्थाङ्गत्व इति उक्तम् एव सिद्धान्तः । सूत्रं तु पूर्वपक्षहेतोः आनन्तर्यस्य निराकरणार्थम् । आनन्तर्यं संनिधिः । चोदना अत्र प्रमाणम् । तथा च उक्तमानन्तर्यं अचोदना, न चोदना, न प्रमाणम् । प्रबलेन लिङ्गेन प्रकरणेन च बाध्यत् इति ।

वाक्यानां च समाप्तत्वात् । २५ ॥

' मुष्टी करोति, वाचं यच्छति, दीक्षितमावेदयति, हस्तावनेनिक्ते, उलपराजिं स्तृणाति ' इति ज्योतिष्टोमे पठितानां वाक्यानां स्वेनस्वेन पदसमूहेन सार्थकेन समाप्तत्वात् । भिन्नान्येव एतानि वाक्यानि विभागे निराकाङ्क्षाणि । तस्मात् मुष्टीकरणवाग्यमयोः सर्वकर्मार्थत्व, न दीक्षितावेदनमात्राङ्गत्वम् । तथा हस्तावनेजनस्य आध्वर्यवसकलपदार्थाङ्गत्वं, न तु उलपराजिस्तरणमात्राङ्गत्वम् । चकारो हेतुसमुच्चयार्थः । सिद्धान्तहेतुप्रदर्शनार्थं सूत्रम् । के.

* आनन्तर्यमचोदना इति न्यायेन प्रकरणस्य प्राबल्यम् । कौ. १।४।२।२ पृ. १६६. * आनन्तर्यमचोदना इत्यनेन न्यायेन आनन्तर्यस्य अकारणत्वात् शुद्धिनिवृत्तेः संनिधिनैव अनुषङ्गाधिकरणे अभिहितत्वात् । सु. पृ. ११९२. * आनन्तर्ये सत्यपि यदि द्वितीयेनान्वयः तदा ' आनन्तर्यमचोदना ' इति न्यायेन ( ३।१।१४।२४ ) तृतीयान्वयो दुरापेतः । सोम. २।१।१६. * सावाङ्गप्रधानसंस्तवे सानाय्यसंनिधिपठितपात्रकुम्भनमन्त्रे साकाङ्क्षशुद्धिनिपरिवृत्तिरूपाधिकारस्य आग्नेयादिसाधारणत्वात् तस्य च आनन्तर्यमचोदना इति न्यायेन प्रधानवाक्ये अव्यवहितसंनिध्यपेक्षया प्राबल्यात् न केवलसानाय्याङ्गत्वम् । वे. ३।२।५।१२ पृ. २३७. * आनन्तर्यमचोदना ( ३।१।१४।२४ ) इत्यानन्तर्यलक्षणस्य क्रमस्य अविनियोजकत्वाभ्युपगमात् । सु. पृ. ४१७. * आनन्तर्येण निराकाङ्क्षीकरणं सत्यामाकाङ्क्षायाम् । भा ३।१।१४।२४. * आनन्तर्यरूपक्रमस्य आनन्तर्याधिकरणेन ( ३।१।१४।२४ ) अविनियोजकत्वमुक्तम् । सु. पृ. १०७२, * आनन्तर्यलक्षणस्य क्रमस्य विनियोजकत्वं सिद्धान्ते नाभ्युपगम्यते । पृ. ११९२, * आनन्तर्यलक्षणस्य क्रमस्य विनियोजकत्वं संभवति संनिधिविशेषाम्नानार्थवत्त्वाय प्रकरणादिकल्पनस्य आनन्तर्येऽपि तुल्यत्वात् । पृ. १०६७, * आनन्तर्यलक्षणस्य क्रमस्य विनियोजकत्वे तस्य पूर्वोत्तरयोः पदार्थयोः तुल्यत्वात् पूर्वस्यैव उत्तराङ्गत्व नोत्तरस्य पूर्वाङ्गता इति नियमायोगः । पृ. १०६६.

आनन्तर्याधिकरणम् । हस्तावनेजनाधिकरणम् । मुष्टीकरणहस्तावनेजनादि कृत्स्ने प्रकरणे निविशते ॥

आनन्तर्यमचोदना । ३।१।१४।२४ ॥

भाष्यं— ज्योतिष्टोमे श्रूयते ' मुष्टी करोति, वाचं यच्छति, दीक्षितमावेदयति ' इति । तथा ' हस्तावनेनिक्ते, उलपराजिं स्तृणाति ' इति । तत्र संदेहः किं मुष्टीकरणं वाग्यमश्च आवेदनार्थं, उत कृत्स्नप्रकरणे निवेशः इति । तथा हस्तावनेजनं किं उलपराजिं स्तरितुं, उत प्रकरणे सर्वपदार्थान् कर्तुं इति । किं तावत् प्राप्तं ? हस्तावनेजनं हस्तसंस्कारार्थं, संस्कृताः पुनर्हस्ताः आम्नायमानाः एकार्था भवन्ति, पदार्थान् अनुतिष्ठति । तेन केषांकेषां पदार्थानां इमौ संस्कारौ, इत्याकाङ्क्षा अस्ति । तस्यामाकाङ्क्षायां आनन्तर्येण निराकाङ्क्षीकरणम् । तस्मात् आनन्तर्यात् आवेदनार्थौ वाग्यमः मुष्टीकरणं च । हस्तावनेजनं च उलपराजिं स्तरितुम् । एवं प्राप्ते ब्रूमः । सर्वैः प्रकरणाधीतैः संबन्ध इति । कुतः ? वाक्यभेदात् । कथं वाक्यभेदः ? अर्थद्वयाभिधानात् । नहि ' दीक्षितं आवेदयितु ' इत्यस्मिन् अर्थे ' आवेदयति ' इति ( भवति ), च ' स्तरितुं ' इत्यस्मिन् अर्थे ' स्तृणाति ' इति । तस्मादपि विधीयते अवनेजनं च । मुष्टीकरणं वाग्यमश्च विधीयते आवेदनं च । न च एषां परस्परेण कश्चित् संबन्धोऽस्ति । न च

पदार्थाकाङ्क्षया सत्या आनन्तर्यं एकवाक्यताया कारणं भवति । तस्मात् प्रकरणधर्मा एवंजातीयकाः ।

था— क्रमविनियोग. अनन्तरमेवस्थितः । इदानीं तदपवादः क्रियते । मुष्टयो करणं, वाग्यमश्च याजमान, आवेदनमाध्वर्यव, तत्र कथमङ्गाङ्गिभाव आशङ्क्यते । नैष दोषः । आध्वर्यवेष्वपि प्रयोक्तृत्वेन यजमानस्य कर्तृत्वात् । अथवा यत् तत्र दीक्षितस्य आवेदनं, तस्याङ्गत्वेन इतरौ संनिधीयेते । कस्मात् पुनरुच्यते आनन्तर्ये पूर्वस्यैवाङ्गत्वमुच्यते, न परस्य । केचिदाहुः, अनियमप्रदर्शनार्थमेव प्राथम्यात् पूर्वोपादानम् । अथवा सर्वभावनासु ' किं ' इत्युपकार्यापेक्षया प्रथममुत्पद्यते । सर्वापेक्षणेषु च पुरस्तादुच्चरितस्य ग्रन्थानुगुण्यात् पूर्वमालोचनं भवति, तेन ' मुष्टिकरणवाग्यमाभ्यां किं कर्तव्य ' इत्यपेक्षिते ' दीक्षितमावेदयति ' इत्युपतिष्ठते । न च तदनियमे हेतुरस्ति । कल्प्यते च तस्यापि परस्य प्रयोजनमस्य कल्पयितुं, अतस्तदर्थत्वमेव युक्तम् । एव दत्तायनेऽप्यनस्य उत्पराजिस्तरणार्थत्वम् । ऊर्णास्तुकैः दीर्घ वेदिमध्ये स्मरण उत्पराजिस्तरणं प्रचेतव्यम् । ( सुधा— उत्पूर्वस्य पुनातेः क्वप्प्रत्यये धात्वन्तोपसर्गान्त्ययोः लोपनिपातनात् पकारनकारयोश्च इलक्षणेन लोपात् उत्पशब्दस्य ऊर्ध्वंगमनार्हसुगन्धादिकठिनतृणवाचिता ऊर्ध्वशब्देनोक्ता । तृतीयया अन्वै. कृत्त शसि. इत्यर्थे तृतीयासमासो दर्शितः । रेफलोऽपरपर्यायराज्याकारस्यवाचितया राजिशब्द व्याख्यातु दीर्घमित्युक्तम् । पृ १०६७. कुतूहले तु उत्पाः उशीरतृणानि शुष्कतृणानि वा । तेषां राजिः पङ्क्तिः इत्येवोक्तम् । याज्ञिकास्तु एकं दर्भमुष्टिमेव पृथक् गृह्णन्ति ) । सर्वत्र च योग्यत्वं, अवान्तरप्रकरण, एकवाक्यत्व च महाप्रकरणात् बलीयांसि विनियोजकानि । तस्मात् सर्वं पूर्वंगमाम्नातं उत्तरसमाम्नातस्याङ्गम् । योग्यत्वाभावात्तु मुष्टिकरणवाग्यमयोः परस्परमङ्ग नोपन्यस्तम् । नहि उभयोः प्रधानार्थयोरन्योन्यापेक्षा । तेन अयोग्यमात्रमनिकृष्य न दूरं गन्तव्यमिति । एवं प्राप्ते ब्रूमः । ' न तावदेकवाक्यत्वं दृश्यते, योग्यता समा । अवान्तरकथंभावस्तदानीं नावगम्यते ॥ ' नहि द्वयोराम्नातयोः केन चिदुपबन्धेन विना एकवाक्यत्व सम्भवति, यत् प्रकरण बाधेत । योग्यता पुनः अनन्तरार्थत्वे न समा, यद्वा सर्वार्थत्वे युक्ततरा । बहुषु हि पदार्थेषु अवधानं उपयुज्यतेतरां, एकस्तु यथाकथंचिदपि क्रियते । न च अवान्तरप्रकरणमिह विद्यते । यदि तावत् पूर्वस्य कथंभावः, तत उत्तरमेवाङ्गं प्राप्नोति । न चैष भवितुमर्हति, आध्यात्मस्य अपरिपूर्णत्वात् । न च उत्तरेण असौ ( कथंभावः ) अवलब्धप्रयोजनावस्थेन शक्यः पूरयितुम् । एवं तस्याप्युत्तरेण, इति यावत्प्रधानं प्रासम् । यद्येवं ततो योऽन्तराले गुणकामः ( गोदोहनादि. ) तेन सह सर्वभावस्य ( अध स्तन इत्यर्थः ) अङ्गं संबध्येत, नैव प्रधान यावत् प्राप्नुयात्, अवान्तरकथंभावस्य निष्पन्नत्वादिति । उच्यते । ' यदि नाम्नाप्य विद्यातौ स्यातां वाक्यगतौ गुणौ । अवान्तरकथंभावस्तत्रस्तावन्तरा भवेत् ॥ ' [ तौ गुणौ ] । प्रधानकथंभावस्तु आश्रितः [ प्रधानात् प्राक् पश्चाच ] अन्यसंबन्धगानमुपस्था यावदन्तं गच्छति इत्यनुपङ्गाधिकरणे ( २।१।१६ ) व्याख्यातम् । ननु एवं सति सर्वावान्तरप्रकरणोच्छेद एव प्राप्नोति । उच्यते । ' परप्रकरणस्थानामङ्गे श्रुत्यादिभिस्त्रिभिः । ज्ञाते, पुनश्च तैरेव संदंशेन तदिष्यते ॥ ' [ तत् अवान्तरप्रकरणम् ] । सर्वेषां हि प्रयाजादीनामङ्ग किं चित्तुक्तस्य पुनः परामर्शोऽस्ति, इति तत्पर्यन्ततावान्तरप्रकरणकल्पना भवति । अन्यथा हि अप्रयोजेव स्यात्, सर्वदोषाणां परस्परदोषप्रसङ्गात् । यत्र पुनः संकीर्तनं नास्ति, तत्र सर्वं प्रधानार्थमेव अध्यवसातव्यम् । तस्य तु किं केवलस्य, अथ साङ्गस्य इत्यत्र विवेक ' प्रकरण विशेषाद्संयुक्त प्रधानस्य ' ( ३।७।११ ) इत्यारभ्य वक्ष्यति । तदिह योग्यतया मुष्टिकरणादीनां साङ्गप्रधानार्थत्वं निश्चितम् । यदि तु आवेदयितुं स्तरितु इति च श्रूयते, ततः 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' (पा० ३।३।१० ) इत्येकवाक्यतया विनियोगो भवेत्, न तु एतमस्ति । तस्मात् सर्वार्थत्वमिति ।

वाक्यानां च समाप्तत्वात् । २५ ॥

भाष्यं—स्वेनस्वेन पदसमूहेन परिपूर्णमेकं वाक्यम् ।

तथा अपर, तथा सर्वाणि यान्युदाहृतानि । तस्माद् विस्पष्टमर्थद्वयं, विभागे च निराकाङ्क्षता । तेन वाक्यभेदः । अतः संयोगतोऽविशेषात्प्रकरणविशेषाच्च कृत्स्ने प्रकरणे निवेशः इति ।

**वा**— इतश्च आनन्तर्यमप्रमाणम् । यत एकवाक्यतालक्षणमेषु प्रत्येकं दृश्यते, न सर्वेषु । तस्मादपि नान्योन्यार्थता ।

**शा**— आनन्तर्यात् एकवाक्यत्वात् अवान्तरप्रकरणाद्वा सन्मानाङ्गत्वे प्राप्ते अभिधीयते 'लिङ्गप्रकरणाभ्यां हि सर्वार्थत्वं प्रतीयते । क्रमश्च दुर्बलत्वाभ्यामतः सर्वार्थता भवेत् ॥'

**सोम**—पूर्वेण क्रमात् आज्यभागार्थत्वे मन्त्राणामभिहिते इह क्रमः अपोद्यते इति (अपवाद-) सङ्गतिः । प्रयोजनं स्वकाले दैवात् हस्तावनेजनादि अकृत्वा कतिपयपदार्थानुष्ठानानन्तरं तत्स्मरणे यत्र स्मृतं, तदुत्तरपदार्थानामवैगुण्याय तत्र कर्तव्यं सिद्धान्ते, पूर्वपक्षे तु अनन्तरपदार्थस्य अनुष्ठितत्वात् हस्तावनेजनाद्यकरणप्रायश्चित्तमात्रम् । सूत्रे अचोदना अप्रमाणमित्यर्थः ।

**की**—प्रयोजनं अपवाजिकरणस्य आज्यभागशेषत्वेन प्रधानमात्रार्थत्वात् पशुमेषीये लोपेन हस्तावनेजनस्यापि लोपः पूर्वपक्षे । सिद्धान्ते तु आज्यभागाङ्गत्वेन करणमिति । पृ. २१६.

**वि**—'हस्तौ दानयनेनिक्ते स्तृणात्युल्मुकायितम् । दर्भान्तरण दयाङ्ग हस्ताद्युद्दिवसानिले ॥, तन्मात्राङ्गत्वमत्र स्याद्वानन्तर्यसंभवात् क्रमात् ।, लिङ्गप्रकरणाभ्या तु सर्वाङ्गानदीपता ॥'

**भाट्ट**— दर्शपूर्णमासयोः 'हस्तावनेनिक्ते' 'उल्मुकाभ्यां स्तृणाति' इति, तथा ज्योतिष्टोमे 'मुष्टी करोति वाचं यच्छति' 'दीक्षितमावेदयति' इति श्रुतम् । तत्र हस्तावनेजनं हस्तसंस्कारार्थं मुष्टीकरणवाग्यमौ च मनःप्रणिधानार्थौ । अतश्चत्रयमपि तत्तत् करिष्यमाणकर्मार्थमित्यसंदिग्धम । तत्र करिष्यमाणं कर्म आनन्तर्यादेकवाक्यत्वाद्वा उल्मुकनिस्तरणदीक्षितावेदनरूपमेव । इति प्राप्ते, आनन्तर्यस्य अनाजर्नीयत्वात् अङ्गतामात्रक मात्रनुपपत्तेः, अहत्वेऽपि वा प्रकरणेन बाधात् 'पत्य सृजो यच्छति' इतिवत् आकाङ्क्षाविरहेण वाक्यानद्वयस्य यच्छब्दानुपबन्धाभावे एकवाक्यत्वानुपपत्तेः कर्तृसंस्कारकस्य अस्य प्रकरणात् अङ्गप्रधानसाधारणत्वोत्तरपदार्थाङ्गत्व हस्तावनेजने । मुष्टीकरणवाग्यमयोस्तु अङ्गुलिवाग्विसर्गप्राक्कालीनपदार्थमात्राङ्गत्वम् ।

**मण्डन**—'न मुष्टिवाग्यमार्था ।' १३.

**शंकर**—'उत्तपदं न वाग्यमः ।'

∗ आनन्तर्याधिकरण (३।१।१४) 'मिथश्चानर्थसम्बन्धः' (३।१।१३) इत्यधिकरणस्यापवादः । भा. ३।१।१४। २४.

∗ आनमनं दक्षिणानामेकं कार्यम् । भा. १०।६। २८।७०. ∗ दक्षिणाना कालिकानमनार्थत्वात् आनमनस्य च साहाय्योपदिलिप्सया प्रयोगार्थता । वा. १०।५।११.

∗ आनयतिरयं द्विकर्मकः । तनैक कर्म ईप्स्यमानमपि गुणत्वं प्रतिपद्यते इतरत् प्रति । यथा, अजां ग्राम नयतीति । तत्र विषयतः प्राधान्यम् । यदि अजा सम्प्राप्ता, ततः सा प्रधान, ग्रामस्तदर्थः । अथ ग्रामस्य येन चित् कारणेन प्राधान्य, ततः आनयतिनिर्दिष्टा अजा तदर्था । तत्र द्वयोर्द्वितीयाऽन्तयोर्न शब्दतो निर्णयः, किं तर्हि वस्तुन । यत्र तु द्वे अपि प्रयोजनवती द्वितीयाऽन्ते च, तत्र नास्त्येव निर्णयः । यत्र तु सप्तम्या निर्दिष्टमेकमाधारभूतं, तत्र इतरत् आधेयत्वात् तत् प्रति नीयते । तेन व्याप्यमानत्वात् इतरदेव तत्र प्रधानम् अधिकरणभावो नान्तरीयकत्वादनूद्यते तच्छेदमात्र क्रियते । वा ४।१।९।२३.

∗ आनयनं चतुर्थपञ्चमप्रयाजनिष्पादकं जुह्वा औपभृताज्यस्य प्रयोजकम् । वि. ४।१।१५. ∗ आनयन तप्ते पयसि दध्न आमिक्षायाः प्रयोजकम् । भा. ४।१। ९।२२–२४.

∗ आनर्थक्यं वाक्यदोषः । तत्र विवक्षितार्थापेक्षया आधिक्याभ्युपगमे आनर्थक्य इत्यत्रोदाहरण– 'आमनमस्यामनस्य देवाः इति तिस्र आहुतीर्जुहोति' । अत्र हि 'सामङ्गण्या ग्रामकामो यजेत' इति प्रधानवाक्यगतग्रामकामपदानुपक्षेण विवक्षितार्थापेक्षया आमन-

होमविधेः आधिक्याभ्युपगमे श्रामकामपदानुषङ्गानर्थक्यम्। बाल पृ. ३.

𑁍 आनर्थक्यात् तदङ्गेषु। ३।१।९।१८ ॥

वाजपेये 'सप्तदशारत्निर्वाजपेयस्य यूपो भवति' इति श्रूयते। अत्र सप्तदशारत्निता यूपस्य उक्ता। परन्तु वाजपेये साक्षात् यूपस्य सम्बन्ध एव न सम्भवति। तथा च यूपस्य वाजपेये आनर्थक्यात्, अविद्यमानः अर्थः प्रयोजनं यस्य यूपस्य सः अनर्थकः तस्य भावः आनर्थक्यं, आनर्थक्यात् प्रयोजनशून्यत्वात् बाधितत्वप्रसङ्गात् वाजपेयापूर्वरूपप्रयोजनकत्वं न सम्भवति, इति कृत्वा तदङ्गेषु वाजपेयाङ्गेषु पशुषु यो यूपः तत्र सप्तदशारत्निता निविशते। एवं अन्यत्रापि मुख्ये असम्भवे अङ्गे निवेशः इति न्यायसामान्यार्थं तदङ्गेषु इति बहुवचनम्। वाजपेयेऽपि च सप्तदश पशवः। तदर्थमपि बहुवचनम्। के.

𑁍 आनर्थक्यतदङ्गन्यायः ॥

आनर्थक्यात् तदङ्गेषु। ३।१।९।१८ ॥

भाष्यं — वाजपेये श्रूयते 'सप्तदशारत्निर्वाजपेयस्य यूपो भवति' इति। तत्र संदेहः किं सप्तदशारत्निता वाजपेयस्य ऊर्ध्वपात्रे निविशते, उत पश्वर्थे यूपे निविशते इति। किं तावत् प्राप्तम्? ऊर्ध्वपात्रे इति। कुतः? वाजपेयस्य यूपाभावात्। यत् वाजपेयस्यास्ति पात्रं यूपसदृशं, तत्र भवितुमर्हति। अस्ति च षोडशिपात्रम्। तच्च खादिरत्वात् ऊर्ध्वत्वाच्च यूपसदृशम्। तत्र निवेशे सति वाजपेयशब्दः आञ्जस्येन भवति। इतरथा वाजपेयाङ्गपशुयागे लक्षणया वाजपेयशब्दो वृत्त इति गम्यते। ननु स्वपक्षेऽपि यूपशब्दो लक्षणया ऊर्ध्वपात्रे। उच्यते। सर्वथा वयं लक्षणामस्यास्य मुच्यामहे। मत्पक्षे तु वाजपेयप्रकरणमनुगृह्यते। तस्मादूर्ध्वपात्रे निवेश इति। एवं प्राप्ते ब्रूमः। आनर्थक्यात् तदङ्गेषु। वाजपेयशब्दस्तावत् सोमयागविशेषवचनः। तस्य साक्षात् यूपेन न प्रयोजनम्। अस्ति तु तस्य अङ्गं पशुयागः, तस्य तु पशुं बद्धुं यूपेन कार्यम्। साक्षात् वाजपेययूपस्य यदि सप्तदशारत्निता विधीयते, तस्य अभावात् आनर्थक्येन वचनं प्राप्नोति। तत् अनर्थकं मा भूत् इति योऽस्य पशुयागे यूपः, तत्र निवेशमर्हति। ऊर्ध्वपात्रे च यूपशब्दो लक्षणया स्यात्। ननु इतरस्मिन्नपि पक्षे वाजपेयशब्दो लक्षणयेति, नेति ब्रूमः। वाजपेये एव वाजपेयशब्दो भविष्यति, शक्ष्यति च स पशुयूपं विशेष्टुम्। स. अस्याङ्गस्य उपकारकः। यश्च यस्योपकारिणः उपकरोति, भवति स तस्य संबद्धो मुख्येनैव सम्बन्धेन। न च एकान्तरित इति कृत्वा असम्बद्धो भवति। यथा 'देवदत्तस्य नप्ता' इति, पुत्रेण चासौ अन्तरितः, अथ च देवदत्तेन मुख्येनैव सम्बन्धेन सम्बद्धः। तस्मात् एष एव पक्षः आश्रयणीयः। नहि एतस्मिन् पक्षे कश्चिदपि लक्षणाशब्दो भवतीति।

वा— यदि 'सप्तदशारत्निः वाजपेयस्य' इति विधीयते, यूपशब्दः यथाकथंचित् तदनुवादः, ततः षोडशिपात्रे निवेशः। अथापि 'यो वाजपेयस्य सम्बन्धी, स सप्तदशारत्निः' इति विधीयते, तथाप्येवम्। अथ 'यो यूप, स सप्तदशारत्निः' इति वचनव्यक्तिः, वाजपेयशब्दो यथाकथंचित् विशेषणं प्रकरणप्राप्तानुवादो वा, ततः तदङ्गपशुयूपस्य इदं परिमाणमिति। किं प्राप्तं? 'आनन्तर्यात् प्रधानत्वात् तथा प्रकरणात् श्रुतेः। वाजपेयेन सम्बन्धः साक्षान्न पशुना सह ॥' साक्षात् कर्मणः सप्तदशारत्नित्वं न सम्भवति इति तदङ्गस्य गृह्यते। तत्र यदेव साक्षात् सम्भवि, तदेव ग्रहीतव्यम्। यद्यपि पशुरपि वाजपेयप्रकरणान्तर्गत इति तत्सम्बन्धेऽपि प्रकरणात् अनतिरेको भवत्येव, वाजपेयस्य तद्धि भवति, तथापि अङ्गप्रधानानां विधायकभावयोगित्वात् वाजपेयकर्मभावेन अग्रहणात् प्रकरणबाधः अभिधीयते। वाजपेयस्य इति च षष्ठीश्रुत्या सम्बन्धो भवति। भवतस्तु यूपसामानाधिकरण्यात् वाक्येन स्यात्। न च वाजपेयशब्दे लाक्षणिके कश्चित् विरोधः, येन लक्षणा आश्रीयते 'गुणे त्वन्याय्यकल्पना' (१।३।९।१५) इति। तत् वर यूपशब्दे एव लक्षणा। तस्मात् ऊर्ध्वपात्रे एव निवेशः। इति प्राप्तेऽभिधीयते। 'आगत्या लक्षणावृत्तिः समभिव्याहृतैर्भवेत्। न चोर्ध्वपात्रसम्बन्धी यूपशब्दः प्रतीयते ॥' यो हि प्रकरणं अव्यवहितसम्बन्धं च अनुजिघृक्षति, तस्य

यूपशब्दः अनर्थकः स्यात् । ऊर्ध्वपात्रं लक्षयिष्यति इति चेन्न । असति सामानाधिकरण्ये अन्यथा श्येने वा लक्षणाऽभावात् । अस्मत्पक्षे पुनः न किंचित् लक्षणा-दूषणं, यद्यपि संबन्धमात्राभिधायिना अनङ्गेऽपि उपकारक-मात्रापेक्षया उपपद्यमानात् । नहि असौ अङ्गाङ्गि-संबन्धमेव एकं ब्रवीति । अनङ्गमपि यूपः तदङ्ग-पश्वर्थत्वात् उपकारको वाजपेयस्य । यत्तु आम्नातेन षष्ठीश्रुतिः विनियोजिकेति, तत् यूपशब्देनापि सह अनि-शिष्टम् । अतश्च सप्तदशारत्निविधिपरे अनूद्यमानत्वात् यादृशो यो वाजपेयस्य यूप उपलभ्यते, तादृशस्य ग्रहणं, इति पशुयूपाश्रयणम् । अस्ति तु एवाऽपि जिज्ञासा, यदि वाजपेयस्य साक्षात् यूपः स्यादिति । यदा तु स नोपलभ्यः, तदा पक्षान्तरमवलम्बितम् । किंच 'वाजपेयेन संबन्धश्चेद्धाऽपि न निरूप्यते । साक्षात् संबन्ध-मात्रेण तद्यूपेनाथवा स्फुटः ॥' (नेदा इति व्याचष्टे-) साक्षात् तावत् न सप्तदशारत्नित्वं युज्यते इत्युक्तम् । संबध्यमानमपि अनिर्दिष्टं वाज-पेयस्य इत्येतावन्मात्रेण न ज्ञायते । यूपशब्दार्थस्तु अन-न्यनिष्ठत्वात् दूरभ्रष्टः । तस्मात् यथोक्तमेवास्य (वाज पेयेन) विशेषकत्वं अभिमतप्रकरणाद्यं अनुग्रहिष्यति । वक्ष्यति हि एतत् 'आग्नेयीति चेत्, तद्वाक्ये हि तदर्थत्वात्' (३।७।१।३-४) इत्यत्र 'यथा प्रकरण-वशेन तदुपकारिभाने धर्मा विधीयन्ते, न साक्षात् अङ्गे-ष्वेव केवलेषु इति ।' तस्मात् न केन चित् प्रमाणेन विरोधः इति ।

शा—सप्तदशारत्नित्वम् ऊर्ध्वपात्रे निवेश्यम् । इति प्राप्ते उच्यते । 'स्यादेव यदि यूपेन संबन्धे लक्षणा भवेत् । वाजपेयश्रुतेर्नासौ श्रुतिवृत्त्यैव सा यतः ॥ षष्ठी संबन्धमात्रार्था नाङ्गाङ्गित्वमपेक्षते । नाप्य-व्यवधिसंबन्धं देवदत्तस्य नप्तृवत् ॥ यूपस्य च पशु-द्वारा वाजपेयोपकारता । संबन्धमात्रमस्त्येव अनु-नाऽतो लक्षणा ॥ ऊर्ध्वपात्रेण संबन्धे यूप-शब्दस्य गौणता । अनन्तरेण संबन्धः प्रधानेन च सङ्गतिः ॥ प्रक्रियाऽनुग्रहश्चैवं नाऽस्त्यः श्रुति-बाधतः । तेन सप्तदशारत्निर्यूप इत्येव संगतिः ॥

सा च प्रकरणाद् वाजपेयसंबन्धियूपगा । तेनायं वाजपेयस्येत्यनुवादो भविष्यति ॥'

सोम—प्रकारविनियोगविशेषनिरूपणानन्तर गुण-विनियोगनिरूपणात् संगतिरित्याहुः । सूत्रार्थस्तु— सप्तदशारत्नित्वादिकं प्रधाने वाजपेये आनर्थक्येना-योग्यत्वात् तदङ्गेषु निविशते इति ।

वि— 'भवेत् सप्तदशारत्निर्वाजपेयस्य यूपकः । उन्मान द्रव्यगं वाजपेयस्याङ्ग पशोस्त ॥, आनन्तर्यात् प्रकरणात् पर्माङ्गं पोडशिवत् । ऊर्ध्वपात्रे त्वारत्नि-ऽर्थे संयुज्यात्वेति कर्मणः ॥, यूपद्वारा पशोरङ्गं पशुद्वारा च कर्मणः । सौमिकत्वाद् वाजपेये यूपो नास्ति पशुं विना ॥'

भाट्ट— 'सप्तदशारत्निर्वाजपेयस्य यूपः' इत्यत्र अव्यवहितत्वात् प्रधानत्वात् प्रकरणानुग्रहाच्च सप्तदशार-त्नित्व वाजपेयोद्देशेन षष्ठीश्रुत्या विधीयते न यूपोद्देशेन, अतिप्रसङ्गापत्तेः, वाजपेयेन विशेषणे विशिष्टोद्देशाच्च । अतः सप्तदशारत्नित्वं वाजपेयोद्देशेन विधीयमानं तदीयो-र्ध्वपात्रद्वारेण निविशते, यूपपदं साहचर्याद्गौणम् । इति प्राप्ते, यूपपदस्य गौणत्वे प्रमाणाभावात् यूपपदेन स्वकार्य-स्थापितया तदुद्देशेन सप्तदशारत्निर्विधीयते । यद्यपि न द्रव्य अरत्निपरिमाण चातिदेशतः समवाप्तिकं, तथापि तदनुवादेन संख्याविधाने एकप्रसरताभङ्गापत्तेः अतः पूर्व-प्रवृत्तद्वीकारेण निषिद्धद्रव्यमेव संख्याविधित्व 'लोहितोष्णीषाः' इत्यादिवत् विधीयते । यूपकार्यस्वरूप-स्यानर्थक्यात् प्रकरणात् वाजपेयापूर्वसाधनत्वस्य पशावा-वाजपेयापूर्वसमन्धियूपलाभात् 'वाजपेयस्य' इत्यनुवादः । षष्ठी च परंपरासंबन्धेऽप्युपपन्ना नप्तरि देवदत्तस्याय-मितिवत् । व्यवहितत्वादि च गौणत्वापेक्षया न दोषः ।

मण्डन— 'यूपेऽरत्निशुभ पशोः ।' ८.

शंकर— 'अनर्थकेऽङ्गाश्रताः ।' ९.

● (आनर्थक्यतदङ्गन्यायस्य स्वरूपम्) साक्षा-त्संबन्धेन अन्वयासम्भवे परंपरासंबन्धेन अन्वयो भवति, विनैवानर्थक्यप्रसङ्गे इति । के. ० आनर्थक्यात् तद-ङ्गेषु इत्यधिकरणे 'सप्तदशारत्नित्वस्य वाजपेये साक्षाद-न्वयासम्भवात् वाजपेयाङ्गयूपपशुयागद्वारा अन्वयः' इति

न्यायः ' आनर्थक्यात् तदङ्गेषु ' इत्यधिकरणे वक्ष्यते । कु. २।२।१२।२७. ● ' पदार्थे अनर्थकस्य सतः तदङ्गे निवेशः ' इति आनर्थक्यतदङ्गन्यायसूत्रस्यार्थः, एतदेव च न्यायस्य स्वरूपम् । के.

५. ( आनर्थक्यतदङ्गन्यायारम्भस्य कारणम् ) भावनाद्वाराऽपि प्रवर्तमानस्य विधेः अप्राप्तप्रापण-स्वभावत्वेन अन्यतः प्राप्तया तात्पर्यायोगात् आनर्थक्य-तदङ्गन्यायेन गुणे तात्पर्यावतारो युक्तः । सु. पृ. ७७५, ● रेवतीवारवन्तीयसाम-ओपजीवनाद्यङ्केः गुणत्वेन च आनर्थक्यतदङ्गन्यायविषयत्वात् अङ्गेषु तत्सम्बन्ध निक्षेप्तु-मारभमाणः ...। पृ. ८६१. ● ( अयं न्यायो यत्र यथा न प्रवर्तते ) आनर्थक्यतदङ्गन्यायः अन्यथा आन-र्थक्यपरिहारोपपत्तौ न प्रवर्तते । सु पृ ८९६. ● आनर्थक्यतदङ्गन्यायेनापि कर्ममतमाध्यमानिर्वाहात् न द्वितीयास्थले तन्न्यायप्रवृत्तिः । अत एव ' न सोम्ये-ऽध्वरे ' इति सप्तमीस्थले आनर्थक्यतदङ्गन्यायो नावत-रति इति दशमे वक्ष्यते ( वार्तिके १०।८।२।५ ) । सोम. १।७।४. ● आनर्थक्यशब्दतदङ्गेषु इति न प्रधानादक्षतार्थे तदङ्गमाश्रीयते । यो हि प्रधानोपकारित्वेन श्रूयते, स तदङ्गेऽपि स्थित उपकरोति इत्येव कल्प्यते । भा. १।२।४।२२ पृ. १३६. ● न च पूर्वाधिकरणन्यायेन ( १।२।१।१-७ ) यजुर्वेदविहिताधानेऽपि श्रूयमानसुपा श्रुत्य तमासम्भवात् आनर्थक्य० न्यायेन तदङ्गमग्न्येषु निविशमान वारवन्तीयमपि आरभदवीति वाच्यम् । तत्तद्वेदविहितानिमित्तनस्वरस्य साक्षादेव निवेशसंभवात् नात्र आनर्थक्यतदङ्गन्यायावतरणम् । कु ३।३।२।८ पृ. ११३. ● न च षष्ठीश्रुतिपाठात् संबन्धाद्विना आन-र्थक्यतदङ्गन्यायोऽस्ति इत्युक्तम् । भा. ३।६।७।२५. ● न प्रत्यक्षेण न चोदकेन ज्योतिष्टोमे उपवीतम् । तत्प्रकृतिश्च दर्शेन', न दर्शपूर्णमासप्रकृतिकः । आनर्थक्याच्च तदङ्गेषु इति न्यायोऽत्र नास्ति । प्रधाने हि असंभवान् अङ्गेषु अर्थोऽर् क्रियते । सोमयाग नात्र प्रधाने एव निवीतम् । टुप्. १०।४।१।१ पृ १९०६. ● नाय आनर्थक्य-तदङ्गन्यायस्य विषयः । यत्र हि श्रुतशब्दजन्यशाब्दबोधे योग्यताज्ञानाभावेऽपि अयोग्यतानिश्चयाभावमात्रेण शाब्द-

बोधस्य आनुभविकत्वात् अयोग्यतानिश्चयः प्रतिबन्धक-मात्रम् । यत्र तु कल्पितशब्देन शाब्दबोधः तत्र शब्दकल्प-नाया योग्यताज्ञानस्यैव कारणत्वं, अयोग्यतानिश्चयाभाव-सत्त्वेऽपि योग्यताज्ञानाभावे शब्दकल्पनाऽनुदयस्य आनु-भविकत्वात् । अतश्च यागगतयोग्यताज्ञानाभावेन तद्गता-श्रयत्वबोधकशब्दस्यैव प्रकरणेन अकल्पनात् कुतस्तदसंभवे अङ्गेष्ववतारः ? कौ. २।२।१२।३६ पृ. २८६. ● सर्वत्र स्वोद्देश्यस्य अपूर्वव्यभिचारे अपूर्वसाधनत्वलक्ष-णार्थे प्रकरणानुप्रवेशः, यथा 'व्रीहीनवहन्ति' इत्यादौ । अत एव तादृशस्थले आनर्थक्यतदङ्गन्यायः । प्रकृते तु ( पवमानहविषां अन्यङ्गत्वानङ्गत्वविचारस्थले धारणो पमावचरः इत्यत्र ) स्वरूपेणैव अव्यभिचरिता-पूर्वसाधनत्वोपस्थितौ न तदङ्गावतारः इति वार्तिककारः । भाट्ट. ३।१।१२.

● ( अस्यापवादः ) अभिक्रमणोपव्यानयोः आनर्थक्यतदङ्गन्यायेन कर्मान्वयसिद्धिमुपजीव्य तद्विशेषे विचारिते संप्रति आनर्थक्यतदङ्गन्यायापवादः क्रियते ( गुणानां च परार्थत्वात् ० इति ) । सोम. ३।१।१२।२२.

● ( अस्योज्जीवनम् ) अनुयाजयाना प्रधानान्वये आनर्थक्यापत्तेः तदङ्गभूतयोः आज्यभागयोः क्रमानुसारेण अवतारोक्त्या धारणाधिकरणे( ३।१।१२ ) पोषितानर्थक्य-तदङ्गावतारोऽङ्गीकृते स्यते । सु. पृ. १०६५.

● ( अथ आनर्थक्यतदङ्गन्यायसाध्याः विषयाः वर्णक्रमेणोपन्यस्यन्ते । स च वर्णक्रमः न वाक्य प्रथमाक्षरेषु, किंतु स्थूलाक्षरेषु द्रष्टव्यः ) । अभिगु-रेपे ' न पिता वर्धते, न माता ' इत्यत्र अर्थे पुत्रवादि-वृद्धेः प्रयक्षत्वात् प्रतिषेधासंभवात् आनर्थक्यतदङ्ग-न्यायेन शब्दे निक्षायते । भा १।२।४।४४. ● वाज-पेयाङ्गत्वेनाम्नातस्य बसदसारनिवाय तत्रासंभवात् तदङ्ग-पशुयागान्तरे अभिहिते तेनैव न्यायेन अभिक्रमणोप-व्यानयोः कर्माङ्गभूतकर्मान्तरे सिद्धे क्रिमभिक्रमणस्य दर्शपूर्णमासाङ्गत्वात् तदङ्गेषु सर्वेष्वपि अवतारः, प्रयाजहोमाङ्गत्वाच्च तदङ्गभूते अध्वर्युयाने ( इति विचा-रः ) उपवीतस्य च किं अग्निहोत्रयजमानत्वाद्दर्शयाग-तदङ्गभूते होमाभे अवतार, दर्शपूर्णमासाङ्गत्वाद्वा

तदङ्गभूतेषु सर्वेष्विषु इति विचारात् पर्यवसितः आनर्थक्यतदङ्गावधारन्यायः । सु. पृ. १०५९. ● न च प्रधानभूतपशुयागस्य आश्रयत्वासंभवे आनर्थक्यतदङ्गन्यायेन यूपे अवतारः, आश्रयत्वस्य आनर्थक्यतदङ्गन्यायाविषयत्वेन देवत्वाधिकरणे स्थापयिष्यमाणत्वात् । कौ. १।२।१।२२. पृ. ४५, ● 'इषे त्वा' इति मन्त्रः समाख्यया पुरोडाशाङ्गत्वेन प्रकृतः 'इषे त्वेति शाखां छिनत्ति' इति इतिकरणाद्यन्योगश्रुत्या शाखाच्छेदनाङ्गत्वेन विनियुज्यते । न चात्र अधिकारत्वप्रकरणेन साक्षात् यागाङ्गत्वावगतेः अयं श्रुतिक्रमविरोधः, यागस्य स्पष्टलिङ्गकमन्त्रान्तरावरुद्धत्वेन अस्य साक्षात् तत्रानन्वये आनर्थक्यतदङ्गन्यायेन अङ्गेषु प्रसक्तौ समाख्याऽनुरोधेन पुरोडाशाङ्गत्वोपपत्तेः । ३।३।७।१४ पृ. ९५६. ● वर्षैस्त्वादेः शब्दधर्मस्य क्रियायां संनिवेशासंभवात् आनर्थक्य० न्यायेन तदङ्गमन्त्रेषु निवेशः । कु. ३।३।१।९. ● परे तु अविवक्षितकारकं गुणमात्र प्रकरणस्थ प्रयोगवचनेन अनुष्ठीतं आनर्थक्यात्तदङ्गेषु इत्येन द्रव्येषु अवतीर्णं सर्वार्थं मन्यन्ते । ननु प्रकरणेन अनिति कर्तव्यताऽऽत्मकगुणग्रहणाभावात् आनर्थक्यतदङ्गन्यायस्य च तदङ्गीकत्वावस्थां उत्पन्नतरत्वेन पूर्वपक्ष मूलाभावप्रसङ्गात् उपेक्षणीयम् । वा. ३।१।६।१२ पृ. ६९१. ● स्वनिर्विषयत्वान्यथाऽनुपपत्त्या कथंचित् आनर्थक्यतदङ्गन्यायेन ( औद्गात्रसमाख्यायाः ) अङ्गमात्रविषयत्वकल्पनेऽपि । भाट्ट. ३।७।२४. ● 'कर्तरि शप्' ( पा० ३।१।६८ ) अत्र कर्तरीति परसप्तमी । न च शब्दतनिर्मितो कर्ता प्रत्ययान्वितः संभवति, अतः 'आनर्थक्यात्०' इति न्यायेन कार्ये विज्ञायते । तत्रैषोऽर्थः 'कर्तृवाचिनि सार्वधातुके प्रत्यये परतस्त्विते इति' । वा. ३।४।४।१२ पृ. ९२२. ● कर्तृशब्दस्य आनर्थक्यतदङ्गन्यायेन कर्तृवाचिशब्दवाचित्वं अङ्गीकृत्य सार्वधातुकशब्दसामानाधिकरण्येन व्याख्यानात् । ( कर्तरि कृत्, सार्वधातुके यक् ) सु. पृ. १४१७. ● दधिमधुनीतमाज्यम् । अनेकार्थविधानसमवात् आज्यमनूद्य विशेषमात्रं विधीयते । न च प्रधानस्यान्यगतिः । तस्मात् 'आनर्थक्यात्तदङ्गेषु'

इत्येव सिद्धम् । वा. ३।८।२०।३८. ● नञः निपातत्वेन क्रियाऽन्वयनैयत्याभावात् क्रियाऽन्वयाङ्गीकारे न प्रधानभूतायाः तस्याः प्रत्यवायाभावापत्तेः, आनर्थक्यतदङ्गन्यायेन क्रियाविशेषणेषु अन्वयावगमात् भक्षणाभावप्रत्यवायविधानं 'न कलञ्जं भक्षयेत्' इत्यत्र इति पूर्वः पक्षः । भाट्ट. ६।२।१९. ● 'आधानेऽपि तथेति चेत्' ( ३।८।२०।३८ ) इति अनिष्टापादनेन सिद्धान्ताक्षेपार्थं सूत्रं पवमानेष्टीनामनङ्गत्वेन आनर्थक्यतदङ्गन्यायाविषयत्वाद् युक्तमाशङ्क्य अनङ्गेऽपि यूपे अरत्निमात्रत्वादेस्तदभ्युपगमात् उपकारित्वमात्रस्य तन्न्यायविषयत्वाशयेन समाधत्ते । सु. ३।७ पृ. ८२. ● पशुधर्माः योग्यतया पशुयागमपेक्षन्ते न सोमयागम् । न च अनपेक्षिताः प्रकरणेन ग्रहीतुं शक्यन्ते । तदङ्गावतरणेन चात्र विप्रकृष्टतरः श्रुतोऽर्थः । न च षष्ठीप्रतिपन्नात् संबन्धात् विना आनर्थक्यतदङ्गन्यायः अस्तीत्युक्तम् । वा. ३।६।७।१९, ● ज्योतिष्टोमस्य सोमद्रव्यकत्वात् न पशुधर्मैः किंचित् प्रयोजनं इति आनर्थक्यात्तदङ्गेषु इत्येवमादिष्वेव अवान्तरः अङ्गत्वाविशेषात् त्रिष्वपि अवतरन्ति । तस्मात् त्रयाणां समानं विधानं इति प्राप्ते अभिधीयते । ३।६।७।१८ पृ. १०४२ ● पशुधर्माणां अग्नीषोमीयानुप्रवेशगमात् पूर्वं औपवसथ्ये अहन्येवानुष्ठानं, इत्यत्र न प्रमाणमस्ति । यद्यपि तत्र पाठे प्रकरणेन आनर्थक्यतदङ्गन्यायसहकृतेन पशुत्रयेऽपि अङ्गत्वावगमात् तेषां कालभेदेन तत्तत्र अनुष्ठानमस्तीति. । ( इति पूर्वपक्षे ) कौ. ३।६।५।१२ पृ ३३६. ● पशुधर्माणां महाप्रकरणस्थात् ज्योतिष्टोमसंबद्धानां पशुधर्मत्वेन साक्षात्संबन्धायोगात् आनर्थक्यतदङ्गन्यायेन पशुत्रयद्वारा तत्संबन्धावगते, तेषां च मध्ये कस्य चित् विशिष्य प्रकरणानाश्रयत्वकल्पनामात्रेण अविशेषात् सर्वार्थत्वं इति आद्यः पूर्वपक्षः । भाट्ट. ३।६।७. ● यदि ( पात्राणि पवमानेष्टेः ) अङ्गं, ततो तत्संयोगात् साक्षात् आधाने ( प्रधाने ) असमान्यपि पात्राणि आनर्थक्यतदङ्गन्यायेन पवमानेष्टिषु ( आधानाङ्गभूतासु ) भवन्ति ( पूर्वपक्षे )। शा. ३।१।१२. ● वारणवैकङ्कतानि होमार्थानि अहोमार्थानि च पात्राणि यज्ञाङ्गमित्वेन विहितानि आधान-

प्रकरणं बाधित्वा कतमस्य यज्ञस्य भवन्तु इति 'आनर्थक्यात्॰' इति पवमानहविःषु विज्ञायन्ते इति पूर्वः पक्षः । वा. ३।१।१२।२२ पृ. ७३६. ● पाशमन्त्रस्य बहुवचनान्तस्य विकृतौ उत्कर्षः । न च सामान्यसम्बन्धबोधकप्रमाणाभावः ज्योतिष्टोममहाप्रकरणस्यैव आनर्थक्यतदङ्गन्यायसहकृतस्य क्रतुपशुषु सामान्यसंबन्धबोधकस्य सत्त्वात् । भाट्ट. ९।३।५. ● पौर्णमास्यमावास्याशब्दयोः प्रधानमात्रवचनत्वात् 'आनर्थक्यात् ॰' इत्येतं अवतरतो. प्रधानहविःष्वेव केवलेषु प्रवृत्तिः । तस्मात् प्रधानहविर्मात्रं अभिधातव्यम् । इति पूर्वः पक्षः । वा. २।२।४।८, ● अनुपयुक्तधात्वर्थव्यापारान्वय एव प्रत्यय 'आन॰' इत्यनेन न्यायेन भावनातोऽवतीर्य तत्तदङ्गानि कारकाणि उपसर्पति । २।२।३।६ पृ. ४८६. ● प्राकाशशब्दवाच्ययोः प्रदीपयोः दानसंबन्धस्य प्रदानत्वात् आनर्थक्यतदङ्गन्यायेन विशेषणे अवतारात् विशेषणभूतस्याध्वर्योः प्रदीपसम्बन्धविधिः, विधेयःतत्संबन्धेन अध्वर्योरेव प्राधान्यविवक्षाया दानविशिष्टमध्वर्युं अनूद्य तस्य प्रदीपसम्बन्धविधिः, इदात्यविवक्षया वा शुद्धाध्वर्य्वनुवादेन प्रदीपसम्बन्धविधिः, इति वचनव्यक्तीनां मध्ये कया धात्वर्थे अन्वयसम्बन्धविधिः इत्यशक्यं विवेक्तुम् । तु पृ. ७६९. ● आनर्थक्यतदङ्गन्यायेन धर्मयोरेव प्रैषदधानुपपन्नत्वयोः इतरेतरयोगप्रतीतिः (मैत्रावरुणः प्रेष्यति चानु चाह इत्यत्र) । भाट्ट. ३।७।२२, ● आनर्थक्यतदङ्गन्यायेन प्रोक्षणस्य वद्यमानमुसल्यादेरपि श्रवणात् अवपातोद्देशेनैव विधानम् । ९।१।२. ● विशेषणभूतायाः भावनायाः विड्ढाक्याद्देव प्राप्तत्वात् विधेः तद्विधिधात्वर्थविषयत्वायोगात् आनर्थक्यतदङ्गन्यायेन विशेषणे एव अवतारात् । कौ. २।२।३।६ पृ. १७५. ● गोमतो मासो गोमत्त्वम् । तत्र मासत्वात् प्रातिपदिकार्थे विशेषणं गावः, तासां बहुत्वः पुरुषादत्यन्तभेदात् आनर्थक्येनावतरणम् । न चान्योऽभिधीयमानस्य गुणः गोमत्ता । न च पुरुष एव 'तस्य भावः' इत्येवं व्यपदेशभेदं लभते । तेन भावप्रत्ययः आनर्थक्यतदङ्गेषु इत्यर्थतः संबन्धमवगच्छते । वा. १।१।६।१२ पृ. ६७७. ● मण्डूकसूक्तस्य (आर्षे. ७।१०३। १–१०) प्रकरणात् ज्योतिष्टोमसंबन्धे अवगते आनर्थक्यतदङ्गन्यायेन तदङ्गभूते चयने निवेशः । कौ. २।१।१६।२३, ● इष्यते च पशुप्रयाजवदानसम्बन्धिनो मनोतामन्त्रस्य महाप्रकरणात् ज्योतिष्टोमे प्राप्तौ आनर्थक्यतदङ्गन्यायेन तदङ्गभूते स्वरूपेण असंनिहितेऽपि सवनीये प्राप्तिः । ३।१।१२।२२ पृ. २०६, ● प्रधानसंबन्धानुपपत्तौ आनर्थक्यतदङ्गन्यायेन स्वतः असंनिहितेनापि अङ्गेन प्रधानोपस्थापितेन धर्मसंबन्ध इष्ट एव । यथा मनोतामन्त्रस्य सवनीयेन । ३।१।१२।२२ पृ. २०९ ● यदा तु आग्नेयः सवनीयः पशुः ज्योतिष्टोमेऽस्ति, तदा मनोतामन्त्रस्य महाप्रकरणात् ज्योतिष्टोमसंबन्धे अवगते आदीयमानहृदयादिसंबन्धावगमात् तत्रानर्थक्यप्रसक्तौ आनर्थक्यतदङ्गन्यायसहकृतप्रकरणेन सवनीये सामान्यसम्बन्धबोधकप्रमाणेन तत्रैव निवेशः । भाट्ट. १०। ४।२२. ● अग्नु वा (गर्भिष्टुत्–)यागस्य अग्निष्टोमस्तोमजन्यत्वात् परपरार्थत्वेन जन्यत्वापरपर्यायाप्रयत्नयोगेऽपि आनर्थक्यतदङ्गन्यायेन अग्निष्टोमस्तोत्रे अवतारः (पूर्वपक्षे स्थित्वा इदमुक्तम्) । कौ. ३।३।१२।२६ पृ २८१. ● रथंतरसाम्नः साक्षात् सोमयागसंबन्धाभावात् आनर्थक्यतदङ्गन्यायेन 'रथंतरसाम' इति निर्देशः पृष्ठस्तोत्रद्वारा परपरासंबन्धे एव योग्यत्वात् पर्यवस्यति । सोम. ३।३।१. ● 'वाजपेयस्य' इत्यादौ यथैव श्रुतः संबन्धः, तथैव आनर्थक्यतदङ्गन्यायः । यदि तु तस्यापि पशोः (सवनीयस्य) विशिष्य प्रमाणान्तर अपूर्वसाधनत्वोपस्थापकं न स्यात्, ततो महाप्रकरणपरिगृहीतानामेषां परिव्याणादीनां आनर्थक्यतदङ्गन्यायेन भवेत् पर्यवसानम् । न चैतदस्ति, स्थानेन अग्नीषोमीयार्थत्वात् । भाट्ट. ३।६।७. ● यद्यपि पवमानेष्टीनां प्रदेशान्तरपठितत्वात् न विशिष्य अभिधायोऽस्ति उत्साहकः, तथापि प्रधानाधिकारेणैव प्रधानादौ बाधितेन तच्छेषत्वेनावस्थानेऽनुपपन्नत्वात् आनर्थक्यतदङ्गन्यायेन धारणादेः तदर्थताऽविरोधः । कौ. ३।१।१२।२२ पृ. २०६. ● पक्षापत्तयैव प्रधानां धारणादीनां तत्र अवरुन्धाने निवेशाभावात् आनर्थक्यतदङ्गन्यायेन पवमानेष्टिषु पक्षे एव

निवेशः इति प्राप्ते, भाष्यकारसिद्धान्तः आधान-प्रकरणे पठितेन 'यदाहवनीये जुहोति' इति वाक्येन पवमानहविषां अग्न्यङ्गत्वावगतेः आधानाङ्गत्वाभावेन आनर्थक्यतदङ्गन्यायासम्भवात् वारणादीनां सर्वयज्ञाङ्गत्व इति। भाट्ट. ३।१।१२. * आनर्थक्य-तदङ्गन्यायेन अग्निष्टोमस्तोत्रमात्रे वारवन्तीयस्य युक्त एवावतारः। कौ. २।२।१२।२६ पृ. २८३. * गुण-फलान्यतरविधायिनो वाक्यस्य आश्रयाकाङ्क्षायां प्रकरणा-पेक्षत्वेन तदाश्रयत्वायोगात् प्रकरणेन अङ्गत्वज्ञाने सति आनर्थक्यतदङ्गन्यायविषयत्वाभावात् योग्यत्वात् स्तोत्र अवतारो वारवन्तीयस्य ... । सु. पृ. ८७१. * आनर्थक्यतदङ्गन्यायेन क्रत्वङ्गभूतस्तोत्रनिर्वृत्तिद्वारा वारवन्तीयसाम्नो यागाङ्गत्वसम्भवः इति न च वाच्यं, वैषम्यात्। सप्तदशारत्नित्वं हि वाजपेये साक्षादसम्भवात् तदङ्गपशुयूपद्वारा वाजपेयाङ्गतामश्नुते। वारवन्तीयं साम तु अङ्गभूतस्तोत्रद्वारा कथं यागाङ्गतामश्नुवीत? क्रियाकारकभावस्य साक्षात्सम्बन्धरूपत्वात्। कु. २।२।१२।२७ * आनर्थक्यतदङ्गन्यायेन क्रतुसंनिधानेन श्रुतस्य वैरूप्यादेः स्तोत्रसंबन्धः। न च आनर्थक्यतदङ्गन्यायेन अग्नीषोमीयस्य सर्वविषयत्व, तथात्वे याज्यादावपि ज्ञातु सर्वभावेन वैरूप्यापत्तेः। भाट्ट. १०।६।६ * आनर्थक्यात्तदङ्गेषु (३।१।९।१८) इत्यत्र न्यायोऽत्र (न सो पशौ करोति, न सोमे) नास्ति, सोमे येन प्रतिषेधः स्यात्। वाजपेयस्य इति पष्ठ्या सम्बन्धी उपात्तः। तस्य सप्तदशारत्निता विधीयते। सम्बन्धान्तर च अङ्गाङ्गस्यापि अस्त्येवेति यूपे निवेशः। इह तु आधारत्वेन सोमः श्रूयते, न संबन्धिमात्रतया। वा. १०।८।२।९ * वाजपेये सप्तदशारत्निता षोडशिपात्रे निविशते यूपे वा इति चिन्तायां आनर्थक्यात्तदङ्गेषु इत्यनेन यूपे निवेशः अभिहितः। सु. पृ. १०३२. * आनर्थक्यात्तदङ्गेषु इत्यनेन न्यायेन क्रतुसंबन्धेन श्रुतं साम स्तोत्रेष्ववतरति। वा. २।३।२।१ पृ ५७२. * आनर्थक्यात्तदङ्गेषु इति न्यायेन सान्नाय्यधेनूनां प्रथमेन सम्बन्धरहितत्वेऽपि सवनीयपशुरूप-सोमाङ्गान्वयोपपत्तिः। पैभासा ५।१।१।१. * 'स्फ्येनो-द्धन्ति' इत्यत्र तृतीयया विनियुक्तस्य स्फ्यादेः उद्धननादिस्वरूपे आनर्थक्यात् उद्धननत्वसमानाधिकरण-प्रकृतापूर्वसाधनीभूतद्रव्यसंस्काराङ्गत्वमेव लभ्यते, न तु उद्धननादिमात्रजन्यव्यापारसाधनताश्रयत्व, यथा-युधवाक्येन यज्ञसाधनतया स्फ्यादीनि विनियुञ्जानेन उत्पत्तिशिष्टपुरोडाशाद्यवरुद्धत्वात् साक्षात् प्रधानाङ्गत्वेना-विनियोगात्, आनर्थक्यतदङ्गन्यायेन प्रकृतापूर्वसाधनी-भूतद्रव्यसंस्काराङ्गक्रियामात्रे विनियोजकत्वेन तात्पर्यसद्-भावात्। कौ ३।१।८।११ पृ. १५३, * न चैवं तदुत्तर-भाविप्रधानाङ्गत्वस्यैवाभावेन कथं प्रधानप्रकरणेन अङ्ग-मात्रार्थत्वं इति वाच्यम्। आनर्थक्यतदङ्गन्यायेन तदु-पपत्तेः। यस्मात् सर्वार्थत्वं हस्तावनेजनस्य। ३।१।१४। २४ पृ. २१५. * अङ्गाङ्गिभावे आनर्थक्यतदङ्गन्यायासम्भवात् सौभरार्थस्यापि हीषादिनिधनस्य पुरुषशेषतया विधिः सम्भवति। सोम. ३।२।१२ पृ. १५१.

* आनर्थक्यप्रतिघातन्यायः। अयमेव आनर्थक्यप्रतिहतानां विपरीतं बलाबलं इति न्यायः। के. * लिङ्गस्य निरवकाशत्वात् आनर्थक्यप्रतिघात-न्यायेन तस्य प्राबल्यम्। (लिङ्गप्राप्त उच्चैस्त्वं, वचनप्राप्तं उपांशुत्वम्)। सोम. ३।१।१३. * न केवलं तार्तीयप्रमाणमेव आनर्थक्यप्रतिघातेन बाध्यते, किंतु द्वैतीयकमपि। यथा अभ्युदितेष्टौ गुणेन कर्मभेदस्य प्रसक्तस्य 'सह अपगति' इति विध्यानर्थक्यात् बाधः। बाल पृ १८९, * बाधभेदाना आनर्थक्यप्रतिघाते विपरीतो बाधो भवति। तद्यथा 'व्रीहीनवहन्ति' इत्यत्र व्रीहिमात्रग्रहणात्प्राप्ति श्रुतिः प्रकरणेन बाध्यते। पृ. १४५.

सू. आनर्थक्यप्रतिहतानां विपरीतं बलाबलं इति न्याय.। साहस्री. ७४४ प्रबलेन प्रमाणेन दुर्बलस्य प्रामाण्यस्य सर्वथा बाधे प्राप्ते दुर्बलमपि प्रबलतरं भवति। आनर्थक्येन सर्वथा प्रतिहतानां प्रमाणानां बलाबलं विपरीतं भवति। यत् प्रबलं तद्दुर्बलं भवति, यद्दुर्बलं तत् प्रबलं भवति इति। के.

* 'आनर्थक्यप्रतिहताना' इति न्यायेन 'ऐन्द्रवायवं गृह्णाति' 'उद्भिदा यजेत' इत्यादिनाम्नां आख्यातपारतन्त्र्येऽपि भेदकत्वं। ■ पृ. ७१२

* 'आनर्थक्यप्रतिहतानां' इति न्यायेन निगदगतसंबोधनविभक्तिसामर्थ्यरूपलिङ्गस्यैव प्रबलतया तेन उपांशुत्वबाधो युज्यते । उपांशुत्ववचनस्य निगदभिन्नयजुरन्तरे सावकाशत्वात् । कु. २।१।१३।३९. * 'आनर्थक्यप्रतिहतानां' इति न्यायेन वाक्यवशवर्तित्वं फलितमस्ति ( शुक्लं पटमानय इत्यादौ ) श्रुतीनाम् । तत्र विशिष्टार्थप्रत्ययाय संनिहितविशेषश्रुतिवशात् सामान्यश्रुतेः संकोचः इत्युक्तं भवति । कल्पतरुः. १।१।२१। ५५ बस्. * 'आनर्थक्यप्रतिहतानां' इति न्यायेन वाक्यशेषानुगुण एवार्थः । ( त्रिवृत्-पञ्च-आश्वाल-ऐन्द्री-स्तोमग्रन्थेषु ) कु. १।३।५।८ पृ. ६६. * 'आनर्थक्यप्रतिहतानां' इति न्यायेन वाक्याधिकरणगतचोदनाप्रार्थदर्शनादिति सिद्धान्तसूत्रस्थभाष्योक्तेन वाक्यस्य अत्यन्तानर्थक्यप्रसक्तौ श्रुतेरपि अन्यस्मादन्यस्य कल्पना उचिता । सु. पृ. १५०१. * आनर्थक्यं वाक्यभेदादपि बलवत् अप्रामाण्यापत्तेः । अत एव श्रुत्यादीनामपि आनर्थक्यप्रतिहतानां विपरीतं बलाबलं इत्युक्तम् । बाल. पृ. ११४. * उपशमनीयत्वात् उपदेशानुरोधेन अतिदेशेन वर्तितव्यं इत्याशङ्क्य आनर्थक्य० इति न्यायेन अनन्यगतित्वात् अतिदेशोऽपि अत्र उपदेशात् बलीयान् इत्युक्तम् । सु. पृ. ८१४. * उपांशुत्वस्य यदि निरवकाशत्वं स्यात्, तदा आनर्थक्य० इति न्यायेन दुर्बलमपि उपांशुत्वं अनुष्ठेयं स्यात् । न चात्र निरवकाशत्वम् ( मन्त्रस्य प्रधानत्वात् परस्मैपदानकार्यात् मन्त्रस्याङ्गं उपांशुत्वं दुर्बलम् ) । सोम. २।१।१३. * कालान्तरभाविनमर्थमादायापि मन्त्रलिङ्गानि सावकाशानि भवितुमर्हन्ति । स्मृतीनां पुनः लिङ्गतो बाध्यमानानां न कश्चिदन्योऽवकाशः शक्यः कल्पयितुं इति 'आनर्थक्य-प्रतिहतं' इति न्यायेन सर्वेऽपि विधिमिदैव श्रौतान्यपि लिङ्गानि अर्थान्तरविषयतया व्याख्येयानि इति स्मृतिप्राबल्याङ्गीकरणमेव युक्तम् । सनातनधर्मप्रदीपे विवाहः पृ. २८३-८४. * ननु लिङ्गस्य आनर्थक्यात् आनर्थक्य० इति न्यायेन प्राबल्यं इति, अत आह । सोम ६।५।८. * मन्त्राणां भाविवस्तुसत्त्वबोधनेनापि चारितार्थ्येन अचरितार्थानामपि स्मृतीनामेव वा आनर्थक्य० इति न्यायेन न प्राबल्यं इति युक्तं तत्र संगतम् । प्रयोगसमवेतार्थस्मारकत्वेन खलु मन्त्राणां चारितार्थ्यं, न च संभवदर्थप्रकाशकत्वमात्रेण । सनातनधर्मप्रदीपे विवाहः पृ. २९२. * यत्तु श्रौतः पदार्थः न वाक्यानुरोधेन कुतश्चिद् विशेषात् अपवर्तितुमर्हतीति, सत्यमेवैतत् । यत्र केवलः पदार्थः प्रयुज्यमानः प्रयोजनाभावात् अनर्थकः सञ्जायते इत्यवगतं भवति, तत्र वाक्यार्थोऽपि तावदस्तु इति विशिष्टार्थता अवगम्यते, न सर्वत्र । भा. १।१।७।२५ । आनर्थक्य० इति न्यायेन दुर्बलवाक्यगम्योऽपि विशिष्टार्थरूपो वाक्यार्थः स्वीकार्य एव इत्यर्थः । वैद्यनाथी. * विधिस्तुत्योर्भिन्नविषयत्वे विध्यविषयस्य स्तुत्यानर्थक्यात् आनर्थक्य० इति न्यायेन वाक्यशेषस्य प्राबल्यम् । सोम. १।३।५ पृ. ३५. * 'स्नात्वा भार्यामधिगच्छेत्' इति वचनात् नोपनयनात् पूर्वं दारपरिग्रहः संभवति । न च उपनयनहोमस्य आहवनीयरूपपदार्थनिष्पत्त्यर्थं पदार्थगुणभूतकामत्वेन प्रागपि दारपरिग्रहः संभवति इति वाच्यम् । एवं च सति 'स्नात्वा भार्यामधिगच्छेत्' इति वचनं अप्रमाणमेव स्यात् । तस्मात् आनर्थक्य० इति न्यायेन अत्र कथमपि असंभवः । ६।८।२. * आनर्थक्य० इति न्यायात् अनन्यार्थसंनिधिः स्वानर्थक्यपरिहाराय श्रुतिसंकोचकः । यदि पदैकवाक्यतया संनिधिमात्रं संकोचकं भवेत्, तदानीं 'अश्वेन गच्छति श्वेतेन पटेन प्रावृतः' इत्यत्र पटसंबन्धनिराकाङ्क्षश्वेतशब्दसंनिधानेनापि अश्वश्रुतेः संकोचः स्यात् । पराक्रमः २६।१. * 'वैश्वदेवेन यजेत' इति वैश्वदेववाक्यस्य अगत्या विषमशिष्टविकल्पमङ्गीकृत्य प्रकृतकर्मगुणविधायकत्वमेव अभ्युपेयम् । आनर्थक्य० इति न्यायात् इति चेन्मैवम् । कु. १।४।११।१४. * यत्तु 'वार्हस्पत्यानि' इत्यत्र उपसंहारानुसारेण समुदायस्याऽऽश्रयणं, तत् आनर्थक्य० न्यायात् । तस्योपाऽनाश्रयणे हि न चैकं अपदिष्टलिङ्गकमन्त्रोपधेयेष्टकानुवृत्तीनां इष्टकासामान्यग्राहितेनस्य च सर्वथा बाधः स्यात् । ततो वर एकस्य गृहीतशब्दस्य त्यागः । पराक्रमः ८।१।१-२. * आनर्थक्यप्रतिहतानां श्रुत्यादीनां सर्वेषामेव दुर्बलैरपि बाध्यत्वमिष्यते, तद्यथा, श्रीसादीनां प्रोक्षणादिना श्री श्रुत्वा रोगिणं अभ्यु-

यदि अतिलङ्घ्य प्रकरणस्यापूर्वसाधनत्वकृतः संबन्धो भविष्यति । वा. ३।३।७।१४ पृ. ८९३. * आनर्थक्यप्रतिहतन्यायेन अनारभ्याधीतस्यापि आतिदेशिकबाधकत्वात् । कौ. १।४।३।३ पृ. १७६, * सतिनन्दैः सामान्यतो यागसंबन्धावगमेन आनर्थक्यप्रतिहतन्यायेन श्रुतभावनासंबन्धनिरोधार्थं यागवदेव फलसंबन्धकल्पनाऽऽपत्तेः अवश्यं विशिष्टविधिपक्षेऽपि आनर्थक्यनिराकरणार्थं स्वर्थलक्षणया यागसंबन्धोऽपि अङ्गीकर्तव्यः पूर्वपक्षे । १।७।२।२ पृ. १६५. * दर्शे शाखाऽऽहरण पलाशाकरण इत्यादयो दोहधर्माः समाम्नाताः । पूर्वाधिकरणे सोमे विशसनादिधर्माणामनन्वयात् प्रकरणे आनर्थक्यप्रतिहतम् । इह तु नास्ति आनर्थक्यप्रतिहतिः । ततः प्रकरणेन स्थानं बाधित्वा द्वयोर्दोहयोः ते धर्मा अभ्युपेयाः । वि. ३।६।८ * दुर्बलस्यापि प्रमाणस्य बाधे यदि किंचिदनर्थत्वं भवति, ततो विपरीतो बाधो योजयितव्यः । तदुक्तं ' व्रीहीन् प्रोक्षति ' इत्यत्र श्रुतिमुल्लङ्घ्य अपूर्वसाधनत्वग्रहणमिति । तथा ' दुर्बलस्य प्रमाणस्य त्वन्यथाभावो यदा । तदाऽपि विपरीतत्वं शिक्षाकोषे ( १।१।११९ ) यथोदितम् ॥ ' सर्वप्रमाणानामेव अर्थद्वारा परस्परविरोधो, न स्वरूपनिमित्तः । तत्र यदा पदार्थतद्धर्मविषये प्रमाणे विरुध्येते, तत्र यद्यपि प्रमाणतः अभ्यर्हिता बलवत्त्व, तथापि प्रमेयानुरोधेन तदाश्रयणात् स्वरूपदुर्बलेनापि बलवत् बाध्यमानं तदनुगुण्य प्रतिपद्यते । तदुक्तं आचमनादयः पदार्थाः, ( पदार्थधर्म·― ) तेषां क्रम. इति । तथा च लोके ' अत्यन्तबलवन्तोऽपि पौरजानपदा जनाः । दुर्बलैरपि बाध्यन्ते पुरुषैः पार्थिवाश्रितैः ॥ ' वा. ३।३।७।१४ पृ. ८४१. * ' वैराजस्य स्तोत्रायाग्नेयो गृह्यते ' इति मन्त्रेण वैराजस्तोत्रान्यदेवताकग्रहविधिः ' आग्नेयः ' इत्यस्य उपांश्वादिवत् नामधेयत्वेन देवतातद्धितवायोगात्, चतुर्थ्या आनर्थक्यप्रतिहतत्वाच्च इति प्राप्ते । संकर्षे. ३।३।६.

* आनुपूर्व्येण अपच्छेदे उत्तरापच्छेदनिमित्तप्रायश्चित्तानुष्ठानम् । वि. ६।५।१९

**आनुपूर्व्यवतामेकदेशग्रहणेष्वागमवदन्त्यलोपः स्यात् । १०।५।१।१ ॥**

अनन्यविचारस्य भूमिका तावदित्थम् । ' आग्नेयमष्टाकपालं निर्वपेत् ' इति समस्तकपालवचनम् । तदेकदेशवचनानि च द्यावापृथिव्यमेककपालं, आश्विनं द्विकपालं, वैष्णवं त्रिकपालं, वारुणं चतुष्कपालं, इत्यादि । तत्र सर्वेषां कपालानां अष्टाकपालः प्रकृतिः । एकद्व्यादिकपालानि विकृतयः । एवं सति अष्टाकपालगतस्य प्रथमस्य कपालस्य ये धर्माः, ते द्यावापृथिव्ये एककपाले भवन्ति । अष्टाकपालगतयोः आदिमयोर्द्वयोः ये धर्माः, ते आश्विने द्विकपाले भवन्ति । एवमुत्तरत्रापि । सोऽयं कपालन्यायः द्विरात्रादिषु अहीनेषु सामिधेनीषु च योज्यः । तत्र अहीनानां सत्राणां च द्वादशाहः प्रकृतिः । द्विरात्रः त्रिरात्रः चतूरात्रः इत्येवमादिर्विकृतिः । तत्रायं विशेषः, द्वादशाहस्य प्रथमं दशमं चाहो वर्जयित्वा अवशिष्टो यो दशाहः, सः द्विरात्रादीनां प्रकृतिः । तत्र पूर्वोक्तः कपालन्यायो योज्यः । अथ सामिधेनीषु पञ्चदशसामिधेन्यः प्रकृतिः । एका सामिधेनी, तिस्रः सामिधेन्यः इत्यादिर्विकृतिः इति ।

अथ सूत्रार्थः । आनुपूर्व्यं पूर्वपूर्वमनतिक्रम्य वर्तते अनुपूर्वम् । तस्य भावः आनुपूर्व्यं नाम क्रमः । आनुपूर्व्यवतां क्रमेण प्रवृत्तानां एकदेशग्रहणानि, तदर्थत्वनिर्दिष्टस्य द्वित्वनिर्दिष्टयोः त्रित्वविशिष्टानां इत्येवं यत्र एकदेशानां ग्रहणानि भवन्ति, तत्र आदिमस्य आदिमयोः आदिमानां वा ग्रहणं अन्त्यानां अन्त्ययोः अन्त्यस्य वा लोपः इति अन्त्यलोपः स्यात् । यथा वैष्णवे त्रिकपाले अष्टाकपालगतस्य आदिमस्य कपालत्रयस्यैव प्रथमतः उपस्थितिर्भवति इति तस्यैव ग्रहणं, अन्त्यानां पञ्चानां कपालानां तु लोपः । अन्यथा येषां विदेव यथाणां ग्रहणे प्रयोगे अव्यवस्था स्यात् । तस्मात् क्रमप्राप्तानां आदिमग्रहणं स्यात् । आगमवत् । आगच्छन्ति पश्चात् इति आगमाः आगन्तवः । यथा समासेषु समासेषु च ये आगन्तवो भवन्ति, ते पूर्वोक्तविधीन् अनुसृत्यैव निविशन्ते, एवमिहापि द्रष्टव्यम् ।

**लिङ्गदर्शनाच ॥**

क्रमवता एकदेशग्रहणे आद्योपादानं अन्त्यलोपश्च लिङ्गस्य दर्शनात् । 'लुप्येत वा एतत् षडहः, यत् पश्चाद्धानुपयन्ति ' ' लुप्येत वा एतत् पञ्च कपालं, यत् पञ्च कपालान् निर्वपन्ति ' इति लिङ्गं षष्ठस्य लोपं दर्शयति न प्रथमस्य । तस्मात् क्रमवतामेकदेशग्रहणे अन्त्यलोपः । चकारो हेत्वन्तरसमुच्चयार्थः ।

**विकल्पो वा , समत्वात् । ३ ॥**

क्रमवतां एकदेशग्रहणे अन्त्यलोपे आद्यलोपे वा विकल्पः स्यात् उभयोः समत्वात् । नहि तत्र कश्चित् विशेषः । इति पूर्वः पक्षः ।

**क्रमादुपजनोऽन्ते स्यात् । ४ ॥**

यदुक्तं सिद्धान्तिना सत्रेषु आगन्तवो जनाः पूर्वोपविष्टाननुपमृद्यैव निविशन्ते इति, तत्र । यतः, उपजनः आगन्तुकः अन्ते भवति इति सत्यं , परन्तु सः क्रमात् इतरैः आदिमस्थानानामाक्रमणात् अन्ते रिक्ते स्थाने भवति । आदिमे स्थाने रिक्ते लब्धे तु तत्रापि स निविशेत । तस्मात् क्रमवता एकदेशग्रहणे अन्त्ये आद्ये वेति विकल्प एव युक्तः इति पूर्वपक्षी ।

**लिङ्गमविशिष्टं, संख्याया हि तद्वचनम् । ५ ॥**

यच्च सिद्धान्तिना लिङ्गमुक्तं ' लुप्येत वा एतत् षडहः यत् पश्चाद्धानुपयन्ति ' इति षष्ठस्य लोपं दर्शयति न प्रथमस्येति, तत् अविशिष्टं आद्यान्त्यलोपविकल्पेऽपि । हि यस्मात् तत् संख्यायाः वचनं पूरणवचनम् । यस्मिन् कस्मिंश्चिदहन्यलोपेऽपि येन प्रथमेन मध्यमेन अन्त्येन वा संख्या पूर्यते तत् षष्ठम् । तस्मात् क्रमवता एकदेशग्रहणे अन्त्यग्रहणे आद्यग्रहणे वा विकल्पो युक्तः इति पूर्वपक्षी ।

**आदितो वा प्रवृत्तिः स्यादारम्भस्य तदादित्वाद्, वचनादन्त्यविधिः स्यात् । ६ ॥**

पूर्वपक्षं व्यावर्तयितुं वाशब्दः । तादृशस्थले आदितः आरभ्य प्रवृत्तिः स्यात् , न तु द्वितीयादिकं यं कं चिदारभ्य । आरम्भस्य तदादित्वात् । सः आदिमः पदार्थः आदिर्यस्य आरम्भस्य , स तदादिः । आरम्भस्य तदादित्वात् आदित एव प्रवृत्तिः स्यात् । क्वचित् वचनात् वचनबलात् अन्त्यस्यापि विधिः स्यात् । यथा ' अपवर्हिषः प्रयाजान् यजति ' ' अपवर्हिषौ अनुयाजौ यजति ' इति । विना वचनं तु आदित आरभ्यैव प्रवृत्तिः अन्त्यलोपश्च न्याय्यः । विकल्पस्तु अनेकदोषदुष्टः अव्यवस्थाकरश्च । तस्मात् व्यवस्थासिद्ध्यर्थं आदितो ग्रहणं अन्ततो लोप इत्येव स्वीकर्तुं युक्तम् । इति सिद्धान्तः । के.

• आनुषङ्गवचनस्पतियागयोर्निगमेषु विधिगतौषधवनस्पतिशब्दाभ्यामेव द्रव्यदेवतयोरभिधानं ज्योतिष्टोमे । भा. १०।४।१६।३२-३३.

• आनुमानिकं तुल्यकारणेन हि प्रत्यक्षश्रुतेन बाध्यते । भा. १०।७।११।२७, • आनुमानिकं प्रत्यक्षश्रुतात् दुर्बलम् । ६।१।७।२७. • आनुमानिकी श्रुतिः लिङ्गं च प्रत्यक्षं यत्र, तत्र कथं ? तत्र स्मृतेर्मूलान्तरमपि संभाव्यते , न तु लिङ्गस्य , इति तदेव बलवत् इत्यनुसर्तव्यम् । वा. १।३।७।१४ पृ. ८४१. • आनुमानिका अनुमानाः सामान्यामिक्षौ सत्यश्रुतेरामनहोमैर्न निवर्त्येरन् किंतु समुच्चीयेरन् । भा. ४।४।४।७. • आनुमानिकैः श्रुत्यादिभिः आनुमानिकानां तेषां बाधः, यथा पशौ अनुमेयैः प्रयाजादिविनियोजकैः श्रुत्यादिभिः पशुपुरोडाशे तद्विनियोजकानां आनुमानिकानां श्रुत्यादीनाम् । बाल. पृ. १४६. • आनुमानिकाग्निहोत्रकात् नाम प्रत्यक्षश्रुतत्वात्, तेन गवामयनगतज्योतिःषु एकाहज्योतिरादिधर्माणां नाम्ना अतिदेशः । वि. ७।८।३. • आनुमानिकानां श्रुत्यादीनां प्रत्यक्षैः लिङ्गादिभिर्बाधः, यथा कृष्णलेषु सामर्थ्येन 'व्रीहीनवहन्ति' इत्यतिदेशानुमितश्रुतेः । बाल पृ. १४६, • आनुमानिकानां श्रुत्यादीनां प्रत्यक्षैः श्रुत्यादिभिर्बाधः, यथा श्येनादौ 'शरमयं बर्हिः' इति प्रत्यक्षश्रुत्या ' बर्हिषि हवींष्यासादयति ' इत्यानुमानिकश्रुतेः ( कुशनिषाविकायाः ) । पृ. १४६. • आनुमानिकवचनातिदेशोऽपि अर्थवादातिदेशसिद्धि. । भा. ७।१।१.
• आनुमानिकवचनातिदेशविषयकं अतिदेशकाण्डे सप्तमषष्ठके प्रकरणम् । बाल. पृ. ११०-११९.

* ( आन्धीगवं श्यावाश्वं च साम ज्योतिष्टोमे आर्भवे पवमाने । ' पुरोजिती वो अन्धसः ' इत्यनुष्टुप् , ' यो धारया पावकया ' ' तं दुरोषमभी नरः ' इति द्वे गायत्र्यौ ( साम. ३९७–३९९ ) एतासु तिसृषु अनुष्टुप्कारं प्रग्रथनेन जाते आनुष्टुभे तृचे गेयम् । अनुष्टुभं कृत्वा अनुष्टुप्कारम् । णमुल् । तत्र गायत्र्योः प्रत्येकं तृतीये चरणे द्विरावृत्त्या गीते द्वे अनुष्टुभौ भवतः । प्रथमा तु उत्पत्तित एव अनुष्टुप् । इति आनुष्टुभस्तृचः सम्पद्यते । के. ) भा. ९।२।६।२५–२८ वर्णक ३.

* आन्ध्राः प्रयोगार. जनपदपुरपरिरक्षणवृत्तिं अनुपजीवत्यपि क्षत्रिये राजशब्दं प्रयुञ्जते । भा. २।१।२।३ पृ. ५८०. * आन्ध्रद्रविडादय. अभिषिक्ते क्षत्रियान्यजातीयेऽपि राजशब्दप्रयोगमभ्युपगच्छन्ति । सु. पृ. ९०४.

* ' आन्यभाव्यं तु कालशब्दव्यवायात् ' ( पा० वा १।१।२ पृ. ४४ ) इति उच्चारणभेदे शब्दभेदस्मृतिः । सु पृ. ९५१. ( अत्र कैयटः— अकारस्य भेदं साधयति–आन्यभाव्यमिति । अन्यस्य भावः अन्यभावः । ततो ब्राह्मणादिषु ( पा० ५।१।१२४ ) स्वार्थे विधानार्थात् पाठात् स्वार्थे ष्यञ् । अथवा अन्यो भावः अन्यत् वस्तु , तस्य भाव इति भावे ष्यञ् । इह कालशब्दाभ्यां व्यवधानं भिन्नानां दृष्टं यथा असंहितायां अ इ उ इत्यादीनां कालव्यवायः । दधि इत्यादौ शब्दव्यवायः, तत्र दकारेण अकार–इकारयोः व्यवधानात् । इति ) ।

* ' आपो वै शान्ताः ' इत्यादौ यत्र न किंचिदपि पदं स्तावकं निन्दकं चोपलभ्यते तत्रापि ' वेतसशाखयाऽवकाभिश्चाग्निं विकर्षति ' इति विधिसंनिधिवशेन लक्षणया तद्विधेयवेतसावकास्तुतिप्रतीतेः लक्षितलक्षणया वा निकर्षणस्तुतिप्रतीतेः विध्येकवाक्यत्वात् तात्पर्यनिर्णयः । सु. पृ. ३९.

* आपदि जीवन नैयमिकस्य रथकर्मेष्या इति केचित् । भा. ६।१।१२।४८.

* आपद्यपि सतीवृत्तं किं मुञ्चन्ति कुलस्त्रियः इति न्याय । ( न मुञ्चन्ति ) अयं पतिव्रतासतीत्वरक्षणविषये प्रवर्तते इति । माहली. ९४१.

* 'आपद्धर्मा यथैवान्ये मुख्यासंभवहेतुकाः ।' ' तथा च मनुनाऽप्युक्तं आपद्धर्मगतं प्रति । तत्रस्थापद्दोषाणामन्ते शौचं भविष्यति ॥ कर्मणा येन केनेह मृदुना दारुणेन वा । उद्धरेद्दीनमात्मानं समर्थो धर्ममाचरेत् ॥ ' इति । ' धर्मश्च प्रथमं यावत् प्रायश्चित्तात्मको भवेत् । ततस्तेन विशुद्धस्य कृत्स्नोऽन्यो भविष्यति ॥ ' वा. १।३।२।८ पृ. १९०–१९१.

* आपराह्णिकानां होमानां वरुणप्रघासेषु विहारभेदेनावृत्तिः । ( आपराह्णिका होमा नाम पत्नीसंयाजाः ) भा. १०।२।११।४९–५०.

* आपस्तम्बकल्पसूत्रं पौरुषेयमेव । वेदमूलत्वात्तु प्रमाणम् । वि. १।३।७. * आपस्तम्बीयबौधायनीये धर्मशास्त्रे तैत्तिरीयैरेव प्रतिपन्ने । वा. १।३।७ १५ पृ. २७४.

* आपाटलिकाभिरुपगायन्ति पत्नयः गवामयने महाव्रते । ( आपाटलिकाः वाद्यविशेषः ) भा. १०।४।५।८.

* आपूर्विकं तन्त्रं दर्विहोमेषु । भा. ८।४।४। १०–१८.

* आप्तत्वं प्रतारणाद्यसम्भवितानिष्टोपदेशकर्तृत्वे सति तद्विशेषोपदेशकर्तृत्वम् । रहस्य. पृ. १४.

* आप्तवाक्यस्यापि स्तुत्यादर्थस्य स्वरूपार्थे प्रामाण्यादर्शनात् तात्पर्यशून्यार्थे प्रामाण्यायोगः । सु. पृ. १४१८.

* आप्तविगीतस्मृत्या अनाप्तविगीतस्मृतिर्बाध्यते । वा. १।३।७।१४ पृ. ८६०.

* आप्यायनं ध्रुवायाः वचनमन्तरा नोपपद्यते । संकर्ष. २।४।७.

* आभाणकः— ' सोऽयमाभाणको लोके यदश्वेन हृतं पुरा । तत् पश्चात् गर्दभः प्राप्तुं केनोपायेन शक्नुयात् ॥ ' वा. १।३।७।१४ पृ. ७१२.

अतिदिशेत् । नैतत् कर्मफलं भवति सकृदुच्चरितम् । तस्मादपि आरम्भणीयाया आरम्भणीया नास्ति ।

सोम— इह स्वार्थतया पृथगारम्भसम्भवात् कर्तव्या इत्युत्थितेः संगतिः । सूत्रार्थस्तु तस्यामारम्भणीयायां सा स्यात् प्रयाजादिवत् इति ।

वि— ' तस्यां साऽस्ति न वा, ऽङ्गत्वे-ऽप्यस्याः पृथगुपक्रमात् । अस्ति, मैवं यचोऽशक्ते-र्विधाने चातिदेशने ॥ '

भाट्ट— अन्वारम्भणीयायां सत्यपि दर्शपूर्णमास-प्रयोगबहिर्भावे नैव अन्या अन्वारम्भणीया कार्या । ' अन्वारम्भणीयेष्ट्या यक्ष्ये ' इति संकल्पस्य ' साङ्गौ दर्शपूर्णमासौ मे जायेताम् ' इत्याकारकेच्छाजन्यप्रवृत्त्या-ऽपि उपचितत्वेन अन्वारम्भणीयात्वावच्छिन्नोद्देश्य-ताकप्रवृत्तिविषयत्वाभावात् । अत एव वैमृधे चातु-र्मास्याद्यङ्गभूतवैश्वानरपार्जन्याधिकारपरत्वात् पवमानेष्टि-ष्वपि च नान्वारम्भणीया । अन्वारम्भणीयाया तु तृती-योक्तपवमानेष्टिन्यायेनापि नान्वारम्भणीया । एवं वैमृधे-ऽपि न वैमृधः ।

मण्डन— ' स्वारम्भकाले न च ता प्रकुर्यात् । ' स्वं आरम्भणीया । ६.

शंकर— ' आरम्भेष्टिर्न चात्मनि । ' आत्मनि आरम्भणीयायाम् । ६.

[?] आरम्भणीयान्यायः (द्वितीयः)। दर्शपूर्णमासा-वृत्तावपि आरम्भणीयाया आदौ सकृदेवानुष्ठानं, न तु प्रत्यावृत्ति ॥

इष्ट्यावृत्तौ प्रयाजवदावर्तेतारम्भणीया । ९।११२।१।३४ ॥

भाष्य— स्तो दर्शपूर्णमासौ ' दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत ' इति । तत्र आरम्भणीयेष्टिः समाम्नाता ' आग्नावैष्णवमेकादशकपालं निर्वपेत्, सरस्वत्यै चरुं, सरस्वते द्वादशकपालं, अग्नये भगिनेऽष्टाकपालं निर्वपेद्यः कामयेतान्नादः स्यामिति, नित्यवदेके भगिनमामनन्ति ' ( इति )। आवृत्तिश्च दर्शपूर्णमासयोः श्रूयते ' याव-ज्जीवं दर्शपूर्णमासाभ्यां यजेत ' इति । तत्र इष्ट्यावृत्तौ संदेहः किं आरम्भणीयाऽपि आवर्तेत, नेति । किं प्राप्तं ? आवर्तेत इति । असकृदेव कर्तव्येति । कुत ? एवं प्रयोगवचनेन अनुगृहीतो भविष्यति । प्रयाजवत् । यथा अङ्गभूताः प्रयाजा आवर्तन्ते एवं अङ्गभूता आरम्भणीयाऽपि आवर्तेत ।

टुप्— ' अपि वाऽप्येकदेशे स्यात् ' ( ६।३।१।२ ) इति ( सर्वशक्त्यधिकरणे ) यावज्जीविकेऽपि प्रयोगे इतिकर्तव्यता भवतीत्युक्तम् । तत्र प्रथम-पदार्थद्वारेण श्रूयमाणा ( दर्शपूर्णमासयोः ) अङ्गं आर-म्भणीया ( इत्यसंदिग्धम् । भा— ) किं प्रतिप्रयोगं कर्तव्या, उत सर्वप्रयोगाणां सकृत् ( इति चिन्त्यते )। किं ( तावत् ) युक्तं ? प्रतिप्रयोगं कर्तव्या ( इति )। कुतः ? इतिकर्तव्यता प्रयोगाङ्गम् । प्रयोगस्य ( च ) भेदः ( आवृत्तिः )। तस्मात् ( प्रयोगावृत्तौ आरम्भणीयाऽपि ) आवर्तेत ।

सकृद्वाऽऽरम्भसंयोगादेकः पुनरारम्भो याव-ज्जीवप्रयोगात् । ३५ ॥

भाष्यं— वाशब्दः पक्षं व्यावर्तयति । नैतदस्ति, यदुक्तं ' आरम्भणीया आवर्तेत ' इति । सकृदेव कर्तव्या । कुतः ? आरम्भसंयोगात् दर्शपूर्णमासयोः आरम्भेण संयुज्यते । साधारणश्च सर्वेषां प्रयोगाणा-मारम्भः । कथं ? अग्नीनाधाय सर्वं संकल्पयति, पर्वणि-पर्वणि मया दर्शपूर्णमासौ कर्तव्यौ इति । एवं चाध्य-वसाय दर्शपूर्णमासौ कर्तव्यौ इति आरम्भणीया क्रियते । एष एवास्य आरम्भो यदध्यवसानं नाम । तच्च साधा-रणं सर्वेषां प्रयोगाणां यावज्जीवप्रयोगात् । यद्यपि प्रथमं प्रवर्तनं आरम्भः, तथापि प्रथमप्रवृत्तेन सर्वे प्रयोगाः कृता भवन्ति । तस्मात् सकृत् आरम्भणीया कर्तव्येति ।

टुप्— सकृत् वा कर्तव्या । कुतः ? आधानं कृत्वा सर्वं संकल्पयति ' मया यावज्जीवं दर्शपूर्णमासौ कर्तव्यौ आगतेआगते काले ' ( इति ) स च ( संकल्पः ) सर्वेषां प्रयोगाणां अग्न्याधानविशेषणत्वात् साधारणः । संकल्पश्च पूर्वा ( औदासीन्यरूपां ) अवस्थां बाधमानः अध्यवसान ( ' इदमहं कुर्वे ' इति प्रवृत्तिः ) भवति । अध्यवसानं च पदार्थः ( आरम्भशब्दार्थः ) । तच्च सर्वेषां साधारणं इत्युक्तम् । तस्मात् सकृत् ( कर्तव्या ।

पश्चात्तर निगदव्याख्यातेन भाष्येण दर्शयति– ) अत्र ( भाष्य– ) अथ ' अथापि प्रथमं प्रवर्तनं ( अन्वाधानं ) आरम्भः, तथापि प्रथमप्रवृत्तेन ( इति भाष्यमूले पाठः । आरम्भणीयाप्रवृत्तेन इति टुप्–टीकयोर्भाष्यपाठः ) सर्वे प्रयोगाः कृता भवन्ति ' इति ।

( भाष्यकारेण पुनर्व्याख्यानान्तरं कृतं पूर्वव्याख्यानदोषात् । तमपरितोषं दर्शयन् वार्तिककारः पूर्वव्याख्यानं दूषयति– ) नैतद्युक्तम् । कामो नाम निमित्तं ( कर्मणः, तेन ) स कर्म प्रयोजयति । प्राक् पौर्णमासीयागात् कर्म न प्रयुज्यते, निमित्ताभावात् । तद् ( न निमित्तं ) एकं ( एव ) प्रयोगं प्रयोजयति ( न प्रयोगान्तरम् ) । पुरुषश्च पूर्वावस्थः ( औदासीन्य ) इच्छया तत एव ( निमित्तात् ) संकल्पमध्यवसानं वा करोति । तथा ( अध्यवसानादि ) एकस्य ( एव प्रयोगस्य ) न द्वितीयादेः ( निमित्ताभावात् ) । अपि च इतिकर्तव्यता प्रयोगेण प्रयुज्यते, न कर्मणा ( कर्मस्वरूपेण ) । प्रयोगभेदाच्च भेदः ( इतिकर्तव्यतायाः ) । यदि च कर्मणा प्रयुज्येत, तथा सति प्रयाजानामपि कर्मैकत्वात् सकृदेव प्रयोगः स्यात् । न चैतदिष्टम् । यदुक्तं आधानं कृत्वा सर्वान् संकल्पयति, पर्वणि पर्वणि मया दर्शपूर्णमासौ कर्तव्यौ ( इति ) । स च ( संकल्पः ) सर्वप्रयोगाणां मध्यमाणविशेषणात् इति । अत्रोच्यते । सर्वप्रयोगाणां संकल्प एव न प्राप्नोति, निमित्ताभावादित्युक्तम् । ( ननु आधानानन्तरं सर्वसाधारणः संकल्पो भवन् नाप होत् दृश्यते, अत आह– ) विद्वांश्च अधिक्रियते । [illegible] च जानाति ' नित्यानि मया कर्तव्यानि, काम्यानि च फलार्थिना ( यदि फलार्थी भविष्यामि ' इति ज्ञानमात्रं तदा भवति, न तु तदैव संकल्पयति ) । योऽसौ अस्य पुरुषस्य आधानानुष्ठानकाले संकल्पः ( इति चोद्यते ) स संकल्प एव, न ( परमार्थतः ) प्रयोगाङ्गम् । तस्मात् दुष्टमेतत् ( व्याख्यानम् ) । अतः ( भाष्यकारेण व्याख्यानं ) अन्यत् क्रियते ।

( अन्यत् व्याख्यानमाह– )

**इष्ट्यावृत्तौ प्रयाजवदावर्तेतारम्भणीया । ५।१।११।३४ वर्णक २ ॥**

( एवं श्रुतिविरोधित्वेन अधिकरणं व्याख्याय तत्रापि दोषात् व्याख्यानान्तरं क्रियते । शा )

**भाष्य**—एवं वा । यस्तु प्रथमं पदार्थं आरभते, तमेव प्रश्नः किं दर्शपूर्णमासयोः आरभ्यमाणयोः आरम्भणीया प्रथमं पदार्थं सम्पाद्य करोति, उत पुरुषस्य आरभमाणस्य प्रथमं दर्शपूर्णमासयोः प्रवर्तमानस्य आरम्भणीया कर्तारं आरम्भणयोग्यं करोति । किं प्राप्तं ? दर्शपूर्णमासयोः प्रकरणात् तयोः आरम्भे स्यात् । पुरुषसम्बन्धे फलं कल्पयितव्यम् । तस्माद्दर्शपूर्णमासारम्भे । एवं चेत् आरम्भभेदात् इष्ट्यावृत्तौ प्रत्यारम्भं स्यात् । यथा प्रयोगावृत्तौ प्रयाजाः ।

टुप्— ' दर्शपूर्णमासावारप्स्यमानः ' इति शानच् कर्तारमभिधत्ते, तत्र संशयः किमारम्भशब्दः दर्शपूर्णमासाख्यं पदार्थं ( अन्वयप्राधान्यात् ) अभिधत्ते, उत ( दर्शपूर्णमासयोः ) अप्रवृत्तस्य ( पुरुषस्य ) प्रवर्तनं ( आरम्भशब्दोऽभिधत्ते इति । तत्र ) पूर्वपक्षवादी मन्यते, यद्यपि अत्र ( शानच् ) कर्तारमभिदध्यात्, तथापि फलकल्पनाभयात् आरम्भणीया न पुरुषार्था, किंतु क्रत्वर्था । ( पुरुषार्थत्वे हि फलं कल्पयितव्यं स्यात् ) क्रत्वर्था चेत् प्रतिप्रयोगमावर्तेत ( इति ) ।

**सकृद् वाऽऽरम्भसंयोगादेकः पुनरारम्भो यावज्जीवप्रयोगात् । ३५ ॥**

भाष्य— सकृत् वा भवितुमर्हति । कुतः ? पुरुषारम्भसंयोगात् । पुरुषे दर्शपूर्णमासौ आरभमाणे विधीयते । कुतः ? निर्वपेत् इति हि श्रुत्या कर्तृसम्बन्धः क्रियते । तत्र पुरुषप्रथमवचनं विवक्षितत्वात् अर्थवत् भवति । इतरथा प्रधानमात्रे विधित्सिते कर्तुः प्रथमवचनमविवक्षितं स्यात् । प्रयोगवचनसामर्थ्यात् अनूद्यते । यत्तु कर्तृसम्बन्धे फलं कल्पयितव्यं, तत् कल्पयिष्यते । कृतारम्भणीयाकः पुरुषः प्रयोगवचनेन ग्रहीष्यते । एवं चेत् एकस्मिन्नेवारम्भे कृतारम्भणीयाके कृते पुरुषे सम्प्रयोगात् यावज्जीवं प्रयोगे कृतारम्भणीयाकः पुरुषो भवति । प्रथमं दर्शपूर्णमासौ आरभमाणः कृतारम्भणीयाको जातः । द्वितीयादिष्वपि प्रयोगेषु दर्शपूर्णमासौ आरप्स्यमानः कृतारम्भणीयाको जात इति योग्य एव भविष्यति ।

अथोच्यते, समानेऽहनि आरभ्यमान इति भवति। न च द्वितीयादिषु प्रयोगेषु समानेऽहनि कृतारम्भणीयाक आसौ इति। अत्रोच्यते। द्वितीयादिष्वपि प्रयोगेषु समाने एकाहनि दर्शपूर्णमासौ आरभ्यमान असौ कृतारम्भणीयाको जात इति योग्य एव भविष्यति ( तस्मात् सकृदेव आरम्भणीया )।

टुप्-- सिद्धान्तम्नु- दर्शपूर्णमासारम्भयोग्य पुरुष कुर्वती ( आरम्भणीया ) कर्तुना शक्यते। अपि च य ( आरभ्यमान इति ) शानचा पुरुष उपात्त, तस्य निर्वपेदाग्नावैष्णव ( निर्वपेत् ) इत्यनेन आरम्भणीया भूत्वा ( शानचा ) प्रतिपाद्यते। इतरथा ( यदि प्रत्येकं पुरुषार्था आरम्भणीया) शानच् अनर्थक स्यात्। ( कथं ? ) निर्वपेत् इति उच्चारितेऽपि आरम्भणीया क्रत्वर्था भव नैव। (कथमित्याह-) महाप्रयोगवचने (दर्शपूर्णमासाभ्या यजेत इत्यत्र ) यो भाववचन, तेन विधान ( ग्रहण ) भविष्यति ( प्रकरणात्। प्रकृते क्रियावात नदाह- ) सा च यदि ( प्रयोगात् ) क्रियमाणा पुरुषमारम्भयोग्य करोति। तस्य च ( आरम्भस्य ) एकत्वात् न शक्यते अस्याप ( पुरुष ) प्रयोगस्य योग्य, अस्य नेति अगृह्यमाणविशेषत्वात् सर्वप्रयोगाणाम्। यदि च ( दर्शपूर्णमास- ) तन्मध्ये क्रियेत, तथा सति यस्य ( प्रयोगस्य ) त न, तस्यैव योग्य करोति, नान्यस्य इति ( गम्येत विशेष, न चैवमस्ति। अगृह्यमाणविशेषत्वात्तु सकृत् कृतैव सर्वानुपकरोति इति नावर्तनीया )। ननु लट् समानेऽहनि उपपद्यमानत्वात् यस्यैव ( प्रयोगस्य ) समानेऽहनि आरम्भणीया क्रियेत, तस्यैव पुरुष योग्य करोति इति गम्यते विशेष। उच्यते। तत्र भाष्यकारस्यायत इव चोद्य 'द्वितीयादिष्वपि प्रयोगेषु समाने एकाहनि दर्शपूर्णमासावारभ्यमाणोऽसौ कृतारम्भणीयाको जात, इति योग्य एव भविष्यति' इत्यनेन ग्रन्थेन निराकरोति। वय तु अन्यथा निराकुर्मः। समानेऽहनि चोद्यते इत्येतत् न शक्यते। भविष्यत्कालसामान्ये अय ( लट् ) उत्पद्यते। ननु लुटा अनद्यतनभविष्यत्काले बाध्यते अय बाध्यते। ( अत अद्यतने एव भविष्यति )। उच्यते। नैतत् युक्तम्। यदि तु लुट् अनद्यतने विधीयमान लट अबाधमाना आत्मान न लभेत, ततो बाधेतापि। अयमबाधमानोऽपि लभते एव ( आत्मानम् ) तस्मान्न बाधते। तस्मात् लट् अनद्यतने अद्यतने च, लुट्प्रत्ययस्तु अनद्यतने एव। ( यदि च अद्यतने एव लट् स्यात्, तदा भविष्यच्छब्दोऽपि लडन्तत्वात् अद्यतने एव प्रयुज्येत, तत 'भविष्यति अनद्यतने' इति सामानाधिकरण्य न स्यात् ) न च 'सोमेन यक्ष्यमाणोऽग्नीनादधीत' इत्यनेन एतत् तुल्य, तत्र आधान कृत्वा सोमेन अयैव ( क्रतुमि ) यक्ष्यते, ( तत्र ) 'सोमेन यक्ष्यमाणोऽग्नीनादधीत' इति यदि एतत् ( वाक्य ) आनन्तर्यं न कुर्यात्, ततोऽनर्थकमेव स्यात्। तस्मादनेन आनन्तर्यं विधीयते। यद्यपि लृट् सामान्येनोपात्त, तथापि सोमाधानानन्तर्यसामर्थ्यात् ( लक्षणया ) अद्यतने कल्प्यते प्रमाणान्तरवशात्। इह तु नास्ति प्रमाण येन अद्यतने कल्प्येत। तस्मात् सामान्येनोपपद्यते। ( तेन समाने अहनि इत्यत्र प्रमाणाभावात् यदि प्रयोग क्रियमाणा आरम्भणीया सकृदनैव अगृह्यमाणविशेषत्वात् सर्वप्रयोगाणामुपकरिष्यति इति नावर्तयितव्या। अनावृत्त्या अन्यथा वक्तव्यमिति मत्वा आह- ) अथवा दर्शपूर्णमासौ ( आरम्भणीयाया ) निमित्तभूतौ श्रूयेते आरम्भसंयुक्तौ। तत्र ( अङ्गित्वात् ) समानेऽहनि दर्शपूर्णमासौ आरम्भणीयासंयुक्तौ कर्तव्यौ ( प्रारब्धव्यौ ) एव ( आरम्भद्वारेण ) आरम्भणीया प्रथम प्रयोग अपेक्षते द्वितीयश्चेरम्। तत्र नहि ( प्रयोगात् ) क्रियमाणाया योऽसौ ( दर्शपूर्णमास- ) आरम्भानन्तरकाल ( यस्मिन् आरम्भणीया कृता ), स सर्वेषु ( प्रयोगेषु ) विद्यते। ( कथमित्याह-) किं ( दर्शपूर्णमासौ ) आरभमाणेन आरम्भणीया अद्यतने न कृता, येन पुन क्रियेत। न च प्रयोग अद्यतनेन व्यपदिष्ट, दर्शपूर्णमासशब्दश्रवणात् ( दर्शपूर्णमासारम्भाङ्गतया हि इय श्रूयते, न प्रयोगारम्भाङ्गतया )। तस्मात् ( आरम्भैकत्वात् तद्द्वारेण सकृत् कृतैव सर्वप्रयोगानुपकरिष्यति इति ) सकृत् कर्तव्या। एवं च साम्ये नो कश्चित्, प्रयोगमात्रभेदात् ( कर्मणो भेदाभावात् )।

शा—'आवृत्तौ हि प्रधानानामङ्गावृत्तिरसंशया। दर्शाद्यङ्गमियं तस्मादावर्तेत प्रयाजवत् ॥' उच्यते। 'आरम्भद्वारकं स्वेवदङ्गं साधारणश्च सः। तस्य साधारणत्वेन साऽपि साधारणी भवेत् ॥'

द्वितीये वर्णके तु—'पुरुषार्थत्वपक्षेऽपि फलवत्त्वभिः प्रसज्यते। तेनान्वाधानभेदः स्यात् स ह्यारम्भोऽस्य योर्थतः ॥ तस्यावृत्तौ तदङ्गत्वादेषाऽप्यावृत्तिमश्नुते। प्रधानवद्यावर्तित्वादेवं प्राप्तेऽभिधीयते ॥ न ह्यस्यारम्भशब्देन पदार्थः कश्चिदुच्यते। यदेव ह्यप्रवृत्तस्य कर्तुराद्यं प्रवर्तनम् ॥ तत्रायं वर्तते शब्दस्तद्योगात्तु पदार्थधीः। आरप्स्यमानशब्दस्तत्कर्तुः श्रुत्यैव वाचकः। लृट्प्रत्ययोऽपि श्रुत्यैव तदर्थस्याभिधायकः। आद्या प्रवृत्तिरेकैव, बहुधा नैकस्य कर्मणः ॥' तस्मादारम्भणीया नावर्तते।

सोम—आरम्भप्रसङ्गात् चिन्ता इति सङ्गतिः। 'दर्शपूर्णमासावारप्स्ये, ताभ्यां वार्त्रघ्नीं यक्ष्ये' इति याज्ञिकोक्तः संकल्पो न न्यायमूलकः।

वि—वृत्तिकारमते 'प्रतिप्रयोगमारम्भणीयास्ति न वाऽन्यथा। अङ्गत्वेन, न तद्धर्मो आधानवद् भवेत् ॥' भाष्यमते 'अन्वाधानाद्यमारम्भो यद्वा पुरुषसङ्गतिः। फलवत्त्वादादिमो, ऽन्त्ये पुंयोगस्य पृथक् फलम् ॥'

भाट्ट—दर्शपूर्णमासयोः 'दर्शपूर्णमासावारप्स्यमानोऽन्वारम्भणीयामिष्टिं निर्वपेत्' इति श्रुतम्। तत्र न तावदियं प्रकरणात् प्रयाजादिवत् साक्षात् तदर्था, 'दर्शपूर्णमासावारप्स्यमानः' इति पदद्वयवैयर्थ्यापत्तेः। नापि वक्ष्यमाणे आरम्भे निमित्ते भेदनहोमादिवत् नैमित्तिकी, नित्याऽर्थायाः क्रियाया उपपदे विहितेन लृट्प्रत्ययेन अस्या आरम्भार्थत्वप्रतीतेः इति तावदविवादम्। आरम्भशब्दार्थश्च उद्देश्यकोटिप्रविष्टः कः इति चिन्त्यते। प्रतिप्रयोगम् आवृत्त्यनावृत्ती तु सूत्रकाराद्युक्ते अपि फल, इति न इह अधिकरणशरीरं, एकादशोपयुक्तत्वेन ऊहानुपयुक्तत्वात्। तत्र अग्न्यन्वाधानादिरूपे प्रथमपदार्थे याज्ञिकानां दर्शपूर्णमासारम्भत्वप्रसिद्धेः आग्न्यन्वाधानमेव तत्त्वेन आरम्भपदार्थः। तदर्था च अन्वारम्भणीया तत्कार्यप्रयुक्ता, न तु प्रथमपदार्थत्वेन रूपेण प्रथमपदार्थाङ्गं, येन पूर्ववत् अग्न्यन्वाधानरहितायां विकृतौ आरम्भाङ्गतया ऊह्येत। न च अन्वाधानस्यापि अप्रवृत्तप्रवर्तनविषयत्वेनैव आरम्भपदवाच्यता, न अन्वाधानत्वेन, इति कथं न पूर्वाधिकरणविषयत्व इति वाच्यम्। अन्वाधाने दर्शपूर्णमासविषयकाप्रवृत्तप्रवर्तनविषयत्वस्य बाधितत्वात्। तथाहि, दर्शपूर्णमास विषयकप्रवृत्तिसामान्याभावतः पुरुषस्य या दर्शपूर्णमासविषयिणी प्रवृत्तिः, तद्विषयत्वं तत्, न तु निरुक्तपुरुषस्य यत्किंचिद्विषयप्रवर्तनविषयत्वं, तस्य आधानभोजनादावपि सत्त्वेन अतिप्रसक्तत्वात्। अतश्च निरुक्तपुरुषनिष्ठदर्शपूर्णमासविषयककृतिविषयत्वं दर्शपूर्णमासयोरेव नान्वाधाने, अङ्गप्रधानभेदेन तत्तद्विषयककृत्योर्भेदात्। न तु अत्र दर्शपूर्णमासप्रकरणिका भावना भूता 'ना उपांशु कर्तव्यः' इतिवत् द्वितीयानिर्देशेन दर्शपूर्णमासकर्मकत्वेनैव आरम्भपदार्थघटकत्वस्य स्वयाऽवाच्यत्वात्। अतः अन्वाधाने तस्य बाधात् याज्ञिकप्रसिद्धया रूढिरेव तत्र आरम्भपदस्य। द्वितीया च यथार्था, न तु अनुवादः। ततश्च तदर्था न आरम्भणीया न तद्रहितायां विकृतौ ऊहितव्या। अतः अन्वाधानस्य प्रतिदर्शपूर्णमासप्रयोगमावृत्तेः आवर्तनीया। इति प्राप्ते, वृत्तिकारेण तावत् एवं सिद्धान्तितं, न अग्न्यन्वाधानम् आरम्भपदार्थः, तदभावेऽपि 'देवताध्येयं यज्ञमारभन्ते' इति ज्योतिष्टोमेऽपि आरम्भशब्दप्रयोगात्। किंतु 'इदं मया कर्तव्य' इतिसंकल्पापरपर्यायः अध्यवसायविशेषः। तदर्था अन्वारम्भणीया अन्वाधानरहितायामपि विकृतौ सत्त्वात् कर्तव्यैव। प्रकृतौ च आधानोत्तर सर्वयावज्जीविकप्रयोगाणां सकृदेव संकल्पकरणात् सकृदेव अन्वारम्भणीया इति। तन्न। तत्तत्कालावच्छिन्नतत्तज्जीवनाख्यनिमित्तवशोत्पन्ननैमित्तिककर्मयावज्जीविकप्रयोगाणां तत्तत्काले प्रत्युपस्थितत्वेन अध्यवसायापत्तौ सर्वसाधारणाध्यवसाये प्रमाणाभावात्। तत्र यथैव एकस्मिन् पुत्रे जाते वैश्वानरीं निरूप्य पुनरन्यजन्मनि पुनर्निर्वापे नाध्यवसायैक्यं तथा इहापि अध्यवसायभेदात् सकृत्करणानापत्तिः। तस्मादेवं भाष्यकारादिभिः सिद्धान्तितं, न अध्यवसायवाची

आरम्भशब्दः। तत्रापि अप्रवृत्तप्रवर्तनविषयत्वेनैव आरम्भशब्दप्रयोगात्। अतः अप्रवृत्तप्रवर्तनमेव आरम्भः। तद्विषयत्वात्तु पदार्थेषु आरम्भशब्दप्रयोगः। अतस्तदर्था अन्वारम्भणीया। साऽपि न साक्षात्, अपितु ज्ञानस्य कर्तृधर्मत्वात् जन्यमानवत् कर्तारं आरम्भयोग्यं करोति इति तद्द्वारा आरम्भार्था। यद्यपि च दर्शपूर्णमासौ इति द्वितीयायाः विषयार्थकत्वात्, दर्शपूर्णमासविषयकाप्रवृत्तप्रवर्तनविषयत्वस्य च दर्शपूर्णमासाख्यप्रधानस्यैव संभवात्, ततः पूर्वं प्रयोगमध्ये एव अन्वारम्भणीया अनुष्ठेया इत्यर्थः 'दर्शपूर्णमासावारप्स्यमानः' इत्यस्य प्राप्नोति। तथापि उक्तार्थस्य पाठादेव प्राप्तेः पदद्वयवैयर्थ्यप्रसङ्गेन द्वितीया उद्देश्यत्वपरा। तेन अत्र विधिप्रवृत्तेरपि प्रधानोद्देश्यकत्वाधिगमात् दर्शपूर्णमासोद्देश्यकाप्रवृत्तप्रवर्तनविषयत्वं तत्प्रथमप्रयोगीयाद्यपदार्थ एव इति तदङ्गं आरम्भणीया। तथाहि, उक्तविधप्रवर्तनविषयत्वं दर्शपूर्णमासोद्देश्यकप्रवृत्तिध्वंसासमानकालीनतदुद्देश्यकप्रवृत्तिविषयत्वम्। तच्च न दर्शपूर्णमासीयप्रथमप्रयोगाद्यपदार्थभिन्ने संभवति। तदितरस्य सर्वस्य तदुद्देश्यकस्य तादृशध्वंससमानकालीनत्वात्। अतश्च दर्शपूर्णमासपदे अपूर्वसाधनत्वलक्षणाया तत्पदार्थरहिताया तादृशप्रथमप्रयोगीयाद्यपदार्थान्तरवत्त्या विकृतौ ऊहितस्यैव आरम्भणीया। तद्भूत्वा च तादृशप्रथमपदार्थप्राग्भावविधानात् प्रयोगबहिर्भावसिद्धिः। द्वितीयादिप्रयोगे च उक्तविधधर्मावच्छिन्नपदार्थाभावात् अकरणम्।

अथ हि दर्शपूर्णमासयोः न तत्तद्व्यक्तित्वेन प्रवृत्तिं प्रति उद्देश्यता, येन तद्व्यक्तित्वावच्छिन्नोद्देश्यकप्रवृत्तिध्वंससमानकालीनतद्व्यक्त्युद्देश्यकप्रवृत्तिविषयत्वात् द्वितीयप्रयोगीयाद्यपदार्थोत्कर्षेनापि सा स्यात्। दर्शपूर्णमासौ इति श्रवणात्तु दर्शपूर्णमासत्वमेव उद्देश्यताऽवच्छेदकम्। आवश्यकी च उभयत्रापि प्रवृत्तिनिरूपितोद्देश्यताऽवच्छेदकविवक्षा, इतरथा सामान्यतो 'विहितक्रिया मे जायताम्' इत्याकारकेच्छायाः गङ्गास्नानानुष्ठानवति दर्शपूर्णमासोद्देश्यकप्रवृत्तिजनकत्वात् तत्रापि आरम्भणीयाऽऽपत्तेः। अतो दर्शपूर्णमासत्वावच्छिन्नोद्देश्यताकप्रवृत्तिध्वंसासमानकालीनतदवच्छिन्नोद्देश्यताकप्रवृत्तिविषयत्वेनैव प्रथमपदार्थस्य उद्देश्यता। अत्र सामान्याकारकेच्छाया गङ्गास्नानानुष्ठानोत्तरं आद्यदर्शपूर्णमासप्रयोगेऽपि अन्वारम्भणीया न स्यात्, अतः प्रथमावच्छेदकविवक्षा। दर्शपूर्णमासाकरणेऽपि उक्तविधेच्छया गङ्गास्नानकरणे तदापत्तेः द्वितीयावच्छेदकविवक्षा। वस्तुतस्तु 'दर्शपूर्णमासौ मे जायेताम्' इत्याकारकेच्छया गङ्गास्नानकरणेऽपि तदापत्तिवारणाय यस्मिन् पदार्थे संकल्पादिरूपे कृते दर्शपूर्णमासौ आरब्धौ इति व्यवहारः तत्पदार्थप्रवृत्तेरेव उद्देश्यताऽवच्छेदककोटिप्रवेशस्य आवश्यकत्वे, तत एव उक्तस्थलेऽपि वारणसिद्धेः, तत्तद्व्यक्तित्वादेः उद्देश्यताऽवच्छेदकत्ववारणार्थमेव अवच्छेदकविवक्षा। अत एव तत्पदार्थस्य उक्तरूपेणैव आरम्भत्वात् न द्वितीयादिप्रयोगे अन्वारम्भणीया।

ननु एवं 'साद्येन ज्योतिष्टोमेन यक्ष्ये' इत्येवंविधसंकल्पविषयकप्रवृत्तेः दीक्षणीयात्वावच्छिन्नोद्देश्यकप्रवृत्तित्वे ततः पूर्वं अन्वारम्भणीयाऽऽपत्तिः। यदि तु उद्देश्यतायाः तत्र 'साद्यो ज्योतिष्टोमो जायताम्' इत्येवमाकारकेच्छाविषयविशिष्टवृत्तित्वेन विशिष्टधर्मावच्छिन्नत्वात् सोमप्रवृत्तित्वं इत्यभ्युपगम्येत, ततः 'दीक्षणीयया यक्ष्ये' इत्येवंविधावान्तरसंकल्पात् पूर्वं अन्वारम्भणीयाकरणापत्तिः, तस्य निरुक्तप्रवृत्तिविषयत्वात्, अवान्तरसंकल्पविषयप्रवृत्तेः 'दीक्षणीया मे जायताम्' इत्येवमाकारकेच्छाजन्यत्वेन दीक्षणीयात्वावच्छिन्नोद्देश्यकत्वात्। एवं राजसूयगतेष्टिपशुकथास्वपि अन्वारम्भणीयाऽऽपत्तिः, इति चेन्न। 'दीक्षणीया जायताम्' इत्याकारकेच्छाऽनुत्पत्तावपि 'साद्यो ज्योतिष्टोमो जायताम्' इत्याकारकसाङ्गप्रधानमूलत्वाकारकेच्छात एव 'दीक्षणीयया यक्ष्ये' इत्येवंविधसंकल्पविषयकप्रवृत्तेः। तेनैव तादृशसंकल्परूपाद्यपदार्थस्य दीक्षणीयात्वावच्छिन्नोद्देश्यताकप्रवृत्तिविषयत्वाभावेन प्रारम्भादेव दीक्षणीयाऽङ्गो राजसूयगतेष्टिपश्वादौ न अन्वारम्भणीयाऽऽपत्तिः दशमे (१०।१।२।४) वक्ष्यमाणत्वात्। एवं 'सोमो मे जायताम्' इत्याकारकेच्छात एव सोमाङ्गभूते वैश्वानरेष्ट्यादौ प्रवृत्तिसंभवात् 'वैश्वानरेष्ट्या यक्ष्ये' इति संकल्पस्यापि वैश्वानरेष्टित्वावच्छिन्नोद्देश्यताकप्रवृत्तिविषय-

त्वाभावेन द्वादशोपादेय न तत्रापि अन्वारम्भणीया इति द्रष्टव्यम् । दर्शपूर्णमासत्वं तु 'साङ्गौ दर्शपूर्णमासौ यजेत' इत्याकारकेच्छाया प्रकारत्वात् सति उद्देश्यताऽवच्छेदककोटिप्रविष्टं इति विशेषः । अतः सिद्ध अन्वारम्भणीयायाः उत्पत्तिविध्यारम्भाङ्गत्वात् निवृत्तौ ऊहः । द्वितीयादिप्रयोगे च अनङ्गत्वमिति ।

यत्तु मूले प्रथमप्रयोगारम्भे क्रियमाणा अन्वारम्भणीया सर्वप्रयोगाणामुपकरोति । न च आरप्स्यमानः इति अद्यतनकालवाचिलृट्प्रत्ययप्रयोगात् प्रधानविनष्टत्वेनापत्तेः कथं सर्वप्रयोगोपकारकत्वम् इति वाच्यम् । अद्यतनानद्यतनसाधारणभविष्यत्कालमानवाचित्वात् अद्यतनमात्रकालवाचित्वाभावात्, इतरथा 'भविष्यति अनद्यतने लुट्' इत्यत्र 'भविष्यति' इति लृट्प्रत्ययप्रयोगानुपपत्तेः । अतः प्रथमप्रयोगारम्भे कृतैव सर्वेषामुपकारिका इत्युक्तम् । तत् अन्वारम्भणीयाजन्यस्योपकारस्य यावज्जीवत्वे निवृत्तिमपि गमनात् उपकारकत्वापत्तेः, अतस्त्वं (च) द्वितीयादिप्रयोगेऽपि उपकारकत्वानापत्तेः उपेक्षितम् । ११.

मण्डन—'आरम्भणीया सकृदादिन स्यात् ।' ११.

शंकर—'आरम्भणीयाऽनावृत्तिः ।' १७.

● **आरम्भणीयान्याय** । येषामङ्गानां प्रकृती स्वाङ्गसंबन्धेन विधानादुक्ता तेषामेवातिदेशः, न पवमानेष्ट्यादीनां, तेषामङ्गविशेषानन्वयेन तद्धानतया अपरिपूर्णत्वात् । अतो नान्वारम्भणीया-वैमृधन्यायेनेव अतिदेशः ।

● **आरम्भणीयेष्टिः** । 'आग्नावैष्णवमेकादशकपालं निर्वपेत् दर्शपूर्णमासावारप्स्यमानः' इति विहिता दर्शपूर्णमासविकृतिः । वि. १०।१।४, ● आरम्भणीयेष्टिः पञ्चमी न प्रयोक्तव्या । पञ्चदशानि च सोमादीनि इति विकृत्यारम्भे आरम्भणीयेष्टिः पृथक् कर्तव्या । १२।२।६. ● आरम्भणीयेष्टिः च निरूढपशौ दर्शपूर्णमासप्रयोगे नैव कर्तव्या, प्रयोगमात्रभेदात् धर्मानां भेदाभावात् । भा. १।२।१।१५.

● **आरम्भपदस्य** आद्यपदार्थे शक्तिः इति केचित् । आद्यप्रवृत्तौ शक्तिः इत्यन्ये । आद्यत्वं च तत्समानविषयकप्रवृत्तिध्वंसानधिकरणत्वम् । मणि. पृ. १६५.

● **आरम्भासमवायाद्वा चोदितेनाभिधानं** स्यादर्थस्य श्रुतिसमवायित्वाद्वचने च गुणशास्त्रमनर्थकं स्यात् (१०।८।१८।४८ भा.) इत्यनेन अर्थस्य देवतायाः श्रुतिसमवायित्वात् आरम्भेण स्वरूपेण कर्मणि असमवायात् गुणानभिधाने च गुणवाक्यस्य आनर्थक्यापत्तेः, चोदितेन सगुणेन अभिधानं स्यात् इत्येवं पूर्वपक्षनिरास उक्तः । सु. पृ. ४६८.

☒ **आराच्छिष्टमसंयुक्तमितरैरसंनिधानात् । ३।६।११।३२ ॥**

अंशुनामके अदाभ्यनामके च सोमग्रहे ज्योतिष्टोमप्रकरणसमाम्नाता ग्रहधर्मा न कर्तव्या, इति पूर्वपक्षप्रतिपादनार्थं सूत्रमिदम् । आरात् दूरात् ज्योतिष्टोमप्रकरणाच्छिष्टे औपसदानुवाक्याकाण्डे, शिष्टं विहितं अंश्वदाभ्यग्रहरूपं, इतरैः आरात्पदोक्तात् भिन्नैः ज्योतिष्टोमप्रकरणाम्नातैः ग्रहधर्मैः असंयुक्तं न संयुक्तं धर्मवद् स्यात् । कुतः ? असंनिधानात्, अंश्वदाभ्ययोः ज्योतिष्टोमसंनिधानाभावात् ।

**संयुक्तं वा, तदर्थत्वाच्छेषस्य तन्निमित्तत्वात् । ३३ ॥**

वाशब्दः पूर्वपक्षव्यावृत्त्यर्थः । अंश्वदाभ्यग्रहद्वयं संयुक्तं ज्योतिष्टोमप्रकरणोक्तग्रहधर्मैः संयुक्तमेव स्यात् । तदर्थत्वात्, अंश्वदाभ्ययोः ज्योतिष्टोमार्थत्वात् । शेषस्य ग्रहधर्मजातस्य तन्निमित्तत्वात् ग्रहनिमित्तकत्वात् । यो निमित्तं ग्रहधर्माणां, ग्रहश्च ज्योतिष्टोमार्थः । अथवा तदर्थत्वात् ज्योतिष्टोमापूर्वार्थत्वात्, शेषस्य ग्रहधर्मजातस्य तन्निमित्तत्वात् ज्योतिष्टोमापूर्वनिमित्तकत्वात् । पूर्वोऽर्थस्तु साधीयान् ।

**निर्देशाद् व्यवतिष्ठेत । ३४ ॥**

ननु तर्हि 'पात्रया मैत्रावरुणं श्रीणाति' (मैत्रावरुणग्रहस्थं सोमरसं पयसा मिश्रयति) इति विहितं अयमपि सर्वग्रहार्थं स्यात् इति चेत्तत्राह सिद्धान्ती ।

वैश्वानर इति विशेषस्य निर्देशात् श्रयणं तत्रैव व्यवतिष्ठेत, न सर्वग्रहेषु गच्छेत् । तथा च प्राकरणिकसर्वार्थत्वबाधेन वाक्यात् व्यवस्था भवति । प्रकृते तु प्राकरणिकव्यवस्थाबाधेन वाक्यात् सर्वार्थत्वमिति विशेषः । तस्मात् अंशुदाभ्ययोः ग्रहधर्माः सादनादयः कर्तव्या इति सिद्धान्तः । के.

* आराद्‌पीति चेत् । न, तद्वाक्यं हि तदर्थत्वात् । ( ३।७।१।३–४ ) अपूर्वसाधनं यो नज्ञायमानः ( पुरुषः ) तस्यैवैष संस्कारः । एवं तीर्थस्नानमपि । एतौ च चोदनापरिहारौ सूत्रकार एव नवमति ‘ आराद्‌पीति चेत् , न तद्वाक्य हि तदर्थत्वात् ’ इति । शा. ३।४।५।१७ पृ. २४७, * आराद्‌पीति चेन्न तद्वाक्ये हि तदर्थत्वात् । वक्ष्यति चैतत् ‘ आराद्‌पीति० ’ इत्यत्र प्रकरणवशेन क्रतूपकारिमात्रे धर्मा विधीयन्ते, न साक्षात् भक्ष्येष्वेव केवलेषु इति । ३।१।९।१८ पृ. ७२८–२९ ( अस्मिन् सूत्रद्वये सूत्रद्वयगतपाठद्वयमुपलभ्यते । तत्र लेखकप्रमाद एव कारणं सम्भाति । चेदन्तसूत्रनिर्णयानुसारेण तु प्रथमपाठ एव स्वीकार्यो , न द्वितीय । )

* आरादुपकारकं अदृष्टार्थम् । मीन्या. पृ. १०७.
* आरादुपकारकं फलार्थं प्रवृत्तिरूपं वैदिकं कर्म अदृष्टार्थमेव , यथा प्रयाजाः । बाल. पृ ८२.

* आरादुपकारकं च द्विविधम् । अदृष्टप्रयोजनं दृष्टादृष्टप्रयोजनं च । ‘ समिधो यजति ’ इत्यादिषु अन्यशास्त्रगतं किंचित् प्रयोजनं न दृश्यते । तत्र के चित्तावत् अधिकारापूर्वसिद्ध्यर्थेन अधिकृताधिकारमिच्छन्ति । ते हि मन्यन्ते उपरितनियोगस्तावत् समिदादिषु निर्विषय एव मताः । न च नियोगो नियोज्यमन्तरेण अभिधीयते । तथा च सति विश्वजिदादिषु नियोज्यपरिकल्पना न स्यात् । तत्र च नियोज्ये कल्पयितव्ये यदनुगुणः फलपदस्य कल्प्येत यदि वा विश्वजिन्न्यायेन अधिकारी कल्प्येत, तदा अधिकारापूर्वस्य इतिकर्तव्यताऽऽकाङ्क्षा न परिपूर्येत न परमापूर्वाधिकारकानां अधिकारिणि सति उपायोपेयभावो गम्यते । तदन्यथा अधिकृताधिकारमोरः उपपद्यते , यस्य च परमापूर्वसाध्यस्य परमापूर्वाधिकारः । न च यथा ‘ स्वर्गकामो यजेत ’ इत्यादौ साध्यस्वर्गविशिष्टाधिकारिणि स्वर्गयागयोः उपायोपेयभावः, तथेहापि समिदादिपरमापूर्वयोः । तत्र च न कार्यमन्यार्थमिति न्यायेन अधिकारनियोगैदम्पर्यमेव समिदादीनामवसीयते । तदिदं प्रादकग्रहणमिति गीयते । तयोरुत्पत्तिविशिष्टामेयादिकरणानुरुद्धे परमापूर्वे प्रकारान्तरेण ऐदम्पर्यानुपपत्तेः इतिकर्तव्यतात्वेनैव ग्रहणम् इति । तदिदमनुपपन्नमिति प्राभाकराः । यदि सर्वस्य नियोगस्य नियोज्यान्विताभिधानमाश्रीयते । तथा सत्यभिषेचनीयादिविशेषाणां उत्पत्तिविनियोगानामपि साधिकारत्वं स्यात् । ततः अभिषेचनीयतन्त्रमध्ये पठितानां विदेवनादीनां अभिषेचनीयान्तरापूर्वप्रकरणेन तदङ्गतैव न स्यात् । अथोच्येत नाहृत्यार्थे नियोगो नियोज्यान्वितोऽभिधीयते किंतु अनुष्ठानलब्धये । अभिषेचनीयादयश्च परमापूर्वप्रयुक्त्यैव लब्धानुष्ठानाः परमापूर्वस्यापि तद्विषयत्वात् तेनैव स्वसिद्ध्यर्थं विषयीभूतासु इज्यासु प्रयुज्यमानासु तद्विषयोत्पत्तिनियोगा अपि लब्धसिद्धयो न स्वसिद्धये नियोज्यान्तरमाकाङ्क्षन्तीति, तर्हि प्रयाजादिनियोगा अपि विनियुक्तविषयत्वात् नाधिकारान्तरमपेक्षेरन् । स्यान्मतं, विनियोगः एव तेषामधिकृताधिकारमन्तरेण अनुपपन्न इति । तदसत् । नियोगैदम्पर्यमात्रेण प्रथमप्रवृत्तेन अवगताधिकारसम्बन्धानां प्रकरणेनेतिकर्तव्यतात्वेन विनियोगात् । तथाहि, अधिकारविधिसन्निधौ यजतीत्यादयो निरधिकारा एव तावदवगम्यन्ते । तत्र योऽसौ अधिकारविधिः, स एव प्रयोजनभूतो निरधिकारैः समिदादिभिः स्वप्रयोजनभूतैरेभिः सम्बन्धेनाभिधीयते । समिदादिवाक्यानि च द्रव्यदेवतारहितानि यागस्वरूपमात्रेण संनिधापयन्ति । संनिधापनमात्रेण तैः सह अधिकारनियोगस्यान्वयः । यदि च संनिधानं नादियेत , तदा समिदादिष्वपि किमिति परमापूर्वाधिकारी कल्प्येत । तदेव संनिधानमात्रतः सिद्ध्युपकारैदम्पर्ये स्वं भवतीत्यपेक्षा । तथा साध्यभूतस्य अधिकारापूर्वस्य कथम्भावाकाङ्क्षा । तेन परस्परोपकारः एव तेषां प्रकरणाभीष्टः । तत्र यदैदम्पर्येण अभिधानं, तत् प्रकरणम् । यच तेषां परस्परोपकारकत्वं, स एव प्रकरणविनियोगः ।

स्वरसतोऽपि आकाङ्क्षाशून्यस्य कारणान्तरोपनिपातनिबन्धना आकाङ्क्षा। यथा पटो भवतीति निराकाङ्क्षस्यापि पदद्वयस्य रक्तपटोच्चारणात् रक्तं प्रति आकाङ्क्षा, अन्यथा रक्तः पटो भवतीत्यनन्वयप्रसङ्गः। एवं प्रयाजादिषु न किंचिदाकाङ्क्षोत्थापने कारणान्तरमस्तीति न सौमिकधर्मातिदेशः। सिद्धश्च दीक्षणीयाऽऽदिषु ऐष्टिकविध्यन्तलाभः। ये तु अधिकृताधिकारापसुपगमेन साधिकारता अङ्गनियोगानामाहुः, तेषां प्रयाजादिषु रात्रिसत्रन्यायेनार्थवादिकफलकामः एवाधिकारी प्राप्नोति इति नाधिकृताधिकारसंभवः। स्यान्मतं, इतिकर्तव्यताकाङ्क्षा प्रधानविधेर्न परिपूर्यते इति। मा परिपूरि, प्रयोजन तु परिपूर्णे, न प्रमाणम्। अर्थवादपदानि प्रमाणान्तरोपनिपातीनि, तेषां परोक्षा श्रुतिर्मा भूदिति तत्प्रतिपाद्यफलकामः एवाधिकारी युक्तः। साधिकारविधिमन्तरेण तु निरधिकाराणां प्रतीतेः तादर्थ्ये अधिकाराकाङ्क्षा नास्तीत्यर्थवादपदानि अर्थवादमात्रपर्यवसायीन्येव। तथा पयोव्रतं ब्राह्मणस्येत्यादिषु भोजनाय प्रवृत्तस्य द्रव्यार्जननियमवत् स्ववाक्ये एवाधिकारिणो लब्धत्वात् प्रधानप्रवृत्तस्य अधिकारकल्पना शक्यते कल्पयितुं, अथ व्यवस्था पयोव्रतादीनामापद्यते। तथा नानृतं वदेदिति प्रकरणाधीतेऽपि निषिध्यमानक्रियाकर्तुरधिकारानवगमात् प्रकरणानुप्रवेशासंभवः। यथा भिन्ने जुहोतीति निमित्तस्याधिकारिविशेषणत्वात् विना निमित्तकल्पनात् अधिकारिविशेषणलाभात् न होमस्य दर्शपूर्णमासाङ्गत्वलाभः। न वा इदमिह साधनं भिन्नशब्दस्य यौगिकत्वात् प्रकृतिगामित्वे सति निमित्ततोऽप्यधिकारेऽधिकृतस्याधिकारः इति, प्रकरणे भिन्नस्य (स्या) विनियोगात्। तद्धि प्रकरणसंनिहितं, यत्र विनियुक्तम्। न च भिन्नस्य विनियोगोऽस्ति। अपि वा अधिकाराकाङ्क्षायां अधिकारे कल्पयितुमुपक्रान्ते किमिति अर्थेन संनिधानेन अधिकारः कल्प्यते, वर भवत्वनुग्रहः साक्षात्श्रुतस्य अधिकारपदस्य, प्रधानवाक्ये तु श्रुते अधिकारपदे प्रधानेन सह संबन्धे सति संनिहितानां अश्रुताधिकाराणां अधिकारैकमत्येन अन्वितानां अधिकाराकाङ्क्षैव नास्तीति अङ्गाननिराकरणे मूलयुक्तिः। अनुपपद्यमानं तु पर-

मनुषङ्गः, इतिकर्तव्यताऽऽकाङ्क्षापरिपूरणमेवेति। अपि च प्रत्येकं 'समिधो यजति' इत्यादिषु प्रधानाधिकृतस्य अधिकारावगमात् प्रत्येकमेव समिदादीनां प्रधानोपायभावात् प्रत्येकमितिकर्तव्यताभावः स्यात्। अवान्तरविषयो हि तदा स्वविषयाणां उपायभूतं प्रकल्पयन्ति। करणावरुद्धे परमापूर्वे करणत्वासंभवात् करणोपकारजनकतयैव उपायभावकल्पनम्। तत्र प्रधानापेक्षयोपायभावमाश्रित्य एकस्यैव करणोपकारसंपादकत्वात् विकल्पः समिदादीनां स्यात्। अधिकारविधिना तु तावत् तादर्थ्यमात्रग्रहणे तस्य तदन्वितस्य अन्यथाऽनुपपत्तेः तादर्थ्यसिद्ध्यर्थं करणोपकारजनकता स्यात्, तदा विकल्पे सति नित्यवदाम्नायो नोपपद्येत। मिलितानां तज्जनकताऽऽश्रयणे सर्वेषां तदन्वयोपसंहारः, इति न प्रत्येकमितिकर्तव्यताभावः। उपायोपेयभावे तु तादर्थ्येन अन्वये सति वैकल्पिकत्वादुपायभावस्य तथैवान्वयोऽपीति युक्तम्। किंच अधिकृताधिकारेण सर्वेषु साधिकारेषु सत्सु प्रयाजादेरितिकर्तव्यताऽऽकाङ्क्षा स्वाभाविकी इति सौमिकधर्मातिदेशस्तेषु स्यात्। न च तस्य सत्यामपि आकाङ्क्षायां इतरेतराश्रयतया न तेषु सौमिकधर्मातिदेशः। सोमो हि दीक्षणीयादिभिः अङ्गवान्, दीक्षणीयादीनि ऐष्टिकधर्मग्राहीणि। यदि च इष्टावपि प्रयाजादिषु सौमिकधर्माः प्रसज्येरन्, तदा स्फुटतरमितरेतराश्रयत्वमिति। तदिदं मन्दजल्पितम्। सोमे हि विनाऽपि ऐष्टिकधर्मप्राप्त्या दीक्षणीयादिसम्बन्धनिबन्धनः एवोपकारः, तथा इष्टावपि सौमिकधर्मनिरपेक्षः एवोपकारः। यदि पर अनयोरङ्गनिबन्धयोः उपकार गृह्णाति, अत्र चोपकारदृष्टेः अविशेषात् न कश्चिद्दोषः। निरधिकारेष्वङ्गेषु न स्वाभाविकी इतिकर्तव्यताऽऽकाङ्क्षा। किंतु लिङ्गप्रत्ययोत्थापनीयेति दर्शितमादौ। तेन लिङ्गरहितेषु नाकाङ्क्षोदयः, इति न प्रयाजादिषु सौमिकधर्मातिदेशः। ये चिदाहुः यदि संनिधिमात्राम्नानमात्रेण अङ्गनाधिकारानुप्रवेशो न स्यात्, तदा ज्योतिष्टोमप्रकरणे समाम्नातस्य चोदनेति. 'उत्तरेऽहनि द्विरात्रस्य गच्छते' इति वैगुण्य नमेव स्यात्। तदसत्। प्रकरण अप्रधानतया प्राप्तापेक्षणीयम्। तत्र प्रकरणग लोकनाम पत म क्रत्व येनान्वय याति, न च ज्योतिष्टोमा-

देशिकः अङ्गकलापः। कार्यनिरूपणं के चिदन्ये मीमांसका मन्यन्ते। उपदेशो हि प्रतिप्रकरणमङ्गानां व्यवस्थित एव, अपूर्वग्रहणपूर्वकत्वात् विनियोगस्य। यदि हि ‘दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत’ इत्यनेन साधिकारं यागमुद्दिश्य समिधो यजतीति समिदादिविधिः स्यात्, तदानीं एवमुद्दिश्य विधानात् यागयागमेव समिदादिविधिरिति यजिमत्सु दर्शपूर्वेषु समिदादिविधानात् उपदेशो न व्यवतिष्ठेत। नहि तदा स्वर्गकामपदं दर्शपूर्णमासपदं च विशेषणत्वात्तम्। उद्दिश्यमानविशेषणविशेषणविवक्षायां वाक्यभेदापत्तेः। संनिधानमात्रेण तु अन्विताभिधानसिद्धेः दर्शपूर्णमासाभ्यां इत्यधिकारवाक्ये सति समिदादीनां तदनुप्रवेशात् विनियुक्तविषयतयाऽपि अनुष्ठानसंसक्तेः दर्शपूर्णमासाभ्यां इत्यधिकारद्वारादिकल्पनम्। तत्र चोपादानलक्षणेन विधिव्यापारेण अङ्गानां समुदितानां उपकारकत्वपरिकल्पनमिति प्रतिप्रकरणमङ्गव्यवस्था। क पुनः येषां कार्यनिरूपणमङ्गत्वम्। प्राकृतानां वैकृतापूर्वेषु तदीयकरणे च यथायथं अतिदेशमालक्ष्यते। प्रकृतानां प्राकृतस्थानप्रतीते अर्थान्तरसमूहमभिदधाति द्विविधं शब्द उपदेशक कार्यकं (कर) च। तत्र वैकृतापूर्वस्य साध्यभूतस्य सेतिकर्तव्यताऽऽकाङ्क्षस्य विषयीभूते भावार्थे करणे लब्धे वा परैविकर्तव्यताऽऽकाङ्क्षा, तस्या च न प्रकृतिवदुपकारान्तरकल्पना उपपद्यते। कस्मिन्नपि उपकारान्तरे तावदनवद्विविधपदार्थाकाङ्क्षा पश्चात्तनी, सा प्रकरणनधीतपदार्थवर्गसंबन्धेन न परिपूर्यते। प्राकृते तूपकारे स्वीकृते तत्तन्मुखेन द्विविधप्राकृतपदार्थोपस्थापनात् आकाङ्क्षा परिपूर्यते इति प्राकृतमेवोपकारं स्वीकरोति। कः पुनर्हेतुः स्वीकरणे? अनुमानं अव्यभिचरितलिङ्गसंबन्धाभावाल्लोपस्य, तस्य सादृश्यमात्रविषयत्वात्, सिद्धरिपयागादिनोऽस्य अनयोः कार्यप्रमाणानवगमात्। उच्यते। य एवासौ विनियोगमभिधायी लिङादिशब्दः, स एव प्राकृतोपकारान्वितं स्वार्थमभिदधाति। प्रकृतावपि विप्रकर्षकदिकविलोपकारिणा अन्वितं स्वार्थं लिङादिरेव वक्ति। अन्विताभिधाने [redacted] आकाङ्क्षा योग्यता संनिधिश्च कारणम्। [redacted] च प्राकृतस्योपकारस्य प्रतीत आकाङ्क्षा योग्यता च तावदविवादा। संनिधानं तु बुद्धेन प्राकृतेनैवापूर्वेण। लिङ्गविशेषेण प्राकृतमपूर्वं बुद्धौ संनिधीयते, तच्च स्वोपकारं संनिधापयति। अत एवोपकारसंबन्धः औपदेशिक इति तत्त्वविदः। यो हि यस्येव विध्यर्थेनैव उपस्थापितः तस्मिन् अन्वयमेति, स औपदेशिक प्रकृतौ इवोपकारः, यथा विश्वजिदादौ अधिकारी। तदेवमुपकारसंबन्धमुपेत्य केन पदार्थवर्गेण जन्यते इति पश्चात् सत्येव वैकृतस्यापूर्वस्य आकाङ्क्षा भवति। ननु प्रकृतौ आत्मोपकारो निर्ज्ञातजनकभूतपदार्थवर्गः, इति नाकाङ्क्षोदये कारणमस्ति। अत एव पदार्थानामतिदेशो नेति मन्यते। यदि पदार्थेनापि पश्चाद्भाविनी आकाङ्क्षा, तदा तद्धेतुके प्राकृतानां वैकृतापूर्वसंबन्धे सति को नाम उपकारस्यैव पदार्थानामतिदेशं वारयेत्। अन्यतः उत्थितस्य हि अन्येन संबन्धोऽतिदेशः इत्यतिदेशविदः। अत्र ब्रूमः। यदि करणोपकारमयुक्ताः प्रकृतौ पदार्थाः स्युः, तदा निर्ज्ञातेषु जनकेषु पदार्थाकाङ्क्षा नावतरेत्। अपूर्वप्रयुक्तास्तु धर्मा इति मीमांसकाः। तथा सति यदपूर्वप्रयुक्तास्ते धर्माः, तत्संबन्धे एवोपकारे तेषां जनकता कल्पिता, नान्यसंबन्धे। अतो वैकृतापूर्वसंबन्धस्य अनिर्ज्ञातोपायस्य उपेयाकाङ्क्षा नानुपपन्ना। येषां न प्रकृतिसाधनभावेन पदार्थानामनुष्ठानमेव केवलं, तेषामौपदेशिकत्वात् उपकारसाधनभावस्य कल्पनायां न स्यात्। आकाङ्क्षानिबन्धनेन प्राकृतपूर्वसंबन्धे यथोक्तरीत्या सिध्यतः तथा तदेव वक्ष्याम। एवं च सत्या पदार्थाकाङ्क्षायां पश्चादुपकारेण ये प्राकृताः पदार्था बुद्धिविषयतामापद्यन्ते, त अन्वयमासादयन्ति। येन पुनः संबन्धेन उपकारसंस्थानुपस्थापयति। उच्यते। प्रकृतौ तेषां पदार्थानां तस्य चोपकारस्य जन्यजनकभाव प्रतीतः इति तथा अपूर्वप्रतीत्या स्मृतिस्तेषु जायते। तेषु स्मृतिसंनिहितेषु तत्संबन्धेषु यथाप्रकरणाधीतेषु पश्चादुपकारसाधनत्वं सिद्धितानां साधनत्वं कल्प्यते। तदाहुः। ‘वैकृतं पदार्थवर्गं प्राकृतमुपकारादौचितम्। तथा निरूपकारे साधनमेवेति कल्पयति’। उपकारलक्षणकार्योपस्थापितप्राकृतपदार्थान्वयमात्र च विकृत्यपूर्वस्यापर्क शास्त्रमुच्यते। न च

पदार्थाना अपूर्वान्निरसम्बन्धः अनुपपन्नः । अन्यदीयस्य अन्यसम्बन्धाभावात् इति तद्द्वारेणोपकारे अन्विते तत्र काकाङ्क्षाया कार्यतः अन्वयावगमात् । अर्थश्चाय अतिक्षुण्णः ऋजुविमलाऽऽदिषु । तत्र प्राकृताना संस्काराणा प्राकृतद्रव्यस्थानपतितपदार्थेष्वेवान्वयनिश्चय. ऊहापरनामाऽपि कार्यत्वबलात् । प्रकृतौ यत्कार्यं व्रीहीणां अवघातादीना, तदेवेदमिति निश्चये सति यदपूर्वाः अवघातादय, तदीयतण्डुलोत्पत्तिप्रकृतिद्रव्यमवघातादिभिः संस्कार्यमिति प्रकृतौ शास्त्रार्थ. । विकृतावपि तादृशा एव नीवारादयः इति धर्मोऽह· तेषु । एवं कृष्णलादिषु अवघातादिषु ऊहितेषु द्वारभूतकार्याभावे च यो बाधनिश्चयः, सोऽपि कार्यबल एव । तदेव अत्राधिनाम्नुचितपदार्थेऽन्यप्राकृत उपकारो विकृताविति स्थितम् । तेषा चोपदेशिकाना कार्यसंपद्वाना अनेकप्रधानसम्बन्धे प्रयोगविशेषे तन्त्र मनुष्ठानम् । तथा देशकालकर्तृणा प्रयोगानुबन्धभूताना भेदो नाश्रीयते कार्यस्य वा । भिन्नमाने तु कार्ये कार्यार्थे अनुष्ठानमावर्तेत एव देशादिभेदेऽपि प्रयोगभेदावगमात्, आवृत्तिरेवानुष्ठानस्य । यस्य च परार्थमनुष्ठितस्यापि कार्ये तन्त्रमित्यवगम्यते, तस्य अन्यार्थापि उपकारकत्व मेवेति सकृदनुष्ठानमिति । 'नानाऽमितविषयाणां विधिसिद्धौ निमग्नताऽङ्गानाम् । प्रमितगम्भीराणां पारायण मेतदाचरितम् ॥' पत्रिका. पृ. २११–२२५. ( इद प्रकरणपत्रिकार्थं प्रकरण चौखम्बाया मुद्रितं अनुद्दिष्टमपि कथंकथमपि विचार्य किंचिदक्षरपरिवर्तनेन विरामचिह्नदानेन च यथामति परिष्कृत्य क विषु यथामुद्रितमेव निवेशितम् । आदर्शपुस्तक च द्वितीय नैवोपलब्धम् । के. )

● आराद्उपकारकं साक्षात् प्रधानाङ्ग, तस्य अन्योद्देशेन अविधानात् । मीन्या. पृ. २०८. ● आराद्उपकारकाणि प्रयाजादीनि तन्त्रापूर्वेभ्यः फलापूर्वनिष्पत्तौ साक्षादेव व्याप्रियन्ते । वि. २।१।१२. ● आराद्उपकारकाः प्रयाजाः समिदादिपदाना नामधेयत्वात् । भा. २।२।२०।५९–६०. ● आराद्उपकारकात् सन्निपत्योपकारकं बलीयः । अत एव 'रथाक्षो रथाक्षाहुतिं जुहोति' इति विहिता रथाक्षाहुतिः यूपप्रधानरथाङ्गत्वाद् यूपसंस्कारार्थी, न तु आराद्उपकारिका इत्युक्तं दशमे ( १०।२।६ ) । मीन्या. २१०. ● आराद्उपकारकात् सामवायिक गरीयः । ननु उभयथाऽपि अदृष्टार्था ( आहुति. ) किमत्र गरीयस्त्व ? उच्यते । सत्यमदृष्टार्था, किंतु समवायसङ्कल्प. कल्प्य·, आराद्उपकारकत्वे कल्प्यः सम्बन्ध. । तत्र प्रकरणेन एकवाक्यता । टुप् १०।२।६।१२. ● आराद्उपकारकेभ्य सामवायिकानि गरीयांसि । नहि साक्षात् वाक्यम् । आराद्उपकारकेषु प्रकृतेन परोक्षेण एकवाक्यता स्यात् । भा १०।४।१९।३८. ● आराद्उपकारकाणां अपूर्वार्थत्वं प्रकरणात् । शा. ९।१।१ वर्णक २ पृ ५७४. ● आराद्उपकारकाणा परमापूर्वोत्पत्तौ उपयोगः । प्रयोगबहिर्भूतस्य तु तत्सिद्धौ उपयोगः, यथा बृहस्पतिसवस्य वाजपेयोत्तरकालं अङ्गत्वेन विहितस्य वाजपेयापूर्वसिद्धौ । मीन्या. पृ २११. ● आराद्उपकारकाणा स्वरूपे अनुपयोगात् परमापूर्वार्थत्वम् । पृ २१८. ● आराद्उपकारकेषु बहुधा प्रसङ्ग एव अनेकप्रधानसाहित्ये । भाट्ट. ५।२।२. ● आराद्उपकारकल्पना सामवायिकत्वे संभवति न युक्त । वा ३।४।८।१२ पृ. ९०२. ● आराद्उपकारकक्रियानिषेधः प्रकृतिगतो यथा 'न प्रथमयज्ञे प्रवृञ्ज्यात्' इति । विकृतिगतोऽपि द्विविधः अतिदिष्टविषयः उपदिष्टविषयश्च । तत्राद्यो यथा 'न तौ पशौ करोति' इत्याज्यभागनिषेध. । विकृतावुपदिष्टाराद्उपकारकविषयो निषेधो यथा कादीयमाने आग्नीषोमीये पशौ 'स्वाहा देवेभ्यो, देवेभ्य. स्वाहा' इति मन्त्राभ्यां परिपशव्ये ( परिप्लव्ये ) आहुती आराद्उपकारिके संकल्पपूर्वापरकालयोर्विधाय 'न चैते आहुती जुहोति' इति निषिद्धे । अपूर्वकर्मणि उपदिष्टाराद्उपकारकक्रियानिषेधो यथा दाशपिकः, अग्न्याधेये वारवन्तीयादिसामगानं निषिध्यते 'न ब्रह्मा सामानि गायति' इति । अत्र ब्रह्मा सामगानस्य अप्राप्तेः अनुवादमात्रतात् सामगानानिषेधात् नित्यं सामगानं स्यादित्युक्त अनुवादमात्रस्य आनर्थक्यात् सामगाननिषेध एवायं, ब्रह्मशब्दस्तु ब्राह्मणगोऽनुवाद इत्युक्तं दशमे ( १०।८।६। ९–११ )। बाल पृ. ३५–३६. ● आराद्उपकारकत्वं आधेयस्य आरम्भणस्य । भा. १०।१।८।१६–१८.

* आराद्रुपकारकत्वं द्रव्यदेवताऽन्यतरनिष्ठोद्देश्यता-निरूपितविधेयताशालिकर्मरूपसंनिपत्योपकारकभिन्नत्व-घटितक्रियात्वम् । संनिपत्योपकारके अतिव्याप्तिवारणाय भिन्नान्तम् । पुरुषार्थज्योतिष्टोमादिक्रियायां अतिव्याप्तेः क्रत्वर्थेति । सिद्धरूपकत्वर्थवारणाय क्रियात्वोपादानम् । मुरारिः भा. पृ ११६२. ■ आराद्ुपकारकत्वं प्रकरणात् प्रयाजस्य प्रयाजादित्वम् । भाट्ट. ४।१।७ पृ. १२. * आराद्ुपकारकत्वं सामवायिकत्वेन बाध्यते । अप्राप्तबाधः । भा ३।३।७।१४ पृ. ८६०, * आराद्ुपकारकत्वात् सामवायिकस्यस्य अभ्यर्हितत्वात् । ३।३।१०।२०, * अङ्गापूर्वाणामपि आत्माश्रितानामेव एकार्थसमवायेन प्रधानैः संबद्धानामपि उपयुक्तता आश्रयशेषत्वाभावात् आराद्ुपकारकत्वप्रसिद्धिः । २।१।२।७. पृ. १९८. * आराद्ुपकारकस्थले दर्शपूर्णमासयोः प्रयाजानुयाजयोः सम्बन्धः कल्प्यः, उपकारोऽपि । मीम्या. पृ २०९, * आराद्ुपकारकस्थले प्रकरणं विनियोजकम् । पृ. २०९.

* आराद्ुपकारिणा अङ्गेन प्रधानप्रयुक्तद्रव्यप्रहणस्य 'तुल्यो हि व्रीहिसंबन्धः शास्त्राद् यागाङ्गयोः ।' इति वार्तिकोक्तन्यायेन ( भा २।१।३।८ पृ ४०७ ) निरस्तत्वात् । सु पृ. १२८ ■ आराद्ुपकारिणी तु सा ( देवता ) नाङ्गी भवति, तस्मात् ( हविर्द्रव्याद- ) व्यतिरिक्तम् । भा. ८।१।१७।३२. * प्रकृतिगताराद्ुपकारिपर्युदासः, विकृतिगताराद्ुपकारिपर्युदासः, अप्रकृतिविकृत्यात्मककर्मगताराद्ुपकारिपर्युदासः इति त्रिविधः । एषामुदाहरणानि मृग्याणि । बाल. पृ. २०.

* आराद्ुपकारित्वं संनिपत्योपकारित्वेन समवेतार्थसंभवे बाध्यते नान्यथा । सु. पृ. ७२८, * आराद्ुपकारित्वं संनिपातित्वेन बाध्यते यथा पशुपुरोडाशादौ । बाल. पृ. १४०.

* आरुण्यं गुणोऽपि क्रयाङ्गैकहायनीद्रव्यपरिच्छेद-द्वारा क्रयाङ्गमिष्यते । सु. पृ. १०२८. * आरुण्यस्य श्रुत्या ( क्रयरूप- ) क्रियासंबन्धावगमात् द्रव्यसंबन्धो वाक्यलक्षणो दुर्बलत्वात् बाध्यते । भा. ३।१।६।१२ पृ. ६८५. * आरुण्यस्य सर्वक्रयद्रव्यस्थानापन्ने निवेशः । भाट्ट. ३।१।६ पृ. १९१. * आरुण्यगुणः क्रयसाधनं सन् क्रयहेतुमेकहायनीमेव भजते । आरुण्यगोद्रव्ययोः पार्ष्ठिकान्वयः । वि. ३।१।६. * आरुण्यगुणः क्रयहेतौ एकहायन्यामेव व्यवस्थितः, न तु द्रव्यान्तरे संकीर्णः । भा. ३।१।६।१२.

* आरुण्यन्यायः ( ३।१।६।१२ ) । ननु जातिरपि शब्दाभिहिता आरुण्यन्यायेन क्रियासाधनमेव । ( 'अरुणान्यायः' इत्यत्र अधिकरणं द्रष्टव्यम् । ) तन्त्र. ६।७।२।१, * आरुण्यैकहायनीवत् वसानौ इत्यत्र पुंस्त्वद्वित्वयोः परस्परनियमः । ६।१।५।२९.

※ आरोपितगुणकथनं स्तुतिरिति न्यायः । स्तुतिरूपार्थवाद इत्यर्थः । आरोपितानां गुणानां वर्णनं 'आदित्यो यूपः' 'यजमानः प्रस्तरः' इत्यादौ । साहस्री. ५४९.

※ आरोपे सति निमित्तानुसरणं, न तु निमित्तमस्तीत्यारोपः इति न्यायः । न चैव घटपटयोरपि तादात्म्यप्रतीत्यापत्तिः, शाब्दप्रतीतौ तथा एवस्य निमित्ते कल्पने आरोपे सति० इति न्यायात् । सिद्धिव्याख्या पृ. १२९–१३०.

※ आरोप्यवाचकेन पदेन अधिष्ठानस्य ग्रहणं, न तु अधिष्ठानवाचकेन पदेन आरोप्यस्य ग्रहणं इति न्यायस्य प्रकृते बाधनीयत्वात् । तत्साधनं च अङ्गानां प्राधान्येन उपास्यत्वाभावात् । इति शङ्का । आमरणं. ४।१।५।६ अ. सू.

※ आरोहावरोहन्यायः । अयं योगशास्त्रे व्यवहृतः । तथाहि, मूलाधारादिब्रह्मरन्ध्रान्तस्थानेषु आरोहावरोहन्यायेन संचारितपवनः अन्तकाले भ्रुवोर्मध्ये आज्ञाचक्रे प्राणमावेश्येत्याद्युक्तम् । साहस्री. ९१७.

※ आर्तिन्यायः । आर्त्यधिकरणम् । हविरार्तिन्यायः । हविरार्त्यधिकरणम् । उभयहविरार्तिन्याय. । हविरुभयार्त्यधिकरणम् । पशुशरान्याय । तमसपशुशरान्यायः । एकहविर्यत्तावपि पृथक्शरानिर्वापः ॥

शरावः, [illegible] च उभयस्य हविषः' इति । आह, यदि विशेषणं न गृह्यते, हविषाऽपि ते विशेषणं न प्राप्नोति । तदभिधीयते । गृह्णीमहे हविषा विशेषणम् । अविशेष्यमाणे अनर्थकं स्यात् । 'यस्य आर्तिं आर्च्छेत्' इत्यविशेषे यत्किंचित् इति गम्यते । तत्र सर्वस्यैव किंचित् आर्तिं ऋच्छति, अन्ततः चरितं निमित्तं विनितं इति । तत्र 'यस्य' इति निमित्त-वचनं नित्ये अनुपपन्नं गम्येत । तस्मात् अवश्यं आर्ति-विशेषणा । सा च हविषा विशेष्यते । तथा हविरार्ति-संबन्धनिर्वृत्तिः निमित्तं पञ्चशरावस्य । शक्नोति हि श्रुत्या तं संबन्धं वक्तुम् । हविरुभयसंबन्धं तु वाक्येन ब्रूयात् । दुर्बलं च वाक्यं श्रुतेः । ननु हविरार्तिसंबन्धोऽपि वाक्येनैव । उच्यते । आर्तिनिर्वृत्तिरपि तत्र गम्यते, सा च श्रुत्या । हविरुभयसंबन्धे आनन्तर्यं श्रुतिरेव दीयते । तस्मात् न तत्संबन्धो निर्वर्त्यमानो निर्दिश्यते इति । कथं तर्हि उभयशब्दः ? उभय इति नित्यानु-वादः । एकस्मिन्नपि आर्ते, अपरस्मिन्नपि । तस्मादुक्तं 'यस्य उभय हविः आर्तिमार्च्छेत्' इति । अथ कस्मात् न पदद्वयविशिष्टा आर्तिः निमित्तं प्रतीयते इति 'यस्य उभयगुणविशिष्टं हविः आर्तिमार्च्छेत्' इति । अत्रोच्यते । कथं तावत् भवान् मन्यते विशिष्टेन अर्थेन विशिष्टा आर्तिः निमित्तमिति । आह, विशिष्टा-र्थस्य संनिधानात् विशिष्टोऽर्थः आर्तिसंनिहितः । किं पुनः स्यात् यदि एवं भवेत् ? ततः उभयविशिष्टा आर्तिः निमित्तं इति गम्यते । अत्रोच्यते । इदं तावत् देवानांप्रियः प्रष्टव्यः, यद्यपि हि विशिष्टार्थः आर्ति-संनिहितो भवति, किं तत्र अविशिष्टो दृष्टैः पदार्थ-यते ? किमतो यत् न पदार्थयते ? एतदतो भवति, अविशिष्टयाऽपि आर्त्या निमित्तं पञ्चशरावस्य भवति । ननु उभयशब्दः हविः विशेषयति । न । हविःशब्देन अपेक्ष्यमाणः तत्र शक्नोति विशेष्टुम् । आनन्तर्यात् संबध्यते तर्हि, तथापि न समर्थः । नहि असौ निवृत्तिं प्रतीक्षते । आह, विशेषणवचनात् तन्नि-वर्तको भविष्यति यथा 'शुक्लां गोमानीयतां' इत्येवम-विशिष्टे न कृष्णामानयति । शुक्लशब्दः यथा तां कृष्णा-दिभ्यो निवर्तयति । उच्यते । विषम उपन्यासः । न तत्र गवाकृत्या द्रव्यं लक्षयित्वा तस्य आनयनमुच्यते । तत्रापि चेत् एवमभविष्यत्, नैव तदा शुक्लशब्दो व्यशेक्ष्यत । उभयविशेषणविशिष्टं तु तत्र आनयनं प्रधानं उच्यते । इह पुनः आर्तिहविर्लक्षिते द्रव्ये पञ्चशरावः कर्तव्यः । किं पुनः कारणं प्रधानभूते आख्यातार्थे सत्त्व विशेषणं भवति, परार्थे पुनः विगुण इति ? उच्यते । प्रधानभूते आकृतिर्गुणो वा तदर्थ-मन्यार्थमुच्यते, तत्र उभयविशेषणविशिष्टः एकस्मात् वाक्यात् अवगम्यते, तद्विशिष्टं न कृत्वा कृती भवति, अन्यतरविशिष्टं कुर्वन् अथुन कुर्यात । यत्र पुनः आकृतिलक्षिते द्रव्ये आख्यातार्थः कीर्त्यते, तत्र सर्व-स्वेव तज्जातीयेषु उक्तो भवति, न तत्र एक-स्मिन् निवृत्ते कृती मन्येत । अपरस्मिन् अपि हि आकृतिलक्षिते तत् उक्तमेव । तथोक्तं, 'अप्रति-षिद्धं च किमिति न क्रियेत । आख्यातार्थे पुनः प्रधाने, न तस्य आकृतिलक्षितेन संबन्धः । तत्र तदाकृतिकान्तरे अनुपसंह्रियमाणेऽपि कृतमेव प्रधानम् । गुणो च प्रधानं भवति, न च किंचित् श्रुतं हीयेत' इति । तस्मात् तत्र विशेषणं गुणं, न तु इह तथा । इह हि हविराकृतिकस्य द्रव्यस्य आर्तौ पञ्चशरावः इत्युक्तम् । तत्र शक्यं विशेषणवचनेन प्रतिषेधाभावनेन निवर्तयितुम् । अपि च उभयशब्दे हविषा संबध्यमानेऽपि नैव उभय-विशिष्टा आर्तिः प्रतीयते । किं कारणं ? हविषा उभयशब्दः संबध्यते, न आर्तिमार्च्छेत् इत्यनेन पदेन । तत्र संनिहितेऽपि उभयशब्दे हविःशब्दस्य प्राधान्यात्, तस्यैव आर्तिः संबध्यते । अविशिष्टश्च तदर्थः । तस्मात् न उभयविशिष्टा आर्तिः निमित्तमिति ।

अथ आर्त्याश्रयविभक्तियोगात् उभयशब्दस्य, उभय-विशिष्टा आर्तिः इत्युच्यते, तत्र विभक्तिप्रयोगो हि हवि-र्विशेषणं उभयशब्दं शक्नुयात् कर्तुं, समभिव्याहारात्, आर्तिविशेषणम् । नहि अस्य आर्त्या हविर्विशिष्टस्य समभिव्याहारोऽस्ति । अथोच्यते । अत्यन्ती तदभि-व्याहारे आर्तिशब्दसंनिधानात् तद्विशिष्टैव आर्तिः प्रती-यते इति । तन्न । अनन्त्यो हि आकाङ्क्षायां संनिधानं

( विधीयते ), ततः ( हविःशब्दस्य विधिप्रत्ययस्य च आवृत्तेः ) वाक्यभेदः ( स्यात् ) ग्रहैकत्वन्यायेन ( ३।१।७।१३ )। ' आह, यदि विशेषणं न गृह्यते ' ( हविषा विशेषणं मा भूत् ) इति ( भाष्यं हविषो विशेषणत्वं निराकरोति। तदयुक्तं, नहि सिद्धान्ती हविषो विशेषणतामिच्छति, आर्तिसंबद्धं द्रव्यं उपपादाभिधेयं पञ्चशरावस्य कारणं, इत्युपक्रमे आर्तिविशिष्टस्य हविषो निमित्ततयाभिधानात्। अत आह– ) ' यदि उभयशब्दस्य आर्तिना सम्बन्धो नेष्यते हविषोऽपि मा भूत् संबन्धः इति, विशेषणशब्देन संबन्धमभिवदे '। ( अयमवतरणस्थो ग्रन्थः लिखिते मुद्रिते च टुप्टीकाग्रन्थे उपलभ्यते। तन्त्रवार्तिके तु नायं ग्रन्थ उपलभ्यते। अत्र हि भाष्यपङ्क्तिरेव व्याख्याता इति। तत्र तु अत्र स्थाने इत्थं पङ्क्तिः– ' यदि उभयशब्दस्य स्वरूपेण हविर्विशेषणशब्देन सम्बन्धमभिधत्ते, तेन आर्तिमात्रमेव हविःसम्बन्धानपेक्षं निमित्तं प्राप्नोति इत्यभिप्रायः। ननु न तन्मात्रस्य निमित्तता घटते, नित्यत्वात्। अतः कथमिदं चोद्यम्, अत आह–' इति )। क्रियापदगतो निमित्तत्व प्रतिपद्यते इति विवेकमगृहीत्वा चोद्यते। ( निमित्तविशेषणे वाक्यभेदाभिधानात् आर्तिहविषो रन्यतरेण अन्यतरस्य विशेषणे वाक्यभेदात् उभयपदस्य निमित्तान्तर्भावः, इतरयोरनन्तर्भाव इति विवेकमगृहीत्वा चोदितवानिति ) ' गृह्णीमहे हविषा विशेषण ' इति ( सिद्धान्तभाष्यम्। तदभिप्रायमाह— ) हविरार्तिसम्बन्धादृते निमित्तप्रत्ययाभावः। ( तेन ) हविर्विशेषणमिति। परपक्षः उभयथा ( अपि विशेषणत्वे विशेष्यत्वे च ) निराक्रियते इति ( मत्वा अनादरात् ) हविर्विशेषण ब्रवीति ( सर्वथा केवलयोः निमित्तत्वनिराकरणसिद्धेः )। परमार्थतस्तु आर्तिरेव हविषो विशेषणम्। ' तथा हविरार्तिसम्बन्धनिर्वृत्तिः निमित्तं पञ्चशरावस्य। शक्नोति हि श्रुत्वा तत्सम्बन्धं कर्तुं, हविषमसंबन्ध ■ वाक्येन ब्रूयात् ' ( अस्य भाष्यस्याभिप्रायमाह– ) कर्तव्यतावचनः ( विधिप्रत्ययः ) यस्मात् परः श्रूयते तस्यैव ( परमार्थतः श्रुत्वा ) कर्तव्यतामाह। स च ( यागः ) कारकैर्विना नात्मानं प्रति लभते इति ( तदर्थं ) कारकेष्वपि ( विधिः ) व्याप्रियते। फलनिमित्ते ( अपि ) क्रियया ( नैमित्तिक्या ) आकाङ्क्षिते, इति ते प्रति क्रियां विदधाति ( तेन कारकवन्निमित्तानां विधिनैव अपेक्षितत्वात् विषयः )। यत् ( तु ) हविषो विशेषणं ( उभयत्वं ), तत् नासौ ( क्रिया ) न तत्साधनं इति ( विधि– )प्रत्ययेन न परामृश्यते। ( ननु उभयत्वविशिष्टं हविः निमित्तं भवतु, न तु आर्तिविशिष्टम्। अत आह– ) एवं चेत् आर्तिविशिष्टेन हविषा निमित्तप्रत्ययः उपजायते। नैमित्तिकप्रयोगवचनेन ( निर्वपेत् इत्यनेन ) तावन्मात्रस्यैव अपेक्षितत्वात्। यदन्यत् ( उभयमिति निमित्तसंनिपाति ) पदान्तरमुपादीयते, तत् विशिष्टिमात्रात् ( पर्यवसिते विधौ पश्चादागच्छत् ) वाक्यं ( भवति )।

( भाष्यव्याख्यानान्तरमाह– ) **अथवा** आर्च्छेद् इति ( निमित्ताभिधायी लिङ्शब्दः ) यस्मात् परः श्रुतः, तस्य ( एव आर्त्यर्थस्य श्रुत्या ) निमित्तभावमाह। तत्र केवलश्रुतिपरिग्रहे ( सति आर्तिमात्रस्य नित्यत्वेन ) निमित्तभावस्थापने इति आर्तिना हविषि विशेष्यमाणे ( अपि ) श्रुतिर्न ( अतीव ) हीयते, यथा धात्वर्थे अन्यत्र विधीयमाने ( व्रीहीन् प्रोक्षति इत्यत्र नास्त्येव श्रुतिहानिः )। हविरुभयसम्बन्धे तु न धात्वर्थो विधीयते ( निमित्ततया नाभिधीयते ), न सोऽन्यत्र ( नान्यविशेषणतयाऽपि निमित्त भवतीत्यर्थः )। तस्मात् उभयपदं निमित्तकर्तव्यतावचनेन ( आर्च्छेत् इत्यनेन ) नापेक्षितं, न ( अपि ) नैमित्तिकेन ( निर्वपेत् इत्यनेन ), अत अविवक्षितम्। ' अथ कस्मात् न पदद्वयविशिष्टा आर्तिः निमित्तं प्रतीयते इति ' ( इत्यादि ' तत उभयविशिष्टा आर्तिर्निमित्तं इति गम्यते ' इत्यन्तं चोद्यभाष्यं व्याचष्टे– ) यथा हविःशब्दाम्नानात् ( आर्तिहविषोः ) विशेषणविशेष्यभावः परमार्थश्रुतित्यागेन ( अङ्गीक्रियते ), एवं उभयपदाम्नानात् यादृशी श्रुतिः ( तद्बाधेन समगति ) तादृश्येव ग्राह्या। तस्मात् आर्तिः ( न केवलं हविर्विशिष्टा किंतु ) द्वे अपि ( हविरुभयत्वे ) इतरेतरयुक्ते विशेष्येते। ( तदेव 'उभयविशिष्टा आर्तिः' इति भाष्य संकल्पार विशिष्टपदं, आर्तिविशिष-

फाद्र्थस्य नार्ध्वतिना संबन्ध इत्युक्तं– ) तदयुक्तम् । अनेन वाक्येन ( ' यस्योभय हविरार्तिमार्छेत ' इत्यनेन पूर्वमेव आर्ति– ) सम्बन्धित्वेन अवधृतत्वात् । अपिच उभयशब्दोऽपि हविषा सम्बध्यते, न हविःस्वरूपेण ( आनर्थक्यप्रसङ्गात् ), किंतु येन ( रूपेण ) आर्त्याश्रयो हविः, ( तेन रूपेण सम्बध्यते ) । तस्मात् आर्त्या अनुरक्तेन हविषा सम्बध्यते । यथा व्रीहिषु प्रोक्षणं अपूर्वीयत्वेन ( सम्बध्यते, न व्रीहिरूपेण । आक्षेपमुपसंहरति– ) एवं चेत् उभयविशिष्टा आर्तिः इति युक्तम् ।

उच्यते । तत्र ( प्रोक्षणे ) प्रकरणात् अपूर्वीयत्वता शक्या दर्शयितुं व्रीहिस्वरूपे आनर्थक्यात् । इह तु प्रकरणस्थानीयस्य ( प्रमाणान्तरस्य ) अभावात् अशक्या रचयता । पूर्वं आर्तिना ( हविष. ) सम्बन्ध॰, ततः तदनुरक्तस्य ( आर्त्यनुरक्तस्य ) उभयेनेति, एवं न रचना भवेत् । एवं च ( सति ) हविषो द्विरुच्चारणात् वाक्यभेदः । ( आर्तिसम्बन्धाय प्रथममुच्चारणं, ' यत् हविरार्त् आर्तेत् ' इति । तत. तदनुरक्तस्य उभयसम्बन्धाय पुनरुच्चारणं ' यत् आर्तं हवि, तच्चेदुभयं ' इति । भाष्य व्याचष्टे– ) यत्र ( पूर्वोक्त-न्यायेन उभयपदस्य ) आर्त्यनुरागे निराकृते ' अथोच्येत आर्तिविशिष्टेन हविषा उभयस्य संबन्ध. ' इत्यनेन ( भाष्य– ) ग्रन्थेन ( आर्त्या– ) अनुरक्तेन हविषा संबन्धः पक्षान्तरं भवतीति । ( उच्यते ) एवं च ( सति ) पूर्वदोषद्वयं परिहृतं भवति, ( दोषद्वयमाह– ) न आर्त्यैतिना ( उभयस्य ) संबन्ध., ( किंतु ) शुद्धेन हविषा इति । इतर. ( █ सिद्धान्तवादी ) आह, ' न आर्च्छेत् ( इत्ययं शब्द. ) हविर्विशेषणतया समादीयते ' इति । ननु एतदयुक्तं आर्तिर्हि विशेषयन्ती निमित्तता प्रतिपद्यते । विपरीते विशेषणविशेष्यभावे अवश्यंभावित्वात् आर्तेर्निमित्तत्वप्रसङ्गात् निमित्तव्याघात । उच्यते । नाय ( आर्ते ) हविर्विशेषणत्वनिराकरणपरः ( ग्रन्थ. ), किं तर्हि पक्षान्तराभिप्रायेण । हविर्न विशेषयति । ( तदेव विवृणोति– ) कथं नु ( नाम ) उभयपदेन हविः संबध्येत इत्यनेन अंशेन विशेषयति ।

' अथ हविराकृतिलक्षितेन पदेन ' ( इति भाष्ये ) उभयं इत्यध्याहारः । अस्मिन् पक्षे हविर्विशेषणं, उभय विशेष्यम् । तदुच्चारणकाले हविरनुरक्तं उभय ( उभयपदं ) आर्च्छतिना सम्बध्यते । एवमपि स एव ( पूर्वोक्तो ) वाक्यभेदः ( उभयशब्दस्य द्विरुच्चारणात् ) ।

( ' आह यथैव आख्यातार्थप्राधान्ये ' इत्यादेः ' उभयहवि.शब्दौ आर्तिविशेषणार्थमुच्चार्येयाता ' इत्यन्तस्य भाष्यस्याभिप्रायमाह– ) तत्र ( वक्ष्यमाणा ) वचनव्यक्तीः उपन्यस्यन् आख्यातस्य गुणप्रधानविवेकमाह । प्रधानभूते ( विधेये ) आख्याते विशेषणं विवक्षित, गुणभूते ( तु ) अविवक्षितम् । ( भाष्यस्य तात्पर्यार्थमाह– ) शब्दद्वयेन विधीयमानं परार्थमुच्चार्यते । तेनायं ( भाष्यस्य– ) अर्थः, यत्र आख्यातार्थः स्वविधानार्थमुच्चार्यते तत्र विवक्षित विशेषणं, यत्र ( तु ) परविधानार्थमुच्चार्यते यथा ' दध्ना जुहोति ' इति दधिसम्बन्धविधानार्थं होम उच्चार्यते, तत्र द्वितीयपदसंबन्धो नास्ति, वाक्यभेदप्रसङ्गात् । एवं विवेके कथिते वचनव्यापारः उपन्यस्यन्ते । ( ' अथ पुनरुच्चारणं न क्रियते ' इत्यादिना भाष्येण ) प्रथमं हवि शब्द॰ लभ्यते ( तत्र॰ शब्दात् साधारणपर्यायात् ' तत्करोति तदाचष्टे ' इति णिचि कर्मणि रूपम् । हविःशब्दस्य आर्त्युभयशब्दाभ्यां सम्बन्ध संबन्धं प्रदर्शयते इत्यर्थः ) ' एवमुभयशब्दो यदि आर्छतिना संबध्येत न हविर्विशिष्ट स्यात् ' इत्यनेन ( भाष्येण ) आर्तिपदं लभ्यते । ' अथ हविःशब्देन संबध्येत ' इति ( इत्यादिभाष्येण ) उभयमिति अध्याहृत्य उभयशब्दः लभ्यते । ( सर्वत्र दूषणमाह– ) अतो दोषो वाजपेयाधिकरणोक्त. ( आहुतिलक्षण । १।४।९।१–८ ) ।

शा— उभयथापि पक्षान्तरः इति प्राप्ते, उच्यते ' यच्छब्ददोषकर्म वाक्यभिन्नं प्रयच्छति । तावद्भाष्यं ततोऽन्यत्तु श्रुतमप्यविवक्षितम् ॥' ...यथैव हवि.शब्दः आर्च्छेत् इत्यनेन आख्यातेन संबध्यते, तथा उभयपदमपि असमस्तत्वात् तेनैव संबध्यते, न हविषा, नामपदानां परस्परासंबन्धात् आख्यातेन संबन्धात् । ... तस्मात् हविरार्तिमात्रं निमित्तम् ।

निमित्तश्रुत्युपपत्तेरन्यतरपदस्य च आधानवाक्यगत-पुम्स्त्वस्येव अनुवादत्वेनापि उपपत्तेश्चेति द्रष्टव्य.।

मण्डन— ' आर्ते हविष्येकतरेऽपि यागः।'

शंकर— ' उभयार्थविवक्षा स्यात्।'

● आर्तिवाक्ये ( यस्योभयं हविरार्तिमार्च्छेत् ) तात्पर्यग्राहकस्य अभावात् वाक्यभेदपरिजिहीर्षया कर्मान्तरविधिरेव न्याय्य। बाल. पृ. ११४–११५.

● आर्त्यधिकरणे ( आर्तिवाक्ये ) उभयशब्दस्य अविवक्षा। वाक्यार्थ. पृ. २०. ● यागसम्बन्धात् प्राक् निमित्तत्वमेव नोपजायते, भवति तत् निमित्तस्यापि विशेषणम्। यथा आर्त्यधिकरणे वक्ष्यते ' मुख्यामहे हविषा विशेषण ' इति। तस्मान्न विशिष्टानुवाददोषः इति। वा. २।३।१।१ पृ. ५७१.

● आर्त्विज्य निन्दितमिव। ' षट्कर्मैको भवत्येषां त्रिभिरन्य प्रवर्तते। द्वाभ्यामेकश्चतुर्थस्तु ब्रह्मसत्रेण जीवति॥' इति उक्तयोऽन्योऽ्वश्शालीनयायावरयोश्चतुष्टयस्य क्रमणेन अध्यापनजीविनः चतुर्थयोक्त्या आर्त्विज्याध्यापनकर्मद्वयजीविनः अपकृष्टत्वकथनेन आर्त्विज्यनिन्दा कृता। तु ३।७ पृ २८. ● आर्त्विज्यं ब्राह्मणानामेव नेतरयोर्वर्णयो.। भा. १२।४।१५।४१. ● आर्त्विज्य याजमानादन्यत्। वि. १२।४।१५ ● आर्त्विज्ये यजमाना: एव स्यु: सत्र, नान्ये। भा १०।६।१५।५३.

● आर्थवादिकफलप्रयुक्त ' नेक्षेतोद्यन्तमादित्यं ' इत्यादि। प्रजापतिव्रतेषु पर्युदासः। भाट्ट ४।१।२.

● आर्थवादिकफलपरत्वं रात्रिसत्रस्य। भा ४।३।८। १७–१९.

● आर्थिकी व्यवस्था। अन्यतरकोटिव्यवस्थया कोटयन्तरस्य आर्थिकी व्यवस्था भवति। साऽपि भावविषया अभावविषया चेति द्विविधा। तत्राद्या यथा ' आग्नेयो वै ब्राह्मणो देवतया, स सोमेनेष्ट्वा अग्नीषोमीयो भवति ' इति अग्नीषोमीयपुरोडाशे कृतसोमयागपुरुषविषयत्वेन व्यवस्थापिते, अर्थात् तदभाव. अकृतसोमयागपुरुषविषयत्वेन व्यवस्थितो भवति। ' पूर्वेद्युरमावास्यायां वेदिं करोति ' इत्यमावास्यायां पूर्वेद्युर्वेदिकरणे व्यवस्थापिते, अर्थात् हविरभिवासनोत्तरं वेदिकरणं पौर्णमास्यां व्यवस्थितं भवति। तदिदमुदाहरणद्वयं पञ्चमे सिद्धं ' तथाऽपूर्वं ' ( ५।१।१६।२९ ) इत्यत्र पूर्वं, ' उत्कर्षाद् ब्राह्मणस्य ' ( ५।४।४।१०–१४ ) इत्यत्रोत्तरम्। बाल पृ. १९–२०.

● आर्थी परिसंख्या द्विविधा, प्राप्तपरिसंख्या अप्राप्तपरिसंख्या चेति। तत्र प्राप्तपरिसंख्या त्रिदोषा अप्राप्तपरिसंख्या च तद्धीना। सा च पञ्चतः परिसंख्येति गीयते। तत्राद्या. भाष्यवार्तिकोक्ते सिद्धान्ते उदाहरणं नास्त्येव। पूर्वपक्षे तु गृहमेधीये पञ्चमे पक्षेऽस्ति। भाष्यवार्तिकमते तु सिद्धान्तेऽपि क्व निदर्शी कृता, यथा दशमे ( १०।५।१३।५३–५४ ) अतिरात्रे द्विरात्रे श्रुतं ' वैराजस्य पूर्वेऽहन् साम भवति षोडश्युत्तरे ' इति। तत्र द्विरात्रोत्तमाहाना अतिरात्रसंस्थान् प्रकृत्यतिदेशतः षोडशिविकल्पे प्राप्ते, ' उत्तरेऽहन् द्विरात्रस्य गृह्यते ' इति वाक्यान्तरेण अनारभ्याधीतेन नियतः षोडशी इति ' उत्तरे ' इत्यनेन अतिरात्रे द्विरात्रे एव परिसंख्यायते। तेन द्विरात्रान्तरे विकल्पः इति भाष्यकारादिप्रोक्तः सिद्धान्त.। शबरस्वामिभिस्तु परिसंख्या नाङ्गीकृता विधेयत्वात्। वैराजसविधेषु अर्थवादः ' षोडश्युत्तरे ' इति इत्यङ्गीकृतमिति। अतदर्शनेऽपि. इत्यपि न प्राप्तपरिसंख्या। यद्यपि ' न वा परिसंख्यानात् ' ( ३।७।१६।३३ ) इति सूत्रकृता तत्र परिसंख्यात्वमेवोक्तं, भाष्यकृता च तथैव व्याख्यातं, तथापि वार्तिककृता अधिकरणान्ते तथाद्य श्रुतेः तत्संहारार्थतैवोक्ता। तदेवमुपपादितमस्माभिः शास्त्रदीपिकाप्रकाशे। तस्मात् प्राप्तपरिसंख्योदाहरणं स्वार्तमेव ' पञ्च पञ्चनखा भक्ष्या. ' इति। अप्राप्तपरिसंख्योदाहरणं तु ' इमामगृभ्णन् ' इत्येव। बाल. पृ २५

● आर्थी भावना। आख्यातांशेन आर्थी भावना उच्यते। ननु केय आर्थी भावना? यत्नव्यापार इति चेत्, यागादेरपि तद्व्यापारत्वेन भावनात्वापत्ते। न चेष्टापत्ति.। तस्य मद्यार्थत्वेन प्रत्ययार्थत्वाभावात्। इति चेत्, ( न्यायसुधाकृन्मतमाह– ) अत्राहुः। सत्यं न यागो भावना, किंतु स्वर्गेच्छाजनितो यागविषयो यः प्रयत्न, सा भावना। स एव च

आख्यातांशेनोच्यते । 'यजेत' इत्याख्यातश्रवणे 'यागेन यजेत' इति प्रतीतेर्जायमानत्वात् । यश्च प्रयत्नपूर्वकं गमनादि करोति, तस्मिन् 'देवदत्तो गमनं करोति' इति करोतिप्रयोगदर्शनात्, वातादिना स्पन्दमाने तु 'नायं करोति, किंतु वातादिना अस्य स्पन्दो जायते' इति प्रयोगात् करोत्यर्थस्तावत् प्रयत्नः । करोतिसामानाधिकरण्यं च आख्याते दृश्यते 'यजेत– यागेन कुर्यात्' 'पचति– पाकं करोति' 'गच्छति– गमनं करोति' इति । अतश्च करोतिसामानाधिकरण्यात् प्रयत्नस्य आख्यातवाच्यत्वम् । न च 'रथो गच्छति' इति प्रयोगानुपपत्तिः, रथे यत्नाभावादिति वाच्यम् । योद्धृ-अश्वगतं प्रयत्नं रथे आरोप्य प्रयोगोपपत्तेः । यन्मतेऽपि अन्योत्पादनानुकूलं व्यापारसामान्यं भावना, तन्मतेऽपि रथे गमनातिरिक्तव्यापारानुपलब्धेः 'रथो गच्छति' इति प्रयोगस्य औपचारिकत्वमेवेति । अतश्च यत्न एवार्थी भावना । यथा आहुः 'प्रयत्नव्यतिरिक्ताऽऽर्थी भावना तु न शक्यते । वक्तुमाख्यातवाच्येह प्रस्तुतेत्युपरम्यते ॥' इति ।

(मिश्रमतमाह– ) अन्ये त्वाहुः 'भवितुर्भवनानुकूलो भावकव्यापारस्तावत् भावना । यस्मिन् व्यापारे कृते करणं फलोत्पादनाय समर्थं भवति, तादृशो व्यापार इति यावत् । स एव चाख्यातार्थः । 'कुठारेण छिनत्ति' इत्याख्यातश्रवणे हि भवत्येवादृशी मतिः 'कुठारेण तथा व्याप्रियते, यस्मिन् व्यापारे कृते कुठारात् छेदनं भवति' इति । एवं 'यजेत स्वर्गकामः' इत्यस्यायमर्थः 'यागेन तथा व्याप्रियेत, यस्मिन् व्यापारे कृते यागात् स्वर्गो भवति' इति । स च व्यापारः क्वचित् उद्यमननिपातनादिः, क्वचिच्च अन्यव्याघातादिः इत्याख्यातार्थस्य कर्मभागाकाङ्क्षायां विशेषरूपेण पश्चादवगम्यते, अन्योत्पादनानुकूलत्वेन सामान्यतस्तु आख्यातादेव । 'रथो ग्रामं गच्छति' इत्यत्रापि आख्यातेन ग्रामप्राप्त्यनुकूलो व्यापार एव प्रतीयते, 'रथस्तथा गमनेन व्याप्रियते, यस्मिन् व्यापारे कृते गमनात् ग्रामप्राप्तिर्भवति' इति प्रतीतेः । न त्वत्र गमनमात्रमाख्यातार्थः, तस्य धातुना उक्तत्वात् । तत्र 'कोऽसौ व्यापारः' इत्यपेक्षायां पूर्वापरावान्तरदेशविभजनसंयोजनरूपः इति पश्चादवगम्यते, 'पूर्वेण प्रदेशेन विभज्य, उत्तरेण संयुज्य रथो ग्रामं गच्छति' इति प्रयोगात्, 'उद्यम्य निपात्य कुठारेण छिनत्ति' इतिवत् । (चेतनकर्तृकक्रियावाचिष्वपि यतते इत्यादिषु यत्नमेव एव लक्षणाप्रसक्तिः, नास्मन्मते इत्याह–) एवं 'देवदत्तः प्रयतते' इत्यत्रापि 'देवदत्तस्तथा व्याप्रियते, यथा प्रयत्नो भवति' इति प्रयत्नानुकूलो व्यापार एवाख्यातार्थः, न तु प्रयत्नः, तस्य धातुना उक्तत्वात् । व्यापारविशेषापेक्षायां च इच्छाऽऽदिः पश्चादवगम्यते उद्यमननिपातनवत् । तथा च सर्वत्र अनुगतत्वात् अन्योत्पादनानुकूलव्यापारसामान्यमेव आख्यातार्थः, न तु प्रयत्नमात्रं, 'रथो गच्छति' 'देवदत्तः प्रयतते' इत्यादिषु तदभावात् ।

(उपपादिता हि अवयवभेदेन प्रयोज्यप्रयोजकभेदमङ्गीकृत्य भावनाप्रतीतिः वार्तिककृद्भिः भावार्थाधिकरणे । वस्तुतस्तु यथैव 'भवति' इत्यत्र भावनाप्रतीत्युपपादनं वार्तिककारीयं अतिशयार्थं, तथैव इहापि 'रथो गच्छति' इत्यादिषु तदुपपादनमतिशयार्थमेव । नहि 'रथो गमनं करोति' 'पुरुषो यत्नं करोति' 'घटो भवनं करोति' इति कस्यापि अनुभवोऽस्ति । अतः अन्योत्पादनानुकूलव्यापारत्वाकारेण व्यापारसामान्यमेव सर्वत्र आख्यातार्थः इत्येवं ग्रन्थतात्पर्यम् । ईदृशोदाहरणेषु रथाश्रितो गमनव्यापारः, पुरुषाश्रितो यत्नव्यापारः, घटाश्रितो भवनव्यापारः, इति विनैव लक्षणां बोधोपपत्तिः ।)

न चात्र औपचारिकत्वं वक्तुं युक्तं, मुख्ये संभवति तस्यान्याय्यत्वात् । करोत्यर्थोऽपि अन्योत्पादानुकूलो व्यापार एव, न प्रयत्नमात्रम् । (व्यापारत्वं शक्यतावच्छेदकं, न यत्नत्वं इत्येतावति तात्पर्यम् । अन्योत्पादनानुकूलत्वस्य तु शक्यतावच्छेदकान्तर्भावेन प्रतीतिः, आक्षेपाद्वा इत्यन्यदेतत् ) करोतेश्च चेतनाचेतनकर्तृकाख्यातसामानाधिकरण्यादिति । तत् सिद्धं अन्योत्पादानुकूले व्यापारे आर्थी भावना इति । सैव च यजेत इत्यत्र आख्यातांशेनोच्यते 'भावयेत्' इति । तस्याश्च भाव्याकाङ्क्षायां स्वर्गादिः भाव्यत्वेन संबध्यते । करणाकाङ्क्षायां

अल्पयत्नसाध्ये अकर्तृत्वव्यपदेशवत् व्यापारसाध्यत्वाविशेषेऽपि क्व चित् फलन्यूनत्वेनैव स्वल्पव्यापारसाध्यत्वात् अकर्तृव्यवहारोपपत्तेर्नासंभवी । यत्नाश्रयत्वे तुल्येऽपि चैत्राश्वयोः स्वातन्त्र्यपारतन्त्र्याभ्यां यथा कर्तृकरणव्यपदेशव्यवस्था भवति ' चैत्रोऽश्वेन गच्छति ' इति , न तु कदा चित् ' अश्वश्चैत्रेण गच्छति ' इति , तथा करोतेर्व्यापारामिधायित्वेऽपि तन्न्यायेन संभवति सा व्यवस्था । यथा च सत्यपि तदनुकूलव्यापाराश्रयत्वे तदभावविवक्षयैव संभवति कर्तृत्वनिषेधव्यवहारः, वातादिना स्पन्दमाने स्वातन्त्र्यविवक्षया अनुभवति वस्मिन्नपि कर्तृत्वव्यवहारः, तथा तदीयस्पन्देन भग्ने ' केनेदं भग्नं , अनेनैव नान्येन ' इति । अतो न व्यापारस्य आख्यातवाच्यत्वे किं चिद्बाधकं , प्रत्युत पाकानुकूलयत्नवत्त्वस्य चैत्रेश्वरयोस्तुल्यत्वात् ' चैत्रः पचति ' इतिवत् ' ईश्वरः पचति ' इति प्रयोगापत्तिः यत्नस्य वाच्यत्वे बाधिका ।

अथ इच्छाजन्यताऽवच्छेदको यत्नत्वव्याप्यो जातिविशेष एव आख्यातशक्यताऽवच्छेदकः, यत्र धात्वर्थस्य पाकादेः आख्यातार्थयत्ने चेष्टाद्विद्वारकमेव जनकत्वं संसर्गः, आख्यातार्थयत्नस्य वा प्रथमान्तपदार्थे चैत्रादौ अवच्छेदकत्वं संसर्गः, इति स्वीकृत्य ' ईश्वरः पचति' इति प्रयोगं वारयामः । नहि ईश्वरो जन्यकृतिमान् , नापि तत्कृतेः चेष्टाद्वारकं जनकत्वं, नापि कृतिजन्मनि चैत्रस्येव ईश्वरस्य अवच्छेदकत्वं इति चेन्न । तथा सति ईश्वरकर्तृकक्रियाभिधायिनां वेदपुराणेतिहासगतानां आख्यातपदानां अनुपपत्तेः । तथा अनन्यलभ्यत्वात् इति चेन्न । ' शास्त्रस्था वा तन्निमित्तत्वात् ' ( १।३।४।९ ) इत्यभोक्तेन ' पिकनेमतामरसादिन्यायेन ' ( भा. पृ. २२१ पं २०–२२४ पं ९ ) शास्त्रस्थाः पदानुसारिण्या एव व्युत्पत्तेरङ्गीकार्यत्वात् । किंच यावन्तः पाकजनका यत्नाः, ते प्रत्येकमाख्यातवाच्याः, किंवा यावतो यत्नसमुदायस्य फलोत्पादननियमः तावान् समुदायो वाच्यः ? आद्ये शतशतयत्नवत्त्वं क्व चित् पदं च तादृशसमुदायत्वमुद्दिश्य नेदृशस्त्वःप्रयोगः स्यात् ' नायमपाक्षीत् , किंतु पर एव ' इति , पाकजनकयत्नस्य द्वयोरपि सर्वाविशेषात् । द्वितीये यत्नत्वं न शक्यताऽवच्छेदकं, तस्य प्रत्येकसमाप्तत्वेन समुदायावृत्तित्वात् । अस्मन्मते तु व्यापारत्वशक्यताऽवच्छेदकत्वेऽपि फलोपहितत्वसंबन्धेन भाव्यविशिष्टस्यैव तस्य आख्यातेन प्रत्याय्यत्वात् । फलोपहितत्वस्य च व्यापारनिचयवृत्तित्वात् व्यापारत्वस्य च आद्यपरिस्पन्दप्रभृति आ फलाभावात् विततत्वात् ' भावना ' इति व्यवहारात् । कोऽसौ व्यापारः इत्याकाङ्क्षाया अन्वाधानादिआत्मकर्पणान्तपदार्थनिचयस्य ' अयमसौ व्यापारः ' इत्यन्वयकथनाच्च समुदायेऽपि व्यवहारोपपत्तेः, संभवति व्यापारनिचयगति आख्यातप्रयोगनियमः इत्यलं बहुना । अनन्तदेवः पृ. ४८५–४८७.

० आर्षी भावना । सर्वाख्यातगता अर्थभावना , तदुक्तं ' अभिधाभावनामाहुरन्यामेव लिङादयः । अर्थात्मभावना त्वन्या सर्वाख्यातेषु गम्यते ॥ ' ( शा. पृ. ३७८ ) इति ।...यजेत इत्यत्र आख्यातस्य भावयेत् इत्यर्थो भवति । तत्र ' किं भावयेत् , केन भावयेत् , कथं भावयेत् ' इत्याकाङ्क्षायां ' स्वर्गं भावयेत्, यागेन भावयेत्, अन्वाधानप्रयाजावघातादिभिः उपकारं संपाद्य भावयेत् ' इत्येवं भाव्यकरणेतिकर्तव्यतासमर्पणेन आकाङ्क्षापूरणात् प्रकरणाम्नातः सकलः शब्दसंदर्भः भावनानान्वित आख्यातस्यैव प्रपञ्चः । भाव्यार्थत्वप्रत्ययवती सेयं आर्थी भावना इत्युच्यते । या गतोऽपि शब्दभावनायाः भाव्या ।... अर्थभावना सर्वैराख्यातप्रत्ययैर्गम्यते इत्युक्तम् । तस्यां चार्थभावनायां स्वर्गस्य भाव्यत्वं कथियोगादवगम्यते । वि. २।१।१.

● आर्भवे पवमाने बृहत् पृष्ठं विश्वजिति सर्वपृष्ठे । वि. १०।६।५. ● आर्भवे प्रस्तूयमाने यजमानस्य दिशा गतिः प्रार्थयितव्या भवति सर्वस्वारे क्रतौ । भा. १०।२।२५।६१. ● " आर्भवे स्तूयमाने औदुम्बरी दक्षिणेन देशेन अहतेन वाससा परिवेष्ट्य ' ब्राह्मणाः समापयत मे यज्ञं ' इति संप्रेष्य संविशति " इति सर्वस्वारे क्रतौ तृतीयसवने यजमानस्य अग्निप्रवेशः आम्नायते । वि. १०।२।२३. ● आर्भवकाले प्रकृतौ मननीयरथघोषवचनारो युक्तः । भा. ११।३।१५।४६. ● आर्भवपवमाने अग्निष्टोमे ' स्वादिष्ठया० ' ( सामं. उत्त. १।५।१३ ) इति गायत्रः आयस्तृचः । अन्त्यस्तु जगतीच्छन्दस्कः । तत्र

गायत्रे तृचे एवागन्तूना साम्नामावापः । वि. ५।२।५.
* आर्भवपवमाने ज्योतिष्टोमगते नानास्य साम जगत्यामुत्पन्नम् । सोम. १०।-।१५. * आर्भवपवमान-माध्यंदिनपवमानयोरेव विवृद्धाविवृद्धस्तोमकक्रतुषु गायत्रीबृहत्यनुष्टुप्सु साम्नामावापोद्वापौ । भा. १०।४।११।२१-२२. * आर्भवसंज्ञक पवमानः ज्योतिष्टोमे तृतीयसवनेऽस्ति । तस्मिन् पञ्च सूक्तानि, सप्त सामानि । 'स्वादिष्ठया' इत्येकं सूक्तं, तस्मिन् गायत्र्यः तिस्र ऋचः । तासु गायत्रं संहितं चेति द्वे सामनी । 'पुरोजिती वो अन्धसः' इति सूक्तान्तरं, तत्र एका अनुष्टुप् उत्तरे द्वे गायत्र्यौ । तासु श्यावाश्वं आन्धीगवं चेति द्वे सामनी । 'इन्द्रमच्छ सुता इमे' इत्यपरं सूक्तं, तस्मिन् उष्णिहस्तिस्रः । तासु सफं नाम साम । 'पवस्व मधुमत्तमः' इति सूक्तान्तरं, तस्मिन् पूर्वा ककुप् उत्तरा सतोबृहती । तत्र पौष्कलं साम । 'अभि प्रियाणि पवते चनोहितः' इत्यन्यत् सूक्तं, तत्र तिस्रो जगत्यः । तासु कावं साम । एतेषां पञ्चानां सूक्तानां मध्ये 'पुरोजिती वः' 'पवस्व' इत्यनयोः सूक्तयोः यद्यपि द्वे द्वे छन्दसी, तथापि समासु ताःन निष्पादयितुं प्रग्रथने कृते सति एकैकमेव छन्दः सम्पद्यते । अतः गायत्री-अनुष्टुप्-उष्णिक्-ककुप्-जगतीभिः (पवमानः) पञ्चच्छन्दाः सप्तसामा च भवति । वि. ९।२।६ वर्णकं ३.

* 'आर्यास्तावद् विशिष्येरन्नदृष्टार्थेषु कर्मसु । दृष्टार्थेषु तु तुल्यत्वमार्यम्लेच्छप्रयोगिणाम् ॥' (इत्युक्त्वा अन्ते उक्तं-) 'अतः शास्त्राभियुक्तत्वादार्यावर्तनिवासिनाम् । या मतिः सैव धर्माङ्गशब्दार्थत्वप्रमा मता ॥' एतेन आर्यावर्तनिवासिष्वप्यपि 'अभियुक्ततरा येये बहुशास्त्रार्थवेदिनः । तेते यत्र प्रयुञ्जीरन् सतोऽर्थस्तत्त्वतो भवेत् ॥' इति । वा. १।३।४।९ पृ. २१९-२०. * आर्या हि शब्दैकसमधिगम्यधर्माधर्मयो. अविच्छिन्नस्मृत्या शब्दार्थतत्त्व विविच्य परिपालयन्ति । भाट्ट. १।३।८ वर्णकं २. * आर्याणां यत्कोशकेदारीवाचकं शब्देन चोरघातेनोद्दतं, तद् ग्राह्यमिति । (ग्राम्यशब्दस्यार्थोऽग्राह्यः) । भा. १०।१।६।४८. * आर्यप्रसिद्धया अनिरोधे म्लेच्छप्रसिद्धार्थस्यापि प्रामाण्यं पिकनेमतामरसादिशब्देषु । भाट्ट. १।३।५. * आर्यप्रसिद्धया निर्णीयमानस्यैवास्या सर्वसिद्धिः (शब्दार्थसिद्धिः) । शा. १।३।५ वर्णकं २ पृ. ३३. * आर्यप्रसिद्ध्या यवशब्देन दीर्घशूकाः (यवतनः), वराहशब्देन सूकरः, वेतसशब्देन अप्सुजो वञ्जुलो ग्राह्यः, न तु म्लेच्छप्रसिद्धया प्रियङ्गुः, काकः, जम्बूश्च । भा. १।३।४।८-९.

* आर्यम्लेच्छाधिकरणम् । 'यववराहाधिकरणं' एवेदम् । इति तदेव द्रष्टव्यम् । के. १।३।५.

* आर्यावर्तः कृष्णमृगसञ्चरणोपलक्षितः चातुर्वर्ण्यनिवासस्थानभूतो देशः । वा. १।३।३।७ पृ. २१४. * आर्यावर्तनिवासिनः प्रमाणं इतरेभ्यः आचारेषु । भा. १।३।२।३ पृ.५८७, * आर्यावर्तनिवासिन राजानः जनपदपुरपरिरक्षणे तदभीद्दरणे (जनपदपुरेभ्यः कण्टकोद्धारे) प्रयुञ्जते । २।३।२।३ पृ. ५८०, * आर्यावर्तनिवासिनां शब्दार्थोपायेषु अभियुक्ततानां अभियुक्ततरा कर्माण्यनुतिष्ठता अन्त्यजनपदवासिभ्यो म्लेच्छेभ्यः समीचीनतर आचारो भवति । २।३।२।१ पृ. ५८१

* आर्षज्ञानस्य 'अहं मनुरभवं सूर्यश्च' इत्यादौ अस्मदर्थज्ञानहेतुत्वेन अर्थज्ञानोपायत्वम् । सु पृ १११. * आर्षप्रयोगेण सार्वलौकिकेन असार्वलौकिकम्लेच्छप्रयोगबाधः । पृ १०९.

आर्षेयं वृणीते इति यजमानपूर्वजा एव ऋषयः ॥

दर्शपूर्णमासयोः 'आर्षेयं वृणीते' इति श्रुतम् । तत्र 'ऋत्विजो वृणीते' इति वरणश्रवणस्य ऋत्विजो विशेषणमार्षेयपदं ऋषिपदस्य 'ऋतुरूपमृषिणा (ऋक्सं. २।२४।१२) 'मन्यते वर्षो' (पा० ४।६।९६) इति श्रुतिस्मृत्यो प्रयोगदर्शनात् अविच्छिन्नवेदार्थविज्ञानानुष्ठानशीलपूर्वपुरुषकत्वं बोधयति । 'अथ देवा. योऽनूचान. ओमित्यभ्यापि वेद, एष वै ब्राह्मण ऋषीणामार्षेयो, यन्त्वधुनैव वै पितृमान्, पैतृमत्य आर्षेयो मन्त्रकृतान्' इति व्यपदेशात् तादृशचं ऋत्विजो वरणं 'धार्मिको ब्रह्मा' इत्यादिवत् । इति प्राप्ते, 'यजमानस्यार्षेयान्प्रवृणीते हि देवाः पुरुषमनुरक्षन्ते' इत्यादिना

स्मृत्यधिकरण( १।३।१ )न्यायसुधायाम् ( पृ. १२७ )। अथ विधिः दृष्टार्थो व्यवस्थाविधिः । बाल. पृ. २१.

* आर्हतः । स्यादस्ति, स्यान्नास्ति, स्यादस्ति च नास्ति च, स्यादवक्तव्यः, स्यादस्ति चावक्तव्यश्च, स्यान्नास्ति चावक्तव्यश्च, स्यादस्ति च नास्ति चावक्तव्यश्च, इति सप्तभङ्गीनयवादी आर्हतः स्याद्वादी। स्यान्छब्दस्य आख्यातप्रतिरूपकाव्ययस्य कथंचिच्छब्दार्थवाचित्वाभ्युपगमात् अनेकान्तवादी बद्धानां संसारिणामात्मनां शरीरादत्यन्तव्यतिरेकाभावेन तन्मिश्रत्वात् मूर्तत्वं वदति । सु. पृ. ६१६. * आर्हतपक्षेण शरीरपरिमित आत्मा अभ्युपगम्यते । तत्रापि यद्दु अदृष्टं करणीयम् । ' सद्भावोऽपचयानां च तथा तेषामनन्तता । संश्लेषश्च विनाऽन्येन तद्भावेऽपि च नित्यता ॥ अतिसंकोचविस्तारौ पुत्तिकाहस्तिदेहयोः । अन्तराभवसंचारस्तद्भावादानकारणे ॥ ' वा. २।१।१।५ पृ ४०२.

* आलभतिः अस्माभिः प्राणिसंयुक्तो यजिरभिधानो दृष्टः । भा. २।३।६।१६. * आलभतिः यजिः । ' द्रव्यदेवतासंबन्धान्यथाऽनुपपत्त्या पूर्वमस्माभिः यजिः कल्पितः. (आलभतेः यागार्थकत्वं स्वीकृतम्) नादृष्टपूर्वकत्वा आलम्भनाभिधानेन व्यभिचारिणानुमानाभासेन वा'। वा. २।३।६।१६. * 'आलभतिः यत्र प्राणिसंयुक्तः, तत्र यागानुमानम् ' इति व्याप्तिः । सु पृ. ९३३, * आलभतेः स्पर्शनाभिनोऽपि प्राणिसंयुक्तस्य यागवाचित्वकल्पना न विरुद्धा । पृ ९३३.

* आलभतिचोदना अपूर्वकर्मणो विधायिका, न तु अवद्यतिचोदितानां कर्मणां समुदायस्यानुवादः । ' अग्नीषोमीयं पशुमालभेत ' ' हृदयस्याग्रेऽवद्यति अथ जिह्वाया अथ वक्षसः ' । भा. २।२।६।१७–२०, * आलभतिचोदनासामान्यात् पशुषु दैवस्य विप्लवः । ८।१।६।१३.

* आलभतिवत्त्वं पशुप्रकृतिलिङ्गम् । बाल. पृ. ११९.

* आलम्भः वत्सस्य संस्कारः । अग्निहोत्रे दोहाधिकारे ' वत्समालभेत ' स्पर्शमात्रमभिधीयते, न यागविधिः । वत्सालम्भाधिकरणे इदम् । वि. २।३।६. * आलम्भः स्पर्शः ' ईषामालभेत ' इत्यत्र । २।३।८. * आलम्भस्य-पश्वालम्भस्य शुक्लश्वेतो लोहितनिरस्तं च न प्रयोजकं, किंतु प्रतिपत्तिः । (शुक्ललोहिताधिकरणे इदम् )। भा ४।१।१२।२७.

※ आलम्भनिर्वापन्यायः । आलम्भनिर्वापाधिकरणम् । ईषाऽधिकरणम् । ईषाऽऽलम्भाधिकरणम् । दार्शपौर्णमासिकनिर्वापालम्भन्यायः । निर्वापालम्भन्यायः । वायव्यसौर्ययोर्गाक्ये यागविधिः, न तु गुणविधिः द्रव्यदेवतासंयोगात् ॥

संस्कारश्चाप्रकरणेऽकर्मशब्दत्वात् । ६।३।५।१२॥

भाष्यं— अनारभ्याधीयते किंचित् ' वायव्यं श्वेतमालभेत भूतिकामः ' ' सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः ' । दर्शपूर्णमासयोरपि आमनन्ति ' ईषामालभेत ' 'चतुरो मुष्टीन्निर्वपति' इति । ( अत्र प्रथमतृतीयवाक्ययोः द्वितीयचतुर्थवाक्ययोश्च एकवाक्यता वक्ष्यति पूर्वपक्षः ) तत्रायमर्थः सांशयिकः किं दार्शपूर्णमासिके आलम्भे आलम्भो गुणविधिः, दार्शपूर्णमासिके च निर्वापे निर्वापो गुणविधिः, उत न प्रकृतिमपेक्षते इतरश्च इतरश्चेति । यदा न प्रकृतिमपेक्षते तदाऽपि किं यागदुघे, उत यजिमती एते कर्मणी इति । किं तावत् प्राप्तं ? प्राकृतयोः आलम्भनिर्वापयोः गुणविधी इति । कुतः ? अकर्मशब्दत्वात् । नात्र कर्मणो विधायकः शब्दोऽस्ति । ननु आलभेत, निर्वपेत् इति च, नैतौ विधातारौ । अविदितस्यार्थस्य शब्दो विधायको भवति । न चैतयोरविदितोऽर्थः, आलम्भः कर्तव्यः, निर्वापः कर्तव्य इति । तस्मादनुवदितारौ । किमर्थमनुवदतः ? आलम्भनेऽनेन विधातुं, निर्वापे च चरुम् । तस्मात् नालम्भान्तरं निर्वापान्तरं च । प्राकृतयोरेव गुणविधी इति ।

वा— न कस्य चिदपि कर्मणः प्रकरणे श्रूयते ' श्वेतमालभेत ' ' चरुं निर्वपेत् ' इति । तत्र संदेहः किं अनारभ्यवादाना प्रकृत्यर्थं सत् प्राकृतयोरेव आलम्भनिर्वापयोः श्वेतचरू गुणौ विधीयेते, किंवा कर्मान्तरे यागच्छ्रुते, उत यजिमती इति । तत्र अनारभ्याधीतचोदनायाः संदर्शीचार्येनकत्वप्रथमपक्षपरिहृतनिराकरणार्थ. )

कथ ? यदि तावत् आलम्भनिर्वापौ प्रकृत्य श्रूयेयाताम्, ततः प्रकृतप्रत्ययानुवृत्तिरेव प्रबन्धेन इति कर्मान्तरशङ्का न स्यात् । अनारम्भवादे तु सति, श्वेतादिगुणस्य उपादेयत्वात् कदाचित् दूरस्थानुवादेन गुणो विधीयते, कदाचित् विपरिवृत्त्यभावात् कर्मान्तर इति जायते संदेहः । तथा 'द्रव्यसंयोगाच्चोदना पशुसोमयोः' ( २।२।६।१७ ) इत्यनेन गतप्रायमिव अत्र यजिमत्कर्मविधानं गम्यते । तत्तु प्रकृतयागाभावात् अनुवादशङ्कायामसत्या श्वेतादेश्च गुणस्य औत्पत्तिकश्रुत्यपरायुक्तेऽपि कर्मणि विधानोपपत्तेः कथं स्यात् इति पुनरुपन्यस्यते । पूर्वपक्षश्च अनयोरालम्भनिर्वापयोः अप्रकरणात् अवश्यं प्राकृतावेव ग्रहीतव्यौ इत्येवं प्रवर्तते । तल्लिङ्गकरणमपि च प्रकरणाभावात् असाधारणोपलक्षणाभावाच्च न प्राकृतयोः लौकिकव्यावृत्तरूपयोः प्रतीतिरस्ति इत्येवं भविष्यति । गुणविधिविषयत्वाच्च आलम्भनिर्वापौ गुणविधिशब्देनोक्तौ । किं तावत् प्राप्त ? यथैव अयनेषु गुणसंबन्धपरे वाक्ये कर्मविधिशब्दाभावात् अकर्मान्तरत्वं, तथा इहापि भविष्यति इति चशब्देन अभ्यादिश्यते । क्व चासौ गुणविधिः इति विषयावधारणार्थं अप्रकरणग्रहणम् । अथवा यद्यपि एतावता पूर्ववैलक्षण्येन अप्रकरणे श्रूयते, तथापि कर्मणो विधिशब्दानवबोधात् गुणार्थेव पुनःश्रुतिरिति । दर्शपूर्णमासयो. (या) प्रकृतेषा , सा श्वेतीकृत्य आलब्धव्या ( स्पष्टव्या )। निर्वापश्च चरौ कर्तव्यः, चरुपरिमितो ( ओदनशालीपरिमितो ) वा । भूतिब्रह्मवर्चसकामयोश्च ' सर्वेभ्यो दर्शपूर्णमासौ ' इत्येवं प्राप्तयोरनुवादः । तथा वायव्यं इति सर्वेषामप्यतीना वायुदेवता(क)त्वात् कथंचित् द्वैधाया एवानुवादः । सौर्यमिति च आग्नेयस्यैव तेजोदेवत्वसामान्यात् अनुवादः । तस्मात् गुणो विधीयते इति ।

यावदुक्तं वा, कर्मण. श्रुतिमूलत्वात् । १२ ॥

भाष्यं— न नैतदस्ति , प्राकृतयोर्गुणविधी इति । किं तर्हि ? आलम्भान्तरं विधीयते इति, निर्वापान्तरं च । यदि आलम्भनिर्वापौ विधीयेते, ततो न प्राकृतौ विहितौ । यदि न विधीयेते, कः प्राकृतौ लक्षयेत् 'यौ आलम्भनिर्वापौ कर्तव्यौ ' इति । ततस्तौ लक्षयित्वा श्वेतो विधातव्यो भवति चरुश्च । तौ च भूतिकामस्य ब्रह्मवर्चसकामस्य च इति द्वावपि अर्थौ विधेयौ स्याताम्, तत्र वाक्यं भिद्येत । अथवा योऽसौ विधायकः शब्दः स लक्षयितव्योपयुक्तः, इति विधायकाभावात् एकोऽप्यर्थो न शक्यते विधातुम् । अथ स एव लक्षयिष्यति, तेनैव च विधास्यते गुणः इति, न भिन्नौ विधानलक्षणसंबन्धावकल्पते । अथ प्राप्तयोरनुवादः, प्रत्ययो विधातुमिष्यते इत्युच्यते ' य आलम्भः स एतद्गुणः कर्तव्यः ' इति, तथापि न प्राकृतो लभ्येत । लौकिकोऽपि हि आलम्भोऽस्ति । प्रत्ययार्थे अनूद्यमाने प्राकृतोऽनूद्यते इति, स हि कर्तव्यो विहितो न लौकिकः । अतो न प्राकृतानुवादो घटते, इति यावदुक्तं आलम्भमात्रं निर्वापमात्रं च अपूर्वं कर्तव्यम् । कर्मण. श्रुतिमूलत्वात् । श्रुतिमूलं हि कर्म इत्युक्तं ' चोदनालक्षणोऽर्थो धर्मः ' इति ( १।१।२।२ ) । तस्मात् कर्मान्तरे ।

वा— ' यदि आलम्भनिर्वापौ विधेयत्वं न मृष्यत । ततो गुणविधित्वं स्यात् विधेयौ त्वत्र तौ मतौ ॥ ' वायव्यपदं पूर्ववदेव उपेक्ष्य फलपदपरिग्रहेण तावत् प्रत्यवस्थीयते । यदि हि आलम्भनिर्वापौ अनूद्य श्वेतचरू विधीयेते, ततः फलपदं अनर्थकमेव स्यात् । सर्वकामप्राप्त्यनुग्रहेऽपि पाक्षिकत्वात् नित्यवद्ग्रहणं निरुध्येत । विशेषणत्वे वाक्यभेदः स्यात् । अथ गुणफलसंबन्धो विधीयते, तथापि आलम्भादेः प्रकृतस्य आश्रयस्याभावात् वाक्येनैव तदुपस्थापकत्वे वाक्यं भिद्येत । गुणविशिष्टालम्भविधाने तु न कश्चिद्दोषः । तेनोच्यते ( सूत्रे ) ' कर्मणः श्रुतिमूलत्वात् ' इति । कर्मात्र विधेयत्वेन श्रुतिमूलं , न गुणः । स हि अचोदनालक्षण एव स्यात् । अथवा यावदुक्तमेव स्यात् , न यजिमत् । कुतः ? कर्मणः श्रुतिमूलत्वात् । नहि अचोदितो यजत्यर्थः अध्याहर्तुं शक्यते । न च तेन विना इह किंचित् न सिध्यति । आलम्भनिर्वापयोरेव फलवत्त्वेन प्राधान्योपपत्तेः । नहि यदेकत्र गुणभूतं दृष्टं, तेन अन्यत्र प्राधान्यं वाचनिकमपि न प्रतिपत्तव्यम् इति किंचित् प्रमाणम् । यथावचनं हि गुणप्रधानभावो, न

स्वाभाविकौ । वायव्यादिशब्दश्चात्र सर्वत्र द्रव्याणां यथा-कथंचित् देवतासम्बन्धोपपत्तेः अनुवादः । अथवा यत् केन चित् वाय्वादिभ्यः सङ्कल्पितं, तत् आलम्भादिभि-र्योज्यमानं अभ्युदयकारि भवति । विशिष्टविधानाच्च न तत्परित्यागेऽपि अतिभारः । अथवा वायुसर्वैव उद्दिश्य स्पृष्टं नियतं या इयेताकोर ईप्सिताकामिभि-र्भविष्यति । न चायस्य यागे एव देवता उद्देष्टव्या । यत्रयत्र हि चोद्यते, तत्रतत्र उद्दिश्यमाना न विरुध्यते । तस्मात् यत्किंचित् श्वेतं वायूद्देशेन स्प्रष्टव्यं इति यावदुक्त-चोदनाऽनुसारात् ( अवगम्यते ) । गुणविधिपक्षे फलपद-संबन्धे वाक्यभेदमभिधाय इदानीं तत्परित्यागं अभ्यु-पेत्यापि ब्रवीति इति ( भाष्यकारः ) 'अथवा योऽसौ विधायकः शब्दः' इत्यादि । तस्याभिप्रायः, यदिदं अनारभ्यवादाना प्रकृत्यर्थत्वमभिधास्यते ( ३।६।१।१-८ ) नैतत् मान्त्रिकम् । कथं तर्हि ? द्वारान्यथाऽनुपपत्तिकल्पितम् । न च आलम्भनिर्वापौ अन्यथाऽनुपपन्नौ, लोकेऽपि विद्यमानत्वादिति । तत्र यदि तावत् लौकिककार्यार्थं विहितत्वेन विरोध्यते, ततः अन्यविनियोगाभावात् किञ्चैव विरोद्धव्यौ, 'य आलम्भः कर्तव्यतया चोदितः' इति । तावता च उपक्षीणशक्तौ विधायके गुणविधानं नोपपद्यते । नहि असौ विधातुं लक्षयितुं च सकृदुच्चरितः समर्थः । केवल-धात्वर्थानुवादे च लोकेऽपि गुणविधित्वप्रसङ्गः । तत्र च निष्फलत्वादानर्थक्यम् । न च एतावन्मात्रेणैव विनैव प्रकरणादिभिः वैदिकालम्भनिर्वापग्रहणमुपपद्यते । तस्मात् प्रकृतप्रमाणाभावात् अपूर्वयोर्विधानमिति ।

यजतिस्तु द्रव्यफलभोक्तृसंयोगादेतेषां कर्म संबन्धात् ॥ १४ ॥

भाष्यं— यदुक्तं न प्राकृतयोर्गुणविधी इति, एतत् गृह्णीमः, यत्तूक्तं आलम्भमात्रं विधीयते, निर्वापमात्रं इति, एतदवजानीमहे । यजिमती एते कर्मणी इति । कुतः ? द्रव्यफलभोक्तृसंयोगात् । द्रव्यदेवतासंयोगात् । द्रव्यदेवता-संयोगोऽत्र विधीयते श्रुतिकामस्य ब्रह्मवर्चसकामस्य च । कथं ? नहि इदमेव उच्यते 'श्वेतमालभेत' इति । यदि हि एतावदेवोच्येत, ततः श्वेतालम्भसम्बन्धोऽवगम्येत । इह हि श्वेतं वायव्यं आलभेत इत्युच्यते । तेन श्वेतावायव्यसम्बन्धो विधीयते । यथा 'पटं वय' इति पटवयनसम्बन्धो विधेयोऽवगम्यते, 'पटं दीर्घं वय' इति पटस्य दीर्घत्वं विधीयते दीर्घशब्दप्रयोगात् । एवमिहापि मौर्यवायव्य शब्दप्रयोगात् द्रव्यदेवताऽभिसम्बन्धो विधेय इति गम्यते । इतरथा देवताशब्दः प्रमादसमाम्नातः इति गम्येत । ननु अत्रापि 'श्वेतं वायव्यं कुर्यात्, तं चाल-भेत' इति अर्थद्वयविधानात् भिद्येतैव वाक्यम् । नेति ब्रूमः । नहि आलभेत इत्यस्य अयमतिभारः, यत् द्रव्यदेवतासम्बन्धेन पुरुषप्रयत्नं ब्रूयात्, सं चालभेत इत्यर्थविशिष्टम् । श्रुत्यैव हि पुरुषप्रयत्नो निर्दिष्टो गम्यते, वाक्येन च द्रव्यदेवताऽऽश्रय इति । नात्र द्वाभ्यां वाक्याभ्यां प्रयोजनम् । यथा 'रक्तमश्वं धावय' इति । यदा गुणविधिपरं भवति वाक्यं, तदा द्वाभ्यां वाक्याभ्यां प्रयोजनं गुणद्वयविधाने । अथ 'शोणमानय' इत्युच्येत, तत्र गुणविधिपरेऽपि वाक्ये पर्यवसिते एव गुणद्वयविधानम् । श्रुत्यैव विशिष्टगुणद्रव्यस्य प्रतीतत्वात्, न भवति एकस्य वाक्यस्यातिभारः, एवमिहापीति । संबन्धश्च बहुभिः पदैर्विशिष्ट एक एवोच्यते इत्येकार्थत्वम् । विभज्यमानानि चात्र पदानि साकाङ्क्षाणि, इत्युपपन्न एकवाक्यत्वम् । न च यागमन्तरेण देवतायै द्रव्यं संकल्पयितव्य इत्येष संबन्धोऽवकल्पते । तस्मात् यजिमती एते कर्मणी इति ।

वा—'यथा फलपदं भेद्य गुणपक्षो निराकृतः । देवतापदमालोक्य तथैवालम्भमात्रता ॥' विधिताव-दुत्तरोत्तरपदानुरोधेन द्रव्यदेवतासम्बन्धसंक्रान्तः । स च अन्यथाऽनुपपत्तेः आक्षिप्तयजिक्रियः सन् विधीयते । नहि एना अन्या क्रिया संपादयितुं समर्था । यदि देवतोद्देशेन अपरित्यजन्नेव द्रव्यं आलभेत, न तत् वायव्यं कृतं स्यात् । न च प्रसिद्धवायुदेवत्यं एवं स्पष्टार्थं इत्यवगम्येत अनुष्ठानसंपाद्यत्वाद्देवतात्वस्य । तेनावश्यं वायुमुद्दिश्य श्वेतगुणकं द्रव्यं दातव्यं, अतश्च यजि-विधानमेतदिति निश्चीयते । तथा च लक्षणे करिष्यति 'यजतिचोदना द्रव्यदेवताक्रियं समुदाये कृतार्थत्वात्' (४।२।१२।२७) इति । ततश्च आलम्भनिर्वापौ चोदक-

प्राप्तौ एव अनुवदिष्येते । तत्र आलम्भविशिष्टत्वात् इति ( भाष्ये ) गौरवोपन्यासः फल्गुरेव, कथं चित् अभ्युपेत्यवादिनोपन्यस्तः इति नातीवादर्तव्यः ।

लिङ्गदर्शनाच्च । १५ ॥

भाष्यं—लिङ्गं खल्वपि एतमर्थं दर्शयति । ' सोमारौद्रं चरुं निर्वपेत् ' इति प्रकृत्य ' परिश्रिते याजयेत् ' इति परिश्रयणविधिः । एतस्य वाक्ये यजतिशब्देन मैत्रीनैनमाकरणते, यदि गजितानी एते कर्माणी । अथ प्रकृतौ गुणविधानं यावदुक्तं वा, यजतिशब्देनानुवादो नावकल्पेत । तस्मादपकरच्छामो यजिमतौ इति ।

वा — सोमारौद्रं इत्युक्ते विनाऽपि यजतिशब्देन परिश्रयणविधिपरे वाक्ये यजतिना अनूद्यमाने यजतिमत्कर्मविधायित्वं एतमादीना इत्यवगम्यते । अमी गोभीयेऽपि च अनेनैव यजिमत्तासिद्धिः । पूर्वं च एतावदेव विचारितं, किं प्रकृतानुवादित्वं, उत विधायकत्वमिति । सिद्धे तु विधायकत्वे क्रियात्मकं तत् कर्म इति एतदधिकरणाधीनमेवैतत् इत्यपौनरुक्त्यम् ।

शा— ( तत्र सिद्धान्त. ) ' द्रैवतापदवैयर्थ्यं यावदुक्तविधौ भवेत् । तेन तत्कल्पितो यागो विधेयोऽप्राप्तोऽपि सन् ॥ ' तस्मात् याग एव गुणफलविशिष्टो विधीयते ।

सोम— तत्र पूर्वत्र कर्मण. सन्निहितत्वात् फलाय गुणविधि:, इह तु अनारभ्यविधानात् प्रकरणाद्याश्रयालाभेन फलाय गुणनिष्पत्त्यसंभवात् कर्मणि गुणविधिः गुणविशिष्टकर्मान्तरविधिर्वा इतीतर्थे. इति प्रत्यवस्थानात् संगतिः । ईषा निर्वापार्थशकटावयवभूतदारुविशेषः ( धुराडी, इसाड इति भाषायाम् ) । सूत्रार्थस्तु— अप्रकरणे अनारभ्यश्रुते वायव्यादिवाक्ये दार्शपूर्णमासिकः संस्कार एवानूद्यते, न तु यागो विधीयते, कर्मणो यागस्य शब्दाभावात् इति ।

वि— ' वायव्यः श्वेत आलम्भो भूत्यै सौर्ये चरुं तथा । निर्वपेद् ब्रह्मतेजोऽर्थमीषामुष्टिनिरूपणे. ॥ गुणो श्वेतं चरुं किंवा यागवद्विहितकर्मणी । फलार्थे अथवा यागौ विशिष्टौ विहिताविह ॥ , श्वेतं वायुमुष्टीयाप्राग्नेये च दशिमे । चतुर्मुष्टकः स्यातां निर्वापतु तदाश्रितः ॥ फलदानेन वत् किं [illegible] यावच्चोदितकर्मतन् । , द्रव्यादिरूपसंपत्तेस्तार्या यागताऽऽर्थिनी ॥ '

भाट्ट— ' ईषामालभेत ' ' चतुरो मुष्टीन् निर्वपति ' इत्येताभ्या विहितयोः दार्शपूर्णमासिकयोः ईषालम्भचतुर्मुष्टिनिर्वापयोः अनुवादेन अनारभ्याधीताभ्या ' वायव्य श्वेतमालभेत भूतिकामः ' ' सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः ' इत्येताभ्या श्वेतचरुगुणौ विधीयेते आलम्भकर्मीभूता ईषा श्वेता कर्तव्या इति, निर्वापः चरुशब्दलक्ष्यस्थाल्या कर्तव्यः इति । सर्पेषुष्याणा च वायुसम्बन्धात् वायव्यमित्यनुवादः । सौर्यमिति च आग्नेयस्यैव तेजोदेवत्यत्वसामान्यात् । न तु देवताविधिः यागाश्रवणात् । तथानापि फलपदं सर्वकाम्यवाक्यप्राप्तफलप्रयोजकत्वानुवादः इति प्रथमः पक्षः । द्वितीयस्तु फलपदवैयर्थ्यप्रसङ्गात् प्राकरणिकाश्रयालाभेन न गुणफलसम्बन्धानुपपत्तेः गुणविशिष्टं यावदुक्तं आलम्भनिर्वापाख्यं कर्मान्तरमेव फलोद्देशेन विधीयते इति । सिद्धान्तस्तु वायव्यं सौर्यं इत्यादितद्धितान्तपदवैयर्थ्यापत्ते. द्रव्यदेवतासंबन्धानुमितो याग एव आलम्भनिर्वपतिधात्वनूदितो द्रव्यदेवताविशिष्टः फलोद्देशेन विधीयते इति । अतिदेशप्राप्तौ च आलम्भनिर्वापौ न विधीयेते ।

मण्डन— ' वायव्यं यजिमत् कर्म । '

शंकर— ' वायव्यादौ यजिविधिः । '

• आलम्भनिर्वापन्यायस्य स्वरूप तु ' यदि आलम्भनिर्वापौ विधीयेते ततो न प्राकृतौ तौ विहितौ, यदि न विधीयेते ततः प्राकृतौ स्याताम्, यौ आलम्भनिर्वापौ (तौ) कर्तव्यौ ' इति आलम्भनिर्वापाधिकरणभाष्योक्तेन न्यायेन कर्तव्यतावाचिना प्रत्ययेन उपलक्षणीभूता व्याकृत्यास्यविरोपम वा कर्तव्य इत्युक्तम् । सु. पृ. ११२३.

• आलम्भोत्कर्षः वाजपेये प्राजापत्यपशूना ब्रह्मसामकाले ' तान् पर्यग्निकृतानुत्सृजन्ति, ब्रह्मसाम्न्यालभन्ते ' इति । भा. ११।२।१२।२१-२३.

• आलोकस्य आलोकान्तरापेक्षायां नहि प्रमाणमस्ति । यद् पुनः नायनरश्मिअपेक्षणं, तद् उपलब्धौ,

नाभिव्यक्तौ। उपलब्धियोग्यताऽऽपादनं हि अभिव्यक्तिः, तदुत्तरकाले चोपलब्धिः। ऋजु. पृ. २२०.

* आवसथ्यः अग्निः आहवनीयाद्यन्यतमः, किन्तु लौकिक एव। संकर्ष. ३।२।२. * आवसथ्यः नामाग्निः आवसथे गृहे भवः। पञ्चाग्न्याधानपक्षे पृथगयम्। अग्नेर त्रयं. पाकः। त्रेतापक्षे तु आहवनीये एव सोऽपि ध्यायते। के.

* आवापः तन्त्र च एकादशाध्यायार्थः। तत्र आवापो नाम अधिकृत्य निर्देशः। तन्त्रं तु अनेकार्थं सकृत् करणम्। के. * आवापोद्वापौ साम्ना विद्युद्वा-विद्युदग्नीषोमेषु क्रतुषु माध्यंदिनार्भवपवमानस्तोत्रयोरेव। भा. १०।५।११।२१–२२.

※ आवापोद्वापाभ्यां अवयवानां शक्तिः इति न्यायः। वाक्यस्फोटे प्रथमतो नास्त्यंशः। तत्रापि जातिस्फोटे इत्यवधेयम्। तथा च प्रथमव्युत्पत्तेः व्यवहाराधीनतया संपूर्णस्य वाक्यस्य विशिष्टे प्राथमिक-शक्तिग्रहः इति निर्विवादम्। स च 'आवापोद्वापाभ्यामवयवानां शक्तिः' इति न्यायोपक्रमेण लक्ष्यते दर्शनान्तराणां पन्थाः। शब्दकौस्तुभे १ स्फोटवादः।

* आवापिकः— किमिद आवापिक इति। आज्यभागस्विष्टकृतौ अन्तरा आवापस्थानम्। तत्र भवः आवापिकः। प्रदिरावापात् अनुयाज. तान्त्रिकः। या तु स्विष्टकृद्देवता तत्र, सैवासौ प्रधानदेवता आवापिकी। तस्मादावापिक इत्युच्यते। भा. १०।४।१९।३८.

* आवाहनं न कर्तव्यं सौम्ये वैश्वदेवे चरौ कदाचित् समविषयतो विष्णोरुरुक्रमस्य देवताऽऽवाहनकाले। वि. १०।१।१ वर्णकं ३. * आवाहन नाग्निना वैश्वदेवे पर्वणि न कर्तव्यम्। संकर्ष. ४।४।८. * आवाहननिगदे आवाहकोऽग्निः आहवनीयः, आवाह्यश्च आज्यभागान्तदेवताः, न तु आवाह्यावाहकत्वमेकस्यैव। ४।२।८.

※ आवाहननिगदे 'आवह देवान्' इति उत्तरं ऊह्यमानानां सर्वदेवानामेव वाद ॥

'अग्ने नेमिर्देवांस्त्वं परिभूरस्यावह देवान् यजमानाय' इति मन्त्रे श्रुतमावाहनं श्रमन्देवताना स्यात्। त्वष्ट्रादीनामपि देवतात्वात् प्राकरणिकत्वाच्च। सन्निधानेन विशेषपरत्वे तु प्रयाजानामेव प्रथमं इज्यमानत्वात् तद्देवतापरमिति प्रयाजलोपे मन्त्रलोपः। इति प्राप्ते, 'ब्राह्मणानामद चैत्र मैत्रं यज्ञदत्तं च' इति लौकिकवाक्ये सामान्यवाचिनोऽपि ब्राह्मणपदस्य चैत्रादिमात्रपरत्वप्रतीतेः 'अग्निमग्न आवह' इत्याद्युत्तरवाक्येषु कीर्त्यमानानामेवैतदावाहनं न सर्वेषाम्। मकर्ष. ४।२।७.

* आवाहनमन्त्रेण देवतास्मरणेऽपि स्वाहाकारादिमन्त्रेण दार्ढ्यार्थं पुनः स्मरणम्। भाट्ट. १०।१।९ पृ. २०५.

* आवाहनवत्। यथा 'आग्नेयं कृष्णग्रीवमालभेत, सौम्यं बभ्रु, आग्नेयं कृष्णग्रीवं पुरोधायां स्पर्धमानः' इत्येकत्वेऽपि अग्नेर्देवतायाः कर्मभेदात् भेदेनावाहनं क्रियते, एवं द्वादशाहे गुण्याविकृतौ सर्वेषामह्नां सुब्रह्मण्याया उपलक्षणं कर्तव्यं 'द्वादशाहे त्रयोदशाहे' इति। भा. ११।४।७।१०.

* आवाहनादिनिगदेषु देवताविशेषपद विशेषणमेव पठनीयं विधिवाक्ये देवताविशेषवाचकपदस्य सविशेषणत्वे। भा. १०।४।१४।२६–२९, * आवाहनादिनिगदेषु विभिन्नतद्धितेनैव देवताप्रकथनं कर्तव्यं दर्शपूर्णमासादौ। १०।४।१२।२३–२४, * आवाहनादिनिगदेषु विधिगतसूर्यादिपदेनैव देवताप्रकाशनं सौर्यादिविकृतिषु। १०।४।१३।२५, * आवाहनादिनिगदेषु स्विष्टकृच्छब्दरहितेनैव केवलाग्निशब्देन अभिधानं अग्नीषोमीयपशुपुरोडाशाङ्गस्विष्टकृद्धोमे। १०।४।१८।३६–३७.

* 'आविर्भावतिरोभावधर्मकेष्वनुयायि यत्। तद्धर्मि, यत्र या ज्ञानं प्राग्धर्मग्रहणाद् भवेत् ॥' (श्लो. वा. प्रत्यक्षसूत्रे १५२)। अत्र न्यायरत्नाकरः। नहि रूपादिधर्मेभ्योऽन्यो धर्मी विद्यते, यो जात्यादिभिः विशिष्टो गृह्येत। रूपादिप्रचयमात्रमेव घटादिकं, सूक्ष्मसंघातमात्रमेव वनं, नान्यत्। अनुपलम्भात् उपलम्भकारणासंभवाच्च। यथा आहुः 'क्षीणानि चक्षुरादीनि रूपादिष्वेव पञ्चसु। न षष्ठमिन्द्रियं तस्य (स्वतन्त्रस्य धर्मिणः) ग्राहकं विद्यते बहिः ॥' इति। न च असत्यपि बहिरिन्द्रिये अन्तःकरणेन ग्रहणा-

मिति वाच्यम् । नत्त्व बहिरस्तात्म्यात् इति । परि-हरति–आविरिति । रक्तत्वहरितत्वादिधर्मेषु आविर्भाव-तिरोभावधर्मकेषु यत् बदरफले अवस्थाद्वयानुयायि प्रत्यभि-ज्ञायते, यद्वा पिण्डघटकपालाद्यवस्थासु अनुगतं अवस्था-वत्, यद्वा संतमसे वस्त्रकाण्ड्नौ प्रागेव शुक्लरूपग्रह-णात् गृह्यते, तत् धर्मि । नहि तदभावे प्रत्यभिज्ञा संभवति, धर्माणां भिन्नत्वात् दर्शनस्पर्शनाभ्यां च ग्रहणं इति न ग्राहकाभावः इति ।

● आवीतहेतवः नाम अपक्षव्यावृत्तिमुखेन ये साध्यं गमयन्ति यथा प्रमाऽऽदयः । ते हि निरात्मकेभ्यो घटादिभ्यो व्यावृत्ताः शरीरस्य निरात्मकत्वापोहेन सात्मकत्वं गमयन्ति । गूढार्थविवरण. पृ. १०५.

● आवृत्तपृष्ठ्यपक्षहावृत्तेरन्ते सम्पातनं, न तु प्रत्येकपक्षान्ते । भा. १०।६।१०।२९–३०.

● आवृत्तिः अग्निहोत्रादिकर्मणा, प्रदोषादिकाला-दिरूपनिमित्ताद्यनुरोधेन । भा. ६।२।८।२७–२८. ● आवृत्तिः । अनुषङ्गावृत्त्यसाधारणलक्षणं श्रुतपदस्यानु-संधानम् । अश्रुतपदस्यानुसंधानमध्याहारः । न च यथा-पेक्षया जघन्यः । मणि. पृ. ७१. ● आवृत्तिः अवघात-मन्त्रस्य प्रतिबीजं राजसूये नानाबीजेष्टौ । भा. ११।४।१३।४६, ● आवृत्तिः अहर्गणे मुख्यानामौदीनस्य सुब्रह्मण्याह्वानस्य प्रत्यहं भेदेन । ११।३।११। २२–३२, ● आवृत्तिः उद्गात्राच्छेदस्य, अहः एव, न सर्वेषां अहर्गणे । ६।५।२१।५६, ● आवृत्तिः उपसदां स्वस्थानविवृद्ध्या, न तु दण्डकलितवत्, उपसद्विवृद्धौ । ५।३।२।३, ● आवृत्तिः गुर्वनुगमनादीनां निमित्तावृत्तौ । ६।२।१०।१०, ● आवृत्तिः दर्शपूर्णमासयोः नैमित्तिकस्य प्रायश्चित्तस्य भेदनस्कन्दनादिनिमित्तावृत्तौ । ६।२।५।२९. ● आवृत्तिः प्रधानानां गुणानुरोधेन अयुक्ता । बा. २।२।१ पृ. ४६३. ● आवृत्तिः बर्हिःस्तरणमन्त्रस्य आतिथ्या-बर्हिः अग्नीषोमीयार्थं स्तरणकाले । भा. १२।१। २०।४४, ● आवृत्तिः मध्यमस्य सत्रायणे अभि-प्लवपृष्ठ्यप्रधानेन पृष्ठ्यषडहस्यावृत्तौ । १०।६।११।३१, ● आवृत्तिः वपाहोमस्य भिन्नदेवताकपशुगणे यथा ऐकादशिनेषु पशुषु । ११।२।६।२६.

● आवृत्तिः वाक्यदोषः । वाजपेयगुणविधौ आख्यात-पदावृत्तिः, ग्रहैकत्वविवक्षया पदैकदेशप्रातिपदिकावृत्तिः, हविरार्तेः उभयत्वेन विशेषणे 'हविरार्तिमार्च्छेत्' इति पदसमुदायस्य आवृत्तिः । सु. पृ. ६८२. ■ आवृत्तिः विशेषणसंबन्धार्थं यथा 'आयुर्यज्ञेन कल्पतां, प्राणो यज्ञेन कल्पतां' इत्यादौ । वा. २।२।१।१ पृ. ४६३.

● आवृत्तिर्न दर्शपूर्णमासयोः अवघातमन्त्रस्य प्रति-प्रहारं, किंतु प्रथमप्रहारे सकृदेव पठनम् । भा. ११।४। १२।४२, ● आवृत्तिर्न सर्वौषधावघातस्य अदृष्टार्थस्य अग्निचयने । ११।१।६।२८, ● आवृत्त्या आग्नेय-कृष्णग्रीवपशुद्वयस्य प्रदानमनुष्ठेयम् । ११।१।१२।६८–७१. ● आवृत्तौ च वाक्यभेदः । टुप्. ११।१।२।९. ● आवृत्तौ पञ्चदश सर्वपञ्चदशाब्दे प्रधानस्य सकृदेवा-नुष्ठान, न तु अवान्तरप्रतिपदहम् । भा. १०।६।१०। २१–३०.

● आवृत्तिन्यायानां दण्डकलितं न्याय्यं, तथा क्रमानुग्रहो भवति । तद्यथा, कश्चिदुच्यते 'अनुवाकः त्रिः पठ्यतां' इति, दण्डकलितवदसौ पठ्यते क्रमानु-ग्रहाय । भा. १०।५।२५।८३.

※ आवृत्तिरसकृदुपदेशात् इति न्यायः (४। १।१ ब्रसू.)। नहि सकृत् श्रवणमात्रात् (प्रायः) विद्या दृढा उत्पद्यते 'आवृत्ति०' इति न्यायात्, श्रवणोत्तरकाल मननादिविधानसामर्थ्याच्च । उपदेश-साहस्री– रामतीर्थः गद्य. ५ । 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इति वाक्येन विहितानां श्रवणमनन-निदिध्यासनानां साक्षात्कारपर्यन्तं आवृत्तिः कर्तव्या, न तु सकृत्करणेन कृतार्थता । असकृत् उपदेशात् श्रवणो-त्तर पुनर्मननस्य, तदोत्तर पुनर्निदिध्यासनस्य विधानात् आवृत्तिर्गम्यते । इति न्यायसूत्रार्थः । वे.

● आवृत्तिलक्षणो यत्कश्मेदस्त्रिविध. । शब्दावृत्तिः, अर्थावृत्तिः, उभयावृत्तिश्चेति । शब्दावृत्ति-रपि द्विविधा, प्रतीयादिकावृत्तिः पदावृत्तिश्चेति । प्रातिपदिकावृत्तिरपि द्विविधा समासासमासभेदात् । प्रत्ययावृत्तिरपि चतुर्विधा सुप् तिङ् कृत् तद्धितभेदात् । (उदाहरणानि तु नोक्तानि) । बाल. पृ. १८१.

ड्डू आवृत्तिस्तु व्यवाये कालभेदात् स्यात्। १०।६।११।३१ ॥

गवामयने प्रतिमासं चत्वारोऽभिप्लवाः षडहाः, एकश्च पृष्ठ्यः षडहः इत्यनुष्ठानम्। 'संस्थिते पृष्ठ्ये षडहे मध्वाशयेत् घृतं वा' इत्यनेन च षडहान्ते मध्वशनमुक्तम्। प्रथममासे पृष्ठ्यषडहे अनुष्ठिते द्वितीय मासस्यादौ अभिप्लवाश्चत्वारोऽनुष्ठीयन्ते। ततः पुनः पृष्ठ्यः। एवं प्रतिमासम्। तथा च पृष्ठ्यषडहाना अभिप्लवैः व्यवाये व्यवधाने सति कालस्य भेदः स्यात्। एवं व्यवाये सति कालभेदात् प्रतिपृष्ठ्यषडहान्ते मध्वशनस्यापि आवृत्तिः स्यात्, न तु सर्वषडहान्ते सकृदेव। अत. प्रतिमासमावर्तने मध्वशनम्। सोमस्तुवत्वः पूर्वाधिकरणोक्तसकृदनुष्ठानवैलक्षण्यार्थे.। के.

ड्डू आशास्तेऽयं यजमानः इति नित्यं निर्देशः, यत्र निर्दिशेत् इति नित्यानुवादः ॥

'आशास्तेऽयं यजमानोऽसौ' इति यजमाननामनिर्देशस्य विधिनिषेधाभ्यां षोडशिनं प्रकृत्य 'यत्र निर्दिशेत् प्रतिवेशं यजमानस्याशीर्गच्छेत् यजमानोऽसावसाविति निर्दिश्यैवैनं सुवर्गं लोकं गमयति' इति श्रुतौ नामनिर्देशस्य विधिनिषेधाभ्यां षोडशिन इव विकल्पे प्राप्ते, यत्र निर्दिशेदित्ययं नित्यानुवादः अनिर्देशस्यैवोत्तरत्र निन्दितत्वात्। अनिर्देशस्य प्रायश्चित्ताभावात्, अतो नित्यं निर्देशः। संकर्ष. ४।२।२०.

* 'आशास्तेऽयं यजमानोऽसौ, आयुराशास्ते' इत्यादिः अतिथ्यर्थे सूक्ताभिधायकपदे प्रायणीयेष्ट्यादौ प्रस्तरप्रहरणे सूक्तवाकमन्त्रगतो भागो यजमानाशासनपरो उच्यते। (कृत्स्ना चिन्ता) वि. १०।२।२१.

* आशितंभवम्। या ■ आशितंभवं करोति नाशो पलकवणी। तस्मात् या नाशितभवा, नाशो दक्षिणा। आशितभवाया आधिक्य वचनस्य (द्वादशशतं दक्षिणा इत्यस्य) विषयः। ... तत्र यावदाशितंभवं नास्ति तावद्बल्ला। बल्लचरो हि आशितेन भवति। इति आशितंभवाद्दूर्ध्वं सम्करणम्। तस्मात् आशितंभवं यद् द्रव्यं सा भृतिः, सा दक्षिणा। (आशितंभव उदरपूरणपर्याप्तम्)। भा. १०।३।११।४९.

* आशिरवत्। यथा क्रतपेये 'घृतव्रतौ भवतः' इति वचनात् अभावे व्रतदुहः (धेनो.) 'अन्यां यजमानस्य व्रतयुक्तामाशिरे (आशिरार्थे) दुहन्ति' इति श्रुतेः आशिरार्थमन्या गौरुपादीयते, एवं (संस्कारकाले नवानि पात्राण्युत्पाद्यानि, इति पूर्वः पक्षः)। भा. ११।३।१२।२९.

ड्डू आशीरधिकरणम्। श्रोत्साहनमन्त्राणां याजमानत्वम् ॥

मन्त्राश्चाकर्मकरणास्तद्वत्। ३।८।६।१५ ॥

भाष्यं— इह एवंजातीयका मन्त्रा उदाहरणं 'आयुर्दा अग्नेऽस्यायुर्मे देहि' इति, 'वर्चोदा अग्नेऽसि वर्चो मे देहि' इति। तत्र संदेहः किमार्त्विजाः, उत याजमाना इति। समाख्यानात् आर्त्विजा इति प्राप्तम्। एवं प्राप्ते ब्रूमः। मन्त्राधीने सद्गत् भवेयुः, यथा काम.। एवं आत्माभिधायि पदं युक्तं भवति आयुर्मे वर्चो मे इति। आयुः वर्चः इत्येवमादिभिः कर्मफलमभिधीयते अग्ने त्वं कर्मफलं मे साधय इति। तत् इह कर्मफलं उत्साहार्थे संकीर्त्यते। यजमानश्च तेन उत्सहते, नान्यः। यत् ऋत्विजः कर्मफलं, न तदर्थः अग्निः, सिद्धं हि तत्। यत् यजमानस्य, तदर्थ. अग्नि.। तच्च असिद्धं सत् आशासितव्यं, यत् उत्साहं जनयति अवैगुण्याय। ऋत्विगपि सिद्धे यत् उत्सहते, तत् यजमानस्यैव कर्मफलाय उत्सहते, तत्र आत्माभिधायि पदं नावक्लृप्यते। यजमाने न आत्माभिधायि पदं कल्प्यमानं अगौणं भवति। तस्मात् याजमानाः।

वा— अकर्मसंयुक्ता आशीर्मन्त्राः समाख्यया नियम्यन्ते, न तेभ्य. फलनिष्पत्तिः। मन्त्राणां अभिधायकत्वात् अन्यस्य च फलकल्पनाहेतोः अविद्यमानत्वात्। यत्तु आशासनं, तत् यजमानवत् अध्वर्योरपि उत्साहकत्वेन अविशिष्टम्। इति प्राप्ते, याजमानाः इत्युच्यते। ते हि फलान्तराभावात् प्रधानफलमेव आशास्यते। यजमानेन च तत् आशासनीयं, न ऋत्विजा, तदीयस्य दक्षिणालाभस्य अन्यथाऽपि सिद्धत्वात् यजमानाय लभ्यमानत्वेन अस्य. अप्रार्थनीयत्वात्। अथ यजमानार्थमेव असौ प्रार्थयेत, तत्र 'आयुर्मे देहि' इति

आत्मविषयं सन् विरुध्येत । तस्मात् यजमानेनैव प्रधानफलप्राप्तिरूपेण आत्मोत्साहनार्थं प्रयोक्तव्याः इति ।

विप्रयोगे च दर्शनात् । १६ ॥

भाष्यं— विप्रयोगे च अग्नीनां प्रवासे उपस्थानमस्ति ( यजमानस्य प्रवासे अग्नीनां उपस्थानमस्ति इत्यन्वयः ) ' इहैव सन् तत्र सन्तं त्वाऽग्ने ' इति । न च प्रोषितः अग्निभ्यः ऋत्विग् भवति । कर्म कुर्वतः एव वाचकः शब्दः । भवति तु यजमानः अग्निभ्यः प्रोषितोऽपि । यजमानः सविधाय वः अग्निहोत्राय प्रवसति ( अग्निहोत्राय सविधाय प्रवसति ) । शक्यते च विदेशस्थेनापि त्यागः कर्तुम् । स एव प्रोषितस्य उपस्थानविशेषं ब्रुवन् यजमानस्य उपस्थानं दर्शयति । तेनैव एवंजातीयकाः ( मन्त्राः ) यजमानस्य भवेयुः इति ।

वा— आशीर्मन्त्रं च प्रवसद्यजमानाग्निहोत्रेषु अग्न्युपस्थानार्थं प्रोषितस्य दर्शयति । न च ऋत्विजः प्रोषितस्य ऋत्विक्त्वं संभवति कर्मसंयोगाभावात् । यजमानस्य तु द्रव्यत्यागेन उपपद्यते । तस्मात् तत्सामान्यात् इतरेषु तथात्वम् ।

सोम— फलार्थगुणकामनैयम्येन प्रयत्नस्थानात् संगतिः । सूत्रे तद्वत् कामवत् याजमाना इत्यर्थः ।

वि— ' आयुर्दा इति मन्त्रोक्तिः कस्य–, ऋत्विजः समाख्यया ।, तद्बाधे लिङ्गतः स्वामिगामिता काममन्त्रता ॥ '

भाट्ट— इह ये अकरणभूताः कर्मफलप्रकाशकाः कर्माङ्गभूता मन्त्राः ' आयुर्दा अग्ने ' ' अगन्म सुवः ' इत्यादयः, ते समाख्यानादाध्वर्यवाः । इति प्राप्ते, यद्यप्येते लिङ्गादिना आहवनीयोपस्थानादौ विनियुक्ताः, न तु वाक्यादिवत् तृतीयया इतिकरणेन वा विनियुक्तत्वाभावात् आनुषङ्गिकफलकल्पकाः, तथापि कर्मफलमेव उपस्थानादिप्रयोज्यं प्रोत्साहनार्थं प्रकाशयन्ति । अत्र च यत्र एतत्प्रकारकं फलं कर्मजन्यत्वेन क्लृप्तं, तत्र तत् शक्त्यैव नियतमनियतं वा प्रकाश्यते । अत एव दर्शपूर्णमासादौ स्वर्गायुरादेः फलत्वात् तत्तत्फलार्थप्रयोगे एव तन्मन्त्राः, न फलान्तरार्थप्रयोगे । यत्र तु नैतत्प्रकारकस्य कर्मफलत्वं, तत्र लक्षणया कर्मफलमेवैतेन मन्त्रेण प्रकाश्यते इति द्रष्टव्यम् । तच्च फलं यजमानगाम्येव, ऋत्विक्फलस्य उपस्थानाद्यप्रयोज्यत्वेन तत्प्रकाशने तदङ्गत्वानुपपत्तेः । तस्य यजमानाद्याश्रयत्वेन अग्निं प्रति अनाशास्यत्वाच्च । न च यजमानफलमेवाध्वर्युणा आशास्यतां, ' मे ' इति ' अगन्म ' इत्यध्वर्युप्रकाशकत्वेन लिङ्गविरोधात् । अतो याजमाना एवैते । अत एव यत्र नैतादृशं लिङ्गं, तत्र आध्वर्यवा एव ।

मण्डन— ' तस्यैव नाशंसनमन्त्रपाठः । ' ७. तस्य स्वामिनः ।

शंकर— ' प्रत्यगाशीर्मनुर्येष्टुः । ' ९. यष्टुः यजमानस्य आशीर्मनुः आशीर्मन्त्रः ।

● आशीर्मन्त्राः ' आयुर्दा अग्नेऽसि आयुर्मे देहि ' इत्यादयः समाख्यया न नियम्यन्ते, याजमाना एव ते नार्त्विजाः । वा. ३।८।६।१६. ● आशीर्मन्त्राः । गुणी व्याप्यो यत्र प्रार्थ्यते, ते मन्त्राः आशिषः उच्यन्ते । टुप्. १२।४।१।१. ● आशीर्मन्त्रं प्रवसद्यजमानाग्निहोत्रेषु अग्न्युपस्थानार्थं प्रोषितस्य दर्शयति । ( तिरो मा सन्तं मा प्रहासीः इत्यादिम् । टु. । ' इहैव सन् तत्र सन्तं त्वाऽग्ने ' इति तु भाष्ये । ) वा. ३।८।६।१६. ● आशीर्मन्त्राणां ' आयुर्दाः ' इत्यादीनां समुच्चयः । भा. १२।४।१।१–२.

● आशूनां नाम व्रीहीणां ' अग्नये गृहपतये अष्टाकपालं निर्वपेत् ' राजसूये वानस्पत्येष्टौ प्रथमं हविः । आशवो व्रीहयो नाम ये मासद्वयेनैव पक्वा भवन्ति । के. ११।३।७।२५.

● आश्रमधर्मव्यतिरेकेणावस्थानं अनाचारः । शा. १।३।३।७ पृ. १०४.

● आश्रयः— यत्र हि गुणः कारकतामापद्यते स आश्रयः यथा होमो दध्नः । शा. २।२।२ पृ. ११ । सोम— इदं च यत्र फलाय विधीयमानस्य गुणस्य जातिद्रव्यसंख्यादिगुणरूपत्वं, तदभिप्रायम् । तेन ' दाक्षायणयज्ञेन स्वर्गकामो यजेत ' ' पशुकाम उक्थ्यं गृह्णीयात् ' ' षोडशिनं वीर्यकामः ' ' शुकामन्थ् महान् गतश्रीः प्रतिष्ठाकामः ' इत्यादिषु आश्रुतिरिश्यादयतादीना गुणाना

विषयः पर्यवसिते अधिकरणार्थे प्रसङ्गादभिधीयते । वा. २।२।११।२६ पृ. ५४९-५५०, * आश्रयाश्रयि-संबन्धः फलसंबन्धानुगुणत्वात् संभवन् गृह्यते । २।२।१२।२७ पृ. ५६२.

* आश्रयाश्रितयोर्भेदाभेदौ अभ्युपगम्य तादात्म्य-सम्बन्धो वर्ण्यते । चि. ६।२।२.

* **आश्रयासिद्धिः** पक्षाप्रसिद्धिः, यथा आकाशो नित्यः निरवयवद्रव्यत्वात् इति । सौत्रान्तिकं आकाशा-भाववादिनं प्रति आश्रयासिद्धिः । पक्षतावच्छेदका-प्रसिद्धिरपि सा, काञ्चनमयः पर्वतो वह्निमान् इति । मणि. पृ. ४१.

* आश्रयी नहि आश्रयभेदेन भिद्यते, अन्यत्वात् तयोः । ऋजु. पृ. १९७, * आश्रयिणः पदार्थाः उत्तमप्रयाजः, पशुपुरोडाशः, स्विष्टकृत् इत्येते यागाः द्रव्यदेवतासंस्कारार्थत्वेन दृष्टार्थाः, त्यागांशेन अदृष्टार्थाः इत्युभयार्थाः । भा. ४।१।७।१८-२०.

**आश्रयिष्वविशेषेण भावोऽर्थः प्रतीयेत ।** ४।१।७।१८ ॥

एकदेशेन अग्न्यादीनं द्रव्यं देवतां वा आश्रयन्तो संस्कुर्वन्ति ये पदार्थाः, ते आश्रयिणः उत्तमः प्रयाजः, पशुपुरोडाशः स्विष्टकृत् इति, ते किं संस्कारमात्रं कुर्वन्ति, उत अदृष्टं कुर्वन्ति इति विचारे सिद्धान्तमाह । उक्तेषु आश्रयिषु अविशेषेण अन्यैः आख्यातशब्दैः वैलक्षण्याभावेन भावोऽर्थः अपूर्वं प्रतीयेत । आश्रयि कर्माणि अदृष्टार्थानि इत्यर्थः ।

**चोदनायां त्वनारम्भो विभक्तत्वान्नह्यन्येन विधीयते । १९ ॥**

सिद्धान्ते उक्ते पूर्वपक्षी ब्रूते । तुशब्दः सिद्धान्त-पक्षव्यावृत्त्यर्थः । उत्तमप्रयाजादेः चोदनायां अपूर्वस्य अनारम्भः नोत्पत्तिरित्यर्थः । विभक्तत्वात् यजतिजुहोति-ददातिचोदनाभ्यः प्रकृतचोदनाया विजातीयत्वात् । यजत्यादिषु नास्ति दृष्टं प्रयोजनम् । उत्तमप्रयाजादि-चोदनायां तु देवतास्मरणादिना दृष्टेन प्रयोजनेन निराकाङ्क्षता इति विभक्तत्वम् । यजत्यादिषु च द्रव्यदेवते गुणभूते, उत्तमप्रयाजादिषु तु प्रधानभूते इति च विभक्तत्वम् । न हि यस्मात् अन्येन शब्देन ‘ समिधो यजति ’ इत्यादिना उत्तमप्रयाजादिषु अपूर्वं विधीयते इति वक्तुं शक्यम् । तस्मात् उत्तमप्रयाजादयो नापूर्वार्थाः ।

**स्याद्वा द्रव्यचिकीर्षायां भावोऽर्थे च गुण-भूतता, ऽऽश्रयाद्धि गुणीभावः । २० ॥**

सिद्धान्ते पूर्वपक्षिणा आक्षिप्ते पुनः सिद्धान्तमाह । वाशब्देन पूर्वपक्षव्यावृत्तिः । द्रव्यचिकीर्षायां सत्यामपि भावः स्यात् । द्रव्यशब्दः लक्षणया द्रव्यं देवतां चाह । द्रव्यदेवतयोः संस्कारत्वेन चिकीर्षायां सत्यामपि त्यागां-शेन भावः अपूर्वं स्यादेव । अपूर्वे अर्थे च त्यागांशस्य गुणभूतता साधनता स्यात् । मन्त्रेण देवतास्मरणस्य दृष्टार्थ-त्वेऽपि त्यागांशेन अपूर्वार्थत्वात् अदृष्टार्थता इत्यर्थः । हि यस्मात् आश्रयात् स्वप्रधानात् सकाशात् स्वस्य गुणीभावः भवति । तथा च प्रधानं अपूर्वं प्रति त्यागस्य गुणत्वे स्वीकृतेऽपि अपूर्वमस्त्येवेति न दोषः । के.

* आश्रयिष्वविशेषेण भावोऽर्थः प्रतीयेत । ( ४।१।७।१८) इति चतुर्थाधिकरणे स्विष्टकृद्यागः प्रतिपत्तिरूपः संस्कारोऽपि मन्त्रयागः प्रतिपत्तिश्च इति उभयात्मकः इति वक्ष्यते । सु. पृ. ११०७.

* आश्रयिकर्म, गुणकर्म, संनिपत्योपकारकं इत्यनर्था-न्तरम् । मीन्या. * आश्रयिकर्म स्विष्टकृदादि प्रतिपत्तिः । अयं दृष्टादृष्टार्थः गुणकर्मविधिः । बाल. पृ. १२.

आश्रयिन्यायः ( मेधातिथिना मनु. ८।१ प्रयुक्तोऽयम् ) । आश्रयिकर्मणा दृष्टादृष्टोभयार्थता ॥

आश्रयिष्वविशेषेण भावोऽर्थः प्रतीयेत । ४।१।७।१८ ॥

भाष्यं— अत्र आश्रयिणः पदार्था उदाहरणम् । उत्तमः प्रयाजः, पशुपुरोडाशः, स्विष्टकृत् इत्येते यागा उदाहरणम् । तत्र संदेहः किं यजिमात्रं संस्कारो देव-तायाः, उत यजिना अदृष्टं देवतायां क्रियते इति । किं प्राप्तं ? आश्रयिष्वविशेषेण भावोऽर्थः प्रतीयेत । आश्र-यिषु एवंजातीयकेषु अपूर्वस्य भावोऽर्थः प्रतीयेत, अविशेषादन्यैः आख्यातशब्दैः यजति ददाति जुहोति इति । तदेतत् ‘ भूतं भव्यायोपदिश्यते ’ इति ।

टुप्— ( एकदेशेन अन्यदीयं द्रव्यं देवता उभयं वा आश्रयन्ति संस्कुर्वन्ति ये पदार्थाः, ते आश्रयिणः । तत्र उदाहरणाक्षेपव्याजेन पूर्वपक्षमाह— ) अनुदाहरणं स्विष्टकृत् ( केवलदृष्टार्थत्वेन अदृष्टार्थत्वायोगात् । तदाह— ) मन्त्रः तावत् ( अयाळग्निः इत्यादिः ) इष्टदेवतासंकीर्तनात् दृष्टार्थः । ( यागोऽपि दृष्टार्थ एवेत्याह— ) आशीर्णफलस्य द्रव्यस्य ( इष्टशिष्टस्य पुरोडाशादेः ) अनियमेन प्रतिपादने प्राप्ते यागेन प्रतिपाद्यते । ( तेन ) योऽसौ ( आहवनीये द्रव्य— ) प्रक्षेपः, सोऽपि दृष्टार्थ एव । अतो यागेन द्रव्यस्य संस्क्रियमाणत्वात् न इतरैः ( समिदादियजिभिः ) तुल्यता । समिदादयोऽपि नोदाहरणं, तेषु द्रव्यदेवतयोः गुणभूतत्वात् क्रियैव प्रधानभूता ( इत्युदाहरणम् ) । पशुपुरोडाशयागोऽपि देवतासंस्कारद्वारेणैव उपकरोति । वपायागस्य तु यागान्तरत्वे नास्ति प्रमाणम् । ( पशुयाग एव हि वपया हृदयादिभिश्च वितत:, स च नाश्रयी । ) तस्मात् एषोऽपि (वपायागोऽपि) अनुदाहरणम् । ( उत्तमप्रयाजोऽपि पशुपुरोडाशन्यायेन निराकर्तव्य । समाधत्ते— ) यत्र भक्तार्थं द्रव्यं, देवता तु इष्टा यक्ष्यमाणा वा कीर्त्यते यागान्तरे च, तदुदाहरणम् । पशुपुरोडाशस्य देवतोद्देशेन यः प्रक्षेपः, तस्य अदृष्टादन्यत् प्रयोजनमस्ति । तस्मादृष्टार्था एते । अत आह ( सूत्रकारः ) आश्रयिण्यविरोधेन भावोऽर्थः प्रतीयेत । यागादपूर्वं चोदितं इत्यर्थः । 'भूतं भव्यायोपदिश्यते' इति ( भाष्ये ) भूतं द्रव्यं भव्यां क्रियां निर्वर्तयति इति क्रियातः अदृष्टम् । अथवा यद्यपि यागो देवतां संस्कुर्वन् उपकरोति, तथापि साधनतां प्रतिपद्यमान आश्रयी भवति, नान्यथा । अतो भूतं भव्यायोपदिश्यते इति ।

**चोदनायां त्वनारम्भो विभक्तत्वान्नह्यन्येन विधीयते । १९ ॥**

भाष्यं— अस्यां तु चोदनायां अनारम्भः अपूर्वस्य । विभक्तोऽयमारम्भणशब्दो यो दृष्टार्थः, नतो नापूर्वम् । यः पुनः अदृष्टार्थः, तत्र अपूर्वमिति । दृष्टार्थश्चायम् । अस्मिन् हि यागे क्रियमाणे देवता स्मर्यते, स्विष्टकृति द्रव्यं प्रतिपाद्यते । न चान्येन शब्देन अपूर्वं विधीयते । तस्मात् यजिमात्रं संस्कारः इति ।

टुप्— यत्र द्रव्यदेवते गुणभूते आख्यातस्य ( यथा समिदादिषु ), तत्रापूर्वम् । यत्र पुनर्द्रव्यं देवता वा प्रधानं ( स्विष्टकृत्पशुपुरोडाशादिषु ), तत्र तदर्थत्वात् आख्यातार्थस्य नापूर्वम् ।

**स्याद्वा द्रव्यचिकीर्षायां भावोऽर्थे च गुणभूतताऽऽश्रयाद्धि गुणीभावः । २० ॥**

भाष्यं— स्याद्वा अपूर्वं अतः । अस्यामपि देवताचिकीर्षायां, तस्मिन् देवतासंस्कारार्थे गुणभूतता, यागस्य द्रव्यप्रतिपादनेन च । मन्त्रेण तत्र देवता स्मर्यते । तस्मिन् मन्त्रेण दृष्टेऽर्थे क्रियमाणे त्यागः अपरः अदृष्टार्थः श्रूयते । तस्य न किंचित् दृष्टमस्ति देवताऽऽश्रयात्तु देवतागतं तत् अपूर्वं इति गम्यते ।

टुप्— ( स्याद्वा इति सिद्धान्तसूत्रस्याभिप्रायमाह— ) यद्देवतासंकीर्तनं मन्त्रेण, तत् दृष्टार्थम्, स्मरणस्यापेक्षितत्वात् । त्यागस्तु अदृष्टाय, तस्मात्स्यापूर्वम् ।

श्री— उत्तमः प्रयाजः पशुपुरोडाशः स्विष्टकृत् इत्यादयः अङ्गेन परकीयं द्रव्यदेवतं संस्कुर्वन्तः किं तदर्था एव, उतापूर्वार्था अपीति चिन्त्यते । तत्र 'एकस्य कर्मणो युक्तमेकमेव प्रयोजनम् । दृष्टे च सति नादृष्टं कल्प्यं, नापूर्वमास्थितः ॥' उच्यते 'देवतास्मरणं मन्त्रात्, प्रक्षेपात् द्रव्यसंस्कृतिः । त्यागांशस्य तु नादृष्टादृते किं चित् प्रयोजनम् ॥' तस्मात् त्यागांशेन अदृष्टार्था अपि इत्युभयार्थाः ।

सोम— यथा द्रव्यपरिच्छेदरूपदृष्टद्वारा लिङ्गसंख्ययो साधनत्व, एवं उत्तमप्रयाजादीनामपि दृष्टप्रयोजनलाभात् दृष्टान्तसंगतिः । यद्यपि प्रक्षेपो देवतोद्देशेन् यागशब्दार्थान्तर्गतत्वाभावात् न यागांशः, तथापि प्रक्षेपस्य देवतोद्देशेन त्यज्यमानतादशायां कर्तव्यत्वात् सोऽपि यागांश इव प्रतीयते इत्येतावता प्रक्षेपात् द्रव्यसंस्कृति । ननु स्वाहाकारस्य देवतादृष्टार्थत्वे अवान्तरापूर्वाभावेन आग्नेयापूर्वमपुक्तानिष्टमप्रमाणसिद्धेः तदापूर्वमन्द्रावन्युत्पादनस्य अभिक्रमणादिवत् प्रयोजनाम् । पशुपुरोडाशे च अपूर्वाभावे अपूर्वप्रयुक्त

( आतिथ्येष्टौ ) इत्यधिकृत्य ' यज्ञो वै देवेभ्योऽश्वो भूत्वाऽपाक्रामत्, सोऽपः प्राविशत्, स वालधौ गृहीतः, स वालान् मुक्त्वा विवेश, ते वालाः काशा अभवन्' इति वाक्यशेषश्रवणात् काशपरता प्रतीयते । कु. १।३।५।७-८ पृ. ६५ । सोमनाथ्यां तु ' यज्ञो वै देवेभ्यो० विवेश ह ते वाला० वेशान्ता प्रासाः कार्योऽतः प्रस्तरस्तैः ' इति वाक्यशेषः पठितः । वार्तिकेऽपि २२२ पृष्ठे एवमेव पठितम् । परन्तु मुद्रकैः ' कार्योऽतः प्रस्तरस्तैः ' इति वाक्यं लघुभिरक्षरैर्मुद्रितं, पूर्वं तु सर्वं स्थूलैरक्षरैः इति विशेषः । कौस्तुभे तु १।३।४।९ पृ. ७२ इत्यत्र ' यज्ञो ह वै देवेभ्यो० विवेश, ते मान्याः काशता प्राप्ताः ' इति इयान् ईदृशः वाक्यशेषः पठितः । के.

* आश्ववालाधिकरणं ' निश्चयकर्मप्रमाणाधिकरण ' इत्यत्र द्रष्टव्यम् । वा १।३।४।९ पृ २२१-२२४. * आश्ववालाधिकरणन्यायेन ( वा. १।३।४।९ पृ. २२१-२२४ ) क्वचिदपि प्रतिपन्ना अप्यार्यप्रसिद्धाना असम्कृतानि विशिष्टमात्रविषयत्वप्रसिद्धौ । कौ. १।४।८।१० पृ. २३४ । यत्र लोकनः ' आश्ववाल. प्रस्तरः ' इत्यत्र अश्वस्य ये वाला. दीर्घकेशा, तन्मय. प्रस्तरः इति ज्ञातेऽपि शास्त्रे अश्ववालाः नाम काशाख्यदर्भाः तन्मय. प्रस्तरः कर्तव्य. इति सिध्यति इत्यधिकरणार्थः । के.

* आश्विन' ग्रहः ज्योतिष्टोमे ऐन्द्रवायवादिग्रहेषु तृतीयस्थाने पठित. । तस्य च दशमस्थानत्व पाठक्रमेणैव शब्देनाम्नायते ' आश्विनो दशमो गृह्यते ' इति । तत्र पाठादपि श्रुतिः प्रबला । होमस्तु तस्य द्विदेवत्येषु तृतीयस्थाने । वि ५।१।१, * आश्विनः ग्रहः ज्योतिष्टोमे प्रात.सवने गृह्यते । २।३।१. * ' आश्विनो दशमो गृह्यते, तं तृतीयं जुहोति' । शा. २।३।६, यद्यपि आश्विनः पञ्चमो हूयते तथापि उपांशु-अन्तर्यामयोः अवषट्कारहोमकत्वात् वषट्कारहोमेषु आश्विनहोमस्य तृतीयत्व योग्यम् । सोम.

* आश्विनो यूपः ( धूम्रवर्णः अज. पशुः ) सौत्रामण्या प्रथमः । भा. १२।४।१०।२७

• आश्विनं ग्रहं अध्वर्युः आदत्ते सौत्रामण्याम् । उत्तरेऽग्नौ पयोग्रहान् जुहोति, दक्षिणेऽग्नौ सुराग्रहान् । भा. ३।५।१।१४.

* ' आश्विनं द्विकपालं ' इति आश्विनः पुरोडाशः द्विकपाल उक्तः । भा. ५।५।१।१.

* आश्विनस्य सोमग्रहस्य ' सर्वतः परिहारमाश्विनं भक्षयति ' इति विशेष उक्तः । स्वमस्तकस्य परितः प्रदक्षिणं भ्रामयित्वा भक्षणीय. इति । भा. ३।५।६।२०.

* आश्विने द्विकपाले हविष्कृत् सवनीयपर्यन्तेषा प्रसङ्गसिद्धा भेदेन नाहातव्या । भा. १२।२।४.

• आश्विने शस्त्रे अतिरात्रे शस्यमाने सर्वे अनुशंसति सर्वे मन्त्राः शंसनीयत्वेनोपदिष्टाः । भा. ३।२।८।२४.

• आश्विनमहादूर्ध्वं सवनीयः पशुरालभ्यते ज्योतिष्टोमे सुत्यादिने प्रातःसवने । वि. ५।१।६. * आश्विनमहादूर्ध्वं सवनीयपशुस्थाने साद्यस्के यागे साहित्येन पशुत्रयालम्भः कर्तव्य. । तत्रादौ स्थानक्रमेण सवनीयः, ततः प्रकृतिदृष्टपौर्वापर्यात् आग्नीषोमीयश्च अनुबन्ध्यश्चेति । ५।१।६. * आश्विनग्रहस्य कामसंयोगे ज्योतिष्टोमे आदित प्रतिकर्षः स्यात् । स च प्रतिकर्ष· अन्तर्यामादूर्ध्वं ऐन्द्रवायवात् प्राक् । ग्रहणप्रतिकर्षे सादनस्यापि प्रतिकर्षः । प्रदानस्य तु न प्रतिकर्षः । भा. १०।५।१९-२२। ६७-७१. * आश्विनग्रहग्रहणोत्तरं चोदकप्राप्त यूपपरिव्याण कृत्वा पुनर्विहितं रशनाऽन्तरेण परिव्याणान्तर कृत्वा आग्नेय. सवनीय. पशुरुपाकर्तव्यः, इति ' आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीय आग्नेयं सवनीय पशुमुपाकरोति ' इति वचनेनोक्तम् । वि. ४।५।९.

• आश्विनद्विकपालस्य द्विदेवत्यत्वे सति ऋग्वत्तद्धितवत्वात् ऐन्द्राग्नविकृतित्वम् । बाल. पृ १२०.

• आश्विनपात्रे धाना निदधाति ज्योतिष्टोमे । सवनीयपुरोडाशेषु विद्यमानाना एव अयं एकदेशसंयोग', न तु अन्यत. । भा ३।८।१८।३३, * आश्विन-सारस्वत-ऐन्द्राः ग्रहाः सौत्रामण्याम् । ३।५।३।१४.

* ' आश्विनामान् गृह्णीयादामयाविनः, शुक्रामान् गृह्णीयादभिचरत , मन्थ्यग्रान् गृह्णीयादभिचर्यमाणस्य '

इति वचनात् आग्निरनादीनां सर्वाविंतः ( ऐन्द्रवायवात् प्राक् ) प्रतिकर्षः कर्तव्यः । भा. १०।५।१९।६७–६९.

**आषाढवाते चलति द्विपेन्द्रे चक्रीवतो वारिधिरेव काष्ठा इति न्यायः** । चलतीति समन्यन्त पद, देहलीदीपकन्यायेनोभयत्र सम्बध्यते । चक्रीवान् गर्दभः ' चक्रीवन्तस्तु बालेया रासभा गर्दभाः खराः ' इत्यमरात् । स्पष्टमन्यत् । अयं न्यायः यामिर्युक्तिभि. प्रबलतरप्रामाण्यकतर्ककर्कशत्वेन प्रसिद्धोऽपि कश्चिद्वादी जय्यः, तामिरितरे क्षुद्रा दूरतो निरस्ता भवन्तीति विवक्षायां प्रवर्तते इति । माहत्ती. २४५.
* मत्स्यकूर्मपुराणादीनामपि तामसत्वव्यवस्थापनात् आषाढवाते० इति न्यायेन सुतरां पद्मपुराणगतानि अप्रमाणानि, तानि प्रक्षिप्तानि इति के चन मन्यन्ते । न्यायामृताद्वैतसिद्धी भूमिका. पृ. ३.

* **आसत्तिस्तु** अव्यवधानेन अन्वयप्रतियोग्युपस्थितिः । अव्यवधानं च प्रकृतान्वयबोधाननुकूलपदाव्यवधानेन । अननुकूलत्वं च प्रकृतान्वयबोधाननुकूलोपस्थित्यधिकरणत्वम् । तेन ' गिरिर्भुक्तमग्निमान् देवदत्तेन ' इत्यादौ नासत्तिः । अत एव आन्तरालिकाननुकूलपदार्थोपस्थितेः न व्यवधायकत्वम् । श्लोकादौ आसत्तिभ्रमेण शाब्दबोध. इति के चित् । अन्ये तु अन्वयप्रतियोग्युपस्थापकपदाव्यवधानं आसत्तिः । श्लोकादौ तु योजनावाक्यादेव शाब्दबोध इत्याहुः । मणि. पृ. ६८.

* **आसन्नोपायिचोदनः** द्वादशाहः सत्रभूतः । ' द्वादशाहमृद्धिकामा उपेयुः ' ' द्वादशाहमृद्धिकामा उपासीरन् । ' भा. ८।२।५।२५, * आसन्नोपायिचोदनत्वं सत्रत्वं बहुयजमानत्वं च । १०।६।१३।६०.

* **आसन्दीस्थभोजनं** अनाचारो दाक्षिणात्यानाम् । भा. १।३।३।७ पृ. २०४.

* **आसादनं** प्रोक्षणीनां नाव्ययवं, किंतु आमीक्षस्य । वि. ३।८।१२. * आसादनमपि वेद्यां हविषां प्रदानार्थमेव आसत्त्करणम् । भा. ५।४।२।२. * आसादनं वाजिनस्योत्करे सौमिकेषु चातुर्मास्येषु ' उत्करे वाजिनमासादयति ' इति गुणविधिः, न कर्मान्तरम् । वि. १०।३।१. * आसादनस्य ( वाजिनासादनस्य ) अनुवादेन विहितेनोत्करेण प्राकृतवेदेर्बाधः सौमिकचातुर्मास्येषु । भा. १०।३।३।१८–२२.

* ' **आसादयति** ' इत्याख्यातेन ( वरुणप्रघासेषु दक्षिणविहारे ) मारुत्याः प्रयोगश्चोद्यते । भा. ११।२।९।३९.

* **आसादिधातूनां** स्वरूपेण अकर्मकाणामपि मासादिकालयोगे कर्मत्वाभ्युपगमात् सकर्मकत्वात् ' चैत्रेण आस्यते मासः ' इति प्रयोगोपपत्तिः । रहस्य. पृ. ५१.

* ' **आसारितकं गायति , वर्धमानकं गायति** ' । भा ७।२।१।११, अन्यथालक्षणा आसारितकगीतिः, अन्यथालक्षणा वर्धमानकगीति । १६.

* ' **आसीनः पुरोऽनुवाक्या** ' अन्वाह इत्यत्र आसनगुणो विधीयते । वि. १०।४।२२. * आसीनो यजति इति याज्यार्थाः । वा ३।३५।१२ पृ. ७६०.

* **आसेचनाधिको** यागः होमो नाम । भा. ४।२।११।२८.

* **आस्कन्दपालिकावत्** । कर्माणि अन्यैर्न मन्ताः आतिथ्यायाँ प्रोक्षणादयो धर्माः नास्कन्दपालिकावत् अग्नीषोमीयादिबर्हिषः कर्माणि संबध्यन्ते । ( स्कन्दोत्पादक-क्षेत्रपालिका आस्कन्दपालिका ) । भा १२।१।१९।४३.

* **आस्तरणमन्त्रः** बर्हिषः ' ऊर्णाम्रदसं त्वाऽऽस्तृणामि ' इति अग्नीषोमीयाहरणे पुनरावर्तनीयः । आतिथ्याऽग्नीषोमीययोर्देशभेदात् । वि. ११।११२०.

* **आस्तारपङ्क्तिः** पङ्क्तिः । पादेषु अक्षराणि ८।८।१२।१२ उदा० आऽग्निं न स्ववृक्तिभिः ( ऋग्० १०।२१।१ ) इति । के.

* **आस्ते** । ननु आस्ते इत्युपवेशने भवति । न अनुपवेशने पर, औदासीन्येऽपि दृश्यते । तथा ' गृहाणि परित्यज्य आस्ते ' ' क्षेत्राणि परित्यज्य आस्ते ' इति । उपवेशनेऽपि व्यापारनिवृत्तौ । भा. ३।६।७।२४.

* '**आऽस्य प्रजायां वाजी जायते य एवं वेद**' वेदानुमन्त्रणस्य शेषोऽयम् । भा. ११।२।१।३,१५ । ' घृतवन्तं कुलायिनं रायस्पोषं सहस्रिणं वेदो ददातु वाजिनमित्याह , प्र सहस्रं पशूनाप्नोति , आऽस्य प्रजायां वाजी जायते य एवं वेद ' इत्यत्र यजमानप्रतिपादनपरः मन्त्रा-

भिधानस्य अर्थवादालम्बनत्वसंभवेऽपि मन्त्राभिधानेऽपि आलम्बनाकाङ्क्षानिवृत्त्यर्थं कुले संतताध्ययनश्रवणात् इत्युक्तम्। सु. पृ. ६६.

● आह इत्यव्ययम्। अतीतकर्तृकप्राचीनग्रन्थविवरणपरे ग्रन्थे 'इति मनसि निधायाह' 'इत्यभिप्रेत्याह' 'इत्याशङ्क्याह' इत्यादौ कथाप्रयोगोपपत्तिः। तत्र हि 'आह' इत्यव्ययं उवाच इत्यर्थे विभक्तिप्रतिरूपकं इति वैयाकरणसमयः। कु. २।१।१२।२७.

■ आहरणं शाखायाः दर्शे। परिशासन समूलमाहरणं छेदन च दर्शे अमकावार्थे, न मूल्यर्थम्। अत्र च वत्सापाकरणं प्रयोजकं, न कपालोपधानम्। शा. ४।२।१.

● आहरणादिकं (शाखायाः) उभयदोहार्थे दर्शे। भा. ३।६।८।२८-२९.

● आहवनीयः अनारभ्यवादेन सर्वहोमार्थः इति तद्रहितकर्मान्तराभावात् आहिताग्नेः अधिकारः। वा. ३।२।१६।३९. ● आहवनीयः गार्हपत्यादेव आधेयः, न तु लौकिकात्। संकर्ष. ३।१।१. ● आहवनीयः होमस्य आधारत्वेन विहितः 'यदाहवनीये जुहोति' इति। भा. ८।४।४।८, ● 'आहवनीयमुपतिष्ठते' इति विकृतिविशेषे विहितमुपस्थानं 'अथ उहसमानः' इति कत्वा प्रतीतयेव। १।२।८।२०-२१ वर्णक २. ● आहवनीयस्य अजस्रपक्षे सदा प्रदीपन, अरणिनी सदा। संकर्ष. ३।२।६. ● आहवनीयस्य अन्वाधाने करणभूत. 'ममाग्ने वर्चो विहवेष्वस्तु' इत्यादिर्मन्त्रः अध्वर्युणा पठ्यते। तत्र श्रुतं फलं याजमानम्। वि. ३।८।१४. ● आहवनीयस्य शालापवमानेष्टिभ्यां सिद्धौ पश्चात् तस्मिन् अग्निहोत्रहोमः। वृ. ५।३।१।२१. ● आहवनीयस्य (सोमक्रयण्याः सप्तमपदपांसुस्थले 'पदे जुहोति' इति विहितेन) पदेन बाधः। बाल. पृ. १३२. ● आहवनीयस्य सामान्येन विहितस्य ज्योतिष्टोमे विशेषविहितेन धर्मेण, राजसूये विशेषविहितस्य वल्मीकवपाया न बाधः। भा. १०।८।८।१६. ● आहवनीये गवधीभिर्धार्ये उद्धृते सति ज्योतिष्मतीष्टिर्न प्रायश्चित्तं, किंतु मनस्वतीहोमायेव। वि. १।४।८. ● 'आहवनीये जुहोति' अयं सामान्यविधिः अदृष्टार्थः। बाल. पृ. २१.

● 'आहवनीये जुहोति' 'आहवनीयमुपतिष्ठते' इत्यादौ आहवनीयादिशब्दाना तत्तदायतनस्थितसंस्कृताग्निवाचित्वेन होमे इव तदितरकार्येष्वपि तादृशस्यैव आवश्यकत्वात् उद्धृतेनैवोपस्थानम्। संकर्ष. ३।२।८. ● 'आहवनीये जुहोति' इत्यादिवाक्येन ऐष्टिक-पाशुक-सौमिक-दर्विहोमेषु आहवनीयस्य उपयोगः सामान्येन प्रतिपाद्यते। वि. ११।३।२. ● आहवनीये प्रक्षेपेण हविषो देवतार्पणता भवति 'यदाहवनीये जुहोति' इति विधे.। वा. ३।४।१४।३०. ● आहवनीये वपाया. श्रपण विहितं तस्यायं प्रतिषेधः, योऽयं मांसपाकप्रतिषेधो वैदिके। भा. १२।२।१।६.

● आहवनीयगार्हपत्ययो उभावग्नी यदा नष्टौ भवतः, तदा सूर्यस्य अस्तमयः उदयो वा यदि भवेत्, तदा पुनराधेयं कर्तव्यम्। तस्मात् अस्तमयकाले उदयकाले वा वह्निद्वयनाशः पुनराधेयहेतुः। वि. ६।४।८. ● आहवनीयत्वाभावः काम्यस्य प्राजापत्यस्य चयने। भा. १२।४।८।२६-२७. ● आहवनीयदेशाय सदः आगच्छन्तः (ऋत्विजः) प्रत्यञ्च एव प्रतिपद्यन्ते। वा. ३।५।११।३२.

कु आहवनीयधारणं गवधीभिर्वयभिन्नस्य च नित्यम्॥

सर्वे एवाग्नयो निरन्तर जागरणीयाः प्रतिदिवसं तेषां कर्मोपयोगात्। 'द्रव्यस्याकर्मकालनिष्पत्तेः' इति न्यायात् (११।३।२।२)। 'आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च' इति प्रतिपत्तिविधानात् यज्ञपात्रवदेव अग्नीनामपि प्राक् प्रतिपत्तेर्धारणम्। इति प्राप्ते, कर्मापवर्गे दक्षिणाग्न्याहवनीयो अनुगच्छेताम्। 'नान्तरामी वीयाद्' इति निषिध्य 'काम तु तौ सञ्चरेत् पश्चाद्धि स तर्हि गत.' इत्यनेन होमोत्तरमाहवनीयस्य दक्षिणाग्नेश्च गमनाद्गतिद्वयाभावेन मध्ये संचारस्यानुज्ञानेन 'प्रातरुद्धरेत' इति प्रतिकर्मोद्धरणविधानाच्च। 'सायं गतश्रिय आहवनीय.' इत्यनेन गतश्रीकर्तृकस्यैव सततमाहवनीयधारणविधानात् तदितरस्य नाहवनीयधारणम्। संकर्ष. ३।२।९.

● आहवनीयादिः अग्नि. परिहरयमाणोऽपि अश्रुते कर्मणि लौकिकः संपद्यते। संकर्ष. ३।२।३.

* आह्वनीयादयः अग्नयः अपूर्वप्रयुक्ताः । वा. ६।३।१।२ पृ. १४०९. * आह्वनीयादेः अधिकरणत्वेन दृष्टार्थत्वेऽपि होमविधिना अनाक्षिप्तत्वेन अदृष्टार्थत्वं आधानाग्निहोत्राधिकरणवार्तिके तथा उक्तत्वात् । बाल. पृ. २२.

🕉 आह्वनीयादेः कर्मापवर्गेऽपि न पुनःपुनराधानम् ॥

संस्कारस्यापि कर्मापवर्गेऽपवर्गात् अर्थप्रयुक्तत्वाच्च संमार्जनवत् प्रतिकर्म कर्तव्यमाधानम् । इति प्राप्ते, सकृदाहितस्य गार्हपत्यस्य जागरणमरणिर्वा यथा धारणोपायः, तथा अजस्रपक्षे आह्वनीयस्यापि । तेन न पुनःपुनराधानम् । दक्षिणाग्नेस्तु पूर्वं गार्हपत्यादेर उद्धृतत्वात् ततः प्रतिकर्म प्रत्युद्धरणमेव तदाधानम् । गतश्रिया तु कर्मकाले प्रादुष्करणमेव आह्वनीयाधानम् । संकर्ष. ३।२।५.

🕉 आह्वनीयादेः प्रतिकर्म गार्हपत्यादुद्धरणमेव कार्यं, न तु मथनम् ॥

प्रतिकर्म प्रादुष्करणमपि अग्न्योः अरणित एव, न गार्हपत्यात् कर्मापवर्गे तयोः स्वोपादानकारणं अरणिं प्रत्येव आगतत्वात्, घटोपादानकार्याणां घटशरावादीनामिव परस्परं विलक्षणस्वरूपयोगात् । तस्मात् अरणित एव प्रतिकर्म मन्थनम् । इति प्राप्ते, कार्यस्य अग्न्युपादानस्यायोगेन तत्र गमनासंभवात् शास्त्रैकसमधिगम्ये तु गमने 'गार्हपत्यात् आह्वनीयं ज्वलन्तमुद्धरति' इति अग्निहोत्रप्रकरणस्थवचनेन गार्हपत्ये एव इत्थमभिव्यञ्जनात् तत एव प्रतिकर्मोद्धरणम् । संकर्ष. ३।२।७.

* आह्वनीयादीनां अप्रकरणोत्पन्नानां अदृष्टोपकाराणां अनुत्पन्नानामेषां संस्कारविधानात् उत्पन्नमुत्पाद्यत्वम् । वा. ३।७।१६।२३ पृ. १०९८. * आह्वनीयादीनां एक एव शास्त्रीयः आकारः, न तु लौकिकः । स च विधिबलात् आधानेनैव जन्यते, नान्यथा । वि. २।६।५. * आह्वनीयादौ अग्निषु वैदिकान्येव कर्माणि भवन्ति, न पार्वणस्थालीपाकादीनि नापि पचनदहनप्रकाशनादीनि । भा. १२।२।१।१-७. * आह्वनीयादिविधिः अपूर्वविधिः । बाल. पृ. २२. * आह्वनीयादिशब्दः संस्कारप्रवृत्तिनिमित्तकः । अग्निशब्दस्तु न संस्कारनिमित्तकः, किंतु जातिवाची । वि. ७।३।१२, * आह्वनीयादिशब्दानां तदर्थानां च अलौकिकत्वेऽपि प्रसिद्धपदसमभिव्याहारात् व्युत्पत्तिः संभवति । १।३।१० वर्णक १, * आह्वनीयादयग्नयः आधानेन पवमानेष्टिभिश्च संस्कृताः उत्तरक्रतुषु उपयुज्यन्ते । ३।६।४, * आह्वनीयादयग्नयः 'वसन्ते ब्राह्मणोऽग्नीनादधीत' इत्यादिविधानात् मनुष्याणामेव संभवन्ति, नान्येषां गन्धर्वादीनाम् । ६।७।१३, * आह्वनीयाद्यग्नेः क्रतुपर्वैर्वा द्वार होमः । स च क्व चित् प्रकृत्यैव विहितः सन् विकृतावतिदिश्यते । तस्मात् सर्वार्थो भक्तिः । ३।७।२०.

* आह्वनीयाधाने गुणकर्म । वि. २।१।४.

🕉 आह्वनीयापवादः 'पदे जुहोति' 'वर्त्मनि जुहोति' इति ॥

'पदे जुहोति' 'वर्त्मनि जुहोति' 'वल्मीकवपायां जुहोति' इत्यादिष्वपि पूर्वन्यायेन देशमात्रविधानात् तत्राह्वनीयं उपनिधायैव होतव्यम् । इति प्राप्ते, 'उत्तरार्धेऽग्नये जुहोति, दक्षिणार्धे सोमाय' इत्यादाविव जुहोतिसंयोगेन होमाधिकरणत्वस्यैव विधानात् आह्वनीयनिवृत्तिः । अत एव 'चतुष्पथे जुहोति' इति विधाय 'एष वा अग्नीनां पड्वीशो नाम, अग्निवत्येव जुहोति' इत्यनेन चतुष्पथस्यैव प्रकारान्तरेण अग्निमत्त्वोपपादनं संगच्छते । पड्वीशः पादबन्धनरज्जुः । संकर्ष. २।८।१४.

* आह्वनीयैकदेशत्वमेव आग्नीध्रीयाग्नेः । संकर्ष. ३।२।१४.

* आहार्यपुरीषवाऽऽदि वेदः पुरुषार्थत्वेन । भा. ४।१।२।२ वर्णक २.

* आहिच्छत्रमथुरावासिब्राह्मणीनां अद्यत्वेऽपि सुरापानं अनाचारः । वा. १।३।१।७ पृ. २०४.

* 'आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च' इत्यापाततः संस्कारः तच्छरीरप्रतिपत्तिरूपो विहितः । तस्य आत्महनने निषेधो भविष्योत्तरे । 'स्वेच्छया मरणं नियात्' इत्यादिना आत्मघातादीनुक्त्वा 'न तेनां प्रेतसंस्कारो' इति संस्कारत्वेन निषिद्धः । बाल. पृ. ३७. * 'आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च' पात्र-

प्रतिपत्तिरूपाऽयं । संकर्ष. ३।२।९. * आहिताग्नीनामेव सारस्वतमिष्टमयनेषु अधिकारः । भा. ६।६।५। २७-३२.

* आहिताग्निव्रतानि 'न छिन्नं दारु अभ्यादध्यात्' इत्येवमादीनि आहितमात्रेष्वेवाग्निषु भवन्ति, न तत्र पवमानेष्टयः प्रतीक्षितव्याः । भा. ५।२।५।२१. * आहिताग्निव्रतवत् । आधाने निमित्ते पुरुषार्थतया यथा व्रतानि विहितानि, तथा अग्निचिद्व्रतानि । भाट्ट. ५।३।१०, * आहिताग्निव्रतवत् । 'आहिताग्निर्न छिन्नं दारु अभ्यादध्यात्' ( अभ्यादधीत इति वार्तिके ) इत्याद्याहिताग्निव्रत आधानोत्तरमेव । ५।३।९.

* आहुतयः त्रिंशत् वैश्वदेवपर्वणि । नव प्रयाजाः, नवानुयाजाः, द्वावाज्यभागौ, अष्टौ हवींषि, अग्नये समवद्यति, वाजिनो यजति इति । भा १।२।१। १।४, * चतुर्दश पौर्णमास्या आहुतयो हूयन्ते, त्रयोदश अमावास्यायाम् । ( पञ्च प्रयाजाः, द्वावाज्यभागौ आग्नेयाग्नीषोमीयौ द्वौ, उपांशुयाजः एकः, स्विष्टकृत्, त्रयोऽनुयाजाः इति चतुर्दश पौर्णमास्यामाहुतयः । अमावास्यायां तु उपांशुयाजाभावात् त्रयोदश । ) १०।८।१४।४६.

**🕉 आहुतिगणे प्रत्याहुति सकृद् ग्रहणम् ॥**

यत्र बह्वो दर्विहोमाः क्रमेण क्रियन्ते, तत्रापि प्रारम्भे सकृद्गृहीतस्य सर्वोद्देश्यकतया पशुश्रपणैर्निष्पन्न यूपस्येव तन्त्रता । न च हविषोऽपरिपूर्तिः । प्रोषस्येव पुनः पुनराप्यायनसंभवात् । इति प्राप्ते, प्रथमहोमाव्यवहितपूर्वकाले गृहीतस्य गृह्यमाणविरोधित्वात् तदर्थतैव । आप्यायनं तु न वचनमन्तरा उपपद्यते इति प्रत्याहुति सकृत् ग्रहणम् । संकर्ष. २।४।७.

* आहीनैषुकाद्यः प्रचाराः न दाक्षिणात्यैरेव कर्तव्या, किंतु कर्तृदेशनिरपेक्षेण, सर्वमर्मास्ते । दक्षिणदेशस्थितैः प्राक्षु वा उदक्षु वा अवस्थितः आहीनैषुकावीन् करोत्येव । ( आहीनैषुकं स्वकुलागतकर्माविदृश्य पूजा । ) भा. १।३।७।१५-२२.

**🕉 आह्वानाधिकरणम्** । दर्शपूर्णमासयोः हविष्कृन्मन्त्रस्य मुख्येऽर्थे आह्वाने विनियोगः, न तु अवघाते ॥

**तथाऽऽह्वानमपीति चेत् । ३।२।३।५ ॥**

भाष्यं— स्तो दर्शपूर्णमासौ । तत्रेदं समाम्नायते 'हविष्कृदेहीति त्रिरवघ्नन्नाह्वयति' इति । तत्र संदेहः किं एष मन्त्रः हन्तिं प्रति उपदिश्यते, उत हन्तिः अस्य कालं लक्षयति इति । कथं हन्तिं प्रति उपदिश्यते, कथं वा कालं लक्षयेत् ? यदि एवं सम्बन्धः क्रियेत 'हविष्कृदेहि इत्यवघ्नन्' इति, ततो हन्तिं प्रति उपदिश्यते । अथ 'अवघ्नन् आह्वयति' इति, तत अस्य कालं लक्षयति इति । किं तावत् प्राप्तं ? 'तथा आह्वानमपि' । यथा ऐन्द्री गार्हपत्य प्रति उपदिश्यते, एवमेष मन्त्रो हन्तिं प्रति उपदिश्यते । एवं श्रुतिः अनुगृहीता भवति, इतरथा लक्षणा स्यात् । हन्तिकालस्य मन्त्रस्य च संबन्धो भवेत्, न हन्तेः मन्त्रस्य । एष च इति आह्वयति इत्ययं अनुवाद । आह्वानं करोति । यो हि 'एहि' इति ब्रूते, स आह्वयति । तत्र येन चित् गुणेन मन्त्रो हन्तिं प्रत्याययिष्यति । तस्मात् नाह्वाने विनियोक्तव्य. ।

वा— एव तावत् मुख्यं कार्यं मन्त्राणां इति सापवादमवस्थितम् । अत्र परं एतत् विचार्यते क उत्सर्गस्य विषय, कः अपवादस्येति । तत्र 'हविष्कृदेहि' इति या हविः करोति यजमानस्य पत्नी, तदाह्वानप्रकाशनसमर्थो मन्त्र । स किं तत्रैव विनियुज्येत अवहन्तिप्रयोगस्य कालार्थत्वेन अविरोधात्, अथवा वचनात् अवघातेऽपि पूर्वेतरप्रतीतावघाताङ्गमेवेति । यदि 'हविष्कृदेहि' इत्यनेन 'अवघ्नन् आह्वयति' इति विधीयते, तत अवघाताङ्गत्वम् । अथ 'अवघ्नन्' इत्येतेन 'आह्वयति' इत्येवं सम्बध्य रूपादेव प्राप्त आह्वानकाले मन्त्रं अनूद्य 'त्रिः' इति विधीयते, तत 'अवघ्नन्' इत्यस्य स्वकालल्लक्षणार्थत्वात् न अवघातेऽर्थे वचन इति यथाऽर्थं एव मन्त्र. । किं प्राप्तं ? अवहन्तिश्रुत्यनुग्रहात् आह्वयतेश्च मन्त्ररूपादेव प्राप्तत्वात् अवहन्तेरेव हविष्करणे कर्तृत्वं कथंचित् अस्ति इत्यपार्थत्वम् । गुणयोगात् प्रकाशनं च ।

न, कालविधिश्चोदितत्वात् । ६ ॥

भाष्यं— नैवदम्भि हन्ति प्रति उपदिश्यते इति । किं तर्हि ? काललक्षणा स्यात् । कुतः । 'निराह्वयति' इति नियमश्च विधीयते । यदि अस्मिन्नेव वाक्ये मन्त्रो विधीयेत, अनेकगुणविधानात् वाक्यं भिद्येत । तस्मात् नैवं अभिसंबन्धः 'एवं अवघ्नन्' इति । कथं तर्हि ? 'अवघ्नन् आह्वयति' इति । ननु अस्मिन्नपि पक्षे मन्त्रो विधीयते कालश्च, तत्र स एव दोषो भवेत् । नेति ब्रूमः । अवहननकाले एव अनेन हविष्कृत् आह्वातव्या, तत्र अयमेव संबन्धः अनूद्यते । केवला तु निरावृत्तिः विधीयते । यत्तु काललक्षणाऽर्थः शब्दः इति, नैष दोषः । लौकिकी हि लक्षणा । मन्त्रोऽपि च रूपादेव आह्वाने प्राप्तः, सोऽपि अनूद्यते एव । चोदितश्च वाक्यान्तरेण अवघातः शक्नोति कालं लक्षयितुम् । तस्मात् आह्वाने विनियोक्तव्यः इति ।

वा— 'त्रिरभ्यासपरत्वात्तु न मन्त्रोऽत्र विधीयते । लक्षणे च शतुर्वृत्तिः प्राप्तं चान्यदनूद्यते ॥' 'अवघ्नन्' इत्यत्र हि धात्वर्थोपसर्जनः कर्ता लक्षणार्थयुक्तः प्रतीयते । 'लक्षणहेत्वोः क्रियायाः' (पा० ३।२।१२६) इति शतृप्रत्ययात् । तेन न कचित् श्रुतिपीडा । तस्मात् सर्वमेतत् अनूद्य 'त्रिः' इति विधीयते नान्यत्, वाक्यभेदप्रसङ्गात् । 'योग्यत्वेन च सिद्धत्वात् कालोऽपि न विधीयते । अभिधानसमेवास्य विधिरित्यभिधीयते ॥ मन्त्रुच्चारणमात्रं यो वा त्रिरभ्यासेन जायते । अभ्यासे विहितेऽर्थेन स कालोऽस्मिन् विधीयते ॥' (त्रिरभ्यासे विहिते यः तदनुसारकालात् अधिकः कालः त्रिरभ्यासेन जायते, स. अस्मिन् वाक्ये अर्थापद्यमानेन विधीयते इत्यर्थः) । तथा च 'यावज्जीविकोऽभ्यासः' (२।४।१।१) इत्यत्र यावज्जीवाभ्यासयोः अन्योन्यविविदेतुत्वं व्याख्यातम् ।

गुणाभावात् । ७ ॥

भाष्यं— इदं पदोत्तर सूत्रम् । (पदुक्तवानि *आह– ) अथ कस्मात् न गुणात् आहन्ति ब्रूते । इति । यतो हि अवहन्तिः, तस्मात् हविष्कृत् । किमिदं भविष्यति ? रूपादेव आहन्तौ मन्त्रे प्राप्ते केवलं निरावृत्तिमेव वक्ष्यति । न भविष्यति वाक्यभेदः इति । (उत्तरमाह– ) अत्रोच्यते । गुणाभावात् गौणं अभिधानं अवहन्तौ न संभवतीति । नहि अतो 'आहूतः अस्मि' इत्यवगच्छति, तत्र अदृष्टार्थं आह्वानं स्यात् । यजमानस्य पत्न्यां हविष्कृति दृष्टार्थमाह्वानम् । तस्मात् हन्तिमन्त्रः इति ।

वा— अथ यदुक्तं हन्तिरेव हविष्कृत् भविष्यति इति, तत्रोच्यते 'गुणाभावाद्धविष्कृत्त्वमन्त्राभावो यदोऽदयते ।' (अनेतने अवघाते आह्वानादिविषयलक्षणगुणाभावात् हविष्कृत्त्वप्रकाशकमन्त्रस्याभावः) 'आमन्त्रणादिसामर्थ्यं लिङ्गमाश्रीयते तदा ॥' अयञ्च पदोत्तरमेतत् सूत्रम् । 'त्रिरभ्यासपरत्वात्तु न मन्त्रोऽत्र विधीयते । रूपादेवावघाताङ्गं भविष्यति तदुच्यते ॥ यद्यप्यस्य हविष्कृत्त्वं कथंचित् कल्प्यते त्वया । तथाप्याह्वयतीत्येतत् व्यर्थं तस्मिन्नचेतने ॥ आमन्त्रणविभक्तिश्च प्रेषश्चैहीति मध्यमः । व्यर्थं मन्त्रे भवेत् सर्वमवघातपरे सति ॥' चेतनस्या तु पत्न्या अर्थवत् । तस्माच्च रूपादेव मननाताद्रूल्यमिति ।

लिङ्गाच्च । ८ ॥

भाष्यं— लिङ्गं च भवति 'वाग् वै हविष्कृत् वाचमेवैतदाह्वयति' इति । न च वाचः अवहन्तिना सादृश्यमस्ति । अस्ति तु यजमानस्य पत्न्या । सा हि स्त्री, वाक् इति हि स्त्रीलिङ्गं । अवहन्तिस्तु न स्त्री, न पुमान्, न नपुंसकमिति । ननु अवहन्तेरपि स्त्रीलिङ्गः शब्दोऽस्ति निघेति । अत्र ब्रूमः । न नियोगतः अवहन्तेः स्त्रीलिङ्गः शब्दः, पुंलिङ्गोऽपि तस्यास्ति अवघातः इति, नपुंसकलिङ्गोऽपि कार्णि । अपि च पत्न्याः स्वरूपेण सादृश्य, अवहन्तेः पररूपेण शब्देन । तस्मात् पत्न्या हविष्कृति लिङ्गं अनुरूपतर भवति ।

वा—एवं न 'वाक्' इत्यर्थेनैव ऐकान्तिकेनैव स्त्री येन सादृश्यो भविष्यति । अन्यथा अनुदात्तस्त्रीलिङ्गक्रिया ऽऽदिरूपेण अनेकप्रकारस्त्रीलिङ्गैव सामर्थ्यात् कथंचित् कल्प्यः स्यात् । तस्मात् आह्वानादनतिरिति ।

विधिकोपश्चोपदेशे स्यात् । ९ ॥

भाष्यं— अवहन्तिमन्त्रे सति, अस्मिन् मन्त्रे विध्यन्तरलोपः स्यात् ' अपहतं रक्ष इत्यवहन्ति ' ' अपहता यातुधानाः इत्यवहन्ति ' इति । तत्र पक्षे अभावात् नित्यवच्छ्रुतिः उपरुध्येत । तस्मात् अवघ्नन् इति कालक्षणार्थः इति ।

वा— अवघातमन्त्रान्तर्विरोधश्च मन्त्राप्यः स्यात् । आह्वाने अयमेव इत्यविरोधः ।

शा— ' पूर्वाधिकरणन्यायाद् विधौ युक्ता न लक्षणा । मन्त्रस्य त्ववघाताऽर्थत्वे वचनादेव दुष्यति ॥ ' तस्मादवघातार्थो मन्त्रः । इति प्राप्ते, अभिधीयते, ' त्रिरभ्यासो न पाठेन नित्यप्राप्तो यतः क्वचित् । द्विः पठ्यते सकृच्चापि तस्मात्तायमनूद्यते ॥ न पाक्षिकानुवादत्वं नित्यान्वयविरोधतः । तस्मादत्र त्रिरभ्यासो विधातव्यस्तथा सति ॥ मन्त्रस्य न विधिः शक्यो वाक्यभेदप्रसङ्गतः । आह्वानेन तु मन्त्रस्य योगो हन्तेस्तु लक्षणा ॥ ' तस्मात् त्रिरावृत्तिमात्रविधानात् आह्वानार्थो मन्त्रः, नावघाताऽर्थोऽवघाते ।

सोम—ननु आह्वानस्यापि विधेयत्वावश्यंभावेन विशिष्टविधित्वात् कथं वाक्यभेदः । न च 'पत्न्येव हविष्कृत् उत्तिष्ठति, सा अभिधुत्यावहन्ति ' इति अवघातस्य पत्नीकर्तृकत्वावगत्या अवघातार्थे तदाह्वानस्य अर्थप्राप्तत्वात् न विधेयत्वमिति वाच्यम् । अनाहूतायाः स्वयमागताया अपि अवहन्तृत्वसंभवेन आह्वानस्य नित्यप्राप्त्यभावेन विधिसंभवात् । इति चेत् नैवम् । 'एहि' इति मन्त्रवर्णादेव आह्वानस्य नित्यप्राप्तिसंभवात् ।

यत्तूक्तं न्यायसुधायां मन्त्रवर्णतः प्राप्त्यभ्युपगमे आह्वानप्राप्तौ तत्र मन्त्रविनियोगः, मन्त्रवर्णाच्च आह्वानप्राप्तिः इत्यन्योन्याश्रयः स्यात् । किंच नित्यप्राप्तस्यापि आह्वानस्य ' उरु प्रथस्वेति पुरोडाशं प्रथयति ' इति पुरोडाशत्वान्यथाऽनुपपत्त्या प्राप्तस्यापि प्रथनस्य आध्वर्यवसमाख्यातत्वेन अध्वर्युकर्तृकत्वसिद्ध्यर्थं ' यजमानमेव तत् प्रथयति ' इत्यर्थवादोपपत्त्यर्थं च विधेयत्ववद् इहापि अध्वर्युकर्तृकत्वप्राप्त्यर्थं ' वाचमेव तदाह्वयति ' इत्यर्थवादोपपत्त्यर्थं च विधेयत्वमावश्यकम् । तस्मात् त्रिरभ्यासविशिष्टाह्वानविधिरेवायं इति । ( न्याय-सुधा. ९ इति मूलग्रन्थानुवादः अर्थतोऽनुवादोयम् ) तत्र । ' एहि ' इतिपदयुक्तस्य मन्त्रस्य नित्यवदाम्नातस्य नित्यं शब्दप्रकाशकत्वस्य वक्तव्यतया तस्य च मन्त्रस्य दृष्टार्थत्वलाभाय मन्त्रसामर्थ्यपर्यालोचनात् आह्वानस्यैव द्वारत्वेनाक्षेपेण च द्वारफलौ मन्त्रविनियोगफलादेव द्वारभूताह्वानस्य तत्र मन्त्रान्वयस्य च सिद्धेः अन्योन्याश्रयानवकाशः, मन्त्रस्य आध्वर्यवकाण्डे समाम्नानबलादेव आह्वानस्य अध्वर्युकर्तृकत्वसिद्धौ तदर्थं आह्वानविधिर्नैवापेक्ष्यः । ' उरु प्रथस्व ' इति मन्त्रस्य तु आध्वर्यवकाण्डे समाम्नानमात्रात् प्रथनस्य नाध्वर्युकर्तृकत्वसिद्धिः । अध्वर्यूच्चारितमन्त्रेण अन्यस्यापि तदर्थस्मृतौ सत्यां अन्येनापि प्रथनानुष्ठानसंभवात् । प्रकृते च 'एहि' इति शब्दप्रयोक्तुरेव आह्वातृतया एहीतिपदयुक्तमन्त्रस्य आध्वर्यवत्वे आह्वानस्यापि आध्वर्यवत्वमवर्जनीयं इति वैषम्यम् । अर्थवादश्च त्रिरभ्यासमात्रविधावपि कथंचिदुपपादयितुं शक्यते इति तदर्थमपि विशिष्टविधिगौरवदुष्टस्य आह्वानविधानस्य अनङ्गीकार्यत्वात् इति ( पृ. २१३ ) । न च मुख्ये अवघ्नन् इति पदे सिद्धान्तिनो लक्षणा, पूर्वपक्षिणस्तु जघन्ये आह्वयतिपदे इति वैषम्य शङ्क्यम् । अवघातस्य ' लक्षणहेत्वोः क्रियायाः ' इति क्रियान्तरलक्षणक्रियाकर्तृविहितशतृप्रत्ययेन क्रियाऽन्तरलक्षणाऽर्थत्वावगमेन अन्योपसर्जनतया स्वार्थसमर्पके अवघ्नन् इति पदे एव प्रथमभूतेऽपि लक्षणाया न्याय्यत्वात् । सूत्रार्थस्तु— आह्वानं आह्वानार्थमन्त्रोऽपि, तथा ऐन्द्रीवत् अयथार्थं स्यात् इति ।

वि— ' हविष्कृदेहीत्यामन्त्र्य त्रिरवघ्नन् समाह्वयेत् । विनियोगोऽवघाते स्यादाह्वाने वाऽवघातके ॥ ऐन्द्रीवन्मान्त्रमाह्वानं गौणं हन्तिर्मुख्याऽन्यथा । पाठेन प्रापितं नित्यं ह्वयतेरुपचारतः ॥ त्रिरभ्यासो विधातव्यो नित्यप्राप्तेरभावतः । हन्तिना लक्ष्यते कालः प्राप्तोऽसौ ह्वयतिस्तथा ॥ विनियोगे वाक्यभेदो लिङ्गादाह्वानशेषता । नैन्द्रीन्यायः श्रुत्यभावाद् चर्हिन्यायेन मुख्यता ॥ ' तस्मादाह्वानशेषोऽयं मन्त्रः ।

☞ इच्छान्यायः । 'इच्छायाः इष्यमाणेन साकं ज्ञानद्वारकः सम्बन्धो नातिरिक्तः' इति सोऽयं इच्छान्यायः । न च पुत्रादिधीजन्यसुखादेः पुत्रादिविषयत्वापत्तिः इच्छान्यायाद् इति वाच्यम् । अद्वैत. पृ. ४६६.

● वैदिकलिङ्गादिनिष्ठव्यापारस्य इच्छारूपत्वे न क्वचित् क्षतिः । गुणे गुणत्वव्यवहारस्य नियुक्तिकत्वेन अभ्युपेयत्वात् । गन्तव्य इष्यत्वोपपत्तेः वैदिकशब्दे नित्येच्छाश्रयीकारे बाधकाभावाच । रहस्य पृ. १५.

☞ इच्छेष्यमाणसमभिव्याहारे इष्यमाणस्य प्राधान्यं इति न्यायः यजेत स्वर्गकामः इत्यादौ वक्तव्यः । परिमलः. १।१।१ पृ. ४७ मद्र. ● इच्छेष्यमाणसमभिव्याहारे इष्यमाणस्यैव भाव्यता इति न्यायः प्रवृत्ते त्रिविदिषया कर्मविनियोगे न प्रतिबन्धाऽस्ति । आभरणं. ३।४।५।२५ ब्रम्., ● 'इच्छेष्यमाणसमभिव्याहारे विधेयभावनाया भाव्यापेक्षायां इष्यमाणमेव भाव्यत्वेन अन्वेति' इति 'स्वर्गकामो यजेत' इत्यादिवाक्येषु फलेन विशेषन्यायेन प्रवृत्तेन 'प्रधानार्थस्यैव अर्थान्तरेण अन्वयः' इत्यस्य सामान्यन्यायस्य बाधिततया वेदने एव कर्मणा विनियोगः ( इति शङ्का ) । ३।४।५।२५ ब्रसू.

☞ इज्याऽधिकरणम् । आघारादीनां अङ्गता ॥

दर्शपूर्णमासयोरिज्याः प्रधानान्यविशेषात् । ४।४।११।२९ ॥

भाष्यं—स्तो दर्शपूर्णमासौ । तत्र श्रूयन्ते आग्नेयाग्नीषोमीयोपांशुयाजैन्द्राग्नसान्नाय्ययागाः । तथा आघारौ आज्यभागौ, प्रयाजानुयाजाः, पत्नीसंयाजाः, समिष्टयजुः, स्विष्टकृदिति । तत्र सन्देहः. किं सर्वे यागाः प्रधानभूताः, उत के चित् गुणभूता इति । किं प्राप्तम् । दर्शपूर्णमासयोर्यावत्य इज्याः ता सर्वाः प्रधानभूता इति । 'यजेत स्वर्गकामः' इत्यविशेषेण यागेभ्यः फलं श्रूयते । फलवच प्रधानम् । सर्वे चामी यागाः । तस्मात् सर्वे प्रधानभूता इति ।

अपिवाऽङ्गानि कानि चिद्, येष्वङ्गत्वेन संस्तुतिः, सामान्यो ह्यभिसंस्तवः । ३० ॥

भाष्यं—अपिवा कानि चिदङ्गानि भवेयुः । कानि पुनस्तानि ? येषु अङ्गत्वेन संस्तुतिः । यथा, 'अक्षीरू वा एतौ यज्ञस्य यदाघारौ' 'चक्षुषी वा एतौ यज्ञस्य यदाज्यभागौ' 'प्रयाजानुयाजा अर्हन्ते वर्म वा एतद्यज्ञस्य क्रियते, वर्म वा यजमानस्य भ्रातृव्यस्याभिभूत्यै' इति । अक्षीरू यस्याङ्गं, चक्षुषी चक्षुष्मतः, वर्म वर्मवतः । सामान्यो हि अभिसंस्तवो युक्तः । यदि च अङ्गानि तानि संस्तुतानि, ततः सामान्योऽर्थवान् भवति । तस्मात् अङ्गसंस्तुतानि अङ्गानीति ।

तथा चान्यार्थदर्शनम् । ३१ ॥

भाष्यं— एवं च कृत्वा अन्यार्थदर्शनमुपपन्नं भवति । 'प्रयाजेप्रयाजे कृष्णलं जुहोति' इति । 'न च प्रयाजान् यजति' 'न चानुयाजान् यजति' इति च ।

अविशिष्टं तु कारणं, प्रधानेषु गुणस्य विद्यमानत्वात् । ३२ ॥

भाष्यं—अविशिष्टमेतत् कारणं संस्तवो नाम । आग्नेयादीनामपि अङ्गत्वेन संस्तुतिरस्ति । 'शिरो वा एतद्यज्ञस्य यदाग्नेयो, हृदयमुपांशुयाजः, पादावग्नीषोमीयः' इति । शिरः शिरस्वतोऽङ्गं, हृदयं हृदयवतः, पादौ पादवत इति सर्वस्यैव अङ्गत्वेन संस्तुतिरिति सर्वमेवाङ्गं प्राप्नोति । तत् प्रधानं न स्यात् । असति प्रधाने कस्य अङ्गम् ? तस्मात् नैतत् अङ्गमिति ।

नानुक्तेऽन्यार्थदर्शनं, परार्थत्वात् । ३३ ॥

भाष्यं— अथ यदुक्तं अन्यार्थदर्शनं, परार्थत्वात् न तत् साधकं भवति । परार्थं हि तत् वाक्यं, न इत्यमानस्य प्रकाशने प्रमाणार्थम् । तस्मात् अन्यस्य प्रमाणमन्वेष्टव्यं श्रुत्यन्तरं न्यायो वा । तस्मिन् असति मृगतृष्णादर्शनमिव तत् भवति । संस्तुतिरपि असति न्याये असाधिकैव ।

पृथक्त्वे त्वभिधानयोर्निवेशः श्रुतितो व्यपदेशाच, तत् पुनर्मुख्यलक्षणं यत् फलवत्वं, तत्संनिधावसंयुक्तं तदङ्गं स्याद्, भागित्वात् कारणस्याश्रुतश्चान्यसंबन्धः । ३४ ॥

भाष्यं— तुशब्दः पक्षं व्यावर्तयति । यदुक्तं 'सर्वाणि समप्रधानानि' इति, नैतदेवम् । दर्शपूर्णमास-

शब्दवाच्यानि प्रधानानि कर्माणि । कुतः ? फलसंयोगात् । दर्शपूर्णमासशब्दकेभ्यः फलं श्रूयते ' दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत ' इति । कानि पुनः दर्शपूर्णमासशब्दकानि ? येषां वचने पौर्णमासीशब्दः अमावास्याशब्दो वा । आग्नेयादीनि तानि । ननु अमावास्याशब्दकानां नैव फलं श्रूयते । उच्यते । पृथक्त्वे समुदाययोर्निवेशः एतयोरभिधानयोः ' पौर्णमासी ' इति च ' अमावास्या ' इति च । त्रिषु आग्नेयादिषु यः समुदायः, तत्र पौर्णमासीशब्दः, इतरेषु अमावास्याशब्दः । कथं ? पौर्णमासी अमावास्या इति च द्विशब्दः श्रूयते, द्वयोरेव व्यपदेशाय । कथं तद्व्यपदेशः ? द्विवचननिर्देशात् ' दर्शपूर्णमासाभ्याम् ' इति । एकार्थौ च दर्शामावास्याशब्दौ । कथं ? ' दर्शो वा एतयोः पूर्वः, पूर्णमास उत्तरः । अथ यत् पूर्णमासं पूर्वमारभते, तद्यथापूर्वं क्रियते । पूर्णमासमारभमाणः सरस्वत्यै चरुं निर्वपेत्, सरस्वते द्वादशकपालम् । अमावास्या वै सरस्वती, पूर्णमासः सरस्वान् । उभावेतौ यथापूर्वं कल्पयित्वा आरभते ऋद्ध्यै, अथो मिथुनत्वाय ' इति । तत्र दर्शशब्देन प्रक्रम्य अमावास्याशब्देन ब्रुवन् एकार्थतां दर्शयति । शक्यते च चन्द्रस्य अदर्शनेन अमावास्या ' दर्शः ' इति लक्षयितुं यथा चक्षुषोरभावे सति चक्षुष्मान् इति चक्षुष्मान् लक्ष्यते । एतस्मात् व्यपदेशाच्च श्रुतितश्च लोके श्रवणात् एकार्थतामेव अध्यवस्यामः । तत् पुनः गुणलक्षणं, यत् फलवत्त्वम् । यत् अन्यत् तत्सन्निधौ श्रूयते ( अफल ), तत् तदङ्गम् । कथं ? इतिकर्तव्यताऽऽकाङ्क्षस्य सन्निधौ श्रूयमाणं इतिकर्तव्यताविशेषणत्वेन परिपूरणसमर्थं, तदङ्गं भवितुमर्हति । आह, ननु दर्शपूर्णमासफलमेव अत्र अनुपज्यते । उच्यते । शक्यमनुषक्तुं, किन्तु दर्शपूर्णमासवाक्यं साकाङ्क्षमेव स्यात्, अन्या अस्य इतिकर्तव्यता अश्रुता कल्प्येत । एषामपि प्रयाजादीनां अन्या कल्प्येत, एतदितिकर्तव्यता अवगम्यमाना उत्सृज्येत । तेन अङ्गं च कारणमाणि इति एषामन्येन फलेन संबन्धः अश्रुतः । तस्मात् न सर्वाणि समप्रधानानि, आघारादीनि गुणकर्माणीति ।

**गुणाश्च नामसंयुक्ता विधीयन्ते, नाङ्गेषूपपद्यन्ते । ३५ ॥**

**भाष्यं—** नामविशेषसंयुक्ताश्च गुणविशेषा विधीयन्ते । यथा ' चतुर्होत्रा पौर्णमासीमभिमृशेत्, पञ्चहोत्रा अमावास्याम् ' इति, सर्वेषु प्रधानेषु अस्मिन् समुदाये चतुर्होत्रा, अस्मिन् पञ्चहोत्रा इति । विभागविधानाच्च इदं मोपपद्येत, भवति च एवंलक्षणकं गुणविधानम् । तस्मादसत्पक्ष एवेति । अपि च अङ्गत्वेन आघारादीनां संस्तुतिरुपपन्ना भविष्यति ।

**तुल्या च कारणश्रुतिरन्यैरङ्गाभिसंबन्धः । ३६॥**

**भाष्यं —** अथ यदुक्तं आग्नेयादीनामपि अङ्गत्वेन संस्तुतिः अङ्गस्य स्थापयेदिति, तत्परिहर्तव्यम् ।

**उत्पत्तावभिसंबन्धस्तस्मादङ्गोपदेशः स्यात् । ३७॥**

**भाष्यं—** नैव दोषः । प्रधानानामपि यथा सती उत्पत्त्यपेक्षया शिरआदिस्तुतिः भविष्यति । यथा जायमानस्य हि पुरुषस्य अग्रे शिरो जायते मध्ये मध्यं पश्चात् पादौ, एवं आग्नेयः अग्रत, उपांशुयाजो मध्ये अग्नीषोमीय, पश्चात् इति । एतस्मात् सामान्यात् एषा स्तुतिरिति ।

**तथा चान्यार्थदर्शनम् । ३८ ॥**

**भाष्यं —** ' चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते, त्रयोदशामावास्यायाम् ' इति । इतरथा न चतुर्दश पौर्णमास्या आहुतयो भवेयुः, न वा अमावास्यायां त्रयोदश इति । तस्मात् आग्नेयादीनि प्रधानानि, आघारादीनि अङ्गानि इति सिद्धम् ।

**वा—** ' तत्राख्यातानुसारित्वात् संज्ञाया राजसूयवत् । तस्याः विशेषतो वृत्तेः षड्यागप्रधानता ॥' उच्यते । ' यद्धि नामाप्रसिद्धार्थं तदाख्यातवशं भवेत् । इदं पुनः ( दर्शपूर्णमासौ इति ) प्रसिद्धार्थमाख्यातस्य विशेषणम् ॥ ' तस्मात् षण्णामेव प्राधान्यं इतरेषां तु प्रकरणात् तदङ्गत्वम् ।

**सोम—** पादादौ राजसूयवाक्ये योऽयं समप्रधानाङ्गाङ्गित्वविचार, तत्प्रसक्तविचारान्तराणि परिसमाप्य इदानीं स एव विचारः क्रियते इति संगतिः ।

वि—'आधारादेश्च मुख्यत्वं न वा, ऽऽग्नेयादिषु तत् ।, यन्मुख्या नामतः सिद्धाः शेषा अन्येऽङ्गसंस्तुतेः ॥'

भाट्ट—प्रयाजादिसापेक्ष्येण 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यनेन राजसूयवत् यजिना न फलसंबन्धः । किंतु आग्नेयादीनां षण्णामेव, दर्शपूर्णमासनाम्ना आग्नेयादिषड्यागेष्वेव प्रसिद्धार्थकेन यजेरवच्छेदात् । यथा च दर्शपूर्णमासनाम्नः प्रसिद्धार्थकत्वं तथोपपादितं पौर्णमास्यधिकरणे (२।२।३) । तदधिकरणप्रयोजन कथनार्थं तु इदमधिकरण प्रवृत्तिसिद्ध्यर्थं न विरुध्यते । राजसूयनाम्नश्च यथा प्रकृतसर्वयागपरत्वं, तथा तदधिकरणे स्पष्टमेव । अतश्च प्रयाजादीनामङ्गत्वात् विकृतौ अतिदेशः ।

मण्डन—'के विधिहेष्टिगुणाः पञ्च यागाः ।'

शंकर—'दर्शे फाल्गुना फलम् ।'

* इज्याऽधिकरणम् । ४।४।११।२९–३८ । प्रथमसूत्रे 'इज्या' इति प्रधानशब्दपाठात् 'इज्याऽधिकरणं' इति नामधेयम् । तत्र 'दर्शपूर्णमासयोरिज्याः' इत्यादिकं प्रथम सूत्रम् । तन्न्यायस्वरूप तु 'तद्-द्विषानुसारिणौ हि दर्शपूर्णमासशब्दौ वत्रियमौ भवत' इति वार्तिके उक्तम् । अत्र सुधा 'पौर्णमास्यमावास्याशब्दोक्तसमुदायद्वित्वानुसारित्वात् दर्शपूर्णमासशब्दयोः समुदायविषयत्वम्' इति । सु. पृ. ७३२, * पौर्णमास्यधिकरणं विना (२।२।३।३–८) इज्याऽधिकरणपूर्वपक्ष एव स्यात् इति इज्याऽधिकरणस्य पौर्णमास्यधिकरणाधीनत्वात् पौर्णमास्यधिकरणप्रयोजनत्वेन आरम्भः । ▮ ७३२, * यद्यपि स्वर्गादि साध्यं कल्प्येत, तस्य इज्याऽधिकरणन्यायात् दर्शपूर्णमासनामविशेषितप्रयुक्तेन आग्नेयादिषट्केन सह सम्बन्धनिराकाङ्क्षीभूतस्य न प्रयाजादौ संक्रमावकाशः अस्ति । पृ. ११९५.

* इज्याविकारः फलचमस. इत्युक्त फलचमसाधिकरणे । (३।५।१९।४०–५१) । के.

⊠ इज्याशेषात् स्विष्टकृदिज्येत, प्रकृतिवत् । १०।७।३।१० ॥

आग्नीषोमीये पशौ स्विष्टकृत् इज्याशेषात् यागं कृत्वा अवशिष्टात् अङ्गनवसमुदायात् इज्येत । प्रकृतिवत् प्रकृतौ यथा दर्शादियागावशिष्टात् पुरोडाशात् स्विष्टकृदिज्यते तद्वत् । विकृतौ प्रकृतिवद्भावात् । इति पूर्वः पक्षः ।

त्र्यङ्गैर्वा, शरवद् विकारः स्यात् । ११ ॥

वाशब्दः पूर्वपक्षं व्यावर्तयति । अग्निष्वात्तेऽस्त्रे दोःपूर्वार्धं, गुदमध्यं, श्रोणिजघनार्धं इति त्र्यङ्गैः त्रिभिरङ्गैः प्राकृतेज्याशेषस्य विकारः बाधः स्यात् । शरवत् यथा श्येनादौ शरैः प्राकृताः कुशा बाध्यन्ते तद्वत् । इति सिद्धान्तः । के.

* इडा पराची 'यदिडोपहूता इति तत् पराची, यत् उपहूतेडा इति तत् प्रतीची' । (यदा इडोपाह्वान निगदे इडाशब्दः आदौ उच्चार्यते, तदा सा इडा पराची नाम । यदा तु इडाशब्दः उपहूतशब्दात् पश्चादुच्चार्यते, तदा सा इडा प्रतीची नाम इत्यर्थ.) । संकर्ष ४।२।१७. * इडे द्वे दर्शपूर्णमासयोः ( पत्नीसंयाजेभ्यः पुरस्तात् उपरिष्टाच्च विहिते । वि. १०।७।१३. * इडा 'शेषादिडामवद्यति' (अग्नौ हुतात् हविषः शेषात् इडायाः अवदाने विधते) । मा. ३।४।१४।४१, * इडा यजमानपञ्चमा ऋत्विजः भक्षयन्ति दर्शपूर्णमासयोः । १२।१।१५।२१. * इडायाः उपस्तरणाभिघारणादि इडापात्रे प्रक्षिप्त संस्कारविशेषः । वि. १०।७।५ * 'इडानां संक्षारः' नाम साम अन्नकम् । माल. पृ. ७२.

* इडाचमसादिभक्षाः प्रतिपत्तिरूपत्वात् सत्रेष्वपि सन्त्येव । वि. १०।२।९.

⊠ इडादिपदाभ्यासनिषेधपरे पराची प्रतीची इति ॥

इडामेव प्रकृत्य 'य कामयेतापशुः स्यादिति पराचीं तस्येडामुपह्वयेत' (यं कामयेत पशुमान् स्यादिति प्रतीचीं तस्येडामुपह्वयेत) इति श्रुतौ प्रत्यक्शब्देन प्रत्यङ्मुखता कर्तुरुच्यते । एवं पराक्शब्दोऽपि 'मुख प्रति उपहयते' इति वचनान्तरात् । इति प्राप्ते, अभ्यासानभ्यासवचनावेतौ शब्दौ । 'पराची आसिधेनीरन्वाह' 'परागवद्धि-

पवमानेन स्तुवते ' इति प्रयोगात् । ' यदिडोपहूतेति तत् पराची, यदुपहूतेडेति तत् प्रतीची ' इत्याम्नानाच्च । आम्नायस्तु ' इडोपहूतोपहूतेडेत्येके ' इत्यादिना अनेकविधो यः प्रतीयते तस्यायं प्रतिषेधः । मुखं प्रति इति तु मुखसेवितामवस्थापयेदित्यर्थकम् । इष्टकानां तु मुखावनयात् अशक्यत्वाच्च कर्तुमुत्सवादः पक्षाश्रितः । संकर्ष. ४।३।१७.

• इडाऽऽदिभक्षाः भक्षादिभिरेव कर्तव्याः, न तु तैः स्वगृहे नयनं इत्युक्तं ' भक्षार्थो वा द्रव्ये समत्वात् ' ( ३।४।१७।५० ) इति सूत्रे भाष्यवार्तिकयोः । के.

**इडाऽऽदिभक्षाः शेषप्रतिपत्त्यर्थाः ॥**

**शेषभक्षाश्च तद्वत् । १०।२।९।२९ ॥**

**भाष्यं**— सन्ति शेषभक्षाः ज्योतिष्टोमे, दर्शपूर्णमासयोश्च । यथा वषट्कारनिमित्ता होमाभिषवनिमित्ताश्च । तथा, इडाप्राशित्रचतुर्धाकरणशंयुवाककालाः । तेषु संशयः किं ते परिक्रयार्थाः, उत नेति । किं प्राप्तम् ? शेषभक्षाश्च तद्वत् भवितुमर्हन्ति, यद्वत् दक्षिणादानम् । प्रीतिं हि करोति भक्षणं, प्रीता च आनमन्ति । तस्मात् परिक्रयार्थाः शेषभक्षा इति ।

**संस्कारो वा, द्रव्यस्य परार्थत्वात् । ३० ॥**

**भाष्यं**— वाशब्दः पक्षं व्यावर्तयति । न परिक्रयार्थं भक्षणं, द्रव्यसंस्कारार्थमिति । कुतः ? यागार्थेन हि द्रव्यमुपपन्नं प्रयोजनवत् । यदि तस्य संस्कारार्थं भक्षणं, ततः तदपि प्रयोजनम् । ' दक्षिणार्धात् भक्षाय अवद्यति ' इत्येवमादि एकदेशश्रवणं प्रकृतोपेक्षं भवति, न द्रव्यस्य उत्पादकम् । तस्मात् द्रव्यस्य भक्षणमुच्यते, न भक्षणार्थं द्रव्यमुत्पाद्यते । प्रकृतस्य च भक्षणम् । तस्मात् संस्कारार्थमिति गम्यते ।

**शेषे च समत्वात् । ३१ ॥**

**भाष्यं**—अपि च मन्त्रेण द्रव्यं, तत् देवतायै प्रकल्पितं, यजमानेन न स्वयं उपभोक्तव्यमिति । तस्मात् न उपयोक्तुं ऋत्विजः ईशते, नो स्वयमपि यजमानः । साम्यमत्र यजमानस्य ऋत्विग्भिः । परिक्रीणानश्च स्वीकुर्यात् द्रव्यम् । तत्र अस्य देवतार्थः संकल्प एव नावकल्पते । तस्मादपि न परिक्रयार्थं भक्षणमिति ।

**स्वामिनि च दर्शनात्, तत्सामान्यादितरेषां तथात्वम् । ३२ ॥**

**भाष्यं**— स्वामिनि च भक्षणं दृश्यते ' यजमानपञ्चमाः समुपहूता इडां भक्षयन्ति ' इति । यजमानस्य असंशयं अपरिक्रयः । तत्सामान्यादितरेषामपि न परिक्रयः । कथम् ? एवं सति नैव विज्ञायते, इडाभक्षणेन यजमानपञ्चमाः परिक्रीयन्ते इति । किं तत्सामान्यम् ? द्वितीया विभक्तिः । तस्मादपि न परिक्रयार्थं भक्षणमिति ।

**तथा चान्यार्थदर्शनम् । ३३ ॥**

**भाष्यं**— एवमन्यार्थदर्शनमिदं उपपन्नं भवति । कुण्डपायिनामयने, ' अध्वर्युकैश्चमसैः सोमान् भक्षयन्ति ' इति प्रथमे भक्षे विशेषः श्रूयते ' अध्वर्युकैः ' इति । एवं सर्वेषु भक्षणं दृश्यते । तत् परिक्रयार्थत्वे नावकल्पते । तस्मादपि न परिक्रयार्थं भक्षणमिति ।

सोम—यदि आनत्यर्थत्वात् दक्षिणादानस्य सत्रे बाधः, तर्हि तद्वदेव शेषभक्षाणामपि बाधः इत्युत्थितेः ( दृष्टान्तः- ) संगतिः । सूत्रार्थस्तु—तद्वत् दक्षिणादानवत् शेषभक्षा आनत्यर्थाः इति ।

वि—'क्रयाय प्रतिपत्त्यै वा यजमानेडाऽऽदिभक्षणम् ।, क्रयाय पूर्वम्, नैव याग्ये स्वत्ववर्जनात् ॥ अक्रीतयजमानस्य भक्षणत्वाच्च तेन सा । प्रतिपत्तिः संस्कृतित्वात् सत्रेषु न निवर्तते ॥ '

भाट्ट— शेषभक्षास्तत्तत्र द्वितीयासंयोगात् हविःप्रतिपत्त्यर्थाः प्रयाजशेषन्यायेन क्रतोः करिष्यमाणकर्मणि वाक्यधानार्थाश्च न ॥ आनत्यर्थाः, तस्याः प्रकृतौ आनुषङ्गिकत्वेऽपि प्रयोजकत्वाभावात् । अस्तु वा दृष्टप्रयोजनत्वाविशेषात् त्रयाणामपि प्रयोजकत्वं, न तु आनतिमात्रस्य । अतः सत्रे तदभावेऽपि प्रतिपत्त्यायर्थं कर्तव्या एव ।

मण्डन —' परिक्रयो न भक्षः स्यात् । ' ( भक्षः परिक्रयो न स्यात् इति युक्तः पाठः ) ।

शंकर—' भक्षास्तु प्रतिपत्त्यर्थाः । '

• इडाऽऽदिभक्षस्य सर्वत्र द्रव्यसंस्कारार्थता वक्ष्यते ( १२।१।१५।३१–३२ ) । सु. पृ. १५९५–

* इडाऽऽदिशेषभक्षाः प्रतिपत्त्यर्थत्वात् यजमानस्यापि भवन्ति । दर्शपूर्णमासयोः सौमिकेष्टिषु च । भा. १२।१।१५।३१, * इडानिगदः 'इडोपहूतोपहूतेडो पास्मा इडाऽऽह्वयतामिडोपहूता' इत्यादिः । ९।१।१४।४०. * इडानिगदः सर्वोऽपि न चतुर्वारमावर्तनीयः 'चतुरुपह्वयते' इत्युक्ता आवृत्तिस्तु 'इडा उपहूता' इतिपदविषयिणी । संकर्षे, ४।३।१९. * इडानिगदे दर्शपूर्णमासस्थे यज्ञपतिशब्दः बहुयजमानके नोहितव्यः, न स समवेताभिधायी । भा. ९।१।१४।४०.

* 'इडाऽन्ता आशिषा सन्तिष्ठते' अन्तभूता चेयमिडा पूर्वेष, नोत्तरा । वि. १०।७।१२-१३.

* इडापात्रे इदशादिमाशनवाक्ये समिष्ठुरपि पठित. । वि. १०।७।५.

* इडाप्रचारस्यायं मन्त्रः 'इडोपहूता' इत्यादिः 'ब्रह्मदेवकृतमुपहूतं' इत्येषमन्त्र इडोपह्वानार्थः । 'दैव्या अध्वर्यव.' इत्यादिः ऋत्विगुपह्वानार्थः । अध्वर्युनाऽऽद्याश्च: सर्वे ऋत्विजो लक्षण्या । 'उपहूता मनुष्या' इति ते एवोच्यन्ते । कीदृशाः ते इति ? उच्यते । ये गवा ( अनान्- ) आयन्ति रक्षन्ति, ये च पशुपतिं ( वर्धान्- ) वर्धयितुं समा, तादृशा मनुष्याः उपहूता । टुप् ९।१।१४।४० पृ. १६८६.

* इडा- प्राशित्र - चतुर्धाकरण - शंयुवाकःकाल्याः भक्षाः पङ्क्तौ सन्ति । भा. १०।२।३।१३. * इडा प्राशित्राविभक्षणार्थमेव 'एकवा ब्राह्मणे उपह्वयति' इति कृष्णल्चरौ उपहारः उपदिष्टः । वि. १०।२।८.

* इडाभक्षः शेषकार्यम् । भा. ३।४।१४।३७. * इडाभक्षे पशौ मैत्रावरुणस्यापि भक्षोऽस्ति । वि. १०।७।६.

* इडाभक्षविचारः अध्यूघ्नी होतुः, पशौ । भा. १०।७।४।१२-१६, * इडाभक्षविचार. सनिष्ठु. अग्नीषः, पशौ । १०।७।५।१७.

* इडाभक्षोत्तरं पशुपुरोडाशाडेडाभक्षणोत्तरमेव पिष्टलेपफलीकरणहोमौ , न तु अनुयाजैः सहोत्कर्षः । भाट्ट. ५।२।१९.

* इडाभक्षणं एकदेवताके पशुगणे तन्त्रेण । भाट्ट. ५।२।६. * इडाभक्षणं गृहमेधीये अस्ति । तेन प्राशित्रादिभक्षणाना प्रतिषेधः । भा. १०।७।११।३०. * इडाभक्षणार्थमवत्तस्य नाशे इडाभक्षलोप एव । वि. ६।४।२.

* इडोपाह्वानमन्त्रे 'ये च यज्ञपतिं वर्धान्' इत्यत्र सत्रे 'ये च यज्ञपतीन् वर्धान्' इत्येवं ऊहो न कर्तव्यः । वाक्यस्य इडाप्रशंसार्थत्वात् एकवचनेनापि प्रशंसायाः सिद्धत्वात् । भा. ९।१।१४।४०. * आग्नेयेडा पत्नीसंयाजमात्राङ्गं, न तु सर्वयागाङ्गम् । संकर्ष. ४।३।१६, * औषधेडा आग्नेयादीनामेव अङ्ग, न तु सर्वयागाङ्गम् । ४।३।१६.

ई इतरमन्यः इति न्यायेन अध्वर्योः वरणादिक प्रतिप्रस्थाता कुर्यात् । ( 'इतरमन्यस्तेषां यतो विशेषः स्यात्' इति न्याय. । यत्र आध्वर्यवं वरणमन्त्रं होता करोति, तदा हौत्रं होतुरन्य. होतृपुरुष कुर्यात्, तेषां होतॄणां चतुर्णां मध्ये यत. यस्य विशेषः अन्यकर्तव्यशून्यतारूपः अन्तरङ्गत्वं वा स्यात् । एवं अध्वर्यो. वरण कर्तृत्वासंभवे तस्य पुरुषः प्रतिप्रस्थाता कुर्यात् इति ) । भाट्ट. ३।८।१. * उपासिपक्षे तावत् प्रधानाङ्गभूताया- मुपास्तौ अध्वर्युकर्तृकत्वस्य आवश्यकत्वात् अतिदेशप्राप्तनिर्वापयजमानकर्तृकत्वानुरोधात्र प्रोक्षणादौ 'इतर- मन्य' इति न्यायेन प्रतिप्रस्थातृकर्तृकत्वापत्तेः । ( अग्नेरुपासितः होतुः समीपे स्थितिः ) । ५।१।१९, * चमसेष्वपि अध्वर्युरेव होमादिकर्ता । तस्यान्यत्र व्यापृतत्वे तु गौणसमाख्यया चमसाध्वर्यवः । तेषामप्यसंभवे 'इतरमन्यः' इत्येव प्रतिप्रस्थात्रादयः । ३।७।२३, * यद्यपि वार्तिके अग्नीषोमीयाद्यङ्गभूतेषु प्रैषान्तानुवचनेषु 'यज' इति शब्दस्य प्राकृतत्वात् तन्मात्रे अतिदेशेन आध्वर्योः प्राप्ति', 'प्रेष्य' इति प्रैषान्तसमाम्नानाद्वा 'इतरमन्य' इति न्यायेन प्रतिप्रस्थातुः । इत्युक्तं तदुपेक्षितम् । ३।७।२२. * ( नानाबीजे कचित ) 'सदावान्ति' 'सह पिबन्ति' इति ( वचनात् सर्वावघातस्य ) एककालत्वात् 'इतरमन्यः' इति (कर्मान्तर) प्राप्नोति । टुप्. ५।१।१।२।२५. * इतरमन्यस्तेषा

इतिन्यायेन अध्वर्युगणस्यस्य अन्यतमस्य शमितृत्वेऽपि 'पराङावर्ततेऽध्वर्युः' इति समाख्योपपत्तेः। संकर्ष. १।१।१४. ● सन्ने मृतस्य स्थाने अन्य आनीयते। तत्र मृतकर्तृकपदार्थानुष्ठानार्थं आनयनं इति चेत्, तेषां कर्मान्तरेष्विव अध्वर्य्वादिसमाख्यया 'इतरमन्यस्तेषां' इति न्यायेन कर्मान्तरैरेव सिद्धेः (इति शङ्का)। भाट्ट. ६।३।१० ● इतरमन्यस्तेषां यतो विशेषः स्यात् (१।८।१०।२२, २१ वा)। आध्वर्यवे हि कर्मणि प्रकृतावेव अध्वर्युपुरुषाः प्रतिप्रस्थात्रादयो विहिताः। यदा त्वसौ अध्वर्युः असमर्थः कर्मान्तरव्यासङ्गित्वात्, स्वात्मनि क्रियाविरोधाद्वा, तदा तदीयं कर्म तत्पुरुषाः प्रतिप्रस्थात्रादयः कुर्वन्ति। (तेषां अध्वर्युपुरुषाणां मध्ये यतः यस्य –सार्वविभक्तिकस्तसिः– विशेषः अन्तरङ्गत्वलक्षणः स्यात्, स कुर्यात् इति सूत्राक्षरार्थः)। कणिका. पृ. ४२३ ● 'चित्पतिस्त्वा पुनातु' इति मन्त्र अनूहितमेव प्रयुज्य आध्वर्युकर्तृकत्वबाधावसरभावे 'इतरमन्यस्तेषां यतो विशेषः स्यात्' इतिन्यायेन अध्वर्युपुरुषाणामन्यः प्रतिप्रस्थातैव अध्वर्युदीक्षायां प्राप्नोति। भाट्ट. ५।१।१. ● ननु आध्वर्य्वादिषु व्याप्रियमाणेषु 'शमिता पशुं कण्ठे गृह्णाति' इति श्रवणात् भेदः स्यात्। नैष दोषः। स एव कश्चित् अभ्याहृत एव अधीष्यति। न च तदा सर्वाध्वर्युपुरुषाणां सर्वार्थिनां वा व्यापारो विद्यते। तदेतत् वक्ष्यति 'इतरमन्यस्तेषां यतो विशेषः स्यात्' इति। वा. १।७।१३।२९. ● समकालौ उभौ पदार्थौ आध्वर्युकर्तृकौ, तत्र विरोधात् एकत्राध्वर्युर्नियतः। उपासने (प्रातरनुवाक प्रतिगरणता होतुः समीपे आसने स्थितौ) प्रोक्षणादिषु (तु) 'इतरमन्यस्तेषां यतो विशेषः स्यात्' इति (न्यायात् अध्वर्युपुरुष एव) प्रतिप्रस्थाता स्यात्, (न ब्रह्मपुरुष आग्नीत्)। टुप्. ३।१।१३।२९. ● 'होता यक्षन्मित्रावरुणौ प्रशास्तारौ' इतिप्रैषपाठस्य मैत्रावरुणः प्रेष्यति चानु चाह' इति वाक्येन मैत्रावरुणकर्तृकत्वे प्रसक्ते स्वात्मनि प्रैषासंभवात् लिङ्गेन अन्यकर्तृकत्वं, तत्रापि 'इतरमन्यस्तेषां यतो विशेषः स्यात्' इति न्यायेन अच्छावाके प्राप्ते सामान्यसमाख्यया होतुरेव लिङ्गेन प्रतिप्रसवः इति वार्तिकोदाहरणं लिङ्गवाक्यविरोधस्य। कौ. ३।३।१४ पृ. २५९.

※ इतरस्य प्रयुक्तत्वात् (१२।१।५।१२)। स एव न्यायः 'इतरस्य प्रयुक्तत्वात्' इति 'गार्हपत्ये च हविषां श्रपणं श्रुतं स च प्रयुक्तो विद्यते' तस्मात्तत्र (पशुपुरोडाशस्य) श्रपणं कर्तव्यम्। ('अग्नीषोमीयपशुपुरोडाशस्य' इति हिन्दी टिप्पनम्)। भा. १२।१।५।१२.

※ इतरेषु तु पित्र्याणि। ६।८।६।२५ ॥

पित्र्यकर्मणां कालस्य बोधनार्थं सिद्धान्तसूत्रम्। पित्र्याणि पितृदेवताकानि कर्माणि पूर्वसूत्रद्वयोक्तकालेभ्यः इतरेषु कालेषु कुर्यात् अपरपक्षे अपराह्णे च, स्मृतिरूपात् वचनात् 'अपराह्णः पितृणां' इति अन्वारोहवाक्यशेषस्य च दर्शनात्। के.

● इतरशब्दश्च (समानमितरत् श्येनेन इत्यत्र) असंनिहिते अनुपपन्नः, संनिहिते एव भवति। यथा 'इतरः प्रावारो दीयतां, इतरः कम्बलो दीयतां' इति संनिहितो दीयते, न प्रावारमात्रं कम्बलमात्रं वा। भा. ७।१।२।१३। ननु इतरशब्दोऽयं संनिहिते भवति। उच्यते इतरदधिकार्थे (इति सूत्रांशः) समानमितरत् समानमधिकमित्यर्थः। ननु संनिहितवचनोऽयं नाधिकार्थवचन इति। उच्यते। न केवलमयं संनिहितवचन एव, पूर्वोक्तसदृशं असंनिहितमपि ब्रूते अधिकार्थे च। यदा हि वस्त्राण्यनुक्रम्य इतरशब्दः प्रयुज्यते 'देवदत्ताय कम्बलो दीयतां, विष्णुमित्राय कौशेयं, यज्ञदत्ताय क्षौमं, इतरत् चैत्राय' इति, तदा वस्त्रमेव प्रदीयते, न हिरण्यं रत्नं वा। भा ७।१।२।१६। इतरशब्दः नाधिक्ये लोके प्रसिद्धः। तर्हि? उपयुक्तात् यदितरत् तत्र प्रसिद्धः। टुप्. ७।१।२।१६.

● इतरेतरयोगे चार्थे (द्वन्द्व–) समासविधानात्। भा ६।१।५।२२ पृ १३६६.

● इतरेतराश्रयाणि च कार्याणि न प्रकल्पन्ते। भा. ४।३।८।१०.

● इतस्ततः। (अत्र हिन्दी तानि वाक्यानि निवेशितानि, यानि नानाविधलौकिकव्यवहारप्रदर्शकानि

भाष्यादौ तत्तत्सिद्धान्तस्थापनाय दृष्टान्तत्वादिना उदाहृतानि। एतानि च तस्मिंस्तस्मिन् विशेषप्रपञ्चके निवेशयितुं न शक्यन्ते, अथ चोपयुक्तानि। तत्र च विषयानुसारेण प्रायो निवेशयितुमशक्यत्वात् वर्णक्रमेणैव सर्वाणि निवेशितान्यत्रेति ज्ञेयम्। एतादृशानि च वाक्यानि अन्यान्यपि अनवधानात् अनुद्धृतानि स्युः इति नास्ति मतिः।) ● अश्वामये मुद्गौदनभोजनं निजातस्वस्था चेति, नित्यं शय्यासनं भोजनं च विकरोति। भा. १०।३।५।३२, ● अश्वामये मुद्गौदनो भोक्तव्यः। उदरामये पयः पातव्यं इति। सर्वत्र हि अश्वामये मुद्गौदनो भुज्यते, उदरामयेऽपि पयः पीयते। ७।१।१।८, ● अमिना सिञ्चेत् उदकेन दीपयेत् इति मुसलं विहन्येत। ३।२।२।४, ● अग्निवत्, शीतमुदकं, स्वभाव एवः। १।३।९।२२ पृ. २०४, ● अग्निहोत्रवेलायामारभ्यमिति। तत्र अग्निहोत्रं नास्ति, तथापि अनपेता वेला। ११।१।१५।४८, ● अग्न्ययों यागः। यथा उपाध्यायाय गां इदानीति। टुप्. ● अन्न्यप्राये लिङ्गिते दृष्ट्वा भवेदयं भग्न्यः इति मतिः। भा. २।२।४।१२, ● 'अदुष्टेन हि वित्तेन सुलभा साधुमूल्यता। दुष्टमूल्यतलाभस्तु भवत्यासायदोषवत् ॥' पा १।३।२।३ पृ. १७१, ● अघावेऽपि भग्यपर्याग्नादारिताः नैमीऽपि भ्राम्यन्त, पुरुषाः इश्यन्ते। १।३।१।१ पृ. १६१. ● 'भनुवाकशः पठ्यताम्' इति। दाण्टकलितादशी पठ्यते क्रमानुप्राय (न ■ सस्थानविवृद्धया)। भा १०।५।१५।८६, ● अज मीनेः साधनम्। १।२।२।२२. ● अन्यभाषितं अन्यमेव निपतितम्। बृहती पृ. १५३. ● 'अन्यपेर हि सूत्रैस्तु दुर्बलेऽपि चर्वते। अन्यथा दन्तदृष्टौ सर्वशक्तिक्षये सति॥' शा. ३।३।३।१४ पृ. ८३५, ● अन्यदिच्छति अन्यत् करोति। भा. ६।२।१।३ पृ. १३५३, ● अन्यस्य क्रियमाणं नान्यस्योपकरोति। १०।६।१।८।६५, ● अन्यार्थमपि कृतं अन्यार्थमपि शक्नोति कर्तुम्। तद्यथा शाल्यर्थं कुल्याः प्रणीयन्ते, ताभ्यश्च पानीयं पीयते उपस्पृश्यते च। ३।२।६।१२ पृ. ६८९, ● अन्यार्थमपि प्रकृतं अन्येन संबध्यते, यथा शाल्यर्थे कुल्याः प्रणीयन्ते, ताभ्यश्च पानीयं पीयते उपस्पृश्यते च। ४।३।२।४ पृ. १२४८. ● अन्योऽपि (शब्दात्) आक्षिनिकोत्रादेः प्रयोगोऽर्थेषु दृश्यते। वा. १।३।८।२४ पृ. २५५. ● अपुंस्त्वं छादगन्तश्च अष्टाचत्वारिंशद्वर्षाणि वेदब्रह्मचर्यं चरितवन्तः। तत एषा स्मृतिरित्यवगम्यते। ('अष्टाचत्वारिंशद्वर्षाणि वेदब्रह्मचर्यंचरणम्' इति स्मृतिः)। भा. १।३।२।३ पृ. १८६ स्मृतिस्तु पृ. १६८–६९, ● अप्रगल्भकारी अपि हि कश्चित् रोगेणोपहतः सिंहः पुनः सिंह एव। १।४।१२।२१–१ पृ. १५६, ● अभिनवं पट दृष्ट्वा न च एवं क्रियमाणं उपरूपत्वात्। अथ च अनिगतमवगच्छति रूपमेव दृष्ट्वा, तन्तुष्वनिवद्धजनितोऽयं तन्तुष्वतिपक्षविनाशात् तन्तुविनाशाद्वा विनश्यतीत्यवगच्छति। १।१।६।११, ● 'अमात्येन मे ग्रामो दत्तः' 'सेनापतिना मे ग्रामो दत्तः' इति। न च अमात्यः सेनापतिर्वा ग्रामस्य प्रभवति। राजैव प्रभवति। इतरस्मिन् गुणभूते स्तुत्या दातृत्ववादः। एवं कर्मैव फलं ददाति, न देवता। गुणभूतदेवताया तु स्तुत्या क्वचित् दातृत्ववादः। ८।१।१०।३४, ● अमी पिष्टपिण्डाः सिंहाः क्रियन्ताम्। सिंहशब्दोऽत्र प्रतिकृतिवचन। ८।३।६।२४, ● 'अमी पिष्टपिण्डाः सिंहाः क्रियन्ताम्' इत्युक्ते प्रसिद्धसिंहसंनिधानात् पिष्टपिण्डेषु सिंहसादृश्यं कर्तव्यतया प्रतीयते। वि. १।४।६, ● अम्बूनि मज्जन्त्यलाबूनि ग्रावाणः प्लवन्ते। एवंजातीयकं प्रमाणविरुद्धं वचनमप्रमाणम्। भा. १।१।५।५ पृ. ४१, ● अयं घटः भित्तु नागदन्तकेषु स्थाप्यतां इत्युक्ते व्यासज्य स्थाप्यते न पर्यायेण (एकैकस्मिन्– नागदन्तक नाम 'खुंटी' इति भाषा)। ९।२।३।१४, ● अयथार्थस्यापि उच्चारणे संभवत्येव। यथा 'दश दाडिमानि षडपूपाः' इति। भा., ● अयोमुद्गरं पिण्डच्छेदनं इत्युक्ते न सर्वांशः प्रतीयते। ८।१।२।५, ● अर्थप्राप्ते यत्र प्रतिषेधो भवति, 'न विषं भक्षयितव्यं, न सर्पाङ्गुलिर्देया, ■ कण्टकः पादेनाधिष्ठेयः' इति अक्रियैव तस्यार्थस्य भवति, न विकल्पः। १०।८।१।२. ● अवयवं च सर्वात्मकं वस्तु युगपद्ग्रहणार्थमवान् तद्भागोऽयमितिप्रतिषिद्धविषयविवेकार्थं एकैकनिरूपणं आदरेण कर्तव्यम्। वा. १।२।१।२ पृ. १६८. ● अविद्यमानेष्वपि

(' गुणेषु ) स्तुत्या ऽस्य सामानाधिकरण्यवचनमुपपद्यते एव यथा इन्द्रो बृहस्पतिर्देवदत्तः इति। भा. ९।१।१५।४२, * अश्वमानयेत्युक्ते अश्वानयनं प्रतीयते, गामानयेति गवानयनम्। तत्र अश्वः अपैति, गौश्चोपजायते। तेन ज्ञायते अश्वशब्दस्य अश्वोऽर्थः, गोशब्दस्य गौरिति। ४।१।५।१५ * 'अस्य सूतस्य शाटकं वय' इत्युक्ते वानेन शाटकः क्रियते इति हि भाविनि संज्ञाविज्ञानात् अविरोधो विज्ञायते। वा. ३।७।१६।३३ पृ. १०९७.

* आकाङ्क्षायामसत्यां संनिधानमकारणं भवति यथा 'भार्या राज्ञः, पुरुषो देवदत्तस्य' इति। भा. ६।४। ६।२१ पृ. १४४३। यथा भार्यया संबध्यमानो राजा आनन्तर्येऽपि न पुरुषेण संबध्यते, निराकाङ्क्षत्वात्। टुप्. * आकाशगमनसुरकन्यालाभादयो अत्यन्तासन्तः। वा. १।२।१।१९. * आचार्यशेषं देवदत्तो भुञ्जानः यदि शेषं पूर्णकाय प्रयच्छति, (तदा) पूर्णको देवदत्तमुपलक्षयति, 'देवदत्तशेषं भुङ्क्ते इति, नाचार्यशेषम्'। भा. ३।२।११।२१, * आज्यं क्रव्यं इति (कस्मिंश्चित् देशे भवन्ति चकारः। तेन आज्यशब्दः असंस्कृतेऽपि उपचर्यते)। १।४।७।१० * आपत्सु आतोद्विग्नानां विवेक एकैकः शरणं परम्। बृहती. पृ. ९४५. * आम्रे पुनराह्वः। अयमाम्रो यज्ञदत्तस्य पुनः इति निर्ज्ञातयज्ञदत्ताभिप्रायस्य आम्रस्य पुनरभ्युच्यते। * एवं भवत्या प्रतीसत्यादः। भा. ७।१। ४।१४, * आरामगोपकस्य आरामो वेतनदाने प्रयोजको निमित्तं च। आरामे सति तस्मै वेतनं दीयते, वेतनेन समर्थो भवति आरामं रक्षितुम्। ९।१।१।१ पृ. १६४१, * आश्रये प्रवर्तमाने तदाश्रितमपि प्रवर्तते यथा पटे आकृष्यमाणे तदाश्रितं चित्रमपि आकृष्यते। ८।१।१४।२३, * आह, शिष्टाः पुनः किमर्थं विगर्हन्ते? उच्यते। विगर्हन्ते तावत्, किं नो विदितेन कारणेनेति। ६।२।३।१५.

* इतो ब्राह्मणाः भोज्यन्तां, इतः परिव्राजकाः इति। (ब्राह्मणपरिव्राजकन्यायोऽयम्) । भा. २।१।१३। ४२. * 'इदं दधि घृतं इमे शालयः देवदत्तो भोज्यतां, देवदत्तवत् यज्ञदत्तः' इत्यादिषु सापेक्षेऽपि शब्दे अतिदेशदर्शनात्। तन्त्ररत्न. ६।१।१।१. * इद दधि घृत शाकं इमे शालयः देवदत्तो भोजयितव्यः। देवदत्तवत् यज्ञदत्तः तैलेन इति। भोजने यत् घृतेन शक्यते कर्तुं, तत् तैलेन क्रियते। तस्मात् यद्यपि न श्रूयते तैलेन स्नेहविसम्बमिति, तथापि समानकार्यत्वात् तैलं घृतस्य विनिवर्तकं भवति। भा. १०।२।२८।८७, * इदं दधि घृतं शाकं इमे शालयः देवदत्तो भोजयितव्यः। देवदत्तवत् यज्ञदत्तः तैलेन इति। भोजने तैलमुपकारकं श्रूयमाणं, यस्य प्राकृतस्य कार्यमभिनिर्वर्तयितुं शक्नोति, तस्य कार्ये विनियुज्यते घृतस्य। सामान्यं हि अस्य स्नेहनसामर्थ्यं घृतेनेति। १०।३।२।१६, * इयं गौः क्रेतव्या देवदत्तीया, एषा हि बहुक्षीरा स्नातला अनष्टप्रजा चेति। क्रेतव्या इत्यभ्युपगते प्रवर्तन्ते, गुणाभिधानात् प्रवर्तन्तेऽवश्यं क्रेतारः। बहुक्षीरेति न गुणाभिधानमवगम्यते। १।२।२।२०, * इष्टमर्थं प्रति अनुष्ठानं भवति। ६।२।१।३.

* उत्तराः कुरवः। दक्षिणान् कुरूनपेक्ष्य उत्तरा इत्युच्यन्ते, न च ततोऽन्ये उत्तरा देशा न सन्ति। अथ च नियतापेक्षत्वात् उत्तरत्वं न जहति। भा. ११।१। ८।३८. * 'उत्तानाः वै देवगवा वहन्ति' भूमिष्ठानामेव सतां केनापि गुणवादेन पृथिवीगोलत्रैलोक्यभ्रमणादिना वा पुराणोक्तेन दर्शितत्वात्। यथैव वयमुपरि देवान् पश्यामः, एवमधो भुवःपरिवर्तनात् अधमपि लोको देवैरुपरि दृश्यते इति उत्तानवहनदृष्टिः। वा. १।३।९।२० पृ. २९३. * उपानद्धारणादिका क्रिया कण्टकपरिहारार्था। टुप्. ६।३।१।२ पृ. १४०९. * उपेतमनुसृष्टं पुनरपेतुमशक्यम्। उपेयमानं च विशेषणवत् अकिंचित्करं स्यात्। भा. १२।२।५।१६, * 'उभाभ्यां बाहुभ्यां प्लवन्ति' देवदत्तः इति गम्यते, न च यौगपद्येन। यदा दक्षिणेनाप्लवति, तदा सव्येन धनुःपृष्ठं नमयति न तेनाप्लवति, इति गम्यते तत्र व्यापृतत्वात्। ६।२।२।५. * 'उभाभ्यां हस्ताभ्यां परिगृह्य पुरुषोऽयमस्ति'। इदमभिप्रकरणे। 'दक्षिणेन हस्तेन पुरुषोऽयमस्ति' इति च। वा. १।३।४।९

पृ. २२१. ● उभयमर्थलक्षणं प्रयत्नतो गम्यमान गुणशेषपर, तत्र विधिप्रतिषेधयोर्मतरो गुणवान्, सोऽनुष्ठीयते। भा. १०।८।१।३.

● 'एकं विनाऽप्यनुशासनात् क्रियते मत्यसंभवात्। क्रियतेऽनुशया स्वन्यद्विशेषश्च तयोर्महान् ॥ सामान्येनाप्यनुशासनाद्विशेषश्च विशिष्यते। विशेषोऽत्यन्तनिर्दोषः स्तोकदोषेतरक्रिया ॥' वा. १।३।२।४ पृ. १९१. ● एकोऽपि बहून् पदार्थान् कर्तुं बहुभिर्नामधेयैरुच्यते (पाचकादिभिः)। भा. २।७।१।२१. ● 'एको दोषो हतो यस्य यस्य वाऽबहुता हता। अनयोस्तु तयोर्भेदो न कश्चिदपि दृश्यते ॥' वा. २।१।२।५ पृ. ३९६, ● एकप्रबन्धे च कृतार्थस्य भावाद्स्थाऽभावात् पुनर्विनियोगान्तरानुपपत्तिः। ३।३।७।१४ पृ. ८९२. ● एष दण्ड इष्टकाकूटे तिष्ठति महानेनेति। दण्डेन इति गम्यते, नेष्टकाकूटेनेति। भा. १०।२।३।१६.

● ओदन पच इत्युक्ते तण्डुलानानय काष्ठान्याहर उदकं स्थाल्यादि नोपनय इत्युक्ते लोके तण्डुलोपनयनादीना पाकाङ्गप्रतीतिर्भवति। सु. पृ. ११९३. ● 'ओदने दधि दत्त्वा अभ्यवहर्तव्य' इति। ओदनस्य निर्देशमात्रे विवक्ष्यते, नाधिकरणत्वम्। भा ६।४।१।२२.

● कः शुक्लो नाम, यत्र शुक्लत्वमस्ति। किं शुक्लत्वं नाम, यत्र शुक्लशब्दप्रवृत्तिः। क तस्य प्रवृत्तिः, यच्छुक्लशब्दे उच्चारिते प्रतीयते। भा. १।१।५।५ पृ. ७०, ● कश्चित् आत्मीयां वेदना परस्मै आचक्षीत दह्यमानस्येव मे भवति, पाट्यमानस्येव मे भवति वध्यमानस्येव मे भवतीति। १।१।५।५ पृ ७०. ● कश्चिदुच्यते 'किं त्वयि भवति निमन्त्रिते, स्वीयान्ते निमन्त्रणीयाः' इति। भा. १।२।१५।३७. ● कश्चित् चक्षुष्मान् स्वय रूपं पश्यति, न च शक्नोति अन्यस्मै जात्यन्धाय तन्निदर्शयितुं, न च तत्र शक्यते निदर्शयितुं इत्येतावता नास्तीति अवगम्यते। भा. १।१।५।५ पृ. ६८, ● कश्चित् जात्यन्धो वदेत् स्वराग्यहमस्य स्वरूपविशेषस्येति। कुतस्ते पूर्वविज्ञानमिति च पर्यनुयुक्तः जात्यन्धमेवापर विनिर्दिशेत्। तस्य कुतः। जात्यन्धान्तरात्। एव जात्यन्धपरम्परायामपि

सत्या नैव जातु चित् सम्प्रतीतिर्भिद्यते. सम्यग् दर्शनमेतत् इति। १।३।१।१ पृ. १६२. ● कश्चित् बहुद्रव्यसमुदायेऽवस्थिते कं चिदभिधत्ते 'इदमस्मात् यावत्तुभ्यं गृहाण' इति तत्र न तद्द्रव्यविशेषो गम्यते। अथ च न सर्वस्यागोऽभ्यनुज्ञायते। वा. ३।४।१४।४१ पृ. ९८०, ● कश्चित् लोहं सुवर्णं वा अर्जयेत्, अनेन स्वाधीनेन यथोपपन्नं कर्म करिष्यामीति। स तेन यथाकालं इष्टं दानादि करोति। भा. ११।३।२।२. ● 'कस्य चिन्मायते तुष्टिस्तुमेऽपि हि कर्मणि। वाक्यस्येव सुदेवृक्त्या वेदाचारमनुपणे ॥ पशुहिंसादिसम्बन्धे यज्ञे तुष्यन्ति हि द्विजाः। तेन एव हि यज्ञेभ्यः शाक्या. तुष्यन्ति पीडिताः ॥ ब्रह्मभोजनेनापि तुष्यन्त्यन्ये द्विजातयः। समानुल्मुना प्राप्य दाक्षिणात्यस्तु तुष्यति ॥ अन्ये तु सम्पत्तीकेन मनसा सह कुर्वते ॥' वा. १।३।३।७ पृ २०४, ● कस्य चित् पुरुषस्य एकः पादः पुरस्तात् गतः इति न तावता किञ्चित् वैलक्षण्यं भवति। तथाऽत्र द्रव्यदाने अधिकमपि प्रक्षेपार्थं यत्ने सति उत्पत्तिवाक्यशिष्ट यागसाधनत्वं समस्तेन आश्रयणेन प्रतिपन्नमेवेत्यविरोधः। ३।४।१४।४१ पृ. ९८२. ● का नामेयं नदी, को नामायं पर्वतः किमिदं वनमिति, भवति च प्रश्नेनैवोपक्रमः। भा. ३।३।४।११, ● कटं विशीर्यन्तो वीरणानि उपाददते। ११।६।१९, ● कटे भुङ्क्ते कांस्यपात्र्यां भुङ्क्ते इति, अर्थात् कल्प्यते कटे आसीनः कांस्यपात्र्यां ओदनं निधाय भुङ्क्ते इति। १।८।१४।२९. ● कर्मकाले च परेण मर्दितव्यम्। यत्काले हि मर्दनं तत्काल मर्दनगुणम्। १।१। ५।५ पृ ४०, ● कार्षापणे दीयमाने पादोऽपि दत्तो भवति। ६।७।१।२०, ● कालिकेषु शाल्यो भुज्यन्ते गावः पीयन्ते इति। श्रुत्युपादाने अदृष्टं कल्पयितव्यमिति लक्षणाशब्दः परिकल्प्यते। (शाल्यः नाम शालितण्डुलाः। गावः नाम गोपयः) १।१।१।२।२१ वर्णक २, ● काष्ठं दह्यमानस्य तृणस्य नोपकारे वर्तते। तृणं तु काष्ठस्य उपकुर्यात्। ६।८।१४।४९, ● काष्ठान्याहर्तुं प्रस्थित उच्यते 'भवता शाकमपि आहर्तव्य' इति। काष्ठाहरणे शाकाहरणमुपाधिः क्रियते इति। किमिदं उपाधिः क्रियते इति। काष्ठाहरणाधिकारसमीपे द्वितीयं

कर्मोऽधीयते । सति काष्ठाहरणे इदमपरं कर्तव्यमिति । ४।३।१।२०, * काष्ठादाहृप्रभृतिभ्यो गृह्यते, तत्र कात्त्वाशः स्वामिना सह पच्यन्ते । तेभ्यः स्वामी विभज्य निर्दिशति 'इदं तुभ्यं इदं तुभ्यं' इति । १०।३।११२।९१, * काष्ठादाहप्रभृतिभ्यो गृह्यते तदसंकीर्तितेऽपि परिक्रये आनमनार्थमेव भवति । १०।२।८।२३. * 'किमौषधं ज्वरस्येति पृष्टो यदि वदेदिदम् । येनासौ नश्यतीत्येव किं तेन कथितं भवेत् ॥' श्लोवा. सचन्धाक्षेपपरिहारे ३. * 'कुक्कुटायानय सिद्धुनं करिष्यामः' इत्यत्र सामर्थ्यात् द्वितीया स्त्री आनीयते । टुप्. ६।१।५।२२ पृ. १३६५.

* गच्छन् कश्चित् पूर्वपादं अपरं करोति, अपरं च पूर्वम् । भा. १०।६।२।१९. * 'गर्दभेनापनीतं हि हैलाश्वमिराट् मतः ।' वा. १।३।२।२ पृ. १७८. * गायनाः गीतवस्तुकानि यानि गीतकेषु प्रक्षिपन्ति, तान्यपि तेनैव गीतिस्वरेणैव उच्चारयन्ति, मा भूत् स्वरसंतानस्य विच्छेद इति । भा. १२।३।८।२१, * गाथकौः अङ्गस्तुकानि यानि नाम प्रक्षिप्यन्ते तानि गीतिकाल गणनाऽर्थानि, नार्थप्रत्यायाय उच्चार्यन्ते । शुनं हि अक्षरैः गीतिकालः परिच्छिद्यते । ९।२।१०।३९., * गावीशब्दात् गम्नादिमति (गो)प्रत्ययस्य अनिवृत्तिः । १।१।६।१८, * गृहान्निर्गताः सर्वगृहजनगवयन्तः, पुनः प्रविश्य अनभमाना अपि न प्राक् प्रवेशात् विनष्ट इति अवगच्छन्ति । १।१।६।२०, * गोमयान् कुरु इति संवाहे । (संवाहः समाहरणम्) । तत्र शब्दं कुरु इति शब्दप्रयोगे कुरु इति भविष्यति । १।१।६।१४, * 'गौरयं वाहीकः' इति तु मवादे (सवहनकर्तरि) वाहीके गौणः शब्दः प्रवर्तते । १०।२।१७।४७, * 'गौर्न पदा स्प्रष्टव्यः' इति गोत्वसंबन्धेन श्रूयमाणा धर्माः नत्रासंभवन्तः तत्संबद्धेषु पिण्डेषु विज्ञायन्ते । तस्य च गोत्वसंबन्धस्य अविशेषात् सर्वगवीषु शुक्लनीलकपिलकपोतिकासु भवन्ति । ७।१।१।२ पृ १५२६. * 'गौर्वाहीकः' इति गोशब्दो न वाहीके विभ्रन्मूत्रभक्षणादि (तिष्ठता मूत्रकरणं, तिष्ठता अन्नभक्षण इत्यादि) मत्, लक्षयति । टुप्. ११।३।१५।४८. * ग्रामेण उदपानः खेयः । ग्रामेण तडाग. खेयः इति । ग्रामशब्देन समुदायवचनेन संयुज्य कूपो विधीयमानः समुदितैः पुरुषैः गम्यते, न प्रतिपुरुषं कूपभेदः । भा. ११।२।१।१ पृ. २१००, नायमेकान्तः यत् समुदायशब्देन संयुज्य उच्यते, तत् समुदितानामेव भवति इति, भेदेनापि किंचित् भवति । यथा गणाय स्नानम् । गणायानुलेपनमिति । अनुलेपनादिरेषो गणशब्देन समुदायवचनेनापि संयोज्योक्तो न समुदायेन संबध्यते । केन तर्हि ? समुदायिभिः । प्रतिपुरुषं हि स्नानाद्यावर्तते । ११।१।१।२.

* घटो आनीयेयाता इत्युक्ते द्वितीयो घट एवानीयते, नाधिकः । टुप्. द।१।९।२२ पृ १६६४.

* जीविष्यति विना धनेनेति एतत् विप्रतिषिद्धम् । भा. ६।१।८।४०. * ज्वरहरतक्षकचूडारत्नालंकारोपदेशवत् अप्रामाणिकत्वम् । कणिका. पृ. ३३८.

* डित्थडपित्थयोर्माता डित्थमाता इत्युच्यते । न्यायरत्नाकरः १।१।८ श्लो. ना. ८.

* तदेव तु कदा चित् प्रमाणं कदा चिदप्रमाणं इति न कथंचिदपि विश्रम्भः स्यात् । वा. १।३।२।३ पृ. १७६. * तद्यथा चक्रवाकस्तनी हंसदन्तावली काशवस्त्रा शैवालकेशी नदी इति नद्याः स्तुतिः । तथा 'चत्वारि शृङ्गा०' इति यज्ञस्तुतिः । भा. १।२।४।३८, * तुण्डमात्रे (तुण्डनामकस्य जनन्यै) दीयता इति, यद्यपि सा तुण्डडित्थयोर्माता, तथापि तस्यै दीयते कार्त्स्न्येन हि तस्य सा माता भवति । नहि व्यावर्त्यते मातृत्वम् । ६।६।१।१०. * 'तेन यद्यपि सामर्थ्यं प्रत्येकं विभज्यते । तथापि युगपद्भावे वचनस्य निराक्रिया ॥' वा. ३।२।७।१४ पृ. ८३४. * त्रिषु कुलेषु देवदत्तो भोजयितव्यः इति । यदा त्रिसङ्ख्या कुलैः संबध्यते, तदा अभ्यासो लक्ष्यते । भा ९।२।३।२०, * 'त्रिषु गृहेषु देवदत्तो भुङ्क्ते' इत्युक्ते न यौगपद्यमवगम्यते । पर्यायेणापि भुञ्जाने भवत्येष वादः । अत्रोच्यते । न तत्र त्रिसंख्या भुजिं प्रति उपदिश्यते, येन एतदेव भवति । तत्र गृहशब्देन संबध्यते । त्रिषु गृहेषु, न द्वयोरेकस्मिन् वेति । यदा भुजिः त्रित्वं प्रति उपदिश्यते, तदा यौगपद्येनैव भोजयितव्यः । ९।२।३।१४.

* दण्डी इति पुरुषोपसर्जनीभूतो दण्ड एव विधीयते, पुरुषस्य प्रातनात् । टुप् १०।८।१।२ पृ १९९४ * दण्डी छत्री । ये नैमित्तिकाः शब्दाः, ते निमित्तमुपलभ्य प्रयुज्यन्ते यथा दण्डी छत्री इति । भा ७।३।११।२९, * 'दण्डेन युध्यते' इति वचने न दण्डिरूप शब्देनाभिहितम् । यदि तु तेन दण्डितेन प्रयोजन स्यात्, शक्यते तेन लक्षयितुम् । १०।१।१।२ पृ १८००, * 'दण्डो मनोहरो रमणीयश्च, प्रहर शीघ्रम्' इति रमणीयमनोहरसंबन्धेऽपि सति सन्निहितत्वात् 'प्रहर शीघ्रम्' इत्येते पदे सबध्यते । ९।३।३।९, * 'दधि-पूर्ण-शश्भिर्देवदत्तो भोजयितव्य, देवदत्तवत् यज्ञदत्त स्तैनैव' इत्युक्ते स्नेहकार्यमाणात् नैव ओदनकार्ये एव विनियुज्यते, न ओदनकार्ये इति । १०।६।७।२२, * दात्राणि सूत्रे वा यदा दात्रकारेण तत्तुपायेन वा कर्म इत भवति, तदा (अन्नं भक्ष) एतौ शब्दौ प्रवर्तेते न प्राक् । अतो विज्ञायते अनोन्ध शब्दौ कर्मनिमित्तौ इति । ७।३।११।२८, * दुर्बलस्य बाधो न्याय्यो, न बलीयस । १२।१।२।७ * दृश्यते चाद्यवेऽपि अर्थस्मरण प्रयत्नाद्यश्च । वा १।३।१।२ पृ १६५ * दृश्यन्ते तावत् अलस्य शिरोभागस्य कारवाण्येव अभ्यस्यमानानि दीर्घतरमानि शिरसारोहणे पादविष्यति (स्नापनानि) । 'शतायु पुरुष' इति श्रुत्यापि वचने अधिक जीवन दृश्यते एवेति । अत्रोच्यते । नाय मेकान्त । यदा चित् या च पार्वती च शरीरस्थिरता सुपादयेषु न ह्यागिषकालम् । यथा प्रक्रमेन (दिवी ल्वि शम्या पुर्वन्त ) अभ्यासात् प्रक्रमाणा वृद्धे या च यावती च मात्रा प्राप्नुवन्ति न तु अभ्यस्यत पुरुषायुषेणापि योजनमात्र प्रक्रमेयु । भा ६।७। १३।३४ * दृश्यते हि अयानेऽपि श्रोत्रिया नैमित्तेऽप्यर्थे विनिश्चिते तदापामानार्थान् सकल मन्त्रानपि उदाहरन्त (संन्यासिन पूजने 'दीर्घतमा मामतयो जुजुर्वान्' इति सर्वे मन्त्र विनियुञ्जते, उत्तरार्धे 'यतीनां' इति पदस्य पाठात् । वस्तुतस्तु यतीना इति अत्र इत्यस्य विशेषण न तु संन्यासिना इत्यर्थपरम्) सिन्धु पुर पाठात् पठनि वा । (यथा याज्ञिकेषु पावीरवीशब्द कन्यावाचक कुर्वन्ति 'पावीरवी कन्या' इति मन्त्रे पावीरवी शब्दोत्तर कन्याशब्दपाठात् । 'समनाद्भिरुप्यासि' इति समनाद्भिशब्द 'रुपया' - [सोळा आणे] वाचक कुर्वते । व्यक्तराचा इति पद 'चार आणे' इत्यर्थं 'व्यक्तराचा समुद्याणे' (चार आणे) इति पाणिनिसूत्रगतशब्दसादृश्यात् । 'न पुरा' नाम पाञ्चजन्य, 'न पुरा सागरेभ्यो' इति मन्त्रात्, पाञ्चजन्यश्च नाम शङ्ख 'पाञ्चजन्याय विद्महे' इति मन्त्रात्, शङ्खश्च फाल्गुनपूर्णिमाया क्रियमाणा 'बोंब' तथा च 'त्रिपुरा-पाञ्चजन्य-शङ्खशब्दाना' लक्षितलक्षणादिना बोंब मारणें इत्यर्थ, वाह' इत्युक्ते 'ऊठ = उत्तिष्ठ' इति प्रतीयते 'वाह ऊठ्' इति पाणिनिसूत्रात् । इत्याद्युदाहरणानि भूयिष्ठानि । वे ) वा १।३।८।२४ पृ २६१, * दृश्यन्ते हि अना म्नायिका अपि अर्थात् आम्नायिकवाक्यानि पेरिदयवेऽपि अभिदधाना । ११।१।१।२ पृ १६० * देवग्रामो देवक्षेत्र इत्युपचार । भा ९।१।४।१० पृ १६५६, * देवदत्तोऽत्र तिष्ठति इत्युक्त न तिष्ठन्नेव तिष्ठती युक्त पतावता देवदत्तादयोऽयमभिधीयते इति गम्यते । १०।७।९।३० * 'देवदत्त पचति' इत्यत्र न देवदत्तस्य पाक । टुप् ६।१।१।१ पृ १३४६ * देवदत्त प्रातरपूपं भक्षयति, मध्यदिने विविध मन्नमश्नाति अपराह्णे मोदकान् भक्षयति इति एकस्मिन् अहनीति गम्यते । भा ५।१।११।२०, * देवदत्तो भोजयितव्य, विष्णुमित्रो भोजयितव्य माठर कौण्डिन्यो भारद्वाज इति । उत्तरेष्वपि भोजयितव्य इति प्रकृत्या अनुषज्यते । ८।१।३।३, * 'देवदत्तो मधुरया आलाप' इति प्रकृतावयवि विज्ञायते । १२।४।१४।३५ * देवदत्तो यज्ञदत्तमनु गच्छति । किंचिदनुर्पतो देवदत्तस्य यज्ञदत्तकर्म कर्तृकानुगमनकर्म वाचागात द्वितीयोक्तकर्म वान्यथाऽऽ नुपपत्त्या कर्तृसमानोपादाने सति क्रियाऽन्तरानु पपादनात् तुल्यक्रियात्वस्पन युक्तम् । ▪ पृ ९४८ * देवदत्त शोभनो विद्वान् इति एकगुणविशिष्टोऽपि

यज्ञदत्तमपेक्ष्य अविद्वान् अशोभनश्च । तत्र ये देवदत्तस्य निन्दास्तुती, न ते देवदत्तार्थे उच्चार्येते, किं तर्हि यज्ञदत्तार्थे । टुप्. १०।८।४।७. ● देवदत्तः स्नानोपवेशनगमनशयनाद्यवस्थाभेदेऽपि देवदत्तत्वं नापैति, तथा ज्योतिष्टोमाग्मनः संस्थान्तरोपजननापाये तत्त्वं नापैति । वा. ३।६।२३।४१. ● 'देवदत्तस्य गोरानेयः' इत्यादौ वस्तुतो देवदत्तयज्ञदत्तादीनां गोसंबन्धनुपलम्भेऽपि आनयनाग्विते गवि देवदत्तस्य असाधारण्यात् विशेषणता । सु. पृ. ८९४. ● देवदत्तस्य नप्तेति, पुत्रेण व्यागो अन्तरितः, अथ च देवदत्तेन मुख्येनैव संबन्धेन सम्बद्धः । भा. ३।१।९।१८ पृ. ७२९. ● देवदत्तस्य प्रयोजनं साधयतः शुक्ले वाससी शाते यदन्यस्यापि प्रयोजनं साधयत, ते एव प्राप्नुतः स्वदीयेन ( अनुमानेन । न च तदुक्तम् ) । टुप्. ८।१।२।२. ● देवदत्तस्य सुखभोजनावस्थयोः स्थानैक्यनियमो नास्ति । सु. पृ. ८५८. ● देवदत्ते यज्ञदत्तयानमारूढे देवदत्तयानं निवर्तते, न यज्ञालंकारः । यत्र न किंचित् परार्थं कार्यमापद्यते, तत्प्रतिषेधो न युक्तः । भा. १२।१।२।७. ● देवदत्तयज्ञदत्तविष्णुमित्रा भोक्तारः इतिवत् आवृत्तेः न्यायलभ्यत्वेन शास्त्रानधीनत्वात् भिन्नपदोपादाने प्रत्येकं वाक्यसमाप्तिः । सु पृ. १०१६. 'देवदत्तयज्ञदत्तविष्णुमित्रा भोक्तारः' इत्युक्त्वा पुनर्यदा श्रूयते 'पञ्चभ्या देवदत्तो भोजयितव्यः' इति, तत्र न भोजनं विधीयते प्राप्तत्वात् प्रशनामपि भोजनस्य, किंतु पञ्चभ्या इतरेभ्यो निवृत्तिर्विधीयते । टुप्. १०।७।९।२८. ● देवदत्तयज्ञदत्तविष्णुमित्रेभ्यः शुक्लनीलपीतवस्त्राणि देयानि इत्युक्ते शुक्लवस्त्रादीनां यथाक्रमं देवदत्तादिसम्बन्धप्रतीतिः । सु. पृ. ११९३. ● देवदत्तयज्ञदत्ताभ्यां कर्तव्यं इति देवदत्तयज्ञदत्तशब्दद्वयादेव द्वित्वं प्राप्तं, न विभक्त्या अभिधास्यते । तथापि द्विवचनमेव भवति, न बहुवचनम् । भा. ६।३।४।१४, ● देवदत्तयज्ञदत्तयोः पाकेन गमकयोरपि संयोगे उच्यमाने एकः किंचित् करोति, अपरोऽपि किंचित्, न यदेकेन कृतं तदेवापरः करोति । तत्र गमकयोरपि क्रियमाणयोः साहित्यं न विद्यते । १०।६।८।२५, ● द्वौ आनयेत्युक्तः पुमांसौ आनयति । द्वे आनयेति स्त्रियौ । तेन स्त्रियो वाचकमेकारान्तं इति गम्यते । ओकारान्तमपि पुंसोर्वाचकमिति । ६।१।५।२२ पृ. १३६५.

● धनत्यागेन अत्यन्तोदारस्यापि गृहजनः पीड्यते । वा. १।७।१।१० पृ. १२४.

● न गन्तव्यं न भोक्तव्यं इति, सति गमनप्रसङ्गे भोजनप्रसङ्गे च भवति । भा. १२।४।१०।३०, ● न च अचेतनस्य आभिमुख्यं सम्भवति । वा १।१।४।३१–५. ● न च अदृष्टोऽर्थः प्रमाणमन्तरेण शक्योऽभ्युपगन्तुम् । भा. ६।७।१३।३४, ● न च अन्यथाऽनुपपत्तिरिति अन्यः अस्यानुपपद्यमानोऽर्थः शक्यते कल्पयितुम् । यथा 'अग्नौ तिष्ठति माणवकः' इत्युक्ते ज्वलने अनुपपद्यमाने नाधे गवि [illegible] कल्प्यते । अभियुक्तोपवचनः एव आपद्यते । ३।२।६।१२ पृ. ६८७, ● न च अन्यस्य उक्तोऽर्थः अन्यस्य भवति । नहि यत् देवदत्तस्य प्राशाच्छादनादिकं, तत् यज्ञदत्तस्य भवति । ७।१।२।१ पृ. १५२५, ● न च अश्वप्रक्लोवाश्वस्य प्रयोगो दृष्टः । तस्मात् तत्र न वर्तिष्यते । १।३।९।३३ पृ ३०३. ● न च एक एव प्रकारो मुखशोभायाः, संस्थान रमणीयता लाक्षण्य चेति । स्त्रीविषयं हि एतत् । विदुषां पुनः पदवाक्यन्यायोद्गारि मुखं शोभते । वा. १।२।१।१५ पृ. १२५. ● न च कल्प्यमानस्य प्रमाणमस्ति । भा. ६।२।१।१४, ● न च कश्चित् येन कर्मकरणेन सामर्थ्यमुपजन्यते, तदर्थं पुरुषाद् क्रीणाति । ईप्सितेभ्यः पदार्थेभ्यः क्रीणाति । तेन यस्य सामर्थ्यं भवति, तद् तेनैव कर्तव्यम् । ३।८।२।४, ● न च कृतस्य कर्मानुग्रहार्थं पुनःक्रिया न्याय्या । १२।१।७।१५., ● न च गम्यमान, विना कारणेन, अविवक्षितमिति शक्यं वदितुम् । भवन्ति च द्विष्ठानि वाक्यानि । यथा 'श्वेतो धावति' 'अलम्बुसानां याता' इति । ( श्वेतः श्वेतगुण. इति एकपदे, श्वा इतः इति अपरपदे । एवं अलम्बुसानां इति पदैकपदे, अलं बुसानां इति पदद्वयं अपरपक्षे ) । ४।३।२।४ पृ. १२४८, ● न च पुनस्य धारणकार्यमस्ति । १२।२।१०।२१, ● न च निर्वर्तितं शक्यो निर्वर्तयितुम् । यथा कृत घटम् । १२।१।१।५.

शापणं उपगमनम् । तत् प्रातस्य न शक्यम् । १२।१।११।२०, ० नहि उल्का ( चूड, पेटके कोठीव ) प्रकाशनेन अप्रयुज्यमाना भस्त्रा न प्रयुज्यते । ९।३।५।१८, ० नहि एकोऽर्थः बहुभिः उच्यमानः पुनरुक्तो भवति । ९।४।२।१६, ० नहि कश्चित् जगत्या अद्रव्य एव पुरुषः । अस्ति उपायो येन द्रव्यवान् भवति । ६।१।८।४०, ० नहि कश्चित् ‘ अप्रसिद्धं वस्तु कुरुष्व ’ इत्युक्तोऽपि अध्यवस्यति । नापि तेन व्यापृतेनापि तन्निमित्ता निष्पत्तिरध्यवसीयते । वा. ३।७।१६।३१ पृ. १०९७. ० नहि कश्चिदते स्वार्थात् परार्थे परः प्रवर्तते । भा. १०।६।१५।६९, ० नहि कस्य चित् का चित् सङ्ख्या न भवति । १०।४।४।७, ० नहि कारिष्या नष्टाया तदन्वेषणं कार्यार्पणेन क्रियते । ४।३।१६।३९. ० नहि केवलभोजी देवदत्तः अन्यैः सह पङ्क्त्या भुञ्जानः अन्यत्वं प्रतिपद्यते । वा. २।३।११।२४ पृ. ६१३. ० नहि गमनसाधनस्य रथस्य चक्राद्यङ्गेषु अन्यतमस्य वैकल्ये गमनसाधनत्व दृष्टम् । वि. ६।३।२. ० नहि चन्द्रमसमादित्यं वा उपलभ्य तदन्यान्वेषणा भवति कस्यायमिति । न कस्य चिदपि इति अवधार्यते । भा. १।१।५।२ पृ. ६२, ० नहि वस्तुकामस्य इक्कोपादान भवति दाहे अनर्थकमिति दहनशक्तिमस्य जनयेत् । ६।१।१।१ पृ. १३५३. ० नहि दधिपिठरं दृष्ट्वा कुन्दपिठरं च, प्रकृतिविकारभावोऽवगम्यते । ( तेन ) सादृश्यमात्र दृष्ट्वा न प्रकृतिर्विकृतिर्वा उच्यते । भा. ० नहि देवदत्तः भव्यमधुरमधुरप्रभृतिभिः प्रीयमाणो यज्ञदत्तशाहचर्यात् प्रीतिमान् भवति । टुप्. ९।१।९।९. ० नहि देवदत्तस्य दशमत्वे यज्ञदत्तस्यापि दशमत्वं भवितुमर्हति । भा. १।१।२।२ पृ. १७, ० नहि द्वयोर्विधीयमानयो परस्परेण संबन्धो भवति । ७।१।१।२ पृ. १५२७. ० नहि निष्प्रतिग्रहमाणमग्नो दृश्यते । वा. १।३।१।२ पृ. १६३, ० ‘ नहि पूर्वमपाधिना परेण जन्म लभ्यते । ’ ३।३।७।१४ पृ. ८२९. ० नहि प्रत्यक्षं मूर्तेनदृष्ट्वा पुनरपरञ्चप्रमाणं प्रत्यभिजानन्तः तिनष्टं परिकल्पयन्ति । परिकल्पयन्तः द्वितीयदर्शने यावति जायाया च पितरि वा नाश्वसुः । भा. १।१।६।२०, ० नहि प्रमाणे प्रत्यक्षे सति, अप्रमाणता स्यात् । २।१।६।२०. ० नहि यत् देवदत्तस्य युध्यमानस्य स्थानमवगतं तदेव भुञ्जानस्यापि भवति इति गम्यते । कार्यप्रयुक्ता हि स्थानविशेषादयः, न स्वरूपप्रयुक्ताः । स्वरूपस्य स्थानान्तरेऽपि अविभागात् । वा. २।२।१३।२९ पृ. ५६९, ० नहि यावत् किञ्चिदाचरणं, तस्य सर्वस्य मूलं इह प्रमाणीक्रियते धर्माजिज्ञासाऽधिकारात् । १।३।१।२ पृ. १६५. ० नहि यो यत् कामयते, तस्य तत्कर्तव्यता उपदेष्टव्या, वेदेनासौ ‘ मयैतत् कर्तव्य ’ इति । उपायं तु न वेद, तमास्मा- च्छ्रूयते । भा. ६।२।३।१४, ० नहि यौगपद्येन विधातुं शक्यते लक्षणत्वेन चोदयितुम् । ३।१।७।१४ पृ. ७१५. ० नहि लोष्टं पश्यतः तद्दर्शनं नेष्टप्रयोजनं इति सुवर्णदर्शनता कल्प्यते । वैद्यनाथी. १।२।१।१ पृ. १०६. ० नहि विज्ञानस्य कश्चिद्विशेष उपलभ्यते रूपं प्रति, अस्य भङ्गुरस्येव रूपं, अस्य दृढस्येवेति । भा. ३।३।७।१४ पृ. ८४२. ० ‘ नहि शास्त्रशतेनापि प्रमादाशक्तिकारितात् । निवर्तन्ते प्रयोक्तारः प्रयोगादिति दृश्यते ॥ ’ वा. १।३।८।२४ पृ. २५८, ० नहि शुक्तिकारजतावभासनजतो यदि रजतान्तर तद्देशे लभते, ततोऽभिसंधीयते शुक्तिकास्तु किं चिदालम्बनम् । १।२।१।१० पृ. १२५. ० नहि स एव अप्रमादपाठः, यो विधानार्थो गुण्यार्थश्च । अनुवदन् अपि अर्थं, स्थानयाऽशी ब्रुवन्, वाक्ये समर्थं गच्छति । न च प्रमादपाठो भवति । भा. १०।२।१७।४७. ० नाटशक्तिनिबन्धनम् । वा. १।३।८।४ पृ. २७४. ० नान्येन परिक्रय परार्थे परः प्रवर्तते । भा. १०।२।८।२५. ० नान्यत्र श्रुत अन्यत्र विनियोक्तव्यं इत्युक्तम । ( २।३।७ न्याय भाष्ये )। वा. ३।५।१।७. ० नाप्येतान्तो यत् प्रथमाऽन्तं गुणभूतं, प्रधानमपि भवति क्रियायां, यथा ‘ अग्निः स्नायात् ’ इति । टुप्. ६।१।१।१ पृ. १३४६. ० नापि दृष्टेऽनुपलभ्यं नाम । भा. १।१।५।५ पृ. ५८. ० निःशेषगर्भसार- स्थित मल्लेन भक्षितवान् कर्भसंधानुगर्भना-

संभव । या १।३।१।२ पृ. १६०, * ' नियन भजन यस्य यस्य वा नित्यभृत्वा । न तस्य क्रियमाणा दपुण्याश्वाशयोरिह ॥' न कश्चित् दपुण्यमाशाऊ वा कुर्वन्नुपलभ्यते । २।१।१।१ पृ. ३७७ * नियम प्रायेणापि हि क्रियते, यथा अभ्यासे लिखित दृष्ट्वा अन्योऽय इति बुद्धिर्भवति । मा ६।८।१०।४२, * ' नीलोत्पलवनेष्वत्र चरन्त्यश्वासेवा. । नीलकौशेय-सवीता प्रहृष्टजीव कादम्बा ॥' (सागा कौशेयकवीता कादम्बा [illegible] शोभना । ' इत्युत्तरार्धे न्यायरत्नमालायाम् । वैद्यनाथी. ) १।१।७।२४ * नेत्रमपि उद्धृत्य अथ ददाति इति लोकेऽपि त्यागिनं स्तुवन्ति । या १।२।१।१० पृ १२५.

* पटो भवतीति पट उत्पद्यते इत्यर्थे । निराकाङ्क्ष च पदद्वयम् । यदा च तस्मिन्नेव ' रक्त ' इत्यपर श्रूयते तदा रागसम्बन्धो भवतीत्यर्थं । भवति च रक्त प्रति आकाङ्क्षा । भा १।२।१।७ पृ ११७, * पयसा याचिक भुञ्जीत, यदि शालि भुञ्जीत तत्र दधि उपसिञ्चेत् इति । एवजातीयकेन वाक्येन शालिभोजन विहितं भवति । कथं पुन शालिभोजन तेन वाक्येन विहित भवतीति ? उच्यते । व्यत्यासेन संबन्ध कल्प्येत, यदि दध्युपसेचन मिच्छेत् शालि भुञ्जीतेति । ननु न खलु इच्छते परा लिङ्विभक्तिमुपलभामहे, सिच्येदिति ता परा समा मनन्तीति । सिञ्चते ननु ता परा समुच्चरन्ती कमेरर्थं गमयति । कामप्रवेदने हि ता मन्यामहे इति । यदि दधि उपसेचनमिच्छेत् शालि भुञ्जीतेति दध्युपसेनन संकीर्तनात् दध्युपसिक्त शालि भुञ्जीतेति तेनैव वाक्यशात् गम्यते । २।१।१।१ पृ ५७३—७४, * परिधत्ते । ननु कौपीनाच्छादने परिधत्ते इति भवति, नान्यत्रार्थे । उच्यते । नैतदेवम् । उपरिवासमोऽपि कार्ये परिधत्ते इति भवति । तद्यथा कम्बल परिधत्ते, रौरव परिधत्ते इति सर्वतो धत्ते परिधत्ते इत्यवगतिरिद्धया भवति । १०।४।८।१४, * परिमाण यत् प्राकृतं तस्य कार्ये वर्तमान, तन्निवर्तयेत् । यथा इद दधि, घृत, शाक, इमे शाल्य देवदत्तो भोजना, देवदत्तस्तु यदा दत्त तैलेनेति । तेन हि भोजने स्नेहनेनोपकरोति । तत् स्नेहनार्थे प्राकृत निवर्तयितुमर्हति घृत, न शाक दधि च ओदन वा । १०।२।२।६, * पर्वणि विभज्यमाने द्वावपि उपायौ । यथा द्वौ पुरुषौ अन्तर्योर्गृहीत्वा स्या कर्षेत । यद्वा तीक्ष्णेन शस्त्रेण छेदनम् । तत्र यत् शस्त्रस्य तीक्ष्णीकरण द्रव्य तत् छेदनाभ्युपाये समर्घ्यते नाकर्षणा भ्युपाये तदर्पणेऽपि । ९।२।१५।४७, * ' पशुमानय ' इत्येकवचने सति एकपशुविशिष्टमानयनं प्रतीयते । ' पशू आनय ' इति द्वित्वविशिष्ट गम्यते । तत्र हि एकत्वमपगच्छति द्वित्वमुपजायते । यस्य चागमे यदुप जायते, स तत्कार्यं इति गम्यते । ४।१।०।१' * ' पश्यतो मधु दुर्बुद्धेर्विनिपातस्ततो भवेत् ।' वा ३।६।३।१० पृ १०२२ । यो हि मधुन्येन दत्तदृष्टि दुर्बुद्ध प्रासादमधिरोहति, तस्य विनिपात एव भवति । शा ३।६।२ पृ २९९ * पाक । एक एवायमर्थ। पाको नाम तस्यार्थान्तरे वैरूप्य भवति । अन्यपाकत्व ओदनस्य पाक , अन्यपाकत्वो गुडस्य । येन ओदनपाको गृहीत, न असौ अविधिना गुड पक्तु जानाति । भा ७।२।१।२०, * पानीयस्य तैलस्य घृतस्य वा स्रोता नानादेशेषु भिन्ना: समानदेशे एकीभूता भवन्ति । ९। ३।१०।२८ * पिकमानय इत्युक्ते यो नामार्थं न प्रति पद्यते तस्मै कोकिलशब्दमेव केवल ( कोकिल इति) प्रयु ङ्क्ते, न कोकिल पिक इति । शा २।१।१।१ पृ ३७। * पुन शब्दश्च क्व विदर्थक यथा किं पुनरिद इति । भा ८।४।५।१४, * पुरोडाशेन मे माता महेन्द्र ददाति इति ( भवन्ति कस्मिंश्चिद्देशे वक्तार । तेन पुरोडाशशब्द असंस्कृतेऽपि पिष्टपिण्डे [ परतु पक्वे ] उपलभ्यते ) । १।८।७।१० * पुष्कर खनन्त इत्युक्ते महेश्वरोऽपि ( गणेश्वरोऽपि ) स्थानचिर लक्ष्यते एककार्यत्वात् । टुप् १०।४।२।४२. * पूर्णकोऽस्माक बलीवर्दानामीष्टे इति भक्त्या स्वामि वमुच्यते । तथा पत्नी पारिणय्यस्येष्टे इति । भा ६।१।४।१६, * पूर्वं धूम प्रतिपद्यते पश्चाद् अग्नि, यत्र धूमप्रत्ययेनैव कृतार्थो भवति, नासौ अग्निप्रत्यय माद्रियते । ८।३।३।७, * ' पूर्वो धावति ' इति । स पूर्व इत्युच्यते, यस्यापरोऽस्ति । तेन पूर्व इत्युक्ते अपरो गम्यते , न तु ' अपरो धावति ' इति श्रवणात्

प्रतीयते । एवं इत्युक्ते अपरो गम्यते एव केवलं, न तु स विधीयते कस्मिंश्चिदर्थे । ४।१।५।१४, ❀ पृथक्त्वेनापि कुर्वाणानां बहुवचनं दृश्यते । देवश्रेण वर्षेण बहवः शूर्पे कुर्युः । सत्यं चेत् सोपद्यते, बहवो ब्राह्मणा यजेरन् इति । १०।६।१४।४५, ❀ प्रकर्षेण रक्तं नितरा रक्त-मित्युच्यते । निशब्दः प्रकर्षस्य वक्ता । २।१।१३।४९. ❀ प्रचितमपि अपरिपक्वत्वविच्छेदात् आमसस्यमिव लूनं निर्बीजं भवति । वा. ३।३।७।१४ पृ. ८३४ ❀ प्रत्यक्षेण रूपं अवबुध्यमानं न शक्यते पर्यनुयोक्तुं, किमर्थ-मवबुध्यते इति । टुप्. १०।८।१२।२३ पृ १९२५. ❀ प्रत्यक्षविरुद्धं वचनं न प्रमाणं भवति यथा ' अम्बुनि मज्जन्त्यलाबूनि, शिलाः प्लवन्ते' 'पावकः शीतः' इति । भा. ४।३।९।१०, ❀ प्रदर्शिते मार्गे रथेन यातुः सुगं भवति । ४।३।१५।१७, ❀ प्रसन्नः अस्य पशुपतिः, पुनः अस्य जात. । प्रसन्नः अस्य वैश्रवणः, धनमनेन लब्धमिति उपचरन्ति । पशुपतिरनेनोपचरितः, पुत्रोऽनेन लब्ध इति । ९।१।४।८. ❀ प्रायेण च मनुष्याणा अधर्मभूयिष्ठत्वात् तज्ज्ञानप्रतिबद्धाः प्रतिभाः तेषुतेषु कुमार्गेषु प्रवर्तन्ते । वा. १।३।१।२ पृ. १६७.

❀ बर्हिरादाय गावो गताः इति भवन्ति प्रवादाः । बर्हिःशब्दोऽयं असंस्कृतोऽपि कस्मिंश्चिद्देशे उपचर्यते । भा. १।४।७।१०, ❀ बलवान् देवदत्तो यज्ञदत्तादीन् प्रवहते इति प्रकृष्टबलेऽपि बलवच्छब्दो वर्तमानो न सिंहं शार्दूलं वा अपेक्ष्य प्रयुज्यते, ये देवदत्तात् निकृष्टबलाः, तानपेक्ष्य भवति । १।२।३।२९ । भूम्नि अतिशायने वा मतुप्प्रवृत्तिः, न च विशेष उपात्तः अमुष्मात् प्रकृष्टः इति । तत्र सर्वमल्लेभ्यः प्रकर्षे मुख्यः शब्दः, न च तथा संभवति, सिंहादीनां बलवत्तरत्वात् इति देवदत्तात् न्यूनतरबलानपेक्ष्य प्रकर्षमभिधीयते । तथा अत्र विप्रकृष्टतरासाधनान्यपेक्षया शूर्पं साधकतम-मित्युच्यते । वा. ❀ बहुषु गुणसंपन्नेषु महत् फलं भवति । एकस्मिन् अल्पं फलम् । एष हि लोके दृष्टान्तः । लोके एवाद्यासु प्रदीपेषु तेलवर्तिसंपन्नेषु एकस्मिन् गृहे महान् प्रकाशो भवति, विपर्यये अल्पः । भा. ❀ बहुषु राजलिङ्गेषु उपविष्टेषु दण्डं दृष्ट्वा छत्रं,



चामरव्यजनं च, स राजा इत्यवगम्यते अनाख्यातोऽपि राजलिङ्गेन । भा. ३।३।३।१०, ❀ बहूना एककाले कर्माणि भवन्ति 'एकधा गाः पाययति' इति । (पुष्कलानां गवां एकस्यां द्रोण्यां सह पायनं क्रियते ) । ९।३।११।३१, ❀ ब्राह्मणः परिव्राट् वानप्रस्थः इति धर्मभेदात् सज्ञा-व्यवस्था । ८।२।५।२४, ❀ 'ब्राह्मणाः परिव्राजका ब्रह्मचारिणश्च निर्गच्छन्ति' इत्युक्ते केवलब्राह्मणाः ब्राह्मणशब्देनोच्यन्ते । ४।१।२।२.

❀ भवति च अनादिष्टफले कर्मणि स्वर्गः फलमिति प्रत्ययो लोके । एवमुच्यते— ' आरामकृत् देवदत्तः नियतोऽस्य स्वर्गः ' ' तडागकृत् देवदत्तः नियतोऽस्य स्वर्गः ' इति । भा. ४।३।७।१६, ❀ भवति हि भवि-ष्यदपि निमित्तम् । यथा वर्षिष्यतीति कृषिप्रहकर्मानु-ष्ठानम् । २।१।१।२ पृ. ५७७. ❀ भवत्येव हि बहूनां परिवोढणानां मध्ये परिवोढव्यपरिहारकालेऽपि पूर्वपरि-वोढव्यपरिहारः । वा. ३।३।७।१४ पृ. ८२७. ❀ भवन्ति हि अनर्थकान्यपि वचनानि, ' दश दाडि-मानि षडपूपाः ' इत्येवजातीयकानि । भा. ४।३।५।१०, ❀ भार्या राज्ञः पुरुषो देवदत्तस्य इति । भार्याविशेषण-त्वेन उच्चार्यमाणः ' राज्ञः ' इति शब्दः, न पुनः पुरुष-शब्देन संबध्यते । १०।४।८।१६, ❀ 'भोजनकाले वर्तते स्वात्मनि संगृह्यन्ताम् ' इत्युक्ते यानियानि भोजने उप-योगमर्हन्ति, तानितानि सर्वाणि संगृह्यन्ते, स्थालग्रहणं लक्षणार्थं इति गम्यते । उच्यते । लोके अर्थलक्षणः संव्यवहारः । येनयेनार्थः संभृतेन उक्तोऽनुक्तो वा, स संभृत्येत । वेदे तु शब्दलक्षणः, शब्दश्च ग्रहस्य संमार्गमाह । ३।१।८।१६ पृ. ७२५.

❀ ' मण्डकैर्ब्राह्मणैः कृता चित् स्वर्गमोदकैः । न चात्र मण्डका मुख्या गौणा वा स्वर्गमोदकाः ॥ ' वा. ३।२।१।१ पृ. ७४८. ❀ ' मत्स्यवत् न पयसा सम-श्नीयात् ' इति । यत्रापि सगुणा मत्स्या भवन्ति, तथापि पयसा सह न समश्यन्ते । भा. १०।७।१९।६६, ❀ मलिनः स्नायात् । बुभुक्षितोऽश्नीयात् । ( मलिनाय स्नानमुपदिश्यते , बुभुक्षाये अशनम् ) । १२।१।१।१ पृ. २०९१. ❀ ' महताऽपि प्रयत्नेन तमिस्रायां परामृशन् ।

कृष्णशुक्लविवेकं हि न पश्चिदपिगच्छति ॥ ' बा. १।३।१।२ पृ. १६३. ● ' मासं घृततैलाभ्यां देवदत्तो भोजयितव्य. ' इत्युक्ते अर्धमासं घृतेन अर्धमासं तैलेन, एवमपि शब्दोऽवकल्पते । भा. १०।६।३।५. ● मूर्खो जामाता—कन्याग्रहणार्थमागतमूर्खवरगोत्रपदनोच्चारणम् । 'यदेव भवतां गोत्रं तदस्माकमपीतिवत् ' । बा १।३।६।१२ पृ. २१६. ● मृगतृष्णारूपमेतद्दर्शनम् । भा. १।१। ८।२१.

● यः सकृत् गवः प्रापयति, स एकधा प्रापयतीत्युच्यते, योऽपि सह प्रापयति सोऽपि एकधा प्रापयतीति । भा. १०।२।४।१७, ● यत्र येन आकाङ्क्ष्यते तत् तदर्थं भवति । १०।३।८।१८, ● यत्र सम्मार्ग तत् प्राह्यम् । ५।४।४।१४, ● यत् अनृत अभोजनं तत् (इति अनृतभोजनस्य स्तुति.) । १२।१२।२१-४, ● यन् किंचन लौकिकं वचन ' नद्यास्तीरे पञ्च फलानि सन्ति ' इति तत्तथ्यमपि भवति, वितथमपि भवति । १।१।२।२ पृ.१३, ● यत्तु लोके कारकमामस्त्येऽपि अभिहितो भेदेन व्यापारदर्शनमिति, अर्थाभ्रमनादरा । नहि उखायामधिश्रीयमाणायां सूपेऽधिश्रयणं शक्यते कर्तुं इति अर्थविरोधान्न करोति । १०।६।८।२५ पृ १९९८. ● यत्तु वियोजितमात्राणां इक्षादीनां स्फुरणं दृष्टं तदभिघातप्रेरितवायुनिमित्तं, इति न तावता जीवानयवानुगतिर्विज्ञायते । बा. २।१।२।५ पृ. ४०३. ● यत्र उपनीचप्रयणं क्रियते, ■ परिक्रयो भवति । भा. १०।२। ८।२२, ● यत्र एकस्यामुखाया बहूना ओदनः भृतो भवति, तत्रैकस्मिन् मुक्तवति, न तस्य शिष्ट अन्येभ्यः प्रतिपादनीयं, उखाया आप्तीति गम्यते, प्रयोजनवत् हि तत् । ३।५।१।६. ● यथा अधिगतपूर्ववचने श्रद्धते, न एवमविदितवादे । न चोक्तिमात्रेणैते बहुव्रीह्यादयः प्ररोचयन्ते, किं तर्हि विदित्वादेव । बा. १।२।२।२१ पृ. १३४. ● यथा कश्चित् ओदनं निर्दिश्य ब्रूयात् ' य एन भक्षयेत् कश्चित् श्वा वा मार्जारो वा स निवारयितव्य. ' इति, तत्र यदि भक्षणं निमित्तत्वेन विधीयते, न श्वमार्जारसंबन्धः, तत. काकोऽपि आगच्छन् निवार्यते । भक्षमाणेऽपि शुनि मार्जारे वा श्वमार्जारसंबन्धस्य निमित्तत्वेन अविधीयमानत्वात् । भा. ३।१।७।१४ पृ. ७१३, ● यथा त्रिभूमिका, देवदत्त एव भोजयितव्यः ( देवदत्तस्य स्तुतिरेषा ) । तथा वाङ्मनसयोर्निन्दावचनं स्तुत्यर्थेन । १।२।१।११, ● यथा कुक्कुटस्य कुक्कुटी च कुक्कुटी । शूकरस्य शूकरी च शूकरी । एव वसानस्य वसाना च वसानौ स्याता इति । ३।२।५।१९ पृ. ८३६९, ● यथा चक्षुरुद्रं न नाह्नेन प्रकाशेन विना प्रकाशयति इति अदृष्टं न भवति । १।१।५।५ पृ. ४४, ● यथा त्वमेव माता पिता इति, तथा ' अदितिर्द्यौरदितिरन्तरिक्षं ' इति । ' एको रुद्र, शतं रुद्राः ' इति च । १।२।४।१९. ● यथा प्रकाशनार्थे प्रज्वलितोऽग्निः इन्धनं भस्मीकरोति ( एवं विभक्तिः ) वाक्यप्रतीतिपरा सती नान्तरीयकत्वात् संख्यां प्रतिपादयति । बा. ३।१।७।१४ पृ ७१३. ● यथा भोजनमेकस्मिन् ( ११।१।७।३३ ) । यथा भोजन एकस्मिन् काले अभ्यस्यमानं एकमेव फलं तृप्तिं करोति इति नाभ्यस्यते । भा., ● यथा यः ' कुरु ' इति ब्रूते, स कारयति, तथा यः ' प्रयच्छ ' इति ब्रूते, स प्रयच्छति । भा १।२।४।३५. ● ' यथा रक्तोपधानेन निरुद्धे स्फटिके सति । कृष्णादिचोदनायुक्तं गम्यते स्फटिकान्तरम् ॥ ' बा. २।२।१।१ पृ. ४६५. ● यथा राजा महाराजः, ब्राह्मणो महाब्राह्मणः । तथा इन्द्रः महेन्द्रः । भा. २।१।५।१५ पृ. ४१७, ● यथा राजनि वयं वर्तमाने सैनिका अस्माकमिति व्यपदिशन्ति । ३।८।१३।२६ पृ. ११३१. ● यथा लोके निमित्तभूतायां बुभुक्षायां सत्यां भोजनमवश्यं कर्तव्यम् । तथा जीवने सति कर्म अवश्यमनुष्ठेयम् । वि. ६।३।२. ● यथा वसिष्ठस्य अरुन्धती, यथा शशाङ्कस्य रोहिणी, यथा नलस्य दमयन्ती तथा देवदत्तस्य यज्ञदत्ता । इति । भा. १।४।१।६, ● यथा वै नित्य मत्स्यः जले विचरन् अनवधारितगतिः प्रेक्षकजनमवधूनुते निमितो गतः निमग्नः इति । ३।६।७।२०, ● यथा शुष्के पतिष्यामीति कर्दमे पतति, सक्तुदुपस्पश्यामीति द्विरुपस्पृशति, तथा अपराधात् प्रवृत्ता वाक्यादय. शब्दाः । भा. १।३।८।२५, ● यथा श्येनाः प्रच्छन्नरूपाः एवं च मनः । १।२।१।११.

* यथैव वलभ्यां पाटलिपुत्रे वा अग्निहोत्रादिशब्दः उच्चार्यमाणो नार्थान्तरं प्रतिपादयति, एवं प्रकरणान्तरेऽपि। नहि प्रकरणान्तरं तस्यार्थाभिधानशक्तिमभिव्यनक्ति। वा. २।३।११।२८ पृ. ६१३ * यदवगम्यते ( वेदात् ) तन्न्याय्यम्। भा. ६।२।२।८. * यद्यत् कृतकं तत्तत् अनित्यत्वेन व्याप्यते, यथा च यत्रयत्र धूमः तत्र अग्निना व्याप्यते। टुप्. १।१।५।११. * यन्मलिनं अशास्त्रत् (इति निर्मलत्वस्तुतिः)। भा. १।४।१२।२२-४, * 'यो देवदत्तस्य गौः, स विष्णुमित्रस्य कर्तव्यः' इति देवदत्तादाच्छिद्य विष्णुमित्राय दीयते इति। अतः परद्रव्यस्योपदेशः इति। ४।२।१४।२९, गोः देवदत्तसंबन्धे प्रथममवगते तदुत्तरकालं उपदेशः। टुप्. * यो यस्य स्वरूपाश्रयो धर्मः प्राप्तः, स कस्मात् कारणान्तरेण विपर्ययं प्रतिपद्यते। वा. १।३।२।३ पृ १७६. * यो यस्मात् आभजति स तस्मै अनिर्दिष्टो न शक्यते तेन संबन्धयितुम्।.. असति विभागे न शक्यः स्वेन भागेन सबन्धः कर्तुम्। भा. १०।३।१२।५०. * यो यदर्थप्रवृत्तः सन् निवार्यते, स तदर्थमेव प्रतिषिद्धो भवति इति अवधार्यते। वा. ३।४।४।१२ पृ. ९०१. * यथ उभयोर्दोषो, नासौ एकस्य वाच्यः। भा. ८।३।६।१४. * यथ कर्मस्वरूपः, तस्य लोके कर्तव्यतोत्तरकालं अभ्युदयो दृष्टः। टुप्. ६।१।१।२ पृ. १३५०. * यथ नास्ति, यदि शक्यते कर्तुं, कर्तव्यो भवति। यथा 'जुह्वा जुहोति' इत्यविद्यमाना जुहूः क्रियते। भा. ३।७।१३।२३, * यथ यस्य उपकारिणः उपकरोति, भवति तस्य संबद्धो मुख्येनैव संबन्धेन। न च एकार्थत्वं इति कृत्वा असमवायो भवति। ३।१।९।१८ पृ. ७२८, * यथ यस्य कार्ये अधितिष्ठति, स तद्धर्मैः संबध्यते। यथा सुरधर्मैः खपितिरिति। ६।३।१०।२६. * यथ यस्य प्रसादात् आत्मानं लभते, स त असमर्थो बाधितुम्। टुप्. ५।१।१०।१८. * यश्चिरेण भुङ्क्ते, तत्र वक्तारो भवन्ति 'नास्य भोजनं परिसमाप्यते' इति। शा. ९।१।८. * यस्तु अविचारितसिद्धमेव प्रतिपद्यते, स शुक्तिकामपि रजतं मन्यमानः प्रीणीयात्। वा. १।२।१।२ पृ. १०९. * यो हि अन्येन सह संबन्धुमुच्चार्यते, न तत्समीपगतोऽपि अन्यः तेन सह संबन्धुमर्हति। यथा "भार्या राज्ञः, पुरुषो देवदत्तस्य" इति भार्याविशेषणार्थं उच्चार्यमाणो राजशब्दः न पुरुषेण संबध्यते। भा. ३।१।६।१२ पृ. ६८८, * यो हि आरब्धमेवंजातीयकं न समापयति, तं शिष्टा विगर्हन्ते 'प्राक्रमिकोऽयं असंव्यवहार्यः' इति। शिष्टविगर्हणा च दोषः। तस्मादारभ्य समापयितव्यम्। आह, शिष्टाः पुनः किमर्थं विगर्हन्ते इति। उच्यते। विगर्हन्ते तावत्, किं नो विदितेन कारणेन इति। ६।२।३।१९, * यो हि उपलम्भनविषयो नोपलभ्यते, स नास्ति यथा शशस्य विषाणम्। १।१।५।५ पृ. ३९. * यो हि धूमादग्निमत्त्वं प्रतिपद्यते, तस्य तैक्ष्ण्येऽपि आकाङ्क्षा सिद्धा। वा. १।३।९।१३ पृ. ३०५. * यो हि पाषाणान् भक्षयति, ईदृक्कारस्तस्य मुद्गरकुल्यः। भा. १०।३।९।८. * यो हि प्रधानोपकारित्वेन श्रूयते, स तदङ्गेऽपि स्थिते उपकरोति। सु. पृ. ८५५. * यो हि बहून् महान् समार्ष्टि, संमार्ष्टि असौ एकम्। वा. ३।१।७।१४ पृ. ७०९. * यो हि ब्रूयात् उदकेन दग्धव्यं, अग्निना क्लेदयितव्यमिति, किं स वचनप्रयोजनसामञ्जस्यं अनुवीत? भा. १।३।६।१२ पृ. ६८१, * यो हि स्मरति इद मया कर्तव्यमिति, स तत् करोति। १०।३।१६।३७, * यो द्वौ कौरव्यौ, स एको वाहीकः। परिमाणसामान्यादिदम्। यत्कार्यं द्वयोः कौरव्ययोः, तावत् एको वाहीकः करोतीत्यर्थः। ८।३।६।२२ पृ. १६२२, * ये उद्मेधं नाम कं चित् पुरुषं नावेदिषुः तस्य तु पुत्रं औद्मेधिरित्येवं विदुः, शक्नुयुस्ते यस्यायं पिता स उद्मेधः इति कल्पयितुम्। उद्मेधपुत्रस्य एवं समभिव्याहारो भवति इति। २।३।२।३ पृ. ५८०, * ये हि एकस्मिन् कार्ये विकल्पेन साधकाः श्रूयन्ते, ते परस्परेण विरोधिनो भवन्ति। विरोधिना च न सह प्रवृत्तिः। लोकवत्। यथा, मत्स्यान् न पयसा समश्नीयादिति। यद्यपि मधुमाः भक्ष्या भवन्ति, तथापि पयसा सह न समश्यन्ते। १०।८।१९।६६, * येन यस्य सामर्थ्यं भवति, तत् तेनैव कर्तव्यम्। ३।८।२।४, * येन विंशतिरुत्पाद्यः, उत्सहः तेन दश

भवन्ति । ८।३।६।१५, ■ येन महत् श्रुतेन नोपकृतं, न पुनः क्रियमाणं उपकरिष्यति इति का आशा ? ११। १।७।१०, ● यस्मै च येन सह दीयते उभाभ्यां तत् दीयते, एवं तत् सहदानं भवति । यथा 'देवदत्ताय यज्ञदत्तेन सह शतं दीयताम्' इत्युक्ते, तत्र उभाभ्यामपि दीयते । ३।२।१४।२५, ● यस्मात् अल्पदुपध्मातोऽग्निः तेन मे गृह दग्धमिति, नानग्निरपि अल्पदुपध्मातो दहतीति गम्यते । १।२।३।३० । यत्नानुपध्मातेऽग्नौ दहनहेतुत्वेनोक्ते स एवानुपध्मातो न दहेत्, न तु शङ्खादयो अल्पानुपध्माता दहन्ति । तस्मात् व्यवस्था । वा. ● यस्यो-उदमेघः प्रसिद्धः, ■ तस्य अनाख्यातमपि अपत्यं औदमेघिरिति ब्रूते । यस्य औदमेघिः, स तस्य पितरं अनाख्यातमपि उदमेघं प्रतिपद्यते । भा. ३।५।८।२६, ● यस्य क्षीरेण भोजनमुदितं भवति, यदि तस्मै उदकं दीयते, न कश्चिद्विरोधो भवति । उदकमपि तत् पय एवेति । १२।१।१।४. ● यस्य जीर्णे भोजनं भवति, न तस्य रोगा जायन्ते इत्यतः जीर्णे भोजनस्य ( भोजनस्य जीर्णतायाः) रुजाऽभावबीजत्वमवगम्यते । कणिका. पृ. ४०५ ● यस्य दण्डोऽस्ति, स दण्डीति । न च दण्डनवतो दण्डिशब्दः । भा. १।१।९।१० पृ. २०१, ● यस्य दश गावः, तस्य द्वौ पञ्चकौ गवाम् । ८।३।६। १५, ● यस्य न किञ्चित् परकीयं कार्यमापद्यते, तत्प्रतिषेधो न युक्तः । यथा देवदत्ते यज्ञदत्तयानमारूढे देवदत्तयानं निवर्तते, न यज्ञदत्तस्य । १२।१।२।७, ● यस्य नास्ति पुत्रः, न तस्य पुत्रस्य क्रीडनकानि क्रियन्ते । १०।३।१।५, ● यस्य भावे यस्य निवृत्तिः, तत् तस्य व्यावर्तकमुच्यते । ९।२।१२।४०, ● यस्य लोके नास्ति द्रव्यं, स याचते भिक्षाति च । ६।८।७।२६. ● यस्य हि कार्यमदृष्टं भवति, तत्स्वरूपमपि अदृष्टं भवेत् । शा. ३।७।३३ पृ. १०९८, ● 'येषा पदार्थधर्मत्वाद् दौर्बल्यं पूर्वनिश्चितम् । न तेषा शुल्यवदस्मात् तत् पश्चादपगच्छति ॥ पदार्थत्वेन येषां च बलीयस्त्वं निरूपितम् । न स्मृतेर्दुर्बलत्वेन पुनस्तदपनीयते ॥' १।३।३।७ पृ. १९९. ● या डित्थस्य डवित्थस्य च माता, सा डवित्थस्य भवति । भा. ३।१।१५।२६ पृ. ७४३ । 'तथा डित्थस्य मातेति, माता डित्थडवित्थयोः ।' वा. । यत्तु डित्थस्य मातेति, उक्तं तत्र, अन्यत्रापि मातृत्वम् । यतो जातो डित्थः, एतावता सम्बन्धेन मातेत्युच्यते, नात्र किञ्चिदपेक्ष्यते । स च तत्रास्तत्र सम्बन्धोऽस्तीति 'डित्थस्य माता' इति युक्तं वचनम् । भा. ३।१।१५।२७ पृ. ७४५, ● या हि वन्ध्या स्मरेत् इदं मे दौहित्रकृतमिति, न मे दुहितास्तीति मत्वा न जातु चिदसौ प्रतीयात् सम्यगेतज्ज्ञानमिति । १।३।१।१, ● यदा तावदसौ नियमाना ( पशुकामेष्टिः ) आसीत्, तदा फलं न दत्तवती । यदा फलमुत्पद्यते तदा सा नास्ति । असती कथं दास्यति । १।१।५।५ पृ. ४०. ● यदि अनिर्दिष्टं कश्चिद् वदेत्, तदा नैव श्रद्दधीरन् । वा १।१।१।२१ पृ. ११४. ● यदि क्षीरं दास्यामि तत्र दीयते, तत्र यदि ■ क्षीराभावो विज्ञायते, यदि वा भोक्तुरक्षीरभोजित्वम् । भा. १२।४।१५।४४, ● यदि कर्तव्यं, तत् प्रयोजनवत् । १।२। ७।३२, ● यादृशोऽस्य वेषः तादृशो नटाना, यादृशो देवदत्तस्य तादृशो ब्राह्मणाना, इति देवदत्तवेषप्रशंसाऽर्थं इतरवेषसंकीर्तनम् । एवमिहापि उपव्यानस्तुत्यर्थेन निवीतसंकीर्तनम् । ३।४।१।९, ● युगपत्प्रोपदर्शिते दैपाचरणादिरानिधाने च 'अक्षमानय' इत्युक्ते यावाक्षमधिकृत्य ब्रूते इति गम्यते । न तु विदेवनाक्षमिति । ६।८।१०।३५.

● 'रजनी मे कण्डूयति, तिलको मे स्पन्दते' इति । रागाभावे तिलकाभावे च इन्द्रियलक्षणया भवन्ति वक्तारः । भा. ८।४।५।२८, ● राजा अमात्यो वा ब्राह्मणो वा परिचरितुं निमन्त्रित आहूतः अपरिचर्यमाणः अवमानितमात्मानं मन्यमानः अपचरिष्यति इत्याशङ्क्यते एव देवताऽपि । १०।१।१।१ वर्णके ३ पृ. १८०२, ● राजा पत्तिगणकः इति । पत्तिगणको राज्ञः कार्यं साधयति । स राजशब्दे उच्चरिते प्रतीयते । १।४।१२।२३–१ पृ ३६०.

● लवकः पाचकः इत्यनेन क्रिया समुच्चार्यते तथा अश्वः वासः इत्यादिषु न क्रिया समुच्चार्यते, आकृतिवचना एवैते । टुप्. ७।३।११।२९. ● लोके कर्म

तथानयन प्रधानमुच्यते। ६।४।६।२३ पृ. १४४१. ● 'शुक्लवासा भोजयितव्यः' 'लोहितोष्णीषा ऋत्विजः प्रचरन्ति' 'दण्डी प्रैषानन्वाह' इति विशेषणरहितानां अकर्माङ्गत्वम्। यदा तेऽपि उद्दिश्यन्ते, योऽयं शुक्लवासाः तमानय इत्यादौ, तदा विनाऽपि विशेषणेन आनीयते। वा. २।१।५।१७ पृ. ४२३ ● शोभनमस्य धनस्य नेमितुम्बारम्। शोभनमस्याः सेनायाः हस्त्यश्वरथपादातम्। अवयवस्तुत्या अवयविस्तुतिरियम्। भा. १।४।११।२०.

● 'सन्ध्यायां मृगा अपि न चरन्ति, किं पुनः विद्वांसो ब्राह्मणाः' इति। तथा वनस्पतयो नाम अचेतना इदं यज्ञमुपासितवन्तः, किं पुनर्विद्वांसो ब्राह्मणा इति स्तुतयो ह्येताः वनस्य। भा. ११।१।८।१२. ● रामचन्द्रस्य नु गतौ नालिगीरव युक्तम्। वा. १।२।१।७ पृ. १२०. ● संश्लेषाभावे विश्लेषो न शक्यः कर्तुम्। भा. ९।२।९।३३. ● सोऽस्मात्मीय एव बाणो भक्त्या प्रहरति। काशिका. पृ. ११९. ● एतत्कृतेन कृतश्चोदनार्थः। न च कृते पुनः कर्तव्यमस्ति। भा. ११।१।४।२२. ● सकृदुच्चारणेन स्वार्थवत् परार्थवत् च उच्चारणं निरुप्यते। टुप्. १०।४।२।३ पृ. १९१४. ● तस्यापि सारूप्ये येन चित् निमित्तेन स्त्रीपुंसयोः कोकिलादिविभागज्ञानम्। (यो वसन्ते 'कुहू' शब्दं करोति स पुमान् इतरा स्त्री इति)। वा. १।२।१।२ पृ. १०९ ● तथा यतो (अनेकेषामर्थानां) साधारणशब्दताऽप्ययुक्ता 'अन्याय्यश्चानेकार्थत्वं' इति। टुप्. ५।८।४।१४. ● सर्वश्च प्रीतिं प्रार्थयते। भा. ४।३।७।१५. ● सर्वो हि प्रीत्यै यतते। टुप्. ६।१।१।२ पृ. ११५०. ● सर्वो हि भावः येन सिद्धात्मना सिध्यन् व्यवहारं साधयति। सर्वासिद्धिकायाः सिद्धेः च विरुध्यमानत्वात्। वा. ३।७।१६।३२ पृ. १०९७, ● सर्वोऽपि हि स्वप्रामाण्योऽन्यत्र व्याप्रियते। १।४।२।३ पृ. ३३१, ● सर्वस्य अनादिव्यवहारोपन्यासेन वेदवत् प्रसिद्धमभिमानो भवति। अतः अन्धपरम्परा निदर्शनम्। वेदे हि प्रामाण्यमनादित्वं, इतराप्रामाण्यस्य। ३।३।१।१ पृ. १६२, ● 'सर्वस्यैव हि कार्यार्थिः स्वगुणग्रहणादरः। (स्वगुणभूतस्य) अन्यार्थगुणसिद्धे कार्येऽस्य स्वगुणेन किम्॥' ३।६।४।१० पृ. १०३६, ● सर्वत्र यत्र कालान्तरफलत्वादिदानीं अनुभवार्थभावः, तत्र श्रुतिमूलता। सादृष्टिफले तु कृषिकविवादौ पुरुषान्तरे व्यवहारदर्शनादेव प्रामाण्यम्। १।३।१।२ पृ. १६८, ● सर्वत्र हि स्वरूपप्रतिषेधासम्भवात् कार्यं प्रतिषिध्यते। तथा 'न ममैष पुत्रः' 'पुत्रकार्ये न प्रवर्तते' इत्यर्थः। ३।७।१३।३३, ● सर्वलोकस्य भूतभविष्यदनादरेण वर्तमानोपकारानुरागात् वर्तमानालोचनेनैव च कालान्तरेऽपि तत्र प्रीतिः। १।२।३।२९ पृ. १४१. ● सह प्रवृत्तौ एकया इतिकर्तव्यतया चेत् कर्म निरपेक्षं कृतं, द्वितीयस्याः प्रवृत्तिर्विप्रतिषिद्धा। भा. ७।४।१।६, ● साधुः पुरुषः परेण चेक्षीयते, स अक्षिभ्यां न पश्यतीति गम्यते। १।२।१२।३१–१ पृ. १४५. ● साम्यर्थपत्तये सर्वः प्रवर्तते, न तु कर्म योक्ष्यति इति। टुप्. ६।१।१।२ पृ. ११५०. ● सिंहो देवदत्तः इति पुरुषस्य तद्भावेन प्रशंसा। भा. ८।१।१।५, ● सिंहो देवदत्त इति प्रशस्तशरीरतया देवदत्तसंवादया रक्षते सिंहः। ६।४।५।२१. ● सिंहो देवदत्तः इति सिंहशब्दोच्चारणे सिंहसादृश्यं देवदत्ते। टुप्. ६।१।६।२३ पृ. ११७४. ● 'सिंहो माणवकः' इत्यत्र सिंहशब्दः स्वार्थमभिधाय तद्गतशौर्यादिकं गुणं लक्षयित्वा तन्मुखेन माणवके वर्तते। गौण्या हि गुणोपस्थितिरपेक्षिता। सा च सिंहादिशब्देषु एकदेशलक्षणया न निर्वहति इति तत्र सिंहशब्दस्य गुणे लक्षणा। सोम. १।४।१६।२६. ● सोमानहे पादे द्वितीयमुपानहं अशक्यत्वात् नोपादत्ते। भा. १।३।८।११–२ पृ. १४७. ● सिद्धं हि प्रशस्तानां कर्तव्यत्वम्। वा. १।२।३।२७ पृ. १४०. ● स्तुतश्चास्तुतश्च सायलेर सोऽर्थः। यथा स्तुताऽस्तुता वा देवता अङ्गभावं साधयति। भा. २।१।१४।२९, ● 'स्थाल्यां पचेत्' इति क्रियासाधनत्वे निर्दिष्टे अर्थात् संतपने धारणे च स्थालीं व्यापारयति। ३।१।६।१२ पृ. ६९६, ● स्नाता कन्या अनलंकृता माल्यगुणेनापि अलंकृता इति। एकदेशेनापि संस्काराणां संस्कृत इति। वा३।१२।३४, ● स्वस्थाने हि पत्नीयमुपजीव्यते। अर्थनिर्दिष्टे हि सलिङ्

याने देवदत्तो यज्ञदत्तयानमारोहति । सन्निहिते तु स्वयानेनैव हि याति । तत्र हि तस्य यादृशं स्वातन्त्र्येण गमनसुखं, न तादृशं परयाने । १२।१।४।११. ● स्वप्राधान्ये च संभवति न परोपसर्जनत्वं प्रतिपद्यते । या. ३।३।७।१४ पृ. ८३२, ● स्नानमपोक्तर्तनेनापि हि विशिष्टप्रयोजनार्थे कर्माणि क्रियन्ते, निमुत खाद्यधनत्यागेन इति स्तुतिः । १।२।१।१० पृ. ११५. ● स्नानाशनमन्तरेण स्वेच्छया स्नानशयनादौ कृतेऽपि न तत्फलं चेतनं लभ्यते । सु पृ. ३१.

● हस्तः करः पाणिरिति, अर्थाय हि एते उच्चार्यन्ते नादृष्टाय । नहि एषामुच्चारणे ज्ञानमस्ति । भा. १।३।८।२४. ● हेतुव्यवहारकालात् प्रथमं प्रमाणान्तरेण संबन्धप्रसिद्धिरपेक्ष्यते । या. १।२।३।१४ पृ. १३९.

( इति 'इतस्तत.' नाम प्रगट्टकं समाप्तम् । )

● इतिकरणः विनियोक्त्री श्रुतिः भट्टसोमेश्वरमते यथा 'इषेत्वेति शाखां छिनत्ति' इति। शास्त्रदीपिकायां तु 'तथाऽऽह्वानमपीति चेत्' (३।२।३) इत्यधिकरणे इतिकरणस्य श्रुतित्वं निरस्तम् । बाल. पृ. ४५, ४६.

● इतिकर्तव्यता अर्थभावनायाः शब्दभावनायाश्च अंशत्रयोपेतायाः एकोंऽशः । स च 'कथं कुर्यात्' इति कथंभावाकाङ्क्षया करणेन संबध्यते । टुप् . ● इतिकर्तव्यता करणमनुगृह्णती भावनया संबध्यते इत्युक्तम् । टुप्. ११।१।१०।५४, ● इतिकर्तव्यता करणानुग्राहिणी लोके दृष्टा । ७।१।१।२ पृ. १५२६. ● इतिकर्तव्यता कर्तव्यताविशेषाभिन्ना । या. १।४।२।३ पृ. २२९. ● इतिकर्तव्यता नित्येन संबध्यते, न काम्येन । काम्ये तु अतिदेशेन । था. ● इतिकर्तव्यता प्राकृती अग्नीषोमीये पशौ प्रयाजानुयाजेषु प्राप्यते । प्राप्ताया च एकदेशगतगुणविधिः । एवं चातुर्मास्येषु प्रयाजानुयाजेषु नवगतगुणविधिः । एवं वायव्यश्वेतपशौ आघारे मन्त्ररूपगुणविधिः । अश्वमेधे चाघारे अप्सु तूष्णीमवनरूपगुणविधिः । भा. १०।३।१।४. ● इतिकर्तव्यता भावनया आकाङ्क्षिता किं येन कथं इति । या. ७।१।१।१ पृ. १५२५. ● इतिकर्तव्यता भावनया संबध्यमाना करणमनुगृह्णती संबध्यते । टुप्. ११।१।१।२।१०, ● इतिकर्तव्यता यत्र समीपे नाम्नायते, तत्र कथंभावस्य साकाङ्क्षत्वात् कस्यापि सन्निधिस्था इतिकर्तव्यतया भवितव्यम् । यथा विश्वजिति किमंशसाकाङ्क्षत्वात् फलमनुपपद्यते । ७।४।१।१ पृ. १५७०. ● इतिकर्तव्यता । यदि नाम गुणः स्वातन्त्र्येण इतिकर्तव्यतां ग्रहीतुं शक्नुयात् तत एव स्यात् । स च कथं शक्नुयात्, यदि करणैरेव इतिकर्तव्यता संबध्येत । ... न तावत् करणैः इतिकर्तव्यता संबध्यते इत्युक्तम् (इन्द्रियकामाधिकरणे २।२।११)...सत्या भावनायामवस्थितो गुणः इतिकर्तव्यतां गृह्णाति, तस्यां प्रथमतरं संनिविष्टो धात्वर्थो दृश्यते । ...यदि हि इतिकर्तव्यताग्रहणयोग्यः ■ न भवेत् ततो न गृह्णीयात् । न तु फलवत्त्वात्, इतिकर्तव्यताद्वारभूतभावनाविशेषणत्वाच्च न कांचित् गृह्णाति।...भावना तावत् न धात्वर्थविशेषाद्विना इतिकर्तव्यतां शक्नोति ग्रहीतुम् । गुणोऽपि च न धात्वर्थमनुपनीय स्वतन्त्रः शक्नोति... ग्रहीतुम् इति आश्रयति (धात्वर्थम्) । तथा इतिकर्तव्यता गुणाभिमुखं गच्छन्ती न धात्वर्थमुल्लङ्घ्य शक्नोति गन्तुम् । *धात्वर्थोऽपि स्वयं इतिकर्तव्यताऽऽकाङ्क्षः सन् गुणार्थमपि* प्रस्थितामेतां ग्रहणसमर्थः सन् किमिति परित्यजेत् । या. ३।६।१९।४३ पृ. १०६९. ● इतिकर्तव्यता प्रयाजादेः प्रत्यक्षादीनामनुग्राहकशक्त्यभावात् अत्यन्तशास्त्रगम्या, इति यथासंनिकर्षे तदर्थभरात्र यथाकथंचिदुपस्थाप्यमाना, शास्त्रानुसारेण श्रुत्याद्युपदेशेन चोदनासामान्यादतिदेशेन वा अस्मत्पक्षद्वारेणान्यथाऽनुपपत्त्या कल्प्यते । रत्न ३।१।१।२ पृ. ३८५. ● इतिकर्तव्यता लौकिकी पार्वणस्थालीपाके, अष्टकायां, अन्वष्टक्ये कर्मणि च इति । भा. ७।४।२।२, ● इतिकर्तव्यता वैदिकी प्रकरणादिभिः दर्शपूर्णमासादिषु निबद्धा । ७।४।२।९, सौर्ये चरौ, ऐन्द्राबार्हस्पत्ये चरौ, महापितृयज्ञे उत्तरेषु गृहमेधीये च अतिदिश्यते । ७।४।२।३-४, ● इतिकर्तव्यता साधनस्य साध्यस्य वा इति संदिह्यमाना साध्यस्य भवितुमर्हति । नासौ साध्यम् अप्राप्नुवन्ती साधनेन संबध्यते । एष हि इतिकर्तव्यताविशेषो यदनेन साधनं साधकं करोति । न चास्ति स प्रकारः, येन अप्राप्यमानायां क्रियायां तेन

साधक कृतो भवेत् । तस्मात् साधकस्यापि इतिकर्तव्यताविशेष अभ्युपगच्छता साध्यस्यापि इत्येतदभ्युपगमनीयम् । ३।६।१६।४३ पृ १०७० ● एकस्मिन् फले चोदिताना तन्त्रेण इतिकर्तव्यता भविष्यति । टुप् ११।४।५।१७, ● करणानुग्राहिणा इतिकर्तव्यता तेन चापेक्षिता । तस्मात् करणमुद्दिश्य तत्र इतिकर्तव्यता विधीयते । ९।१।१।१ पृ १६३६, ● भाव्य स्वर्गं भावको याग, इतिकर्तव्यता यागस्यानुग्रह करोति, न फलसाधिका । तस्मा फल न श्रूयते करणात् फलमिति । अन्य करणस्य फल साधयत अभ्यस्यमाना इतिकर्तव्यता महान्तमुपकार करोति । ११।१।७।३५ ● स्वत भावनामनपेक्ष्य करणभावाविशेषो हि इतिकर्तव्यता । सा च व्यापारविशेष । द्रव्यदेवतादेरपि व्यापारविशेषा परत्वेन इतिकर्तव्यतात्व न स्वरूपेण । सामान्यस्य भेदको धर्म प्रकार । तथा च व्यापारसामान्यात्मकभावनाया एव व्यापारविशेषामपेक्षितत्वात् कथम्भावाकाङ्क्षा, न तु यागस्य, कथ याग ' इत्यपेक्षाऽभावात् । सोम ७।१।१ पृ ५२६ ● एकस्मिन् कर्मणि उभाभ्या प्रकृतिभ्या कस्मात् उभे इतिकर्तव्यते न प्रवर्तेते । ' मिथो विप्रतिषेधात् ' ( ७।४।२।६ ) इति सूत्रेण निराकृतोऽयं पक्ष । एकया निराकाङ्क्षीकृते द्वितीया न प्रवर्तते प्रमाणाभावात् । टुप् ८।१।१।१ पृ १५८१ ● भावनया करणेतिकर्तव्यते आकाङ्क्षिते । तत्र करण फले व्याप्रियते । इतिकर्तव्यता करणमनुगृह्णती आकाङ्क्षिता । ११।१।७।३५ ● इतिकर्तव्यता प्रति कर्माणि न विधीयते ( किन्तु ) फल प्रति तेषा विधि । इतिकर्तव्यता तु क्रमशो विधीयते । भा ३।२।६।१९ पृ ७६६ ● इतिकर्तव्यता प्रति प्रत्येक वचन् प्रधानसाहित्य अविवक्षितम् । विशिष्टभावनाविध्युत्तरकाल अवान्तरविधिषु कल्प्यमानेषु क्रमेण फलभावनातो पुरुष प्रवर्तमान कर्मसाहित्येऽपि पश्चात् प्रवर्तेत प्रधानेतिकर्तव्यता संबन्धो प्रधानानि प्रति अप्रवर्त्यमानत्वात् तत्साहित्येऽपि प्रवर्तेत, अङ्गानि तु सहितानि प्रति नियुक्त । वा ३।२।६।१९ पृ ७६७ ● न चेतिकर्तव्यतामन्तरेण कर्म चोदना अर्थवती भवति । तस्मात् सेतिकर्तव्यताकस्य कर्मण प्रयोगश्चोच्यते । भा ११।१।२८, ● इतिकर्तव्यतया तत् अनुवध्यते, यत् फलवत् चोद्यते । ९।१।३।५ ● इतिकर्तव्यता नहि सापेक्षाणा संबन्ध । ३।२।६।१९ पृ ७६६ ● न च याग इतिकर्तव्यतया विना न सिध्यति, निर्ज्ञातोपायत्वात् यागस्य लोके । टुप् ९।१।१।१ पृ १६३६, ● य फले चोद्यते, स इतिकर्तव्यतया सबध्यमान इतिकर्तव्यता प्रति प्रधानम् । ७।१।१।२ पृ १५२६ ● इतिकर्तव्यताया करणव्यतिरिक्तत्वात् । वा २।२।११।२६ पृ ५५० ● अरुणाऽधिकरणन्यायेन करणेतिकर्तव्यतयो संबन्ध । टुप् ९।१।१।१ पृ १६३७ ● कर्तव्यताया चोदिताया इतिकर्तव्यताऽऽकाङ्क्षा भवति कथ कुर्यादिति । प्रकरणेन धर्मो संबध्यते इत्थ कुर्यादिति । भा ७।१।१।२ पृ १५२७

● 'इतिकर्तव्यताऽऽशस्या येनोद्दिश्योपसत्क्रियाम् । द्वादशत्वविधिस्तेन कथभावेन गृह्यते ॥' वा पृ ८३५ । ( येन कथभावेन इतिकर्तव्यतारूपे अशे स्थिता उपसद्-रूपा क्रियामुद्दिश्य द्वादशत्वस्य विधि, तेन द्वादशत्व गृह्यते इत्यन्वय )। बाल पृ ९ ● इतिकर्तव्यताऽऽकाङ्क्षा करणानुग्राहकव्यापाररूपा । भाट्ट ७।४।१ पृ ३६६

● इतिकर्तव्यताऽऽकाङ्क्षा नाम केय ? तदभिधीयते । प्रकाराकाङ्क्षेयम् । इतिशब्द प्रकारवचन । कर्तव्यताप्रकार क्रियाप्रकार इति यावत् । सामान्यस्य च भेदको विशेष प्रकार इति वदित । किं पुनरिह सामान्यात्मना अवगत विशेषरूपमपेक्षते ? क्रिया भावनेति ब्रूम । 'यागेन स्वर्गं कुर्यात्' इत्यस्याय अर्थ — यथा व्याप्रियते यागात् स्वर्गो भवति, तथा याग प्रति व्याप्रियेतेति । तत्र न ज्ञायते कोऽसौ व्यापारविशेष, येन यागात् स्वर्गो भवतीति । सेयं इतिकर्तव्यताऽऽकाङ्क्षा इत्युच्यते । शा ३।३।४ पृ ९२६ ● व्यापार्येण समीहितभावनागतो अपि भाव्यविशेषपरिज्ञाने इतिकर्तव्यताऽऽकाङ्क्षाऽभावात् । नहि इयमाकाङ्क्षाऽस्ति, 'किं चित् समीहित कथ कर्तव्य' इति, किंतु 'इद समीहित कथ कर्तव्य' इति । सा च भाव्यविशेष

श्रवणानन्तरमेव, इति फलाकाङ्क्षे एवेतिकर्तव्यताऽऽकाङ्क्षा युक्ता । सोम. ७।४।२. ● इतिकर्तव्यतारूपा धर्मा अपूर्वनिमित्ता अपूर्वप्रयुक्ताश्च । भा. ९।१।१।१. ● भावनायाः सन्निपत्योपकारीतिकर्तव्यताऽन्वयमात्रेण इतिकर्तव्यताऽऽकाङ्क्षानिवृत्तेः आरादुपकारीतिकर्तव्यताऽनाकाङ्क्षणात् सन्निपत्योपकारिण्याश्च इतिकर्तव्यतायाः श्रुत्यादिप्रमाणेनैव प्रकरणाद्यपेक्षाभावात् न इतिकर्तव्यताऽऽकाङ्क्षालक्षणं प्रकरणमस्ति । सु पृ. ११९२.

● इतिकर्तव्यताऽऽकाङ्क्षस्य यागवचनस्य अन्तिकादुपनिपतिताः ( गुणाः ) शक्नुवन्ति तं निराकाङ्क्षीकर्तुम् । भा. ६।१।२।५, ● इतिकर्तव्यताऽऽकाङ्क्षस्य सन्निधौ श्रूयमाण इतिकर्तव्यताविशेषणत्वेन परिपूरणसमर्थो भवितुमर्हति । ४।४।१२।१४, ● इतिकर्तव्यताऽऽकाङ्क्षिणः सन्निधौ पूरणसमर्थं यद् वचनं, तत् तेन सह एकवाक्यतां याति । ३।३।८।११.

● इतिकर्तव्यतात्वं क्रियाया एव, कथंभावाकाङ्क्षागृहीतस्य इतिकर्तव्यतात्वात् । मीन्या.

■ इतिकर्तव्यताऽविधेर्यजतेः पूर्ववत्त्वम् । ७।४।१।१ ॥

'सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः' इति श्रूयते । सौर्ययागेन अपूर्वं कृत्वा ब्रह्मवर्चसं साधयेत् ब्रह्मवर्चसकामः इति तदर्थः । इति सौर्यादिषु विकृतियागेषु इतिकर्तव्यतायाः अविधेः विधानाभावात् तत्रत्यस्य यजतेः यागवाचकस्य धातोः पूर्ववत्त्वं पूर्वं अन्यत्र च विहिता या इतिकर्तव्यता, तद्वत्त्वं स्यात् । अन्यत्र च विहिता ये धर्माः प्रसिद्धाः स्युः, ते सौर्यादौ प्राप्ताः । तथाऽपि सौर्यादौ अस्ति इतिकर्तव्यता इति सिद्धान्तः । के.

● इतिकर्तव्यताऽविधेर्यजतेः पूर्ववत्त्वम् । अयं नाम निर्णयः । 'आद्य दर्शपूर्णमासाभ्या' इत्यत्र नामनिर्णयेन दर्शशब्दस्य पूर्णमासशब्दस्य च अन्वयार्थ निरूढ्यन्ये दर्शादितिदेशः जात, तेषां एकदेशोपादानेन समुदायवाचनैः उत्पत्तिवाक्यगतसमुदितशब्दवाच्यत्वेनाऽनुवाद्येन गम्यमान कर्मैकदेशाभावात् ( प्रकृतिवत् यागात् ) कर्मैव विधेयम् ( गुणफलविधानपक्षे ) । को. ३।१।



११।२४ पृ. ८७. ● इतिकर्तव्यतासामान्यस्यापि इत्थं इति पदकल्पनया अन्वयस्वीकारात् उपनिषद्वाक्ये इतिकर्तव्यतासामान्यान्वयाच्च । भाट्ट. ७।१।१ पृ. ३३९.

● इतिशब्दः प्रकारवाची । सु. पृ. १३७९. ● इतिशब्दश्च ज्ञातनिर्देशप्रधानो लोके दृष्टः । ऋजु. पृ. ८९.

● 'इति ह स्म' इत्यादयः परकृतिपुराकल्पा अर्थवादाः । भा. ६।७।१२।२६-३०.

● 'इतिहासपुराणं च कृत्रिमत्वेन निश्चितम् । तथाप्यकृत्रिमे वेदे तद् नित्यत्वेन सम्मतम् ॥' वा. १।३।२।७ पृ २०२. ● इतिहासपुराणयोः अर्थवादप्रायत्वम् । सु पृ. ४०. ● इतिहासपुराणयोः उपदेशाख्याना एव ( स्मृतिवत् ) गतिः । वा. १।३।१।२ पृ. १६६.

● इत्थंभावः यागगतो व्यापारः प्रकाराख्यः । सोम. ७।४।२.

■ इदं अग्ने इदं अग्नीषोमयोः इति विभक्तयोरेव पिण्डयोर्देवतानिर्देशः ॥

'इदमग्नेः इदमग्नीषोमयोः' इति मन्त्रयोरपि पूर्वन्यायेन पिण्डविभागार्थत्वे प्राप्ते, 'समं द्वेधं कृत्वाऽभिमृशेदिदमग्नेः' इत्याम्नानात् विभक्तयोरेव देवतानिर्देशः । 'अग्नये अग्नीषोमाभ्याम्' इतिमन्त्रयोस्तु चतुर्थीनिर्देशाद्धविष एव देवताऽभिधायित्वम् । संकर्ष. १।३।१७.

● 'इदं ब्रह्मणः, इदं होतुः' इति चतुर्धाकरणे ऋत्विजां परिगणनं, उत भक्षणाय इति संदेहे भक्षणाय इति सिद्धान्तः दर्शपूर्णमासयोः । भा. ३।४।१७।४८-५१.

● 'इदं रजतम्' । मीमांसकाः ( प्राभाकराः ) वे द्वे एते विज्ञाने, 'इदं' इत्येकं प्रत्यक्षात्मकं, 'रजतं' इत्यपरं स्मरणात्मकम् । इति । ऋजु. पृ. ४०.

● इध्मः अग्निसमिन्धनार्थः, स दर्शादिषु आहार्यः अमावास्यायां निशि कर्मारम्भस्य निषिद्धत्वात् अग्निसमिन्धनं न साधयेत् ( तन्त्रं भेदेन कार्यः ) । भा. १२।२।८।१८. ● इध्म. । चातुर्मास्येषु वैश्वदेवपर्वणि 'भेदेन दीनद इध्मः' इति आम्नातः । वि. ७।१।१,

* इध्मः दर्शपूर्णमासादौ 'त्रीन् परिधीन्' इत्यादिमन्त्रो पेताभिः त्रिशाभिः सिध्यति। १०।१।१. * 'इध्मः प्रथमः आहुतीनां हूयते।' संकर्ष. २।८।१. * इध्मः राजसूये रत्निनां हविःषु मध्ये मैत्राबार्हस्पत्ये हविषि 'स्वयंकृत इध्मः' इति श्रुतम्। तेन स्वत एव च्छिन्नः शास्त्रीयच्छेदननिरपेक्षो भावः। वि. १०।१।१.

* इध्माबर्हिः अमावास्यातन्त्रस्य प्रसङ्गेऽपि निमित्ते पृथक् कर्तव्यम्। (इध्मश्च बर्हिश्च इध्माबर्हिः। 'जातिरप्राणिनाम्' (पा० २।४।६) इत्येकवद्भावः, पूर्वपदस्य आनङ् छान्दसप्रयोगप्रामाण्यात्)। भा. १२।२।५।१८.

**इन्दुक्ष्वेडन्यायः।** उक्तं च 'गुणदोषौ बुधो गृह्णन्निन्दुक्ष्वेडाविवेश्वरः। शिरसा श्लाघते पूर्वं परं कण्ठे नियच्छति॥' इति। क्ष्वेडस्तु गरल विषम्। साहस्री १२२.

* इन्द्रः एव महेन्द्रः, न अन्य इति सिद्धम्। (इन्द्र एव गुणयुक्तो महेन्द्रो नार्थान्तरं, विस्तरस्तु इन्द्रमहेन्द्राधिकरणे (२।१।७) द्रष्टव्यः)। भा २।१।५।१७ पृ. ४२१ * शीलकर्मा हि इन्द्रो यजमानेभ्यो ऽवगम्यते। भा ७।२।१०।१४ * 'इन्द्राय पुत्रिणे पुरोडाशमेकादशकपालं प्रजाकाम' पुत्रकामेष्टौ द्वितीय हविरिदम्। दर्श. पृ ६४ * 'इन्द्राय प्रदात्रे पुरोडाशमेकादशकपालम्' पशुकामेष्टौ सम्प्रवादात. ऐन्द्राग्नस्य विकृतिः। वि १९।२।७ वर्णक २ * 'इन्द्राय मरुत्वते नैवारमेकादशकपाल' इत्यत्र निर्वापमन्त्रे सदनकरणमन्त्रे च 'इन्द्राय मरुत्वते जुष्टं' इति 'नीवाराणामेध सुमनस्यमानः' इति च ऊह. कार्य. । भा ९।३।२।१-२ * 'इन्द्राय राज्ञे पुरोडाशमेकादशकपालं निर्वपेत्' इत्यादौ याजमाने पुरोडाशैकत्वे सहैवावदानं देवताभेदेऽपि। तैत्तिरीये तु त्रयः पुरोडाशा उत्तरोत्तरे स्पृष्टा आम्नाताः। तथापि सहैवावदानम्। संकर्ष २।२।१४। प्रदानं तु भिन्नमेव। २।२।१५. * 'इन्द्राय राथंतरायानुब्रूहि इति रथन्तरस्यर्चमनूच्य (स्व ऋ) बृहत इचा यजेत्, इन्द्राय बार्हतायानुब्रूहि इति बृहत ऋचमनूच्य रथंतरस्यर्चा (स्व ऋ) यजेत्' इदं सर्वपृष्ठयाम्। 'अभि त्वा शूर' इति रथंतरस्य ऋक्, 'त्वामिद्धि हवामहे' इति बृहतः ऋक्। ४।४।४. * 'इन्द्राय वज्रिणे वृषभमालभेत' इत्यस्य पशोः पुरोडाशस्य कर्मे सवनीयवद्देवताकं याज्यानुवाक्याद्वयं समाम्नातं 'इन्द्रं स्तुहि वज्रिणं स्तोमपृष्ठ० स्तुहि शूर वज्रिणं सुभक्तिं०' इति। भा. १०।४।९।२१

* इन्द्रस्यापि गौतमभार्यागमनेन परदाराभिगमात् धर्मव्यतिक्रमः। भा. १।३।३।७ पृ. २०३, न तमहातेजाः परमैश्वर्यनिमित्तेन्द्रशब्दवाच्यः सविता एव अहनि लीयमानतया रात्रेरहल्याशब्दवाच्यायाः क्षयात्मकजरणहेतुत्वात् जीर्यति अस्मादनेन एव उदितेन इति आदित्यः एव अहल्याजार इत्युच्यते। न तु परस्त्रीव्यभिचारात्। पृ. २०८. * इन्द्रस्य पुराणेतिहासेषु प्राचीदिक्पालत्व स्मरणात् प्राच्या दिशि ऐन्द्रीत्यपदेशः। सु पृ. १०८८.

**इन्द्रस्य मध्ये व्यवधानं देवतान्तरेण इति पुनरावाहनं इति न्यायः।** तारस्त्रायीये आवाहने 'अग्निमग्न आवह, सोममावह, इन्द्र महेन्द्र वा आवह, अग्निमावह, इन्द्र महेन्द्रं वा आवह' इत्यादिना अविहतम् (प्रकृतिवत्)। 'इन्द्रस्य मध्ये०' इति न्यायः। वैजयन्ती. ७।६।९३.

* इन्द्रस्य याज्यानुवाक्याद्वय 'इन्द्रसानसिं रयिं० महाहिये पुरुहूत शत्रून्०' इति। सु. पृ. ६५९.

**इन्द्रजालन्यायः।** इन्द्रस्य योगविद्यया जालमित्यर्थः। यथा मन्त्रौषधादिना यथास्थितस्य वस्तुनः अन्यथा प्रत्यायन भवति, तथा सर्वं जगत् मायामयं मिथ्याभूतमित्यर्थः। उक्तं च बुद्धे.—'एतस्मात् त्रिभुवेन्द्रजालमपर यद्गर्भवासस्थितं रेतश्चेतति हस्तमस्तकपदप्रोद्भूतनानाङ्कुरम्। पर्यायेण शिशुत्वयौवनजरावेषैरनेकैर्वृतं पश्यत्यत्ति शृणोति जिघ्रति तथा गच्छत्यथागच्छति॥' इति। साहस्री- ४५२

**इन्द्रपीताधिकरणम्।** अनैन्द्राधिकरणम्। ऐन्द्राणामनैन्द्राणां चेति सर्वेषां भक्षाणां समान्तक भक्षाः, यथाम्नाताश्च मन्त्राः, नोह॥

तु स्वरूपेण विधित्सितं अनुष्टुप्छन्दःशब्दं अपेक्ष्य । ' इष्टपद ' इति पाठे तु ( विशिष्टपद इत्यस्य स्थाने ) अनुष्टुप्छन्दःशब्दस्य ऊहानुवादार्थे नमति इतिपदमपेक्ष्य ( इष्ट पदं नमतिपद् ) पश्चात् विधौ सति विपरिणाम-व्यपदेशो तुल्येन, न तु विधित्सितं अनुष्टुप्छन्दःशब्दं अपेक्ष्य पश्चात् विपरिणामव्यपदेशः । इति । ( अत्र आनन्दाश्रमीये ' पदाक्षेप ' ' शब्दाक्षेप ' इति मुद्रितं, तत् ' पदापेक्ष ' ' शब्दापेक्ष ' इति पठनीयम् ) । तस्मात् यथादेवतमूहः इति ।

**छन्दःप्रतिषेधस्तु सर्वगामित्वात् । ३९ ॥**

**भाष्यम्**— क्रियतावुत्तमुच्यते । नैतदस्ति यदुक्तं ऊहेन मन्त्रवत् भक्षणं कर्तव्य इति । अमन्त्रकं भक्षणं कर्तव्यम् । कस्मात् ? उच्यते । समानविधानत्वात् । नास्ति अत्र प्रकृतिविकृतिभावः । कथं ? प्रकरणस्य तुल्यत्वात् । यत् लिङ्गमुक्तं, छन्दःप्रतिषेधः स इति, उच्यते । तृतीयसवनत्वात् ' जगतीछन्दसः ' इति प्राप्ते ' अनुष्टुप्-छन्दसः ' इति ' घोदशिनि भक्षमन्त्र नमति ' इति समानविधानेऽपि अवकल्पते । यत्तु उक्तं ' ऐन्द्रः सोमो गृह्यते पीयते च ' इति, नैते ऐन्द्रा अनैन्द्राश्च भिन्ना यागाः, एकस्यैव एते अभ्यासविशेषाः । न च अभ्यास-विशेषाणां धर्माः, गुणत्वात् । सर्वे एते यागधर्माः । तेन कृत्स्नाः यागस्य चोद्यन्ते सोमधर्माः सोमश्चेति । यच्च ' ऐन्द्रो गृह्यते पीयते च ' इति, इन्द्रस्य मन्त्राम्नानात् मन्त्रेण ग्रहणं प्रकाशयितव्यम् । इतरासां देवतानां ध्यानादिना इति । तस्मात् अनैन्द्राणां अमन्त्रकं भक्षण-मिति ।

*वा—स्थितादुत्तरम् । न यथादेवतमूहः । किं तर्हि ? अनैन्द्राणां अमन्त्रकमेवेति ।* कुतः ? ' तुल्यप्रकरणा ह्येषा ज्योतिष्टोमक्रियेष्यते । प्रकृतिर्विकृतिश्चेष्टा न चात्मैवात्मनः क्वचित् ॥ ' यदि हि अभ्यासाः पृथक्कर्माणि भवेयुः, ततः प्रकृतिविकारभावः स्यात् । न त्वेतदस्ति । न च एषा सोमो धर्मो वा येन क्वचित् विहिता । येन तु प्रकारेण एतो गृह्णाति, तेन सर्वे । यथा वक्ष्यति ' तद्वत् सवनान्तरे ग्रहाम्नानम् ' इति ( ३।६।५।३० ) । न च मन्त्रदोषेण ऐन्द्रविषयत्वा सोमस्य, मन्त्रतया श्रुत्या सर्वविषयत्वबोधात् । न च यथा अनारभ्यवादेन आहवनीयः सर्वहोमार्थः इति तद्रहित-कर्मान्तराभावात् आहिताग्नेः अधिकारः, एवमिह मन्त्रः सर्वसोमार्थः प्रकरणपठितः सामर्थ्यात् इन्द्रार्थं प्रकाश-यिष्यति । अन्यस्तु तेन अप्रकाशितः एव भक्षयितव्यः भक्ष्यते वा । अथवा विशेषाभावात् सर्वस्मिन्नेव भक्षणे संकल्पमात्रेण व्यवस्थाप्यते । ( एवं भाष्य द्वेषाऽभि-प्रायेण व्याख्याय स्वयं परिहारान्तरमाह— ) अथवा सुब्रह्मण्यावत् मुख्यतया इन्द्रप्रकाशनार्थो भवति, तत्र मूनये देवतासमुदायाय इत्यर्थः । ( अपरितोषात् अन्यथा परिहरति— ) अथवा विधिशब्दे वसुमतस्य अभावात् तद्गुणप्रकाशन अर्थं, इति वसुमत्त्वेन इतरदेवता सहितस्य इत्येतदभिधीयते । तस्मात् सर्वत्र समानविधानः सोमः, ततश्च विकारत्वाभावः । यत्तु अनुष्टुप्छन्दस्त्व विनामविधानात् विकृतत्वमिति, तत् समानविधानत्वेऽपि तृतीयसवनत्वात् जगच्छन्दस्त्वे प्राप्ते विशिष्टविधानत्वेन उपपत्स्यते । अथवा संस्थानां विकारत्वात् उपपन्न एव अनोहः इति अदर्शनमेव । तस्मात् ऐन्द्रेष्वेव भक्षण मन्त्रः । मानभ्रष्टत्वाच्च न सर्वत्र भक्षनियमः, इति अन्येषां अमन्त्रकं भक्षणम् ।

**सर्वेषां वैकमन्त्र्यमैतिशायनस्य भक्तिपानत्वात् सवनाधिकारो हि । ४४ ॥**

भाष्यम्—यदुक्तं अनैन्द्राणां अमन्त्रकं भक्षणमिति, तन्न, सर्वेषां समन्त्रकं भक्षणमिति । यथासमाम्नातश्च मन्त्रः स्यात् । न ' इन्द्रपीतः ' इति सोम उच्यते, किं तर्हि ? सवनं, प्रातःसवनशब्देन सामानाधिकरण्यात् । *ननु सोमेऽपि षष्ठी, सवनस्यापि षष्ठी, न तु तेन सामा-*नाधिकरण्यम् । नासौ इन्द्रेण सोमः पीतः, नापि इन्द्राय दत्तः । अन्य एव पीतो दत्तो वा, स गत एव । न च अतीव समुदायो व्यपदिश्यते । प्रत्यक्षवचनो हि अयं शब्दः । सवने तु न दोषः । इन्द्रपीतं भवति सवनं, यत्र इन्द्रेण पीतम् । तस्मात् अनैन्द्रोऽपि इन्द्रपीतसवने अवतिष्ठति इति शक्यते मन्त्रेण वक्तुम् । भक्तत्वे चेत्, समानविधाने कथमिव भक्षो न भविष्यति । भक्त्या हि अपीतः पीत इत्युच्यते । एवमेव ऐतिशायन आचार्यो

इन्द्रपीतादिपदानां सकृत्पठितानामेव पाठोपपत्तौ तत्र योग्यतयैव प्रातःसवनादिपदाना विभागेन विशेषणत्वोपपत्तिः । अतस्तेषां प्रातःसवनादिभेदेन नियत पाठ एव वैयर्थ्यभिया सवनपञ्चकक्षमात्रतात्पर्यग्राहकः । अतश्च इन्द्रपीतादिविशेषणत्रयसुक्तस्य तत्तत्सवनस्य सर्वान्धिनं सोममन्यदेवत्यमपि भक्षयामीति मन्त्रार्थावगतेः सर्वत्रैकमन्त्रम् । विभक्तोऽपि न तैत्तिरीयशाखायामाम्नातक्रमेणैव बोध्यः । कल्पसूत्रकारास्तु उक्तमेव आमनन्ति । ( वस्तुतस्तु ११, १७, २० एतानि अधिकरणानि न भिन्नानि । एकमेवैतदधिकरणं एकादशम् । )

मण्डन— ' ऐन्द्रेषु सोमेषु तु भक्षमन्त्रः । ' ११ । ' नेन्द्रादिपीतो भवतीन्द्रपीतः । ' १७ । ' स्यादिन्द्रपीतं सवनं, न सोमः । ' १९ ।

शंकर— ' नानाऽन्वक्ष्यं मन्त्रः । ' १८ । ' नैन्द्रे, नोहो, न नाश्लिता । ' १९ ।

॥ ' इन्द्रपीतस्योपहूतो गृहणामि ' इत्यादौ स्वरेणैव बहुव्रीहिनिर्णये इन्द्रपीताधिकरणं अनैयाकरणानां मति सार्थकम् । कृत्वाचिन्तान्यायेन वा नेयम् । शब्दकौस्तुभे प्रयोजनविचारे १. ॥ इन्द्रपीताधिकरणे तत्पुरुषात् बहुव्रीहौ लाघवम् । तत्पुरुषे पूर्वपदस्य लक्षणा बहुव्रीहौ तु शक्तिरेव इति । इत्याचार्यादयः । परे तु इन्द्रपीतपदे तत्पुरुषेऽपि पूर्वपदलक्षणा, पीतपदे हुताहुतदोषलक्षणया चेति लक्षणाद्वयापत्त्या लाक्षणिकबहुव्रीह्यपेक्षया तत्पुरुषस्य दुर्बलत्वात् सिद्धान्तसिद्धिः इत्याहुः । मणि. पृ. १४९. ■ इन्द्रपीताधिकरणे निराकाङ्क्षस्य विधेः मन्त्रलिङ्गानुसारेण सङ्कोचः निराकृतः । के ॥ इन्द्रपीताधिकरणे बहुव्रीहेः अन्यपदार्थप्राधान्येः व्यवस्थापयिष्यमाणत्वात् । सु. ३।२।६।१२ पृ. २५४. ॥ इन्द्रपीताधिकरणे सिद्धान्तसूत्रे ( ३।२।१०।४१ ) इन्द्रपीतसमासस्थेन इन्द्रशब्देन सापेक्षेन्द्रदेवत्यस्य ऐन्द्राग्नादेः सोमस्य ग्रहणं वक्ष्यति । सु. पृ. ६८७. ॥ इन्द्रपीताधिकरणसिद्धान्ते ' गायत्रच्छन्दसः ' इत्यादेः सवनविशेषणत्वं स्थितम् । कौ. ३।२।१०।४२ पृ ३०३, ॥ इन्द्रपीताधिकरणसिद्धान्तरीत्या वक्षिनियोगस्तु ( मन्त्रविनियोगः ) नैवानिष्टः । अत एव इन्द्रपीताधिकरणप्रयोजनस्य अनुपपत्त्याख्यानमपि विषयः । ३।२।१६।३८ पृ. २९७.

॥ इन्द्रमहेन्द्रन्यायः ( स्तुतशस्त्राधिकरणान्तर्गतः ) २।१।५।१३–२९ । न च वाजिशब्दस्य विश्वदेवपरत्वेऽपि न विश्वदेवत्वेन तेषां देवतात्वं किंतु वाजित्वेन । नतश्च स्तुतशस्त्राधिकरणगत–इन्द्रमहेन्द्रन्यायेन देवताभेदात् नास्ति पूर्वकर्मत्वभावः इति वाच्यम् । कु. २।१।५।२३ पृ. १८७. ॥ वेदे समिदादिपदानां अभिधानमानाधिकरण्ये सत्यपि इन्द्रमहेन्द्रन्यायेन समिदादिपदैः तत्तत्प्रकाशनानुपपत्तिः, यागस्य देवतात्वेन तद्भेदे पदान्तरप्रयोगानुपपत्तेः । भाट्ट ९।२।१९. ॥ वाजिशब्दोपस्थितविश्वदेवदेवतामुखेन वाजिनद्रव्यं विहितं भवति । इति नात्र इन्द्रमहेन्द्रन्यायावतारः । कु २।१।५।२३ पृ. १८७. ॥ इन्द्रमहेन्द्राधिकरणे विधिमात्रप्रमाणिका देवता इत्युक्तम् । बाल. पृ. १२९.

॥ इन्द्ररोचनं नाम साम अनुक्रम् । बाल. पृ ७२.

॥ इन्द्रशब्दः यज्ञसाधनस्वरूपात् सादृश्यात् ऐश्वर्याद्वा गार्हपत्ये गौणः । भा. ३।२।२।४, ■ इन्द्रशब्दस्य ऐश्वर्यवचनत्वात् । १०।३।२।१५.

॥ इन्द्रायुधमिव धातुनपानुरक्तं पक्वं कर्म । (यजति, ददाति, जुहोति । इत्र पूर्वपक्षे ) । वा. २।२।१।१ पृ. ४६३ । इन्द्रायुधं यथा लोहितशुक्लकृष्णैर्विभिर्धातुभिः सहत्वानुरज्यते तद्वत् । [illegible] पृ. ७०९.

॥ इन्द्रासोमीयस्य ऐन्द्राग्नविकृतित्वं इन्द्रगुणत्वात् । बाल. पृ. १२०.

॥ इन्द्रियं गमक, यत् सत्तामात्रेण स्वसन्निकृष्टमर्थं गमयति । के. ॥ इन्द्रियं चक्षुरादि प्रत्यभिज्ञानं नानैव । तच्च प्रमाणान्तरत्वात् तैजसादि । भाट्ट. ९।३।१०. ॥ इन्द्रियं संनिहिते एव विषये ज्ञानं जनयति । श्रुतु. पृ. २०४, ॥ इन्द्रियाणि स्वानुभवसमर्थानि । पृ. २३०.

■ 'इन्द्रियाभ्यामजय्याभ्यां द्वाभ्यामेव हृतं जगत्। अहो उपस्थजिह्वाभ्यां ब्रह्मादिमशकावधि॥' इति न्यायः। यथा— अनाद्यविद्यया विषयभोगलाम्पट्येनानुगमितमिदं जगत् ब्रह्ममशकान्तं सर्वं चेति भावः। साहस्री. ५३८.

● इन्द्रियस्य सर्वेष प्रत्यक्षे कारणत्वात्। मणि. पृ. ११ ● इन्द्रियकामस्य अग्निहोत्रं दध्ना जुहुयात्। भा. २।२।११।२५, दध्ना इन्द्रियकामस्य जुहुयात्,... य इन्द्रियकामः स्यात्, स दध्ना होमं कुर्यात्... इन्द्रियकामस्य होममवद्धं प्रधानं दधिमद्धं कुर्यात्। २६. ● इन्द्रियकामवाक्ये अन्यत एव दध्नो होमान्वयप्राप्तात् न कर्मान्तरता। सु. पृ ८०७, ● इन्द्रियकामहोमे, आश्रयमन्तरेण गुणस्य फलसाधनत्वायोगात् विधिमन्तरेण च प्रकरणागतस्यापि होमस्य आश्रयत्वे प्रमाणाभावात् प्रकरणागत स्वरूपमनूद्य गुणफलसम्बन्धविध्यन्यथाऽनुपपत्तिप्रसूतेन विधिना आश्रयत्वेन विधीयते। पृ ४७

■ इन्द्रियकामाधिकरणम्। गुणकामाधिकरणम्। अग्निहोत्रप्रकरणे श्रुते दध्नेन्द्रियकामस्य जुहुयादिति वाक्ये गुणात् फलमुक्तम्॥

फलश्रुतेस्तु कर्म स्यात्, फलस्य कर्मयोगित्वात्। २।२।११।२५॥

भाष्यम्— अग्निहोत्रं प्रकृत्य समामनन्ति 'दध्नेन्द्रियकामस्य जुहुयात्' इत्येवमादि। तत्र संशयः, किं अग्निहोत्रहोमात् होमान्तरं दध्यादिहोम, उत दध्यादेर्गुणात् फलं इति। किं प्राप्तम्? होमान्तरमिति। कुतः? फलश्रुतेः। फलमिह श्रूयते, तच्च कर्मणो न्याय्यम्। किं दृष्टं हि कर्मणः फलं कृष्यादितो व्रीह्यादि? नेति ब्रूमः। नहि एतत् दर्शनेनैव सिध्यति। यदि दर्शनं हेतुः फलज्ञाने कृष्यादौ पदार्थे तद्दर्शनं, न होमे। अथ कृषौ दृष्टं, अन्यत्रापि भवति द्रव्यादपि (द्रव्यादावपि) प्रमाण्यते। अथ कृषिसादृश्यात् भवतीत्युच्यते कृषिसदृशो होम नियमात्, न द्रव्यं, असदृशं हि तदिति। होमोऽपि असदृशः मन्त्रदेवतादिसाधनत्वाद्धोमस्य, लाङ्गलादिसाधनत्वाच्च कृषेः। त्यागात्मकत्वात् होमस्य, उपादानात्मकत्वाच्च कृषेः। अथ किंचित् सादृश्यं गम्यते, द्रव्यस्यापि सत् अनित्यं इत्येवमादि किंचित् सादृश्यमस्ति। अथ द्रव्यादन्यत् सदृशतरमस्ति इति कृत्वा न द्रव्यं सदृशं इत्युच्यते, होमादपि अन्यत् कृषेः सदृशतरमस्ति हलार्थं, इति कृत्वा होमोऽपि असदृशः स्यात्। न चैतत् सिद्धं, 'यत् च किंचित् दृश्यते तदन्यस्मिन् सदृशमात्रे अदृष्टमपि भवितुमर्हति' इति। यदि यस्य कारणभूतं दृष्टं, सिद्धं तच्चेत्, तादृशेऽपि कारणभूतमित्यवगम्यते, भवति तदस्य साधकम्। यत्र गम्यते कारणभूतमिति, न तत् सदृशमपि साधकम्। तस्मात् सदृशमपि साधकमसाधकं वा इति परीक्षितव्यमिति। अथ यत् कर्म फलवत् दृष्टं, होमोऽपि कर्म तेनापि फलवता भवितव्यमिति। उच्यते कर्मणि द्रव्याणां तादर्थ्योपपत्तेः न द्रव्यान्तरं फलं दृष्टं, इति द्रव्यमपि फलवत् स्यात्। अपि च कृषेर्नोदनं इति च सादृश्यात् होमादपि नादृष्टं भवेत्। कृषिसादृश्याद्वा व्रीहिरेव भवेत्, नेन्द्रियम्। तस्मात् नैरवातीयकेषु एतद्गम्यते दृष्टादृष्टसिद्धिरिति। कथं तर्हि होमात् न्याय्यं फलमिति? उच्यते। शब्देनावगम्यते तत् फलम्। यतः फलमिति शब्द आह, ततो न्याय्यम्। होमात् फलं इति श्रुत्या शब्देन गम्यते, दध्नः फलमिति वाक्येन। श्रुतिश्च वाक्यात् बलीयसी। तस्मात् होमात् फलमिति न्याय्यम्। दध्नः फलं इति चान्याय्यम्। अपि च दधि उभयमशक्यं कर्तुं फलं साधयितुं होमं च। ननु फलमनिर्वचनवत् एतद्भविष्यति। निर्वचनं हि उभयं करोति, फलस्य शुद्धिं पादयोश्च निर्णेजनम्। न ब्रूमः एकस्य उभयं प्रयोजनं अभिनिर्वर्तयितुं सामर्थ्यं नास्तीति, किं तर्हि? फले गुणभूतं दधि होमे च, इत्येतत् वाक्यं वदितुमसमर्थमिति। यदि फलं दध्ना कुर्यात् इति ब्रूयात्, न दध्ना होममिति। अथ दध्ना होमं साधयेत् इति ब्रूयात्, न फलमिति। उभयवचने भिद्येत वाक्यम्। अभिन्नं चेदुपपद्यते। तस्मात् न गुणात् फलं इत्यत अग्निहोत्रहोमात् दधिहोमः कर्मान्तरमिति।

वा— 'अग्निहोत्रं जुहोति' इति प्रकृत्य 'दध्नेन्द्रियकामस्य' इति श्रूयते। तत्र संदेहः किं पूर्वस्मात्

इदं कर्मान्तरं, उत तस्यैव गुणात् फलमिति । इदमेव पुरस्तादवस्थितं, अगुणोत्पत्तौ कर्मणि तत्रैव गुणः । सगुणोत्पत्तौ तु प्रकारान्तरेण च अविधीयमानानेकगुणसंगतौ सत्यां कर्मान्तरत्वमिति । तदिह अगुणश्च कर्मशब्दः, अनेकार्थोपादानं च वाक्ये श्रूयते । तेन समवायसंभवयोः संदेहः । तत एतत्सिद्ध्यर्थं इदं विचारयितव्यं किमिह होमात् फलं, उत गुणात् । किमर्थं पुनः 'गोदोहनेन पशुकामस्य' इत्येतत् सूत्रान्तरोदाहरणमतिक्रम्यते ? भेदाभेदयोरनुपयोगात् । क्रत्वर्थपुरुषार्थविचारे हि तस्य एतस्य वा उदाहरणत्वे न कश्चित् विशेषः स्यात् । इह तु भेदाभेदलक्षणे तदनुगुणमुदाहर्तव्यम् । न च प्रणयनस्य देशान्तरप्राप्तिसंस्कारात्मकत्वात् भेदाभेदयोर्विशेषः । यदि च गोदोहनात् फलं यदि च तद्वतः प्रणयनात्, उभयथाऽपि तादृशेनानुष्ठानम् । इह पुनः यदि गुणात् फलं, ततः सायंप्रातराहुत्योरेव दधि प्रयोक्तव्यम् । अथ होमात्, ततः नैयमिकहोमव्यतिरिक्तं अनियतकालं दधिसाधनकं होमान्तरं सकृदेव दर्विहोमन्यायात् अपूर्वं क्रियते, इत्यस्ति भेदज्ञाने विशेषः । ननु च होमादपि फले 'सन्निधौ त्वविभागात्' (२।२।१३।२६) इत्यनेन न्यायेन आग्नेयवदग्नीषोमयोरिव तदेव कर्म विधीयते । नैतदेवम् । 'यदि नामाविभागः स्यात् कर्मणः प्रत्यभिज्ञया । ततस्तदेव कर्म स्यादन्यथा भेदनिश्चयः ॥' फलनिमित्तादौ हि विधीयमानं कर्म अनुत्पन्नं तैः संबन्धुं न शक्नोति, इत्यर्थात् उत्पत्तिविधिमपि अनुभवितुमुपक्रमते । तत्र यदि अतीवास्था विपरिवृत्त्या तादृप्यादप्रच्युतया पूर्वकर्म उत्पत्तिरूपं प्राप्यते, तत्र अपादकशक्तिविरोधात् प्रत्यभिज्ञानबलेन तदेव कर्म अध्यवसीयते इति न भिद्यते । यदा तु पूर्वकर्मरूपात् किंचिदपि आधिक्यं विज्ञायते, तदा नैव अविभागज्ञानमस्ति, इत्यर्थात् उत्पत्तिविधिमेकम् अन्येन तद्रूपोत्पत्तिसमर्थेन विध्यन्तरेण अनिवारितशक्तिः सत्यपि अन्यपरत्वे अनुवाद्यं प्रति उपादानात् कर्म भिनत्ति । इह च 'दध्नेन्द्रियकामस्य जुहुयात्' इत्यत्र इन्द्रियं प्रति उपादानात् दधिविशिष्टहोमान्तरबुद्धिः भवन्ती केन चित् तद्रूपोत्पत्तिं उपस्थापयता बाध्यते ।

कुतः ? 'होमो हि प्रकृतः शुद्धः स्ववाक्यादवधारितः । सोऽस्मिन् दधिविशिष्टत्वाद् विभागेनैव गम्यते ॥' 'अग्निहोत्रं जुहोति' इति होमः शुद्ध उत्पन्नः । इह च दधिविशिष्टः श्रूयते । तेन अविभागात् इत्यस्य अभेदहेतोः असिद्धत्वात् भिद्यते । ननु 'दध्ना जुहोति' इति अस्त्येव दधिविशिष्टो होमः । न । तस्य अनुत्पत्तिवाक्यत्वात् । येन तावदसौ उत्पादितः न तत्र दधिविशिष्टः, यत्र दधिसंबन्धः तत्र नोत्पादितः, 'तच्चनिर्देशो गुणार्थेन पुनःश्रुतिः' (२।२।५।१६) इति साधितत्वात् । उत्पत्तिवाक्येनैव च फलवाक्यस्य उत्पादकत्वं प्रतिबध्नता कर्मान्तरत्वं निराक्रियते न गुणवाक्येन, अनुवादकत्वात् । उत्पत्तिवाक्येनैव च सर्वाणि प्राकरणिकानि गुणफलनिमित्तवाक्यानि संबध्यन्ते न परस्परेण । कुतः ? 'तान्युत्पत्तिमपेक्षन्ते सा चाव्यवहिता यतः । गुणादीनां त्वसंबन्धाद् व्यवधिः स्यात् परस्परम् ॥' अनुत्पन्नस्य गुणादिभिरसंबन्धात् उत्पत्तिः सर्वैरपेक्ष्यते । न तु परस्परापेक्षायां किंचित् कारणमस्ति । सैव च सर्वैः अनुस्यूतत्वात् असंबन्धिना अव्यवधीयमाना संबध्यते । गुणानां च परार्थत्वादसंबन्धे सति एकेनापि व्यवहितानां अनुपपन्नात् न केन चिदेकवाक्यत्वमस्ति, इति न 'दध्नेन्द्रियकामस्य' इत्यत्र 'दध्ना जुहोति' इत्येतदुपतिष्ठते । वक्ष्यति चैतत् 'एकस्य तूभयत्वे संयोगपृथक्त्वं' (४।३।३।५) इत्यत्राधिकरणे । तत्रैतत् स्यात्, सैवोत्पत्तिः वाक्यान्तरेण दधिमती कल्पिता अनुगम्यमाना अत्र भेदबुद्धिं निराकरिष्यति । तदनुपपन्नम् । एवं हि सति 'वाक्यान्तरेण तत् कर्म यथा दध्ना विशेषितम् । तण्डुलादिभिरप्येवमिति नैकात्मकं भवेत् ॥' उत्पत्तिवाक्ये तावत् केवले निरीक्ष्यमाणे शुद्धहोमावगमात् अप्रत्यभिज्ञानम् । अथ प्राकरणिकगुणवाक्यानुरक्तमालोच्यते, तथापि तण्डुलादिद्रव्यविशिष्टत्वात् नैव केवलदधियुक्ते वाक्ये अस्ति प्रत्यभिज्ञानम् । अथ दधिशब्दमात्रापेक्षिणि इन्द्रियकामवाक्ये सत्यपि तण्डुलादीनि अनपेक्षितत्वात् असन्निहितानि अनाश्रित्य केवलं दधि प्रतीयते इति, तथा सति तदेव

आपतितं भवति 'दध्ना जुहोति' इत्येतदेव वाक्यं केवलं गृह्यते इति। निवारितं चैतत्। अपि च 'द्रव्यमत्र दशमे पक्षे तद्धोमस्य विशेषणम्। नित्यं चेन्द्रियकामस्य तेनापि न निरूप्यते ॥' ( दश द्रव्याणि ॥ सुधायां- 'पयो दधि यवागूश्च सर्पिरोदनतण्डुलाः। सोमो मांसं तथा तैलमापस्तानि दशैव तु ॥' इति ) यद्यपि तावत् दध्यादीनि नित्यं होमे गृह्णीयेरन्, तथा सति विशिष्टमपि कर्म एकदेशग्रहणेन चोदितं इति कथं चित् कल्पयेत। दध्यादीनां तु वैकल्पिकत्वात् एकैकस्यैव दशमे पक्षे होमाङ्गत्वम्। अतश्च दधिशब्देऽपि आलोच्यमाने पाक्षिकं दधि दृश्यते। नित्यवच्च तत् इन्द्रियकामहोमे श्रूयते। तस्मादपि न प्रत्यभिज्ञायते। न च यदा दध्ना जुहुयात् इत्येवं अनुवदितुं शक्यते, फलस्य विधेयत्वात्। एवं हि अत्र वचनव्यक्तिः, 'यदि इन्द्रियकामः, तदा नित्यं केनचिद्‌विधिविशिष्टं होमं कुर्यात्' इति। न चासौ तादृक् अन्यतः प्राप्तः इति भिद्यते। ननु होमस्वरूपस्य तावत् प्रतिज्ञातं तत्प्रत्यभिज्ञानाय अभेदसिद्धिः। यत्तु द्रव्यं न प्रत्यभिज्ञायते, न तत् कर्मभेदकारणम्। तस्मात् तदेव कर्म गुणमात्राभ्यधिकं फले विधीयते। नैतदेवम्। कुतः? 'प्राप्ते कर्मण्यनेकार्थविधिः पूर्वं निराकृतः। स्वरूपक्षेऽनेकसंबन्धविधिश्चात्र प्रसज्यते ॥' दधिहोमसम्बन्धं होमफलसंबन्धं च विदधत् वाक्यं भिद्यते। तेन अवश्यं विशिष्टविधिरभ्युपगन्तव्यः। ततश्च सिद्धं कर्मान्तरत्वम्। यथैव चार्थात् अनियतानेकद्रव्यकत्वे प्राप्ते केनचिद्दधिनियमात् एकार्थं विधानं, तथैव परस्परानपेक्षैः तण्डुलादिविशिष्टकर्मभिः वैकल्पिकद्रव्यकत्वे कल्पिते, तण्डुलादिव्युदासेन केवलदधिनियमकरणात्। नहि असौ एतस्मात् वाक्यादृते कथंचिदपि प्राप्तः। तेन होमात् फले भवति कर्मान्तरत्वम्। अतः पूर्वपक्षः परिगृह्यते।

'कर्मशब्देऽगुणेऽप्यत्र कर्म भूयो विधीयते। फलं हि श्रुतमेतस्मिन् कर्मण्यस्य युज्यते ॥' समस्तमेव भावार्थाधिकरणं पूर्वपक्षः। तत्र हि एतदवस्थितं, आख्यातशब्दाः फलपदेन संबध्यन्ते, न द्रव्यगुणशब्दाः इति। तस्मात् फलस्य कर्मसंबन्धित्वात् फलश्रुतौ कर्म विधीयते, न कर्मणि गुणः। कथं? 'प्राप्तत्वाद् गुणो नैव विधानं पुनरर्हति। अप्राप्तविधिपक्षेऽपि भवेद् व्यर्था फलश्रुतिः ॥' तत्र नाम अगुणे कर्मशब्दे भवति गुणो विधीयते, यत्र तु गुणो न भवति, यत्र अर्थान्तरं न श्रूयते। न चेह दध्यपि वदति, दध्नो वाक्यान्तरेणैव प्राप्तत्वात्, फलस्य च अभ्यधिकस्य उपादानात्। अत आह फलमिह श्रूयते, तच्च कर्मणो न्याय्यं इति। तत्र किं दृष्टं हि कर्मणः फलं इति प्रश्नस्य द्विधा प्रतिपादः ( वाक्यभेदेन, एकवाक्यतया चेति। तत्र वाक्यभेदपक्षमुपन्यस्यति- ) एकस्मात् नेति ब्रूमः, नहि एतत् दृष्टेनानेन सिध्यति इत्यादेः निराकरणपरत्वेन सिद्धान्तव्याख्याऽनुसारात् 'किं' इत्येतावतैव प्रश्नः, 'किं' इति एतत् न्याय्यं? इत्यर्थः। इतर आह दृष्टं हि कर्मणः फलं ( कृष्यादितो व्रीह्यादि ) इति। तस्योत्तरं नेति ब्रूमः इति। 'यदि' इत्यादि तावत् स्वयमेव आशङ्क्य निराकरोति यावत् तस्मात् नैवंजातीयकेषु एतत् भवति इति ( इत्यन्तं भाष्यम्। इमं वाक्यभेदपक्षं दूषयित्वा एकवाक्यतापक्षं उपन्यस्यति- ) यत्र तु ( उत्तरश्च ) कथं तर्हि होमात् न्याय्यं फलं इत्ययं ऐकान्तिकः सिद्धान्तवादिनः प्रश्नः। स च आत्मीयवचनोपसंहारादनन्तरं तु स्फुटः प्रतिभाति इति एवैव ग्रन्थयोजना युक्ततरा। ( अत्र पक्षे भाष्यं योजयति- ) तच्च कर्मणो न्याय्यं इति पूर्वपक्षवादिना अभिहिते सिद्धान्तवादी दधिपदानर्थक्यभयेन भावार्थाधिकरणन्यायाप्रभवात् शब्दस्य असामर्थ्यं मन्यमानः पृच्छति किं दृष्टं हि कर्मणः फलं कृष्यादितः इति, अनेन न्यायेन सामान्यतोदृष्टेन होमात् फलं मन्यसे इति। यद्यपि च चोदनालक्षणधर्माभ्युपगमात् अनुमानादीनां ईदृशेष्वर्थेषु असामर्थ्यं स्थापितं, तथापि वेदार्थनिर्णये तेषां कारणत्वानिषेधात् तदर्थनिर्णयार्थं अनुमानोपन्यासः। यदा पुनः भावार्थाधिकरणसिद्धान्तःकरणः आक्षिपत्यद्, मा मे अभ्यारोपमेवं दा., शब्दे इति न हि अनुमानं ब्रवीमि। न च एतेन सामान्यतोदृष्टेन अस्मदभिमतं सिध्यति, असिद्ध-अनैकान्तिक-

इन्द्रियकामाधिकरणं

–विरुद्धादिदोषदुष्टत्वादनुमानस्य । कथं ? यदि तावत् 'होमः फलवान् फलवत्तया दृश्यमानत्वात्' इत्युच्यते तत्र प्रतिज्ञातार्थैकदेशत्वात् असिद्धत्वम् । अथ 'कृष्यादीनां फलवत्तया दृश्यमानत्वात्' इति, ततोऽपि अपक्षधर्मत्वम् । अथ विनैव पक्षधर्मत्वात् सादृश्यमात्रेण कल्प्येत, ततः तत् द्रव्येषु अविशिष्टम् । अथ सादृश्यद्वारेण उभयथा कल्प्येत तच्च सादृश्यं फलवद्भिः कृष्यादिभिः सह होमस्य क्रियात्मना विद्यते, न द्रव्यस्य अक्रियात्मकत्वात् इति । तत्र द्रव्यस्यापि अस्त्येव किंचित् सादृश्य इति मनसि कृत्वा यदि प्रत्यासन्नाकारान्तर-सादृश्यापेक्षया तन्निराक्रियते, ततः सादृश्य प्रत्यासन्नतरापेक्षया होमस्यापि निराकर्तुं इति मन्यमान आह होमोऽपि असदृशः, साधनस्वरूपफलभेदात् कृषेः । अथ किंचित् सादृश्यं गृह्यते, तत् द्रव्यस्यापि तत् अनित्यं द्रव्यवत् कार्यं इत्यादिधर्मभेदात् अस्ति इति पूर्वाभिप्रायविवरणम् । अथ द्रव्यादन्यत् सादृश्यान्तरमस्ति इति आपेक्षिकत्वात् सादृश्यस्य सुसदृशे अपेक्षिते विप्रकृष्टं विसदृशमेव भवति । तेन क्रियात्वे कृषिहोमवर्तिनि अपेक्षिते विप्रकृष्टत्वात् सदनित्यादियुक्तं द्रव्यं असदृशमेव इत्युच्यते । तथा सति क्रियात्वसमपि दृष्टार्थभोजनगमनाद्यन्तर-सादृश्यापेक्षया कृषिहोमयोः विप्रकृष्टत्वात् असादृश्यमेव इति अकारणं स्यात् । आह च 'नास्मिन् परमसादृश्यं दृश्यते कृषिहोमयोः । किंचित्सादृश्यदृष्टिस्तु द्रव्येऽप्यस्तीत्यनिश्चयः ॥' न चैतत् सिद्धं इति उपमानेन साधर्म्यमात्रानुमानेन वा सर्वधर्मप्राप्तिः अनुमानोक्तव्याप्य-व्यापकभावनिरपेक्षा अयुक्ता, सर्वपदार्थानामेकत्वप्रसङ्गात् । तथा चोक्तं (१।१।२।२ पृ १७ भा.) 'न हि देवदत्तस्य श्यामत्वे यज्ञदत्तस्य श्यामत्वं भवितुमर्हति' (इति) उपमाहि 'न मात्रानुगतिर्दृष्टा गवये सदृशो गवा । प्रकृतेश्च फलादीनि न यान्ति विकृतिं क्वचित् ॥' यद्धि यस्य कारणभूतं दृष्टं सिद्धे दृष्टान्तधर्मिणि तच्चेत् साध्येऽपि पक्षे, कारणभूतमिति अवगम्यते भवति तत् तस्य साधकं इति । अतो वचनात् कार्यकारणयोरेव गम्यगमकभावो भाष्यकाराभिप्रेतः इति के चिन्मन्यन्ते । ननु अयुक्तम् । अकार्यकारणभूतानामपि अनित्यत्व-कृतकत्वादीनां गम्यगमकभावप्रसिद्धेः । कार्यकारणयोरपि च न तथा कारणं गमकं व्यभिचारबहुलत्वात्, यथा कार्यम् । तस्मात् लिङ्गमेव व्याप्यत्वेन दृष्टं सपक्षे व्यापकस्य अन्यत्र साध्यभूतस्य गमकत्वसंभावनया गृह्यमाणं कारणमित्युक्तं इति द्रष्टव्यम् । एवं च हेत्वधिकरणे व्याख्यातम् । तथा च विवृणोति **तस्मात् सदृशमपि साधकमसाधकं चेति परीक्षितव्य** इति । यदि तर्हि परीक्षितेन च कारणेनाभिहितेन कार्यमिदमभिधीयते । 'दध्नेन्द्रियकामस्य' इत्यत्र वाक्ये 'यत् कर्म तत् फलवत्, कर्मत्वात्, कृष्यादिवत्' 'कर्मसाध्यं वा इदं फलं, फलत्वात्, व्रीह्यादिवत्' इत्येतदनुमाय **अथ यत् कर्म तत् फलवत्** इति प्रतिसाधनाभिधानेन अनैकान्तीकरोति । **उपरते कर्मणि द्रव्याणां** तन्त्वादीनां **तत्संयोगादीनां च द्रव्यान्तरं** पटादि **फलं दृष्टं** इति । उपरतग्रहणं च कर्मव्यतिरेकप्रदर्शनार्थम् । एव हि शङ्क्यते, कदाचित् द्रव्यमपि कर्मनिमित्तमेव फलं भवेत् । तेन ब्रवीति इन्द्रियकामवाक्ये 'दधि फलवत् द्रव्यत्वात् तन्तुवत्, इन्द्रियं वा द्रव्यजन्यं फलत्वात् पटादिवत् ।' **अपि च कृषेर्नादृष्टं** इति हेतोः विरुद्धत्वं भवति । तथैव हि अयं हेतुः कर्मणः फलवत्त्वं, फलस्य वा कर्मजन्यत्वं साधयति, एवं दृष्टार्थफलत्वं अशब्दगम्यफलत्वं वा साधयति । तस्मात् नैवंजातीयके कार्यकारणभावे समस्तहेतुदोषप्रसङ्गात् यत्नवत्यपि क्व चित् शब्दादन्यतः अदृष्टस्यापि सिद्धिरिति । यदि एतदनुमानन्यायेन निराकृतं **कथं तर्हि होमात् न्याय्यं फलमिति** उच्यते । यद्वा इतिकरणान्त एव प्रश्नः । **उच्यते । शब्देनावगम्यते तत् फलं** इति भावार्थाधिकरणोपन्यासेन उत्तरम् । **तस्मात् होमात् फलमिति न्याय्यम्** । दध्नः फलमिति **चान्याय्यं** इत्यर्थसिद्धं सत् यदुच्यते, तत् तुल्यन्यायत्वनिराकरणार्थम् । कदाचिद्धि द्वयमपि न्याय्यं भवेत् । **अपि च दधि उभयसमर्थं कर्तुं** इति । न तावत् कर्मनिरपेक्षस्य दध्नः फलत्वमस्ति, येन केवलं फलवत्त्वेव स्यात् । अत उभयत्र विधातव्यं, न च तत् शक्यमिति । ननु काम्यत्वनिर्णेजनवत् इति प्रासङ्गिककर्मसंबन्धाभिप्रायेण वाक्यसामर्थ्यनिराकरणार्थं

वा, तथाहि दधि उभयसमर्थं इति यथाश्रुतगृहीतेन परवचनेन वस्तुसामर्थ्यमेवोक्तमिति दृश्यते। न ब्रूम एकस्योभयं प्रयोजनं न युक्तमिति। न वयं वस्तुसामर्थ्यं अपह्नुमहे, किं तर्हि समर्थेऽपि वस्तुनि अविहितादनुष्ठानात् अवश्यं दधि उभयार्थत्वेन विधातव्यम्। न चैतदस्ति, अनेकार्थसंबन्धकरणे वाक्यभेदप्रसङ्गात्। संनिकृष्टार्थमयेन विप्रकृष्टोऽर्थो विधीयते। तदिह दधिहोमसंबन्धे संनिकृष्टे दधिफलसंबन्धे च विप्रकृष्टे युगपत् विधीयमाने युगपदेव संमतावंसनी अभ्युपेतव्यौ स्याताम्। तस्मादन्यतरपरित्यागे सति त्वत्पक्षसिद्धिर्भवति इति संनिकृष्टयोगेन दध्यपि होमेन सबध्यते, सोऽपि फलेन इति कर्मयुक्ते सति फले, सिद्धं कर्मान्तरत्वं इति।

अतुल्यत्वात्तु वाक्ययोर्गुणे तस्य प्रतीयेत। २६॥

भाष्यम्— तुशब्दात् पक्षो विपरिवर्तते। न कर्मान्तरं, किंतु गुणात् फलमिति। कथं? अतुल्ये हि ते वाक्ये। 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इत्यत्र कर्मसमभिव्याहृतं फलं स्वर्गकामो होमेन कुर्यादिति। 'दध्नेन्द्रियकामस्य जुहुयात्' इति गुणसमभिव्याहृतम्। नहि अत्र होमः इन्द्रियाय कर्तव्यः इति प्रतीयते। किं तर्हि, दध्ना होम. इन्द्रियकामस्येति। होमस्य दधिसंबन्ध इन्द्रियाय, न होमस्योत्पत्तिः। य इन्द्रियकामः स्यात्, दध्ना होमं कुर्यात् इति। कतमोऽत्र शब्दः पुरुषमनसः शक्तेति? 'जुहुयात्' इति ब्रूमः। ननु श्रुत्या होमसंबद्धं एव पुरुषफलं भवति, वाक्येन दधिसंबन्धम्। न च वाक्यं श्रुतिं अपबाधितुमर्हति। न च युगपदुभयसंबन्धो न विरुध्यते वाक्यं हि तथा भिद्येतेति। अत्रोच्यते। ये भवदीयं पक्षमवलम्बेरन्, ते श्रुतिं अपबाधेरन्नाराम्। अस्मदीये तु पुनः पक्षे जुहुयात् इति धात्वर्थः केवलः अपकर्षितो भवति। युष्मदीये तु कृत्स्न एव दध्ना इति शब्दः। तं च अप्रमाणतः समामनन्ति इति गम्यते। न चैतत् अमत्प्रणीतमित्युक्तं 'तुल्यं सांप्रदायिकं' (१।२।१८ तुल्यं च इति तत्र पाठः) तस्मात् कर्मसमभिव्याहृतं फलम्। गुणसमभिव्याहृते तु न कश्चित् प्रमाददोषः। अवश्यं हि जुहुयादिति दधीन्द्रियकामयोः संबन्धविधानार्थं वक्तव्यं भवति। ननु उच्यमानेऽपि न केवलः करोत्यर्थोऽवगम्यते येनाले न तत्र प्रयोजनम्। स च होमसंबद्धः, तस्मादसमञ्जसं इति। नेति ब्रूमः। होमसंबद्धोऽप्यसौ करोत्यर्थ एव, केवलं तु अस्य होमसंबन्धे विशेषः, न तु करोत्यर्थता बाधते, इन्द्रियकामस्य होमसंबद्धं प्रयत्नं दधिसंबद्धं कुर्यादिति। ननु एवं सति स एव दोषः होमसमभिव्याहृतं फलमिति। उच्यते। जुहुयात् इति शब्दस्य एतत् सामर्थ्यं, यत् होमविशिष्टं प्रयत्नमाह। न तु अत्र होमः साधनत्वेन विधीयते। साध्यत्वेन विशिष्टस्तु प्रयत्नो वाक्येन दध्याश्रितः अवगम्यते। अत एव च वृत्तिकारेणोक्तं 'होममाश्रितो गुणः फलं साधयिष्यति, यथा राजपुरुषो राजानमाश्रितो राजकर्म करोति' इति। तस्मात् दध्नः फलं, य इन्द्रियकामः दध्ना कुर्यात् इन्द्रियमिति। कथमिति, अन्यथा अग्निहोत्रेतिकर्तव्यतयेति। कुत एतत्? फलसाधनस्य दध्नः इतिकर्तव्यताऽऽकाङ्क्षत्वात्। अस्याश्च इतिकर्तव्यतायाः संनिधानात्, चोदनालिङ्गस्य न जुहोत्यर्थस्य दर्शनात्। अस्मादेव चायं जुहोत्यर्थ. अनुवादः, तस्मादविधायकः। न चान्यत् होमस्य विधायकं नास्तीति। तस्मान्न कर्मान्तरम्। तस्मात् दध्नः फलमिति। अथवा दधिवाक्यस्य विवक्षितार्थत्वात् दधिहोमसंबन्धोऽयं वाक्येन विधीयते। तेन दध्नो होमेन संबध्यमानात् फलं भविष्यति इति।

वा— यादृशेषु वाक्येषु धात्वर्थात् फलं इति भावार्थाधिकरणे साधितं, तैः अननुगम्यमेतत्। कथम्?

'यावद्धि विधिसामर्थ्यं धात्वर्थादुपपोद्धृतम्। भावनाः फलसम्बन्धः स धात्वर्थस्य गम्यते॥ भवेत् फलश्रुतिर्या तु गुणसंवरिते विधौ। सा तद्गतविधिस्पृष्टा तेन यात्येकवाक्यताम्॥'

भावनाख्यमेव विधित्वं तादर्थ्यभेदेन वक्तव्यं संनामहि। यदा धात्वर्थसंक्रान्त्यनसा फलवर्ती भावना आख्यायति, तदा धात्वर्थमेव करणीकरोति, अन्यच्च तदर्थं भवति। तत्र 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इत्यादिषु नाम्नो विधिशक्त्यपहाराशक्यत्वात् अविहतम्।

इह तु दधिपदं अशेषनामधेयलक्षणासम्पर्शात् अवश्यं विधातव्यं सत् उत्तारयति । धात्वर्थोपनिपतितं विभिन्नम् । अतश्च आकाङ्क्षितधात्वर्थानुवादाया दध्यनुरक्ताया भावनाया फलमुपरम्यमाने दधिसाधनकमेव अवधार्यते, न होमसाधनकम् । नहि अविधीयमानानामर्थानां साधनत्वं संभवति । न च विधेयान्तरोपादाने सति अतिक्रान्तार्थविधानमयकल्पते इत्युक्तम् ( २।२।५।१६ ) । यथा च दध्ना विध्याक्षेपात् न होमविधानं, तथा फलपदसम्पर्कात् न होमे दधिविधाने, किं तर्हि ? फलभावनायाम् । तस्मात् इहं फलमिति । कतमोऽत्र शब्दः पुरुषप्रयत्नस्य वक्ता इति दधिफलपदयोः भावनाऽनभिधायकत्वेन साक्षात् विधिविषयत्वानुपपत्तेः आख्यातप्रत्ययापेक्षणे च आश्रितत्वात् प्रयोगस्य ( २।१।१।४ ) इत्येवं धात्वर्थत्यागावाप्तेः तत एव फलेन भवितव्यं इति मन्वानस्य प्रश्नः । सिद्धान्तवादी तु प्रत्ययार्थविधित्वं ( विधेयता ) धात्वर्थानुवादत्वं च विभक्तं पश्यन्नाह जुहुयाम् इति । ननु श्रुत्या होमसंबद्धं एषः इति पादस्य स्वाभिप्राय विवरणम् । पुरुषप्रयत्नश्च विध्युपेता भावना उच्यते ; सा च भावार्थाधिकरणन्यायेन श्रुतिनयीयस्त्वात् एवमन्य आश्रितम् । इह च ये भवदीय पक्षं आश्रयेरन् ते श्रुतिं अपबाधेरन्तराम् । कथं ? 'स्याद् बह्वर्थविधाने ते स्तोकार्थविधिसंभवे । मत्वर्थश्चोपलक्ष्येत पदत्यागोऽन्यथा भवेत् ॥' स्तोकार्थविधिसंभवे त्वन्तत् विधायकः बहुतरार्थविधानमुपेक्षते । होमस्य च फलभावनाकरणत्वात् 'आनयेदिन्द्रियं होमेन' इत्येवमनन्वितस्य करणभूतेनैव दध्ना समन्वात् संबन्धे अनुपपद्यमाने अवश्यं मत्वर्थलक्षणा परिग्रहीतव्या 'दधिमता होमेन' इति । न च तया [redacted] चित् प्रमाणमस्ति । न च दधिशब्दस्य अतति प्रवृत्तिनिमित्ते कर्मनामधेयत्वं घटते । सोऽयं उभयस्मात् भ्रष्टो दधि शब्दः अनर्थक एव प्राप्नोति । ततश्च शब्दधर्मसंनिकर्षानुपदेश धर्मेण शब्दः परित्यागात् बाधितः इति बाध्यतेतरा श्रुतिः । गुणसमभिव्याहारपक्षे तु न चास्य विरोधः । तथैवद्भुच्यते जुहोतीति शब्दो बाधित इति । तत्परिहारार्थमाह 'अवश्यं जुहुयात् इति वक्तव्यम् ।' कथं ? 'न दधीन्द्रियसंबन्धो भावनाप्रत्ययाद् विना । न चास्योच्चारणं शक्यं केनचिद्धातुना विना ॥' प्रत्ययस्तावत् अवश्यमेव दधीन्द्रियविशिष्टां भावनां विधातुमुच्चारयितव्यः । न च केवलप्रयोगासंभवात् धात्वव्यतिरिक्तप्रकृत्यनुपपत्तेश्च यतःकुतश्चित् धातोः पर उच्चारयितव्यः । ततश्च यत्रकचन धातौ उपादातव्ये प्राप्ते प्रकरणप्राप्तहोमोपादानं अङ्गीकृतम् । दधिसंबन्धोऽपि चास्य प्रकरणादेव आश्रयाश्रयित्वेन प्राप्त अनुवदिष्यते । यथा च न विभक्तेर्वचनमेव एकं प्रयोजनं, इति ग्रहादिषु कारकमात्रप्रतिपत्त्यर्थे उच्चार्यमाणनान्तरीयकत्वात् अविवक्षितामपि संख्यां प्रत्याययति इति वक्ष्यते ( ३।१।७।१४ ), तथा अत्र प्रत्ययानुग्रहार्थमपि धातुरुच्चार्यमाणः सम्बन्धत्वात् अविवक्षितमपि स्वार्थं प्रत्याययति । नहि तस्य अर्थप्रत्यायनमात्रमेव एकं प्रयोजनं इति वक्तव्यम् । ननु प्रत्ययमानेऽपि इति, प्रत्ययानुग्रहार्थं धातुरुच्चार्यमाणः स्वार्थं प्रत्याययति इति । न चास्य ग्रहैकत्ववत् अविवक्षाकारणं किंचिदस्ति । तस्मात् यथाऽभिलषितेनैकत्वेनान्यार्थाप्रेभनात् असमर्थमेतदिति । नैष दोषः । सत्यपि होमसम्बन्धे करोत्यर्थानपायात् तावन्मात्रेण प्रयोजनसिद्धिः । यस्तु होमसम्बन्धकृतो विशेषः, नासौ किंचित् विरुणद्धि, प्रकारान्तरेण या भावना निरोत्स्यति । ननु एवं सति स एव दोषः इति, अपरित्यज्यमानोऽपि होमो भावनाकरणीभवति इति मन्यते । सिद्धान्तवादी त्वाह—वाक्यान्तरान्यस्तस्य जुहुयादिति शब्दस्य एतत् सामर्थ्यं येन तथैव प्राप्नोति होम एव करणमिति । निपुणतरस्तु पश्यता यथैव प्रत्यासत्तेः साध्याशगुणधारम् अयोग्यत्वात् प्रत्याख्याते, तथा अत्र दधिपदानुरोधेन साधनात्वात् । यथा च तत्र प्रतीयमानं भावनाविशेषणत्वं अर्थान्तरे आश्रितं, एवमिहापि गुणाश्रयत्वेन अवस्थास्यते । यथोक्तं वृत्तिकारेण ( उपवर्षेण ) होमाश्रितो गुणः फलं साधयिष्यति इति । कः पुनः आश्रयाश्रयिसंबन्धो नाम, किं-केन-कथ-भावव्यतिरिक्तः, उत अव्यतिरिक्त इति । केचित् तावदाहुः व्यतिरिक्त एवायमिति । कथं ? 'यथैषांशाश्रयापेक्षा भावनाऽन्यत्र गम्यते । तथा

प्राधान्यात्, प्रातिपदिकार्थोपसर्जनः संबन्ध एव फलाय विधीयते । तस्मिंस्तु विहिते पूर्ववदेव प्रकरणात् क्रियाविशेषो होमो लभ्यते । तत्र तु द्रव्यदेवतासम्बन्धन्यायेन ( यथा वैश्वदेवीशब्देनैव सन्निहितस्य द्रव्यविशेषस्य देवताऽन्वये अभिहितेऽपि आमिक्षाशब्दो विशेष्यान्वयार्थः तद्वत् २।२।९।२३ ) क्रियाकारकसम्बन्धस्य फलसम्बन्धे वृत्ते, 'कोऽसौ क्रियाविशेषः' इत्यपेक्षाया विशेषणविशेष्यसम्बन्धं कर्तुं प्रकरणेन होम उपनीयते । तेनोच्यते दधिहोमसम्बन्धः फलाय विधीयते इति । तत्र अथवा इति समस्त पाठ एव । समाप्त्युत्तरसारस्तु आचार्यस्य द्रष्टव्यः । अथवा अस्यैव सच्यमानग्रहणेन दध्युपसर्जनसम्बन्धनिर्देश इत्यदोषः ।

ननु दध्ना इति च, इन्द्रियकामस्य इति च पदद्वयव्यापारात् वाक्यं भिद्येत । नैष दोषः । कुतः ? 'नैष ह्यनेकसंबन्धाद् वाक्यभेदः प्रसज्यते । अनेकविधिशक्त्या हि भेदो, नास्ति च सोऽत्र नः ॥' बहवोऽपि हि अर्थाः युगपदेकेन सम्बध्यन्ते, न च तावता वाक्यं भिद्यते । अनेकविधितो हि वाक्यभेद उक्तः स चात्र नास्त्येव, फलस्याविधेयत्वात् । एवा हि अत्र वचनव्यक्तिः 'यदिन्द्रियं भावयेत्' इत्यनूद्य 'तद्दध्ना' इति विधीयते । यो हि यदिच्छति स तत्करोति इति हि इन्द्रियं भावयितुं स्वरसत एव पुरुषः प्रवर्तते । ततश्च तदवशयुक्ता भावना मन्यतः अनूद्य करणांशमात्रयुक्ता विधत्ते इत्येकार्थविधानात् न वाक्यभेदः । तस्मात् दधिपदस्य अर्थवत्त्वाय गुणात् फलं अकर्मान्तरत्वं चेति सिद्धम् ।

शा— यद्यपि पक्षद्वये भावनाभेदे धात्वर्थभेदाभेदविचारात् त्वङ्गसंबन्धः । तत्र पूर्वः पक्षः 'धात्वर्थात् फलमित्युक्तं भावनासंनिकर्षतः । विप्रकृष्टस्तु नामार्थस्तद्वर्गो न फलान्वयी ॥ दृश्यतश्च फलसंबन्धे जुहोतिः स्यादनर्थकः । यदि सोऽपि विधीयेत वाक्यभेदः प्रसज्यते ॥' इति प्राप्ते ब्रूमः 'धात्वर्थस्यानूद्य. प्राप्तेर्गुणमात्रं विधीयते । विधेयं यच्च तेनैव फलं नान्येन मुच्यते ॥'

सोम— भावनाभेदहेतुत्वेन धात्वर्थभेदस्यापि विचार्यत्वात् उपसङ्गात् अध्यायसंगतिः । पूर्वापवादेन प्रत्यवस्थानात् अवान्तरसंगतिः । प्रयोजनं पूर्वपक्षे फलार्थहोमे यावज्जीव.कालनियमाभावात् अनियतकालत्वम् । सिद्धान्ते नियतकाले एव नित्यहोमे दधिप्रयोग इति । सूत्रार्थस्तु— भावार्थाधिकरणन्यायेन फलस्य कर्मसम्बन्धित्वात् प्रकृतेऽपि फलश्रुतेः कर्मान्तरं स्यादिति ।

वि— 'यद्दध्नेन्द्रियकामस्य जुहुयादिति तत् पृथक् । गुणो वा, भिद्यते कर्म धात्वर्थस्य फलित्वतः ॥, नामधेयोरादिभ्यो नान्यत् कर्म फलाय । गुणे विधेये धात्वर्थो विहितत्वादनूद्यते ॥'

भाट्ट— अग्निहोत्रं प्रकृत्य 'दध्नेन्द्रियकामस्य जुहुयात्' इति । तत्र एव होम. दधिविशिष्टः फलोद्देशेन विधीयते । न च प्राप्तकर्मानुवादेन गुणसंबन्धः फलसम्बन्धश्चेति वाक्यभेदः । प्राप्तस्यापि कर्मणा राजकर्तृत्वविशिष्टस्य फलोद्देशेन राजसूयवाक्ये विधानवत् इहापि तदुपपत्तेः इति प्रथमः पक्षः । द्वितीयस्तु नात्र राजसूयन्याय. । कर्तुर्हि प्रयोगान्वयित्वात् फलस्य च विनियोगान्वयित्वात् उत्पन्नस्यापि कर्मणः प्रयोगविधौ फलविशिष्टविनियोगस्य कर्तुश्च वैशिष्ट्योपपत्तेः । प्रकृते तु दध्न उत्पत्त्यन्वयित्वेन प्राप्तोत्पत्त्यनुवादेन गुणविधिः फलविशिष्टविनियोगविधिश्च इति वैशिष्ट्याभावात् वाक्यभेदः । अतो गुणात् कर्मभेदः । दधिविशिष्टं च तत्फलोद्देशेन विधीयते न दधि, भावार्थाधिकरणविरोधापत्ते. । तत्रापि दधिहोमत्वे दधिद्रव्यकहोमान्तरस्य अग्निहोत्रहोमातिदेशेन रूपलाभः । सिद्धान्तस्तु यत्र द्वयोरपि धात्वर्थगुणयोरप्राप्तिः संभवत्प्राप्तिः प्राप्तिरेव वा, धात्वर्थस्यैव वा अप्राप्तिः, यथा 'सोमेन यजेत' 'उरु प्रथा उरु प्रथस्वेति पुरोडाशं प्रथयति' 'ऐन्द्रवायवाग्रान् गृह्णीयात् यः कामयेत यथापूर्वं प्रजाः कल्पेरन्निति' 'अग्निहोत्रं जुहोति' इत्यादौ तत्र भावार्थाधिकरणन्याय. । तु गुणस्यैव अप्राप्तत्वात् विधेयत्वं, तत्र गुणस्यैव फलसंबन्धः । न च दध्नोऽपि विना गतिः, अपि तु विधानेन । अतः फलविधानसामर्थ्यविशिष्टस्य तस्यैव विधेयत्वात्

फलसंबन्धः । कारणीभूतगुणसत्त्वेन वचनं विनाऽपि फलोत्पत्तिसंभवात् वचननैरर्थक्यप्रसङ्गेन स्वकृतिसाध्यधात्वर्थस्य इष्टविधया गुणसंबन्धिनः आश्रयस्य अपेक्षाया, प्रकरणात् होमस्य आश्रयत्वलाभात् जुहोतिः साधुत्वार्थमनुवादः । दधिकरणकभावनाऽन्तरमेव तु फलोद्देशेन विधीयते । भावनाऽनुवादेन उभयकरणे वाक्यभेदात् । के चित्तु करणत्वविशिष्टं दधि, दधिकरणत्वं वा तृतीयोपात्तं फलकरणत्वेन विधीयते । तृतीयाऽर्थकरणत्वस्य निरूपकापेक्षैव आश्रयापेक्षा इत्याहुः । तन्न । वाक्यभेदस्य प्रमाणाभावात् । सर्वथा सिद्धो गुणफलसंबन्धः । प्रयोजनं दध्नो न प्रतिनिधिः तद्भ्रेषनिषेधो वा इति सिद्धान्ते द्रष्टव्यम् ।

मण्डन— ' कर्मान्तरे न समरेति दधीन्द्रियार्थम् । '

शंकर— ' इन्द्रियार्थं दधीष्टं नः । '

* यथा गुणात् फलं भवति, तत् इन्द्रियकामाधिकरणेन उपसंहर्तव्यम् । वा. २।३।१६।४३ पृ. १०६७. * इन्द्रियकामाधिकरणे आश्रयातिदेशो निरूपितः । बाल पृ. ११७–११९. * इन्द्रियकामाधिकरणे गुणादपि फलं साधितम् । कु २।३।४।११. * इन्द्रियकामाधिकरणे गुणफलसंबन्धविधौ भावनाऽन्तरविधिरभ्युपगतः । प्राभा पृ. १६९ * इन्द्रियकामाधिकरण–रेवत्यधिकरणयोः अपवादः सौभराधिकरणम् । ( रेवती० २।२।१३।२७, सौभर० २।२।१३।२८–२९ ) कौ. २।२।१३।२७ पृ २९४. * न तावत् करणे. इतिकर्तव्यता संभवते इत्युक्तं ( इन्द्रियकामाधिकरणे ) । वा ३।६।१६।४३ पृ १०६९. * इन्द्रियकामाधिकरणसिद्धस्यैव गुणफलसंबन्धस्य आक्षेपसमाधान दाक्षायणयज्ञाधिकरणे ( २।३।४।५–११ ) । कौ. २।३।४।६ पृ. ३६. * निष्कासस्य करणत्वेन श्रुतस्यापि प्रयाजशेषवत् संस्कार्यत्वं यद्यपि कल्प्येत, तथापि प्राप्तकर्मानुवादेन तुषाख्यद्रव्यसंबन्ध, संस्कार्यद्रव्यसंबन्धश्च इति. इन्द्रियकामाधिकरणोक्तरीत्या वाक्यभेदप्रसङ्गात् कर्मान्तरम् । २।३।११।२४ पृ. ८४. * ' ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयात् यः कामयेत यथापूर्वं प्रजाः कल्पेरन् ' इति श्रुतं फलं इन्द्रियकामाधिकरणन्यायेन गुणजन्यमेव इति प्राप्ते । भाट्ट. १०।५।१८. * न च रेवत्यधिकरण- ( २।२।१३।२८–२९ ) न्यायापेक्षया लघुभूतेन्द्रियकामाधिकरणन्यायेन गुणफलसंबन्धविध्युपपत्तौ । कौ. २।२।१३।२७ पृ. २९५, * ' सकृमयज्ञेन यजेतान्नाद्यकाम.' अत्र द्वयोः (क्रिया–फलयोः) स्वरूपेण प्राप्तिमत् अन्नाद्यफलेऽपि क्रियायाः सार्थकाम्यवाक्येन प्राप्तत्वात् अप्राप्तगुणविनियोगे एव विधिर्संक्रमणात् पुनः इन्द्रियकामाधिकरणन्यायेन गुणफलसंबन्धः । २।३।५।१० पृ. ४४, * 'हीप् इति वृष्टिकामाय निर्वपं कुर्यात् ' दध्यादिवत् गुणसंक्रान्तशक्तिना विधिना इन्द्रियकामाधिकरणन्यायेन हीपादिकमेव तत्फलोद्देशेन विधीयते ( पूर्वपक्षे ) । २।२।१३।२७ पृ. २९५. * ' उत्पत्तिवाक्येन सर्वाणि प्राकरणिकानि गुणफलनिमित्तवाक्यानि संबध्यन्ते, न परस्परेण ' इति इन्द्रियकामाधिकरणवक्ष्यमाणन्यायेन प्रयोगवाक्ये भावनोपस्थापनात् नान्येषां तच्छेषत्वं संभवति इत्याशङ्क्य । सु. पृ. ७०८.

* इन्द्रियत्वं स्वसंबद्धार्थविशदावभासकत्वं, अपदोषज्ञानजनकत्वं वा, ज्ञानाश्रयत्वे सति ज्ञानकारणमनःसंयोगाश्रयत्वं वा । इन्द्रियं षड्विधं घ्राणरसनचक्षुस्त्वक्श्रोत्रमनोभेदात् । तत्र आद्यानि चत्वारि गन्धरसरूपस्पर्शमात्राभिव्यञ्जकतया गन्धादिमत्त्वानुमानेन पृथिव्यप्तेजोवायुप्रकृतीनि । श्रोत्रमपि शब्दमात्रग्राहकतया शब्दवत्त्वानुमानेन आकाशात्मकं इत्युपपादनीयः । अभियुक्तैरन्तर्गतदिशः श्रोत्रमिति लिङ्गात् दिगात्मकत्वमुक्तम् । मणि पृ १९.

* इन्द्रियवाक्यस्य । ' गुणादीनां स्वसंबन्धात् ' इति वार्तिकोक्तन्यायेन इन्द्रियवाक्यस्य दधिहोमाख्यदशरिवाक्यैकवाक्यत्वाभावात् न इन्द्रियवाक्ये तत्कारिहोमान्वयग्रहणम् । ( ' गुणादीनां स्वसंबन्धात् स्यतविधिः स्यात् परस्परम् ' वा. २।३।११।२५ पृ. ५४१ । तदर्थस्तु विस्तरेण तन्त्रग्रन्थे एव द्रष्टव्यः । संक्षेपस्तु इदानीमेवोक्तः सुधया ) । सु पृ. ८५०.

* 'इमामगृभ्णन्' अयं मन्त्रः अभिधान्यङ्गं द्वितीयाश्रु या । वाक्यीयोऽयं विनियोग इति केचित्, तत्र । मीन्या. * 'इमामगृभ्णन्' इत्यादिमन्त्रान्ते कर्मारम्भः ।

थि. १२।३।१०. ● 'इमामगृभ्णन्०' इत्य शेषिपरिसंख्या। बाल. पृ. २४.

● 'इमामगृभ्णन् रशनामृतस्य' अयं अप्राप्तपरिसंख्याविधिः। बाल. पृ. २५. ● 'इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते' इति प्रत्यक्षवचनेन अश्वाभिधान्यादाने मन्त्रस्य विनियोगे सति न लिङ्गात् गर्दभरशनाऽऽदाने विनियोगः। एवं च लिङ्गात् अव्यवस्थया विनियोगस्य प्रथमप्रसक्तेः न व्यवस्थाऽर्थं वचनप्रवृत्तिः, किंतु झटिति वचने प्रवृत्ते सति अर्थादेव व्यवस्थासिद्धिः। सोम. १२।२।१.

● 'इयं गौः, तया ते क्रीणामि, तस्यै शृतं, तस्यै शरः' इत्यस्य स्थाने काठके 'अयं गौ, तेन ते क्रीणामि, तस्मै शृतं, तस्मै शरः' इत्यादेव पठितव्यं नोहः (शृतशरादिशब्देषु)। भा. ९।१।१५।४२-४४ वर्णकं १.

● 'इयत्ताक्रमकालाश्च श्रौतयाद् बलवत्तराः। पदार्थधर्मभावात्तु दुर्बलत्वादबाधकाः ॥' या. ११२।३।७ पृ. १९९.

● इरापदं गिरापदस्थाने कर्तव्यं ज्योतिष्टोमे यज्ञायज्ञीये साम्नि। भा. ९।१।१८।५४-५८, ● इरापदं प्रगीतमेव प्रयोक्तव्य नाप्रगीतम्। ९।१।१८।५४-५८, ● इरापदेन गिरापदस्य विकारो युक्तः कारणाग्रहणात्। न इरापदस्यानुपदेशे किं चित् कारणं गृह्यते। तस्मात् तस्योपदेशः (देर कल्पोक्तेय इति), स कर्मकाले विधानात् समाम्नायेन प्राप्तं गिरापदं बाधते। तस्मात् तत्र विकारः। १२।३।८।२२. ● इरापदस्य न लोकवेदयोर्गीतिः प्रसिद्धा। टुप्. ९।१।१८।५५. ● इरापदे गिरापदधर्मा भवेयुः ज्योतिष्टोमे यज्ञायज्ञीये। भा. ९।२।१९।४० पृ. १७३९.

● इलान्दं नाम साम अनृक्कम्। बाल. पृ. ७२.

● इषार्थः। 'मन्त्रौ वाक्यवेलाया एकवाक्यवशाद् भवेत्। इषार्थं पदवेलाया गृह्यमाणोऽतिदुर्बलः ॥' या. १।४।४।५.

● इषुः नाम एकाहः, अपरः श्येनः, तौ द्वावपि आभिचारिकौ। भा. ७।१।२।१३.

● 'इषुं विष्टुतिं करोति' इषौ यागे विष्टुतौ कुशानिव इष्वाकारं कुर्यात् (इषुं बाणम्)। रत्न. ७।१।२।१६। इषुभिरेव कर्तव्यं इत्यन्ये। सोम. ● इषौ श्येनीयवैशेषिकधर्मातिदेशः 'समानमितरत् श्येनेन' इति। भा. ७।१।२।१३-१६.

☞ इषुवेगक्षयन्यायः। यथा धनुषः सकाशात् मुक्तस्य इषोः बाणस्य कर्मणः प्रारब्धवेगक्षयादेव शमः इति प्रसिद्धं, तथा प्रकृतेऽपि। अज्ञाने नष्टेऽपि जीवन्मुक्तिः सिध्यति। साहस्री. २७४.

● 'इषे त्वा' इत्यनेन एकोऽर्थः क्रियते, 'ऊर्जे त्वा' इत्यनेनापरः। 'इषे त्वेति छिनत्ति, ऊर्जे त्वेत्यनुमार्ष्टि' इति। (तस्मात् भिन्ने एते वाक्ये)। भा. २।१।१५।४७. ● 'इषे त्वेति शाखां छिनत्ति' इयं छेदनकरणरूपा विनियोक्त्री श्रुतिः सोमेश्वरमतेन। बाल. पृ. ४५.

● इष्ट-(यज्)शिष्टस्य हि प्रतिपत्तिरूप. संस्कारः। वि. ३।८।१९.

● इष्टसाधनत्वं प्रवर्तनारूपो विधिः विषयमाक्षिपति। भाट्ट. ४।१।१. ● इष्टसाधनत्वभावनयोः समानप्रकारकत्वनियमः। यदि वा उपादानकर्मत्वेन तुषाणामन्वये प्रकारत्वनियमस्य व्यभिचारः इति विभाव्यते, तदा आर्थीर्णांकरणनिरूपितकर्मत्वातिरिक्तकर्मत्वान्वये नियमः। भणि. पृ ६.

● इष्टकाः अग्निचयने मृन्मय्य एव, न तु धातुमय्यः। संकर्ष २।१।१, ताश्च साग्निकाः कार्याः न तु अनियतसंस्थानाः। २।१।२, तथापि समचतुरस्राः। २।१।३, ताश्च सर्वा अग्निका एव, नैर्ऋत्यस्तु तुषपक्वाः। २।१।६, पाकश्च तासां लौकिकाग्निना निर्मन्थ्येन। २।१।७

☞ इष्टका एव प्राणशब्दघटितमन्त्रोपधेयाः 'प्राणभृत उपदधाति' इत्यत्र ॥

'प्राणभृत उपदधाति' इत्यत्रापि चातुर्थ्यलावविशेषेण सुदृशीनामानुगयानलेभवः। इति प्राप्ते, 'तद्धितार्थमुपदधातौ मन्त्रः' इति स्मृत्या (पा० ४।४।१२५)

प्राणभृत्पदघटितमन्त्रकरणत्वेनोपपत्तौ न प्राणिहिंसानिषेधसङ्कोचो युक्त इति । संकर्ष. २।१।२३.

● इष्टकाः चित्रिण्यः वज्रिण्यः भूतेष्टकाः, एता मध्यमायां चितौ गोऽरुणात् पूर्वमुपधेया अग्निचयने । वि. ५।३।७–८. ● इष्टकाः न पशुशीर्षाविरलके निधेयाः अन्तराल्पूरणार्थम् । संकर्ष. २।१।४. ● इष्टकायाः स्वयमातृण्णाया उपधाने उपधानकर्तृ कर्तारं अध्वर्युकर्तृकं, वचनबलात् । वि. ३।८।२, ● इष्टकानां अग्निचयनसाधनभूताना अखण्डत्वादयो धर्माः, न ■ प्रथमचितिधर्माः । तस्मात् चित्रिण्यादिष्वपि ते सन्ति अन्यपूर्वसम्बन्धित्वेनैव तासामपि वाक्येन विनियुक्तत्वात् । ३।६।१९. ● इष्टकानां अनारभ्याधीतानां अग्निशेषता, न तु चितिशेषता । तेन ताः अग्नावुपधातव्याः, न तु प्रतिचिति । भा ५।३।६।१९–१६. ● इष्टकानां निर्माणं न याथाकाम्येन किन्तु दीक्षोत्तरकालमेव । उखाऽग्निमत्सतो मृदश्च संसर्गविधानात् । संकर्ष. २।१।२८, दीक्षातः पूर्वमपि प्राजापत्यपश्वोः परतः इष्टकाकरणम् । २।१।२९ ● इष्टकानां आग्नेयविहितानां मध्यमायां चितौ उपधानम् । वि ५।३।७. ● इष्टकासु उल्बमस्म स्वयमने तेन सर्वा भवतो भवन्ति । संकर्ष २।१।२८. ● इष्टकासु सहन् विकर्षणप्रोक्षणानुष्ठानम् । वि. ९।१।८.

● इष्टकाधर्माः के चित् भग्न्यपीतु दूर्वादिषु अपि भवन्ति वचने । संकर्ष २।११८. ● इष्टकापाकार्थं अग्निचयने यो निर्मन्थ्योऽग्निः, स मन्थनसाध्यो लौकिकः शालीयसंस्काररहितः । वि. ७।३।७, ● इष्टकापाकार्थे निर्मन्थ्याग्नौ अग्नीषोमीयपशुगतनिर्मन्थ्याग्निधर्माणां नातिदेशः । ७।३।७.

● इष्टकापादः नाम संकर्षकाण्डे तृतीयाध्यायस्य द्वितीयः पादः । के. ● इष्टकाशब्दस्य मूले ( भाष्ये ) जातिवचनत्वं निराकृत्य आकृतिवचनत्वं अर्थसंज्ञायामन्तर साधितं, तथादीनोपयुक्तं अयुक्तं चेत्युपेक्षितम् । संकर्ष. २।३।६. ● इष्टकोपधानं ' ब्रह्मसत्त्व, भूतान्यसृज्यन्त ' इत्यादीन् स्तनघानुघटितान् मन्त्राननूद्य ' सूर्यार्धदधाति ' इत्यनेन विधीयते । वि. ३।४।१७, ● इष्टकोपधानविधिः ' अयं पुरोभुवस्तस्य प्राणो भौवायनः ' इत्यादिलिङ्गप्रकरणप्राप्तमन्त्रानुवादेन ' प्राणभृत उपदधाति ' इति । प्राणभृच्छब्देन मन्त्रद्वारा इष्टका लक्ष्यन्ते । १।४।१८.

● इष्टिः आधानपूर्विका । वि. ६।६।५.

सू इष्टिरारम्भसंयोगादङ्गभूतान्निवर्तेतारम्भस्य प्रधानसंयोगात् । १०।१।२।४ ॥

इष्टिः आरम्भणीया सोमस्य अङ्गभूतात् दीक्षणीयादिकात् निवर्तेत । दीक्षणीयाद्यर्थं आरम्भणीया न कर्तव्या । आरम्भसंयोगात् । ' दर्शपूर्णमासावारप्स्यमानः ' इति आरम्भद्वारा दर्शपूर्णमासाङ्ग इष्टिर्गम्यते । न च सोमप्रयोगमध्यवर्तिनां दीक्षणीयादीनां आरम्भोऽस्ति । आरम्भो नाम प्रधानोद्देशिका प्रथमा कृतिः । कृतौ प्राथम्यं च स्वसजातीयकृतिव्यवधानधिकरणारम्भवृत्तित्वम् । साङ्गत्वं च साक्षात् परम्परया वा तत्प्रधानोद्देश्यकत्वेन । अत ईदृश आरम्भो न दीक्षणीयायामस्ति । तस्या ज्योतिष्टोमाङ्गत्वात् यतः इष्टिः आरम्भाङ्ग, स चारम्भः प्रधानेन संयुक्तः आरम्भस्य प्रधानसंयोगात् । तादृशारम्भस्य अङ्गभूतदीक्षणीयायामभावात् द्वारलोपेन अङ्गभूतदीक्षणीयायां आरम्भणीया निवर्तते । तस्मात् दीक्षणीयाऽऽदिषु आरम्भणीयाया बाध इति सिद्धान्तः । के.

● इष्टिः यागः । स एव च आसेचनाधिको होमः । भा. ६।८।१।७, ● इष्टय अध्वरकल्पा, सर्वपृष्ठा, मृगारा, सुमनाः इत्यादय । ११।२।४।१३, ● इष्टयः अनाहिताग्नेर्न विद्यन्ते । ६।८।१।१, ● इष्टयः ' ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकामः ' इत्येवमाद्याः । तत्र दार्शपौर्णमासिक एव विध्यन्तः, न सौमिकः, न वा विकल्पः उभयोः । ८।१।४।११. ● इष्टयः काम्या विकृतिभूता यथासङ्कल्पः । प्रकृतिस्तु ( दर्शेष्टया ) इष्टकाला । वि. १२।२।१३. ● इष्टयः पशवः सोमाः काम्याः न पाठक्रमेण कर्तव्याः, यथाकाम ते कर्तव्याः । भा. ५।३।१२।१२–३६. ● इष्टयः पशवश्च अग्निहोमानुष्ठानात् प्रागप्यनुष्ठातुं शक्यन्ते । वि. ५।३।१४. ● इष्टयः वैकृत्यः दर्शपूर्णमासाभ्यां तुल्यकाला अपि सत्यः न दार्शपौर्णमासिक तन्त्रमुपजीवन्ति । न च तुल्यकालत्वे प्रसङ्गो भवति । भा. १२।२।५।१५, ● इष्टेः

तु परम्पराङ्गत्वापत्तेः प्रकरणेन बाधाचायुक्ता । न चैवं आश्रयाभावात् काम्येषु गुणफलसंबन्धानुपपत्तिः, नन्वनुवचनान्तरस्यैव फलोद्देशेन विहितत्वात् तस्य च संख्यायुक्तानुवचनत्वसामान्यात् पञ्चदशसंख्याकनित्यानुवचनप्रकृतिकत्वावगतेः तदीयधर्माणां त्रिरभ्यासादीनां तदीयऋचां प्राप्तेर्नानर्थक्यम् । न च ऋचामनुवचनं प्रति प्राधान्यात् कथमतिदेशः । प्रकृते त्रिरभ्यासयुक्तपाठस्यैव तावत्संख्याकत्वात्, अर्थाच्च अनुवचनस्य प्राप्त्युपपत्तेः । 'पञ्चदश सामिधेनीरनुब्रूयात्' इति वचनवैयर्थ्यापत्तेः अगत्या सकृदन्वयेन विनियोगभङ्गं प्रकल्प्य मन्त्रविशिष्टानुवचनस्यैव विधेयत्वेन तदङ्गभूतानामृचां प्राप्त्युपपत्तेः । गुणत्वमपि न ऋचां नानुवचनफलसाधकत्वेन अपि तु अनुवचनजनकतया, लाघवात् । अतश्च न द्वारलोपात् बाधः ऊहो वा । अनुशब्देन च दर्शपूर्णमासाङ्गभूतपूर्वपदार्थानन्तर्यस्य उक्तत्वात् तस्य च परप्रयुक्तत्वेन बहिःक्रतुप्रयोगे अनुष्ठातुमशक्तेः क्रतुमध्यप्रयोगसिद्धिः । वैकृतानुवचनेनैव च प्रसङ्गात् प्राकृतानुवचनकार्यसिद्धेर्न तस्य पृथगनुष्ठानम् । अतस्तेष्वपि न सामिधेनीप्रकरणानुवृत्तिः । न च तर्हि तदङ्गत्वमेव उपवीतस्य किं न स्यात् ? तेषां विकृतित्वेन प्राकृताङ्गनिराकाङ्क्षाणां प्रकरणाभावात् वाचनिकाङ्गभेदाभावाच्च । अतो महाप्रकरणात् दर्शपूर्णमासाङ्गमुपवीतं तत्कर्तृसंस्कारकतया तत्कर्तृभिः सर्वप्रयोगारम्भे कार्यमिति सिद्धम् ।

मण्डन— 'इत्यङ्गमुपवीतिता ।' १०.

शंकर— 'दर्शाङ्गमुपवीतं स्यात् ।'

¶ उपवीताधिकरणशेषत्वेन 'गुणानां च परार्थत्वात्०' इति सूत्रं ( ३।१।१२।२२ ) व्याख्यातं वार्तिके । भाष्ये तु अधिकरणान्तरपरतया तत् व्याख्यातम् । कु. ३।१।१२।२२.

उपवीतोदगग्रत्वयोः प्रेताग्निहोत्रे श्रुतयोः प्राचीनावीतदक्षिणाग्रत्वस्तुत्यर्थता ॥

उदक्त्वं चापूर्वत्वात् । ३।४।२।४ ॥

शा — तस्मिन्नेव मृताग्निहोत्रे श्रूयते, 'ये पुरोदञ्चो दर्भास्तान् दक्षिणाग्रान्स्तृणीयात्' इति । केचित्तु महापितृयज्ञे श्रूयते इत्युदाहरन्ति । तत्र 'ये पुरोदञ्च०' इत्यत्र संदेहः किं विधिः, अनुवाद इति । किं प्राप्तम् ? ततः चशब्देनान्वादिश्यते अयमपि विधिरपूर्वत्वादिति । प्राप्तिपूर्वको ह्यनुवादो भवति । न चास्य पुरुषार्थतयाऽपि प्राप्तिरस्ति । न चास्य स्तुत्यर्थताऽपि युज्यते । लिङ्शब्दप्रयोगात् । तस्मात् सिद्धवदुक्तावप्यनुपपत्त्यैव अस्यापि विधित्वमिति ।

सतो वा लिङ्गदर्शनम् । ५ ॥

वा— आचारप्राप्तस्य उदगग्रत्वस्य शौनकमतं लिङ्गदर्शनमेतत्, न विधिः । कुतः ? 'लिङादिरहिते वाक्ये सदा विधिरुपेयते । न कथंचिद् यथा युक्त्या प्राप्तिलेशोऽपि गम्यते ॥' यच्छब्दयोगात् आख्यातविशेषरहितत्वाच्च स्फुटमिह अनुवादत्वमवधारितम् । तत् यथाकथंचिदपि प्राप्तो यस्या नातिक्रमितव्यम् । अस्ति चात्र प्राप्तिः 'अग्रवन्ति प्रागग्राण्युदगग्राणि वा, अपवर्गवन्ति प्रागपवर्गाण्युदगपवर्गाणि वा' इति स्मृतेः । तस्मात् तत्प्रभानार्थः एवायं सिद्धवदनुवादः । तथैव च स्तुत्यर्थः । पुरा हि एवमुक्तं, न तु साम्प्रतं मृतावस्थायामिति ।

सोम— प्रयोजनं पूर्वपक्षे 'ये पुरोदञ्चः' इति विधेर्वैदिकत्वात् तद्बाधे 'यदि मनुष्यो भुवः स्वाहेति दक्षिणेऽग्नौ जुहुयात्' इत्येतत् प्रायश्चित्तम् । सिद्धान्ते तु अविज्ञातप्रायश्चित्तं इति ।

वि— 'उपवीती हि देवेभ्यः पुरोदञ्चो इदं विधिः । वादो वा, ऽस्यान्यतोऽप्राप्तेरपूर्वार्थो विधीयते ॥, यच्छब्दयोगाद् वादः स्मृत्युपस्थानतो ह्ययम् । मृतानां दक्षिणाग्रत्वप्राचीनावीतयोः स्तुतिः । ' तस्मादनुवादः ।

भाट्ट— तत्रैव 'ये पुरोदञ्चो दर्भास्तान् दक्षिणाग्रांस्तृणीयात्' इति श्रुतेऽपि ये पुरा दर्भास्ते उदग्राः कार्याः इत्येवं विधिवाचकपदाध्याहारेणापि पूर्वविधिः । न च पुराशब्दस्य विशेषणत्वे विशिष्टोद्देशः । दक्षिणाग्रत्वस्य मृताग्निहोत्रे विधौ अर्थादेवोदक्त्वस्य जीवदवस्थायामेव प्राप्तत्वेन अविशेषणत्वात् । निपातत्वेन पुराशब्दान्वयस्य युक्तत्वाच्च । न च 'अग्रवन्ति प्रागग्राण्युदगग्राणि वा' इति सामान्यस्मृत्यैव उदगग्रत्वप्राप्तेर्विध्यानर्थक्यमिति वाच्यम् । पशुधर्मत्वादिविच-

सिद्ध्यर्थं तद्विधानोपपत्तेः । अन्यथा स्मृतिमूलभूतश्रुतेर विज्ञातवेदत्वात् ' यद्यविज्ञाते भूर्भुवःस्वरित्याहवनीये जुहुयात् ' इत्येतत् प्राप्येत । इति प्राप्ते, यच्छन्दश्रव णात् प्रत्यक्षविध्यभावात् विध्यन्तरैकवाक्यत्वाच्च नायं विधिः, अपि तु ज्ञातत्वात् यच्छब्दापेक्षितोद्देश्यनिर्देश- समर्पकः एवेत्यनुवादः ।

शंकर— ' पुरोडाशे विधिर्न तु । ' इ.

* उपवेषः दर्शादौ पलाशशाखायाः प्रादेशपरिमितं मूलभागं छित्त्वा कर्तव्यः । तस्य विनियोगः ' उपवेषेण कपालान्युपदधाति ' इत्याम्नातः । वि. ४।२।३, * उपवेषः न शाखाच्छेदप्रयोजकः, किन्तु अनुनिष्पादी । अनः पौर्णमास्यां उपवेषार्थं शाखाछेदो न कार्यः । उपवेषस्थाने किंचित् काष्ठं ग्राह्यम् । ४।२।३. * उपवेषः । पौर्णमास्यां विनाऽपि शाखापरिवासनेन यदेव अङ्गारा- पोहनक्षमं द्रव्यं, स एव उपवेषः । शा. ३।७।१६।३३ पृ १०९८–९९ * उपवेषः । ' मूलतः शाखां परि- वास्योपवेषं करोति ' इति वाक्यात् शाखाछेदनकार्यत्वे नापि अवगतस्य उपवेषस्य पौर्णमास्यां अमावास्यायामपि वा सान्नाय्यरहितायां शाखाछेदनाभावेऽपि सिद्धिः चतुर्थे ( ४।२।१।८–९ ) साधयिष्यते । सु. ३।७. पृ. ३४. * उपवेषेण अङ्गारमपोहति । इदं अनाम्नातमेव । सुबो. ३।२।१६. * ' उपवेषेण कपालान्यु- पदधाति ' इत्यस्य संनिधिविषयतया संकोचः । अमेनयता शाखाऽनुनिष्पन्नस्योपवेषस्य उपादयितुमशक्यत्वात् । मीम. ११।२।१३. * उपवेषनामकेन काष्ठविशेषेण प्रथमं अङ्गारविशेषं सङ्गमय्याप्य ' ध्रुवमसि. ' इति मन्त्रेण रश्मिमद्वारे पुरोडाशकपालमुपदधाति । वि. १०।५।१.

* उपवेषवत् । यथा– 'उपवेषेण कपालान्युपदधाति' इति यदा उपवेषस्तदा तेनेति गम्यते, यदा उपवेषो नास्ति तदाऽपि उपधानमस्त्येवेति । एवं यदा द्विपुरोडाशाया पौर्णमास्या अन्तराले, तदा उपांशुयाजो- ऽन्तराले स्यात्, यदा एकपुरोडाशाया नान्तरालं, तदाऽपि उपांशुयाज. स्यादेवेति । भा. १०।८।१८।६८.

■ उपवेषाधिकरणम् । शाखा छेदनादेः प्रयो- जिका नोपवेषोऽपि । तत्साधकरणमेव शाखाछेदनादेः प्रयोजकं न कपालोपधानम् । अग्रमेव शाखाछेदनादेः प्रयोजकं न मूलम् ॥

शाखायां तत्प्रधानत्वादुपवेषेण विभागः स्याद् वैषम्यं तत् । ४।१।३८ ॥

भाष्यम्— दर्शपूर्णमासयोः समाम्नायते, ' मूलतः शाखां परिवास्योपवेषं करोति ' इति । तत्रायमर्थः सांशयिकः किं शाखाच्छेदनस्य उभय प्रयोजकं शाखा उपवेषश्च, उत शाखा प्रयोजिका, उपवेषोऽनुनिष्पा- दीति । किं प्राप्तम् ? उभय छेदनाभिष्वज्यते शाखा शाखामूलं च, उभयं च प्रयोजनवत् । अग्रेण वत्सापा- करणादि करिष्यते, मूलतः उपवेषः । तेन विशेषा- भावात् उभय प्रयोजकम् । इति प्राप्ते, उच्यते । शाखाया अग्र. । तत्प्रधानत्वात् शाखाप्रधानत्वादुपवेषेण विभागो भवेत् । शाखामनु निष्पन्नो गृह्येत । कथं तत्प्राधान्यम् ? ' शाखां परिवास्य ' इति द्वितीयानिर्देशात् । ननु, ' उपवेषं करोति ' इत्यपि द्वितीया । उच्यते । नासौ परिवासयतेः कर्म । कस्य तर्हि ? करोतेः । आह । कस्मादेवमभिसंबन्धो न भवति, शाखां परिवास्य मूलम् उपवेषं करोतीति । शाखाशब्दश्च यथैवाग्रे तथा मूले- ऽपि । तत्रायमर्थः– छेदनेन अग्रमूले विभजेत् । किं प्रयोजनम् ? विभज्य मूलमुपवेषं करोति–इति । उच्यते । नैवम् । व्यवहितकल्पना एवं भवेत् । अव्यवधानेन शाखाऽर्थं परिवासनम् । इते तस्मिन् उपवेषकरणम् । ननु प्रकृतत्वात् मूलमुपवेषशब्देन संबध्यते । उच्यते । उभयसंबन्धे विरोधः । विरोधे च प्रकरणात् वाक्य बलीयः । अथ संनिहितेन संबध्यते, तथापि शाखा प्रयुक्तेन इत्यापतति । अतः सिद्धः प्रयोजकोऽपवेषः, न प्रयोजयति छेदनमिति । एतदत्र वैषम्यम् ।

टुप्—– उभयमपि न प्रयोजकम् । कथ, ' मूलतः शाखां परिवास्योपवेषं करोति ' इति परिवासयतेः प्रधानभूता शाखा, द्वितीयासंयोगात् । अतो मूलाधि- करणं छेदनं शाखाऽर्थम् । उपवेषमिति या द्वितीया, सा करोते, न परिवासयते. । तस्मादुपवेषार्थं छेदनम् ।

आह । उपवेषं करोतेः कर्मतया प्रतीयमाने, इतरत् ( मूलं ) उपवेषं निर्वर्तयति । कथमिति ? छेदनादिकेतिकर्तव्यता गम्यते । यथा 'स्वरुं करोति' इति पूर्वपक्षे जोषणादीना प्रकृताना ग्रहणमुक्तम् । तत्र कारणान्तरेण ( यूपशब्दस्य लक्षणाप्रसङ्गेन ) स्वरोर्मन्त्रनिषिध्योपादानार्थः करोतिरित्युक्तम् । इह क्वास्ति ( येनोपवेषभावना निषिध्येत । ) तस्मादुभयं प्रयोजकम् । उच्यते । स्वरावयोश्चारित्वेन यूपशब्देन या इतिकर्तव्यता लभ्यते, सा वाक्येनैव स्वरूपसम्बन्धिनीत्येवं पूर्वपक्षस्तत्र ( शङ्कितः ) । इह स्वरावस्थे नास्ति यूपस्थानीयं पदं, यत् इतिकर्तव्यता लक्षयेत् । 'मूलतः शाखां परिवास्य' इति समाप्तमिदं वाक्यम् । 'उपवेषं करोति' इत्यपि समाप्तम् । ( कथम् ? ) मूलाधिकरणेन छेदनेन शाखां निष्काश्य अन्यदपि ( क्रियाऽन्तरं ) करोतीत्येतद्गम्यते । अतो भिन्ने एते वाक्ये । मूलाधिकरणकं छेदनं वाक्येन शाखाऽर्थम् । उपवेषस्य स्ववाक्ये छेदनादिकाया इतिकर्तव्यताया अश्रवणात् प्रकृता स्यात् । तत्र शाखाया वाक्येन, उपवेषस्य प्रकरणेन । प्रकरणं च दुर्बलं वाक्यात् । अत आह– उभयसंबन्धे विरोधः । विरोधे च वाक्यं प्रकरणाद्बलीयः । अथान्येन प्रयुक्तं मूलं ग्रहीष्यते, तथा सति परकीयत्वादप्रयोजकम् । शाखां परिवास्य मूलादुपवेषः, अयं तत्रापाकरणार्थम् । एतदपि न घटते, व्यवहितकल्पनया अश्रुतवाक्यकरणमवैदिकम् । अतो वाक्यतात्पर्यात्शाखाऽर्थमेव ( अग्रार्थमेव ) छेदनम् । शाखाशब्दश्च यावदच्छिन्ना तावत् समूला वर्तते । छिन्ना चेदग्रे वर्तते, मूलादपैति । तस्मात् शाखाप्रयुक्तं छेदनम् ।

श्रुत्यपायाच्च ॥ ९ ॥

भाष्यम्— 'शाखया वत्सानपाकरोति' 'शाखया गाः प्रापयति' 'शाखया दोहयति' इत्येवमादिषु शाखाग्रहणेषु नोपवेषस्य व्यापारः, ततः शाखाशब्दोऽपैति । नहि तन्मूलं शाखेत्याचक्षते । किमतो यद्येवं ? यत्र शाखाशब्दः तदर्थं छेदनं, द्वितीयानिर्देशात् । अथापि मूले शाखाशब्दो भवेत् , एवमपि शाखाशब्दोपदिष्टेषु न मूलं, अमूलपरिवासितत्वात् । यद्येवं सकलतया शाखया क्रियते, तदर्थं छेदनम् । न चोपधानं मूलपरिवासितया क्रियते । तस्मान्न तदर्थं छेदनम् । किं भाति प्रयोजनम् ? पौर्णमास्यामपि शाखा उपाहार्या, यथा पूर्वः पक्षः । यथा सिद्धान्तः, तथा नोत्पादयितव्येति ।

टुप्— यद्यपि मूलं शाखाशब्देनोच्यते, तथापि मूलपरिवासनेन संस्कृता शाखा कार्ययोग्या । न तन्मूलं शाखा भवति । 'अमूलपरिवासितत्वात्' मूले अच्छिन्नत्वादित्यर्थः । अत आह– 'श्रुत्यपायाच्च' शाखाश्रुतिमूलादपैतीत्यर्थः । तस्मान्अग्राऽर्थेषु न मूलं परिग्रहीतव्यमिति ।

शा— 'शाखाशब्दः समूलस्य नाममात्रस्य वाचकः । छेदनादि च शाखाऽर्थं द्वयं तस्मात् प्रयोजकम् ॥' उच्यते । 'मूलापादानकं ह्यत्र परिवासनमुच्यते । तच्चाग्रस्य न मूलस्येत्यग्रार्थं परिवासनम् ॥ तद्विशेषणमूलस्याप्यमूलस्यापि तद्धिया । अग्र्यार्थेन तु मूलेन कपालमुपधीयते ॥' तस्याग्रार्थत्वात् सर्वस्य तदेव प्रयोजकम् ।

सोम— कस्या दिशः केवलशाखाप्रयोजकत्वेऽपि छेदनादीनां न केवलप्रयोजकत्वं, किन्तु मूलाग्रोभयप्रयोज्यत्वं इति प्रत्यवस्थानात् प्रत्युदाहरणसंगतिः । यद्यपि मूलाग्रगोचरो विचारः प्रार्थनीयः, तथापि मूलाप्रयुक्तेः तत्कार्यैककपालोपधानादिप्रयुक्तिपर्यवसानात् तद्गोचर एव न प्रवर्तितः । प्रयोजनं पूर्वपक्षे उपवेषान्ताशो पुनः शाखा आहर्तव्या, पौर्णमास्यामपि न शाखा आहर्तव्या । सिद्धान्ते तु उभयत्रापि न शाखा आहर्तव्या । ततश्च तयोर्नैयाभावात् येनकेनचित् काष्ठेन कपालोपधानम् । सूत्रार्थस्तु– शाखाया शाखाप्रकरणे 'मूलतः शाखां परिवास्य' इति वाक्ये उपवेषेण परिवासनस्य विभागः असंबन्धः स्यात् । द्वितीयया शाखायाः करोतिक्रियाऽपेक्षत्वेन शाखावैगम्यादुपवेषस्य इति ।

वि—'शाखा छिन्नोपवेषं च मूले कुर्वीत शाखया । नुदेद् वत्सान् कपालानि स्थापयेदुपवेषतः ॥ द्वयं प्रयोजकं छिन्नेर्मूलस्याग्रस्यैव वा ।, आद्योऽमन्त्रकोपनिमन्त्र विनियोगतः ॥ , उपवेषं करोतीति साक्षाद्धो-

ऽन्यार्थमूलत. । पूर्वतेऽतोऽनुनिष्पादी ■ तस्माद् शुल्कनेऽन्तिमः ॥'

भाट्ट— तत्रैव 'शाखामाच्छिनत्ति' 'शाखामाहरति' 'मूलतः शाखां परिवासयोपवेषं करोति' इति श्रुतम् । तत्र शाखाशब्दस्तावत् आद्यवाक्ययोः समूलस्यैव वाचको न त्वग्रमात्रस्य, अतस्तृतीयवाक्येऽपि तत्पर एव । तदर्थं च परिवासनं अग्रमूलविभागार्थम् । अत स्तृतीयवाक्ये 'मूलतः' इति पदं द्वितीयाऽर्थे तृतीयाऽर्थे वा तसिं व्याख्याय 'उपवेषं करोति' इत्यत्रान्वेति । न त्वपादानार्थकं तद् परिगृह्यते । तथात्वे अग्रस्यापि उपवेषत्वप्रसङ्गेन 'मूलतः' इत्यस्य उत्तरत्रान्वयावश्यकत्वात् । अतः परिवासनेनाग्रं मूलं च शाखापदाभिधेयं विभज्य मूलमुपवेषसंज्ञमुपादेयं इति तृतीयवाक्यार्थः । तस्य च विनियोगापेक्षायां अग्रस्य वत्सापाकरणादौ, मूलस्य कपालोपधानादौ वचनात् विनियोगः । अत एवोभयमपि छेदनाहरणपरिवासनादीनां प्रयोजकम् । अस्तु वा शाखाशब्द अग्रमात्रवाची, तथापि 'मूलतः' इति द्वितीयाऽर्थे परिवासनस्य कर्मेति परिवासनमुभयप्रयुक्तम् । यथा वा मूलापादानकपरिवासनं उपवेषकरणार्थं विधीयते, इति सोऽपि तत्प्रयोजकः । इति प्राप्ते, 'मूलतः' इति तसिः पञ्चम्यर्थ एव । सर्वविभक्त्यर्थकत्वानुशासनं तु लाक्षणिकम् । अन्यथा विशिष्य पञ्चम्यर्थकत्वानुशासनवैयर्थ्यप्रसङ्गात् । अतो मूलापादानकपरिवासनं द्वितीयाश्रुत्या शाखासंस्कारकमेव । न तु वाक्यादुपवेषकरणाङ्गं, न वा उभयसंस्कारकं, उद्देश्यानेकत्वप्रसङ्गात् । अतः शाखाशब्दोऽपि मूलापादानकपरिवासनसंस्कार्यतया पुनरग्रमात्रवाची, छेदनादिवाक्येऽपि तथात्वेन । समूलच्छेदनादिकं तु मूलापादानकपरिवासनसिद्ध्यर्थं न विरुध्यते । अत एव वत्सापाकरणादौ शाखापदेनैव अग्रविनियोगः । अतो मूलं परिवासनाङ्गमेव । एवं च व्यवहितकल्पनाऽपि न प्रसज्यते । अत एव परिवासनानुनिष्पन्नमूलस्यैवोपवेषरूपस्याऽन्तरकरणम् । अग्रस्य शाखापदेनैव सर्वत्र विनियोगेन संज्ञाऽन्तरवैयर्थ्यापत्तेः । अत एव न व्यवहितकल्पनाया आवश्यकत्वम् । अतः संज्ञाकरणमात्रपरत्वकः 'उपवेषं करोति' इत्ययमनुवादो स्वतन्त्रापेक्षितक्रियाऽन्तरप्रदर्शनार्थः । अतो ■ मूलं छेदनादीनां प्रयोजकम् । प्रयोजनं—पौर्णमास्यां शाखाऽभावे येनकेनचित् काष्ठेन कपालोपधानं, न तूपवेषकरणम् ।

मण्डन— 'छेदप्रयोक्ता न त्वुपवेषः ।'

शंकर— 'मूलाश्रयेऽग्रमेव वा ।' वा शाखा ।

अनाधिकरणे भाष्ये किं छेदनस्य शाखा उपवेषश्चोभय प्रयोजकं शाखैव वा इति विचार्य, शाखैव प्रयोजिका नोपवेष इति सिद्धान्तितम् । नयप्रसूने च वत्सापाकरणमेव शाखाछेदनस्य प्रयोजकं, न कपालोपधानं इत्युक्तम् । शास्त्रदीपिकायां तु वत्सापाकरणं कपालोपधानं चोभयमपि शाखाच्छेदनादीनां प्रयोजकं, उत वत्सापाकरणमेवेति, मूलमपि छेदनादिकस्य प्रयोजकं उताग्रमेवेति च विचार्य अग्रमेवेति अर्थाच्च वत्सापाकरणमेव प्रयोजकं इति सिद्धान्तितम् । विस्तरे वत्सापाकरणमेव छेदनादेः प्रयोजकं न कपालोपधानं इति सिद्धान्तितम् । भाट्टे तु छेदनादीनां अग्रमेव प्रयोजकं न मूलं इत्येव सिद्धान्तितम् । के.

४ 'उपव्ययते' इति दर्शपूर्णमासयोः उपवीतस्य विधिर्नानुवादः । द्वितीयवर्णके तु 'यज्ञोपवीतस्य प्राचीनावीतस्तुत्यर्थमनुवादः' इति ॥

विधिर्वा स्यादपूर्वत्वात् । ३।४।१।१२ वि. ।

वा— तदेवोदाहरणं 'उपव्ययते देवलक्ष्ममेव तत् कुरुते' इति । तत्र विधिः, अनुवाद. इति सन्देह. । कथं पुनः अनवधारिते विधित्वे मन्त्रार्थत्वदर्शपूर्णमासार्थत्वविचारो कृतः ? विदेव व्यवहारात् इत्यर्थतः अधिकरणं पूर्वं द्रष्टव्यम् । किं प्राप्तम् ? अनुवाद इति । कुतः ? 'स्मृतिभिः पुरुषो नित्यं कृतो यज्ञोपवीतवान् । वर्तमानापदेशश्च न विधावुपपद्यते ॥' 'नियोदनी नित्ययज्ञोपवीती' इति हि सर्वदा यज्ञोपवीतं प्राप्तं स्मृत्याऽपि अस्ति । न चैष विधिस्वरूपः शब्दः । तस्मात् अनुवाद इति । एवं च निवीतप्राचीनावीताभ्यां अवैलक्षण्यं भविष्यतीति । एवं प्राप्ते, ब्रूमः । 'विधिरेष भवेदेवमपूर्वोऽर्थो विधास्यते । सर्वानुवादो व्यर्थो हि स्तुतेश्च विधिकल्पना ॥' नहि

समस्तानुवादवाक्यस्य किंचित् फलमस्ति । निवीतप्राचीनावीतसंकीर्तनमपि च विधीयमानोपवीतस्तुत्यर्थत्वेनैव अर्थवद्भविष्यति । वर्तमानापदेशानामपि च तदाभासत्वात् प्रयोगवचनार्थवादपञ्चमलकारेभ्यो विधिशक्तिरध्यारोप्यते । तस्माद्विधिः । यत्तु स्मृतेरेव प्राप्तमिति, तत्रापि अपूर्वत्वादिदमेवोत्तरम् । अन्य एव हि असौ पुरुषधर्मः प्राप्तः, अन्यश्चायं अपूर्वः क्रतुधर्मो विधीयते । तस्मादननुवादः । अस्य च प्रयोजनं कर्माधिकरणे वक्ष्यामः ।

सर्वं वा । यत्तु कुण्डाग्निहोत्रे श्रूयते 'प्राचीनावीती दोहयेत् । यज्ञोपवीती हि देवेभ्यो दोहयति' इति । तत्रैवं विचार्यते किमिदं अहीनस्थितमिव द्वादशत्वं दर्शपूर्णमासगतमेव स्तुत्यर्थमुक्तं, उत जीवदग्निहोत्रे विधानार्थमिति । किं प्राप्तं ? नतः पूर्ववदेव सूत्रं व्याख्यातव्यम् । एवं च सति प्रकरणबहुवचनयोरनुग्रहो भविष्यति । तस्मात् सत्यपि अनुवादरूपत्वे अर्थवत्त्वाय प्रयोगवचनादिभ्यो विधित्वं कल्पनीयम् । एतस्मिंश्च व्याख्याने स्थितं तावदपर्यवसितमित्येवं उत्तरमधिकरणमारब्धव्यम् ।

विधस्त्वाद्व्यपदेशोत्तरम् ('वतो वा लिङ्गदर्शनम्' इति) । हिशब्दवदाख्यातेन यत कुतश्चित् प्राप्तेरपेक्षितत्वात्, प्रकरणे च तदभावात् क्रियमाणमानमेव विधित्वं कल्प्यम्, उत मन्त्रवत्सा प्राप्तिराश्रीयतामिति । तत्र प्राप्त्याश्रयणमपेक्षितं, न तु विधित्वमिति । तदेव न्याय्यः । प्रकरणबहुवचनयोर्भोक्तम् । अस्त्येन वाक्योऽत्र विधिः, इति नानर्थकत्वम् । तस्मादनुवादः इति नित्येऽग्निहोत्रे दोहे विनाऽप्युपवीतेन अवैगुण्यम् ।

शा— 'उपव्ययते' इत्येतदुदाहरणम् । किमसौ विधिः, उतानुवादः इति । 'नित्योदकी नित्ययज्ञोपवीती' इति स्मृतिप्राप्तत्वात् अनुवादः । इति प्राप्ते, विधिः अपूर्वत्वात् इत्याह । पुरुषार्थतया हि स्मृतितः प्राप्तिः । अयं तु क्रत्वर्थतया विधिः अप्राप्तत्वात् ।

सोम— उपव्यानस्य विधित्वे नास्ति, तर्हि कथं तस्य दर्शाङ्गत्वं इति प्रत्यवस्थानात् आक्षेपसंगतिः । प्रयोजनं पूर्वपक्षे कर्ममध्ये यज्ञोपवीतभ्रंशे तस्य कर्मार्थत्वाभावेन कर्मणो न वैगुण्यं, स्मार्तं च प्रायश्चित्तम् । सिद्धान्ते तु कर्मणो वैगुण्यं श्रौतं प्रायश्चित्तं चेति । (वर्णकान्तरे) प्रयोजनं पूर्वपक्षे जीवदग्निहोत्रदोहे वासोविन्यासात्मकोपवीताभावे वैगुण्यं, सिद्धान्ते तु नेति ।

वि— 'उपव्यानेऽनुवादो वा विधिर्वा, ऽऽद्यो यतः स्मृतौ । प्राप्तं, नैवमपूर्वत्वात् क्रतौ ह्येष विधीयते ॥' दर्शपूर्णमासाङ्गतया पञ्चमलकारेण विधीयते । पुरुषार्थस्य प्राप्तावपि क्रत्वर्थस्य प्राप्त्यभावात् ।

भाट्ट— 'उपव्ययते' इति विधिरनुवादो वेति चिन्तायां, 'नित्योदकी नित्ययज्ञोपवीती' इति गौतमस्मृत्या प्राप्तत्वादनुवादः । यदि तु अनेन पुरुषार्थतया प्रसक्तिराशङ्क्येत, तथापि 'यज्ञोपवीतिना कर्तव्यं' इतिस्मृत्यनुसारात् क्रत्वर्थत्वेनापि प्रसक्तिर्दुर्वारणीया । यदि तु उक्तवचनेनाङ्गत्वे तद्भ्रंशे स्मार्तप्रायश्चित्तापत्तेः यज्ञभ्रंशप्रायश्चित्तप्राप्त्यर्थं दर्शपूर्णमासयोरुपविधानं इत्याशङ्क्येत, ततो 'यज्ञोपवीत्येवाधीयीत याजयेत् यजेत वा' इत्यादितैत्तिरीयश्रुत्या सर्वयज्ञार्थत्वेन यज्ञोपवीतविधानात् तत्प्रायश्चित्तस्यापि प्राप्त्युपपत्तेः विधानानर्थक्यम् । यदि तु एतेषां सर्वेषां वचनानां नवतन्तुकत्रिवृत्सूत्ररूपमुख्ययज्ञोपवीतविषयत्वात् वासोविन्यासरूपगौणोपवीतस्यैव अप्राप्तस्य दर्शपूर्णमासाङ्गत्वेन विधिराशङ्क्येत, ततो 'यज्ञस्य प्रसृत्यै अजिनं वासो वा दक्षिणत उपवीय दक्षिणं बाहुमुद्धरते अवधत्ते सव्यमिति यज्ञोपवीतं, एतदेव विपरीतं, प्राचीनावीतं, निवीतं मानुषम्' इति वचनेन तस्यापि सर्वयज्ञार्थत्वेन प्राप्तत्वात् अनुवाद एवायं दर्शपूर्णमासस्तुत्यर्थः । इति प्राप्ते, 'यज्ञस्य प्रसृत्यै' इत्यनेन फलविशेषजनकगुणाधिक्यद्वारकत्वेन अस्य ज्योतिष्टोमवत् सर्वयागाङ्गत्वावगमात् अनारभ्याधीतत्वे भावस्वरूपार्थं दर्शपूर्णमासयोः वासोविन्यासविध्युपपत्तिः । अत एव शिष्टा अपि वासोविन्यासं विनाऽपि कर्मान्तराण्याचरन्ति । यद्यपि च 'यज्ञस्य' इति वाक्यं 'यज्ञोपवीत्येव' इत्यस्य वाक्यस्य शेषः संनिधानादिष्येत, तथापि समाख्येन तेन वासोविन्यास एव फलविशेषार्थं विधीयते इति न दोषः । मुख्यस्य सूत्ररूपयज्ञोपवीतं तु सदा स्मृत्वेन सर्वयज्ञार्थत्वेन विधीयते । एवं च "श्रौत-

प्रायश्चित्तसिद्ध्यर्थे इदमपि दर्शपूर्णमासाङ्गत्वेन 'उपव्ययते' इत्यनेन विधीयते" इत्यपि के चित् (शास्त्रदीपिकाप्रकाशकारादयः)। निवीतादिसमभिव्याहारस्य उभयत्र प्रत्यभिज्ञापकस्य तुल्यत्वात् वासोविन्यासः एवात्र नियम्यते इति युक्तमुत्पश्यामः। सर्वथा 'उपव्ययते' इति विधिः दर्शपूर्णमासविधिसन्निहितत्वात् तदनङ्गत्वानुपपत्तेः इति सिद्धम्।

एवं वा—। (विधिर्वा स्यादपूर्वत्वात्)। याजमानेनवाक्येन अग्निहोत्रे जीवनस्य निमित्तत्वाभावेऽपि वचनेनैव दाहावधि तायंप्रातःकाले मरणोत्तर नित्यत्वेन विहितामिहोत्रप्रयोगो मृताग्निहोत्रम्। (सायंहोमोत्तर यजमानमरणे दाहदाहात् प्राक् तदीयः प्रातर्होमः अध्वर्युणा कर्तव्यो भवति। तदिदं मृताग्निहोत्र नाम इति तु भेदः)। तस्मिन् मृताग्निहोत्रे 'प्राचीनावीती दोहयेत् यज्ञोपवीती हि देवेभ्यो दोहयन्ति' इत्यनेन श्रुतेन दैवाग्निहोत्रे किं यज्ञोपवीतस्य विधिरनुवादो वा इति चिन्तायाम्। स्वरूपेण प्राप्तस्यापि मन्त्रमूलस्य श्रौतप्रायश्चित्तप्राप्तिफलकतया विधिः, वासोविन्यासरूपस्य वा नियमार्थं विधिः। इति प्राप्ते, सिद्धं तावदपर्यवसित, मध्ये चिन्ताऽन्वारम्भ — सिद्धान्तुत्तरम् = ('लिङ्गदर्शनम्') हिरण्याद्येपकधात् नियन्तुर्वक्तव्यत्वाच्च भवमपि निषेधाविधत् प्राचीनावीतरूपार्थं। अत एव 'उपव्ययते' इतिवत् आनर्थक्याभावादपि विधित्वनं निरस्तम्। यज्ञोपवीतस्याध्ययनमूलत्वं च स्मृतैव श्रीव दर्शहोमे प्राप्तत्वात् औचित्यादिना स्तुत्युपपत्तिः। वासो विन्यासरूपस्यापि वा अनियमेन उक्तविधया जीवदग्निहोत्रे प्राप्तत्वात् स्तुत्युपपत्तिः। यदि तु नियमेन तत्प्राप्तिः स्तुतौ आवश्यकी अपेक्षेत, तत संनिकृष्टस्यभवात् विप्रकृष्टदर्शपूर्णमासादिप्रसवेत् अयमनुवादः स्तुत्यर्थमानुपपन्न। बहुवचनं तु (देवेभ्यः इति) प्रकृतिविकृत्यभिप्रायमित्युक्तमेव।

शंकर—'उपवीत दर्शादिम्।' ३। 'उपवीते विधिर्मत।' ४। 'यज्ञोपवीतिनो नाम्नी।' ५.

● उपशब्दः। उपसर्गरूपः। निपातरूपश्च। श्रभि. पृ. १५६.

● उप—शब्दस्य 'उपोधिके च' इति चकारेण लक्षणार्थस्यापि कर्मप्रवचनीयसंज्ञाव्याख्यानम्। सु. पृ. ४०८.

● उपशयः नाम यूपविशेषः यूपैकादशिन्या एकादशः। तत्र परिव्याणादिसंस्काराभावेऽपि अमन्त्रकाः छेदनादयः के चिदर्माः याचनिका क्रियन्ते। तावता खादरयेन गौणी तत्र यूपत्वोक्तिः। (नास्योच्छ्रायः किंतु दक्षिणतो भूमावेव उपशेते। नाप्यत्र पशुर्बध्यते)। वि. ७।३।१३. ● उपशये अर्थस्तुते यूपशब्दः उपचर्यते। भा. ११।४।७।१०, ● उपशये यूपशब्दः यूपसंस्कारान् नातिदिशति। ७।३।१३।१३-१४.

● उपश्लेषः। (औपश्लेषिक अधिकरणार्थं) सापच्छिन्नत्वम्। यथा 'कटे आस्ते' इति। रहस्य. पृ. १५२.

● उपश्लेषलक्षणा सुबन्ततिङन्तानेकपदरूपा विनियोक्त्री श्रुतिः। तत्र सुबन्तात्मकैकपदरूपा एकप्रत्ययरूपा च विनियोक्त्री क्रमेण साध्यसाधकभावेन उक्तं यथा 'तथा पदसमूहेकत्र पदशक्त्या प्रतीयते। समानप्रत्यय श्रुत्या धर्मीयस्या क्रियाऽङ्गता॥' इति। (वा. ३।३।७।१४ पृ ८४०) बाल पृ. ४१, ४२.

■ उपसर्जनिरूपणानिमित्तोऽप्यपवादः उपसंज्ञानिमित्तमपि उत्सर्गं बाधते। पृ. २४९, परि. ६५. 'प्रकल्प्य चापवादविषय तत उत्सर्गोऽभिनिविशते' इत्येतन्मूलकमिदं नवीनाः पठन्ति। शेखर. पृ २४९। अनेन न्यायेन तनादेशादागमकलत्सिद्धेः। (त्युत्र इत्यादौ ज्यो तपमणप्रश्नेष्वर्ण) । तत्त्वप्रकाशिका. पृ. २०२। अनेन न्यायेन 'अतोऽम्' इत्यस्य विषये लुकः अप्रवृत्तिः। भूति. पृ. २०१.

● उपसंहारः अर्थजातविरोधित्वेन प्रबल्यसुपत्र पमनुसत्य नेतव्य. । वि. ३।३।१. ● उपसंहारः उपक्रमानुरोधेन बलात् स्वार्थाऽऽदिक प्रतिपद्यते। पराक्रमः. पत्रं १. ● उपसंहारः। काम्येषु कर्मसु सर्वाङ्गोपसंहार समर्थस्यैव अधिकार। भा. ६।३।२।८-१०.● उपसंहारः। तवाम विशेषणत्वेन उपसंह्रियते, यत् फलमयोगासमर्थं कथचित् परोक्षरूत्वा संयुज्यते यथा छाग-

देश्यम् । वा. ३।३।१२।३३ पृ. ८७९. ● उपसंहारः तन्मात्रसंकोचनार्थः । सु. पृ. ८. ● उपसंहारः न क्वचित् दर्विहोमे 'पृथिव्यै स्वाहा' इत्यादौ स्वाहाकारपुनःश्रवणस्य 'वषट्कारेण स्वाहाकारेण वा देवेभ्योऽन्नं प्रदीयते' इत्यनारभ्याधीतस्वाहाकारेण । भा. १०।८।१०।२०–२२, ● उपसंहारः षोडशिग्रहणस्य अङ्गिरसां द्विरात्रे । १०।५।१३।५३–५४, ● उपसंहारः । 'सप्तदश सामिधेनीरनुब्रूयात्' इति अनारभ्यविधेः वैमृधादिषु सामिधेनीविधिना उपसंहारः 'यत् सप्तदशं तत् वैमृधादिषु' इति । १०।८।९।१७–१९ ● उपसंहारः सामान्यप्राप्तस्य विशेषे निगमनम् । 'सामान्यविधिरस्पष्टः संह्रियेत विशेषतः ।' (बा. पृ. ९७७) अनारभ्यविधिः सामान्यविधिः, मित्रविन्दाऽऽदिप्रकरणस्थस्तु विशेषविधिः । मीन्या. ● उपसंहारात् अभ्यासः प्रबलः बहुनापस्य अभ्यासत्वात् । पराक्रमः. ८।१. ● उपसंहारे हि सामान्ये प्राप्तस्य विशेषे संकोचो भवति । यथा 'पुरोडाशं चतुर्धा करोति' इति पुरोडाशसामान्ये प्राप्तं चतुर्धाकरणं 'आग्नेयं चतुर्धा करोति' इत्याग्नेये संकोच्यते इति चेत् (न्यायसुधाकारोक्तं परिहारमाह–) तन्मात्रसंकोचार्थत्वात् उपसंहारस्य । (तद्दूषणाय संप्रदायमतमाह–) अन्ये तु उपसंहारो नाम सामान्यतः प्राप्तस्य विशेषे संकोचनरूपो व्यापाररूपो विधेः । तन्मात्रसंकोचः इति कोऽर्थः ? आग्नेयमात्रे संकोचो वा, सामान्यप्राप्तस्य विशेषमात्रे संकोचो वा ? । आद्ये अनारभ्याधीतसप्तदशत्वस्य मित्रविन्दाऽऽदिप्रकरणस्थेन वाक्येन उपसंहारो न स्यात्, आग्नेये संकोचाभावात् । द्वितीये चतुर्धाकरणस्य पुरोडाशमात्रे प्राप्तस्य आग्नेये संकोचवत् अनुयाजानुयाजसाधारण्येन प्राप्तस्य अनुयाजेषु संकोचात् उपसंहारः स्यादेव (तस्मात् न)। मीन्या. पृ. ४५५–५७.

● उपसंहारप्राबल्येन दहरकाशो ब्रह्म इति न निर्णयः, किंतु बहुलब्रह्मन्यायेन । पराक्रमः. ५७।१, ● उपसंहारप्राबल्येन निराकाङ्क्षस्य विधेः संयोगो न युक्तः । ४३।२.

● उपसंहाररूपः प्रतिषेधः अनेकविधः । उपसंहारविधिश्च नानाविधः । इदं सर्वं सोदाहरणं 'विधिर्द्विविधः' इति महति प्रबन्धे बाल–ग्रन्थे द्रष्टव्यम् ।

● उपसंहारस्थं उपक्रमस्थेन बाध्यते यथा 'उच्चैः ऋचा' इति ऋगादिपदं वेदोपक्रमेण । बाल. पृ. १४०.

● उपसंहारार्थम् । वैमृधादिषु सामिधेनीसप्तदशत्वपुनःश्रवणं अनारभ्याधीतसप्तदशत्वस्योपसंहारार्थम् । भा. १०।८।९।१७–१९.

॥ उपसंहारन्यायः । आग्नेयचतुर्धाऽधिकरणम् । आग्नेयचतुर्धाऽधिकरणन्यायः । चतुर्धाकरणम् । चतुर्धाऽधिकरणम् । आग्नेयस्यैव पुरोडाशस्य चतुर्धाकरणं, नाग्नीषोमीयादेः ॥

**स्थेयस्तु गुणसंयुक्तः साधारणः प्रतीयेत, मिथस्तेषामसंबन्धात् । ३।१।१५।२६ ॥**

भाष्यम्— दर्शपूर्णमासयोः समाम्नायते 'आग्नेयं चतुर्धा करोति' इति । तत्र संदेहः किं आग्नेये अग्नीषोमीये च ऐन्द्राग्ने च (इति) सर्वत्र चतुर्धाकरणं, किंवा आग्नेये एवेति । किं प्राप्तम् ? शेषः चतुर्धाकरणं, आग्नेयमिति देवतागुणसंयुक्तः साधारणः प्रतीयते । अग्नीषोमीयेऽपि स्यात्, ऐन्द्राग्नेऽपि । कुतः ? तावपि आग्नेयौ । यस्य अग्निर्देवता अस्ति स भवति, असौ आग्नेयः । तद्यथा या पितुश्च हविःयस्य च माता, सा हविःयस्य भवति, एवमिहापि । यदि आग्नेयस्य अग्नीषोमीयस्य च पुरोडाशस्य मिथः संबन्धो न भवेत्, तत आग्नेये एव चतुर्धाकरणं व्यवतिष्ठेत । भवति तु संबन्धः । तस्मादव्यवस्था । यथा 'आग्नेयस्य मस्तकं विभज्य प्राशित्रमवद्यति' इति सर्वेभ्यः प्राशित्रावदानं, एवं चतुर्धाकरणमपि ।

वा — यथासंयोगं अर्थव्यवस्था उक्ता । स तु संयोगः किं एकदेवतानामेव भवति, उत समस्तेनेति विचारः । किं चतुर्धाकरणविधौ आग्नेयशब्देन द्विदेवत्यो गृह्यते, न वेति । शक्यते इति ब्रूमः । कुतः ? 'शक्यते हि द्विदेवत्यः संलक्षयितुमेकया । अग्नीषोमहविर्योगो मनोतायामिवाग्निना ॥' यथाहि अग्निः अदेवता, न तु अग्नमेवः । समवेतत्वं च उपलक्षणता, न देवतात्वम् । न चात्र अग्निः कार्यसंयोगी, येन

अत्यन्तमाद्रियेत । किं तर्हि ? उपलक्षणार्थः । न च उपलक्षणानि यथाश्रुतान्येव उपांशुयाजान्तरालकालोपलक्षणार्थं पुरोडाशद्वयस्य पार्श्वे आश्रीयन्ते । ' तथा पात्नीवतेऽप्युक्तः तेन त्वष्टुरतन्त्रता । तथा डित्थस्य मातेति माता डित्थहर्यित्थयोः ॥ ' ( पात्नीवतशब्दस्य पत्न्युपलक्षणार्थत्वात् तेनैव उपलक्षणेन हेतुना त्वष्टुरन्वयः )। उपलक्षणशब्दयोः मिथः संबन्धाभावात् साधारणत्वम् । भाष्यकारेण तु एतदेव ( आनन्तर्यमचोदना ३।१।२४ इति सूत्रस्थं अचोदनापदम् ) अनुवदता उक्तम् ' मिथस्तेषामसंबन्धादचोदना स्यात् ' इति । भवति च एवंविधानां साधारणत्वं तथा च प्राशित्रे दृश्यते इति ( प्राशित्रावदानरूपः दोषः अग्निगुणसंयुक्तोऽपि साधारणः )।

व्यवस्था वाऽर्थसंयोगाल्लिङ्गस्यार्थेन संबन्धाल्लक्षणार्था गुणश्रुतिः ॥ २७ ॥

भाष्यम्— वाशब्दः पक्षं व्यावर्तयति । व्यवतिष्ठेत वा चतुर्धाकरणमाग्नेय एव, न साधारणं भवितुमर्हति । कुतः ? अर्थसंयोगात् । अग्निना देवतया अर्थेन एकदेवत्यस्य संयोगः, न द्विदेवत्यस्य अग्नीषोमीयस्य ऐन्द्राग्नस्य चेति । कुत. ? यस्य हि अग्नीषोमौ देवता, उभयविशेषणविशिष्टः संकल्पः क्रियते । तस्य अग्निः सोममपेक्षमाणो देवता, न निरपेक्षः । यस्य चाग्निः सोममपेक्षमाणो देवता, न तस्मात् तद्धित उत्पद्यते । समर्थाना हि स उच्यते । सापेक्षं चासमर्थम् । तस्माच्च तद्धितान्तेन निरपेक्षाग्निदेवत्येन द्विदेवत्यस्य अभिधानम्। अतो यत्र निरपेक्षोऽग्निर्देवता, तत्रैव चतुर्धाकरणमिति । देवतालिङ्गस्य हि सामर्थ्येन संयोगो भवति तद्धितार्थस्य, नास्ति सामर्थ्ये । अथ यदुक्तं यथा प्राशित्रावदानं सर्वेभ्यः क्रियते एवं चतुर्धाकरणमपीति । युक्तं प्राशित्रावदाने । न तत्रैवं संबन्धः क्रियते, आग्नेयस्य प्राशित्रमवद्यतीति । कथं तर्हि ? आग्नेयस्य मस्तकं विभज्येति । एकं होतद्वाक्यं 'प्राशित्रमवद्यति' इति द्वितीयं ' आग्नेयस्य मस्तकं विभज्य ' इति । तत्र आग्नेयस्य मस्तकादवद्यतीति गम्यते । अन्यस्य मस्तकात् अन्यस्माद्वेत्यनियमः । यदि तु तत्र वैश्वानराग्निदेवत्यो नाभविष्यत् , तदा आनर्थक्यपरिहाराय द्विदेवत्योऽप्यग्रहीष्यत । यत्तु

डित्थस्य मातेति , युक्तं तत्र । अन्याऽपेक्षं मातृत्वम् । ततो जातो डित्थः, एतावता संबन्धेन मातेत्युच्यते । नात्र किंचिदपेक्ष्यते । स च तावांस्तत्र संबन्धोऽस्तीति डित्थस्य मातेति युक्तं वचनम् ।

वा— ' यथैव हि प्रकृत्वेन चमसा नोपलक्षिताः । आग्नेयत्वं तथा न स्याद् द्विदेवत्योपलक्षणम् ॥ ' उद्दिश्यमानं अतन् निरक्षितमित्युक्तम् । न च अग्नीषोमीयैन्द्राग्नयोः आग्नेयत्वमस्ति । नहि अत्र अग्निसत्तामात्रमुपलक्षणम् । किं तर्हि ? तद्धितोपात्तं देवतात्वम् । अग्निः पुनः तद्विशेषणम् । या चोद्दिश्य द्रव्यं त्यज्यते सा देवता । न च द्विदेवत्यः अग्निमुद्दिश्य त्यज्यते । ' नहि व्यासक्तं विज्ञानमेकेन व्यपदिश्यते । नाग्नीषोमीय आग्नेय ऐन्द्राग्नो वा तदुच्यते ॥ तद्धितार्थोऽत्र लिङ्गं हि समर्थानां च तद्धितः । असमर्थात् समासस्थाच्च नाग्नेरस्ति तद्धितः ॥ ' आग्नेय. इति यो निरपेक्षाग्निदेवत्यः सोऽभिधीयते । न च द्विदेवत्ये निरपेक्षोऽग्निर्देवता । तेनायं तद्धितः नाग्नीषोमीयादिगताग्निशब्दात् उत्पद्यते इति न तदर्थस्य देवतात्वमाह । यत्र तु असौ निरपेक्षो देवता, [illegible] शक्यं आग्नेय इति वक्तुम् । यत्तु प्राशित्रवदिति , तदुच्यते । देवताविशेषलक्षणार्था अस्मिन् आग्नेयगुणश्रुतिः । सामान्यलक्षणेन सर्वत्र प्राशित्रावदाने प्राप्ते मस्तकविरोगविशेषविधानार्थं एतद्वचनं इति वैषम्यम् ।

' स्थितेऽधिकरणे त्वेवं प्रत्यवस्थीयते पुनः । अविशेषादुभौ वेति कातीयवचनश्रुतेः । उक्तं कात्यायनेनेह दृष्ट्वा शातपथीं श्रुतिम् ॥ ' ' तं चतुर्धा कृत्वा पुरोडाशं बर्हिषदं करोति ' इति । प्रत्युच्यते । ' सत्यमस्ति श्रुतिर्वैषमविशेषेण दृश्यते । विशेषे स्थाप्यते सा तु नित्यं शाखान्तरीयया ॥ ' प्राशित्रेऽपि तथेति चेन्न, गुणार्थत्वात् । ' मस्तकं विभज्य ' इति गुणपरत्वात् अशक्यः सामान्यविधिरुपसंहर्तुम् । इदं तु निर्गुणं पुनर्वचनं शक्नोति सामान्यं स्वविषये स्थापयितुम् । दूरस्थत्वाद् अशक्यः अन्योपसंहार इति चेन्न, ' यस्य येनार्थसंबन्धः ' ( दूरस्थेनापि तस्य सः ) अर्थतो ह्यसमर्थानामानन्तर्यमकारणम् ॥ ' इति

-लोकयोगः ) इति न्यायात् । तेन '**अवश्यमेव सामान्यं विशेषं प्रति गच्छति । गतमात्रं च तत् तेन विशेषे साध्यते ध्रुवम् ॥**' अथवा विशेषेण प्राप्तत्वात् सामान्यमनूद्यते बर्हिरवस्करणविधानार्थम् । अथ तदपि प्राप्तं, ततः क्रमार्थं श्रवणमिति वक्तव्यम् । अतश्च आग्नेयस्यैव चतुर्धाकरणं इति सिद्धम् । 'यदि तु तत्र केवलाग्निदेवत्यो नाभविष्यत्' इति (भाष्यं) 'लक्षणायां गुणश्रुतिः' इत्येतस्यैव ( सूत्रवाक्यस्य ३।१।१५।२० ) व्याख्या । केवलदेवत्याभावे हि मनोतायामिव अग्निशब्दः उभौ लक्षयेत् । तदर्था वा गुणश्रुतिर्भवेत् । अस्ति तु एकदेवत्यः, तस्मात् तस्यैव चतुर्धाकरणम् । यद्यपि च उपलक्षणं कार्ययोगि न भवति, तथापि तेनानुपलक्षितं न शक्यं ग्रहीतुं इति एकदेवत्यस्यैव ग्रहणं इति सिद्धम् ।

**शा**— '**अग्नेः संबन्धमात्रेण भवेद् द्रव्योपलक्षणम् । संबन्धाविशिष्टोऽतः सर्वेषामुपलक्षणम् ॥**' इति प्राप्ते, ब्रूमः '**केवलदेवतावाची तद्धितोऽग्नेः समुच्चयम् । नान्ययुक्ताग्निदेवत्वं प्रतिपादयितुं क्षमः ॥**'

**सोम**— व्यस्तसमस्तयोः व्यवस्थाप्रकारणं समाप्य इदानीं प्रयोग एव किमेकदेवेन, उत समस्तेन इति विचार्यते इति संगतिः । यद्यपि विशेषवचनस्य सामान्येन न सामान्यवचनप्राप्तोपसंहारकत्वं, यथात्वे 'न ब्राह्मणं हन्यात्' इतिसामान्यवचनस्यापि 'नात्रेयं हन्यात्' इतिविशेषवचनेन उपसंहारप्रसङ्गात् । किंतु यत्र सामान्यवचनानुष्ठानाय विशेषापेक्षा, तत्रैव विशेषे उपसंहारः । प्रकृते च चतुर्धाकरणस्य प्रतिपत्तिरूपतया सर्वापेक्षिकत्वेन सामान्यवचनस्य पुरोडाशमात्रे चतुर्धाकरणानुष्ठापकत्वोपपत्त्या अनुष्ठानाय विशेषापेक्षाविरहात् नोपसंहारकत्वं विशेषवचनस्य संभवति, तथापीह सामान्यवचनं न चतुर्धाकरणविधायकं, किंतु लाघवात् बर्हिरवस्तरणमात्रस्य क्रमस्य वा विधायकम् । ततः चतुर्धाकरणांशे अनुवादकत्वात् तस्य प्रापकाग्नेयवचनानुसारेण विशेषविषयत्वं पर्यवस्यति । सूत्रार्थस्तु— अन्योन्यसंबन्धतया गुणभूताग्नि-संयुक्तः शेषः अग्नीषोमीयादिसाधारणः प्रतीयते, उपलक्षणाना विशेषणाना च परस्परमसंबन्धादिति ।

**वि**— '**चतुर्धा कार्यं आग्नेयः पुरोडाश इतीरितम् । चतुर्धाकरणं सर्वशेषो वाऽऽग्नेयमात्रगम् ॥, उपलक्षणताऽऽग्नेये युक्ताऽतः सर्वशेषता । अग्नीषोमीय ऐन्द्राग्ने यतोऽस्त्याग्नेयता ततः ॥, नाऽऽग्नेयत्वं तयोर्मुख्यं केवलाग्न्यनुपाश्रयात् । तेनैकस्मिन् पुरोडाशे चतुर्धाकरणस्थितिः ॥**'

**भाट्ट**— दर्शपूर्णमासयोः 'आग्नेयं चतुर्धा करोति' इत्यत्र नाग्निदेवताकहविष्ट्वं उद्देश्यताऽवच्छेदकं, विशिष्टोद्देशे वाक्यभेदापत्तेः । अपि तु तद्धितोपात्तं हविष्ट्वमेव । कथंचिद्वा अग्निसंबन्धिहविष्ट्वं तथा । अस्ति च अग्निसंबन्धः अग्नीषोमीयादावपि । अथवा 'पुरोडाशं चतुर्धा करोति' इत्यनेन उपसंहारात् अग्निसंबन्धिपुरोडाशस्यैव तत्, न तु आज्यस्यापीति । अस्तु वा देवतात्वस्यापि कथंचिद्विवक्षा, तथापि द्विदेवत्येऽपि अग्नेः अस्त्येव देवतात्वम् । द्वंद्वान्ते श्रूयमाणस्य तद्धितस्य प्रत्येकमभिसंबन्धात् । अतः सर्वेषां चतुर्धाकरणम् । इति प्राप्ते, प्रयुक्तप्रयोगात् तद्धितस्य देवतात्वे एव शक्तस्य समन्यमानत्वकल्पनानुपपत्तेः । न तावत् अग्निसंबन्धित्वस्य विवक्षा । न च देवतात्वं द्विदेवत्ये प्रत्येकमपि, इतरेतरयोगरूपसाहित्यविशिष्टद्वंद्वेन साहित्यस्य विवक्षितत्वात् सहितयोरेव व्यासज्यवृत्त्यखण्डोपाधिरूपदेवतात्वाङ्गीकारात् । अत एव द्वंद्वान्ते इत्यादिपरिभाषा यत्र तद्वेधस्त्वेन साहित्याविवक्षा, तत्र इति ध्येयम् । अतः केवलदेवत्याग्निपरस्तद्धितः नान्यसापेक्षस्य देवतात्वं अभिधातुं क्षमः, सामर्थ्यविघातापत्तेः । यत्तु अग्निदेवताकत्वमविवक्षितमिति, तन्न । तत्पक्षे न तावत् प्रकृतद्रव्यमात्रं अपूर्वसाधनत्वलक्षकं, तस्य देवतातद्धितेन अनुक्तेः । नापि हविष्ट्वं, तत्पदार्थस्य देवतावाचित्वप्रतीतिं विना अनुपपत्तेः । नहि 'हविषि याच्ये देवतातद्धित एव' इति स्मृत्या नियम्यते, तद्धर्मित्वेऽपि समन्यसामान्ये तद्धितस्य प्रयोगात् । अतः प्रथमप्रतीतस्य देवतात्वस्यैव उद्देश्यताऽवच्छेदकत्वम् । तस्य तु अनुयोगित्वनियोगित्वापेक्षत्वात् हविर्मान्यायेन 'आग्नेयमष्टाकपालं' इत्यत्र अग्निदेवताकहविष्ट्वस्यैव लक्षणा

उद्देश्यताऽवच्छेदकत्वसिद्धिः। तेन च 'पुरोडाशं चतुर्धा करोति' इति सामान्यवचनस्य उपसंहारः। तस्मात् आग्नेयस्यैव पुरोडाशस्य चतुर्धाकरणम्।

**मण्डन—** 'चतुर्धाऽऽग्नेय एव हि।' १४.

**शंकर—** 'चतुर्धाऽऽग्नेय एव स्यात्।' १५.

* उपसंहारन्यायः। सामान्यविधेः विशेषपर्यवसाने सति सामान्यवचनस्य तदुपसंहारो न्याय्यः। अनारभ्याधीतस्य सामान्यस्य विशेषोपसंहारः न विशेषसंकीर्तनमात्रात्, किंतु अस्पष्टत्वात्। तथाहि, सामिधेनीनां सप्तदशत्वं अनारभ्यवादेनोक्तम्। तत्रावन्तं सामिधेनीद्वारा सर्पनिष्कृत्यर्थत्वं कल्पयितुमुपक्रम्यते, तावदेव मित्रविन्दाऽऽदिषु प्राकरणिकेन वाक्येन क्रतुविशेषसम्बन्धकृते क्षीणा अर्थापत्तिः न क्रत्वन्तरसंबन्धं कल्पयति, इति अस्पष्टक्रतुसम्बन्धात् सामान्यस्योपसंहारः। (अनेन ग्रन्थेन 'सामान्यविधिरस्पष्टः संह्रियेत विशेषतः' इति उपसंहारन्यायस्वरूपं विवृतम्) ; पराक्रमः. ३७।१–२.

* उपसंहारन्यायस्य स्वरूपं 'सामान्यविधिरस्पष्टः संह्रियेत विशेषतः' इति। (भा. ३।७।१४।२१ पृ. ९७७)। अस्यापवादस्तु, 'स्पष्टस्य तु विधेर्नान्यैरुपसंहारकल्पना' इति (उत्तरार्धोक्तः) न्यायः। को. २।३।६।१४ पृ ९६०.

● उपसत्। 'तिस्र एव साह्नस्योपसदः' इत्यादिवाक्यपर्यालोचनया पूर्वाह्णापराह्णोपसत्प्रयोगैक्यावसायः। सु. पृ. ७८७. ● उपसत् पूर्वाह्णापराह्णयोः अभ्यस्यमानं आग्नेयसौम्यवैष्णवयागत्रयमेकः उपसत्। तथाविधानां तिसृणां उपसदां ज्योतिष्टोमे विहितानां अवयवभूता प्रत्येकं आदौ आग्नेयी उपसत् 'अग्निमनीक' इति वाक्येन विहिता। तत्राग्नेय्यस्तिस्रो भवन्ति। एवं सौम्यः एवं वैष्णवः। के. ● उपसदः द्वादश अहीने द्वादशाहे च, तिस्रो ज्योतिष्टोमादौ एकाहे, षट् अग्निचयने। के. ● उपसदः 'द्वाभ्यां लोमावद्यति' इत्यारभ्य द्वादशोपसत्त्वं द्वादशाहिके धर्मे गवामयने दर्शयति। भा. ८।१।१०।१७. ● उपसदः नाम इष्टयः आतिथ्याया ऊर्ध्वं त्रिषु दिनेषु अनुष्ठीयन्ते। वि. ४।२।१३, * उपसदः नाम ज्योतिष्टोमादौ दीक्षादिवसादूर्ध्वं सोमाभिषवदिवसात् पूर्वं कर्तव्या होमाः। ३।३।१३. ● उपसदः साग्निचित्ये क्रतौ षट्। तत्र चोदकप्राप्तानां तिसृणामुपसदां स्वस्थानविवृद्ध्या षट्त्वं सम्पादनीयम्। तथा च प्रथमा + प्रथमा, द्वितीया + द्वितीया, तृतीया + तृतीया इति षट्त्वम्। न तु प्रथमा + द्वितीया + तृतीया, पुनः प्रथमा + द्वितीया + तृतीया, इति षट्त्वम्। के. ५।३।२।३. * उपसदां अहरवयवच्छेदेन त्रित्वम्। सु. पृ. ६९०. ● उपसदां दीक्षाणां च स्वस्थानविवृद्ध्या प्रयोगो द्वादशाहे। टुप्. ११।४।५।१८. ● उपसदां द्वादशाहे तन्त्रेणानुष्ठानं द्वादशानामहां सहप्रयोगविधानात्। वि. ९।१।९. * उपसदां पुरस्तात् सौम्यः, अन्तरा त्वाष्ट्रः, उपरिष्टाद्वैष्णवः पशुः कर्तव्यः. परन्तु न ते उपसदाम्। फलार्थः संयोगः। राजसूये। भा. ४।४।३।५–६, * उपसदां षट्संख्या सर्वसमाप्त्या न तु प्रत्येकं, चयने। ५।३।१।१–२. * उपसत्सु अग्नीषोमीये पशौ आतिथ्यायां च एकमेव बर्हिः। तत्र आतिथ्यायां बर्हिः संस्क्रियते। तेनैव संस्कारेण उपसत्सु अग्नीषोमीये च प्रसङ्गसिद्धिः। वि. १२।१।१९. * उपसत्सु आतिथ्यायां अग्नीषोमीये च बर्हिषः स्तरणमन्त्रः अभ्यावर्तते वैश्वदेवकत्वात्। भा. १२।१।२०।४४. * उपसत्सु आतिथ्याऽन्ते च (पञ्चदशरात्रे) या सुब्रह्मण्या निगद्यते, तस्या यथादेवतमेव तन्त्रभेदः, नास्ति तन्त्रेणोच्चारणम्। तस्मात् द्वे अपि सुब्रह्मण्ये व्याह्वातव्ये। टुप्. १२।२।७।२२ ■ उपसत्सु उपांशु अनुब्रूयात्। अयं स्वरः उपसत्पूर्वप्रयुक्तः, न परमात्पूर्वप्रयुक्तः। ज्योतिष्टोमे। भा. ९।१।२।२–३ वर्णकं २, * उपसत्सु गृहमेधीये च वैरिती एवेतिकर्तव्यता। ७।४।२।२–१२, * उपसत्सु बर्हिःप्रोक्षणस्य आतिथ्याबर्हिःप्रोक्षणेन प्रसङ्गसिद्धिः। १२।१।१९।४३–४४.

■ उपसत्सु यावदुक्तमकर्म स्यात्। १०।७।४।४३॥

ज्योतिष्टोमे उपसदः नाम इष्टयः। तासु उपसत्सु उपसत्प्रकरणे यावत् उक्तं तावदेव कर्तव्यम्। इतरत्तु प्राकृतं चोदकप्राप्तं अकर्म स्यात्। क्रियते इति कर्म,

कर्तुं योग्यमित्यर्थः । न कर्म अकर्म । इतरत् सर्वं न कर्तव्यम् । इति सिद्धान्तपक्षोक्तः ।

स्रौवेण वाऽगुणत्वाच्छेषप्रतिषेधः स्यात् । ४४॥

उक्तपक्षनिरासार्थो वाशब्दः । कथं तर्हि निर्णय-स्तदुच्यते । 'स्रुवेणाघारमाघारयति' इति स्रौवः आघारः श्रुतः । स्रुवेण कृतः स्रौवः प्रथमाघारः । स च अगुण एव श्रुतः । अविद्यमानः अपूर्वो गुणो यस्यासौ अगुणः । असौ हि प्राकृत एव अपूर्वगुणशून्यः श्रुतः । तथा च स्रुवेण कर्तव्यस्याघारस्य अगुणत्वात् प्राकृतस्यैव श्रुतत्वात् तेन स्रौवेण आघारेण प्राकृतस्य शेषस्य प्रथमाघार-भिन्नस्य सर्वस्याङ्गजातस्य प्रतिषेधः स्यात् । चोदकप्राप्त-स्यापि पुनर्विधानात् परिसंख्येयम् । इतरत् सर्वं परि-सङ्ख्यातम् । तस्मात् प्रथमाघारभिन्नं किं चिन्न कर्तव्यं इति पक्षान्तरम् ।

अप्रतिषिद्धं वा, प्रतिषिध्य प्रतिप्रसवात् ।४५॥

पक्षान्तरप्रतिषेधार्थो वाशब्दः । 'स्रुवेणाघारयति' इति नेयं परिसंख्या । कुतः ? प्रतिषिध्य प्रतिप्रसवात् । 'नान्यामाहुतिं पुरस्ताज्जुहुयात्' इति उपसत्प्रधान होमात् प्राक् होमसामान्यं प्रतिषिध्य 'स्रुवेणाघारयति' इति स्रौवस्याघारस्य प्रतिप्रसूतत्वात् । तस्मात् प्रतिप्रसवोऽयं, न परिसंख्या । ततश्च अप्रतिषिद्धं प्रतिषिद्धं प्रयाजादि वर्जयित्वा अन्यत् सर्वं प्राकृतं कर्तव्यम् । इति अन्यः पक्षः ।

अनिज्या वा शेषस्य, मुख्यदेवताऽनभीज्य-त्वात् । ४६ ॥

वाशब्दः प्रतिप्रसवपक्षस्य निरासार्थः । 'नान्या-माहुतिं जुहुयात्, स्रुवेणाघारयति' इति नायं प्रति-षिध्य प्रतिप्रसवः । किन्तु 'नान्या' इत्यनेन मुख्यदेवता-ऽनभीज्यत्वमुक्तम् । मुख्यास्तु एव सोमस्य विष्णोश्च देवताया. अग्नेः प्राक् अनभीज्यत्वाभावो हि अनेनोक्तः । 'नान्यामाहुतिं पुरस्तात्' आग्नेय्या आहुतेः प्राक् 'जुहुयात् अग्निर्हि मुखं' इत्यभिधानात् । ततश्च नायं प्रतिप्रसवः । तस्मात् शेषस्य स्रौवाघारभिन्नस्य प्राकृतस्य अनिज्या न इज्या यागाभावः । शेषो न कर्तव्यः इत्यर्थः । तस्मात् उपसदः अपूर्वं कर्म, यावदुक्तं कर्तव्यं इत्येष सिद्धान्तः । के.

* उपसत्सु होममन्त्राः 'या ते अग्नेऽयाशया तनूर्वर्षिष्ठा गह्वरेष्ठा उग्रं वचो अपावधीत् (धीं) त्वेषं वचो अपावधीत् (धीं) स्वाहा' 'या ते अग्ने रजाशया (तनू०)' 'या ते अग्ने हराशया (तनू०)' इत्याम्नाताः । तत्र प्रथममन्त्रस्थः 'तनूर्वर्षिष्ठा:' इत्यादिः अन्तिमो भागः द्वितीये तृतीये चापि मन्त्रे अनुषञ्जनीयः । वि. २।१।१६.

* उपसत्कालीनं सुब्रह्मण्याऽऽह्वानं अहर्गणे तन्त्रम् । भा. ११।३।१०।२३, * उपसत्कालीने सुब्रह्मण्याऽऽ-ह्वाने 'चतुरहे सुत्यामागच्छ' इत्यत्र चतुर्दशाहे आगच्छ, त्रयोदशाहे आगच्छ, इत्यादिरूपेण सुत्याहानि नोपलक्षयितव्यानि, अविकारेण प्रयोगः । द्वादशाहे । ११।४।७।२७-२९.

* उपसदावीनि ऐकाग्निकसोमयागविहानि । भा. २।३।१०।११.

* उपसद्दिने मध्यमोपसद्दिने उत्तरवेदिः कर्तव्यतया विहिता । संकर्ष. २।१।२६, * उपसद्दिनेष्वेव अग्निश्चेतव्यः, न तु पूर्वम् । २।१।२७.

* उपसद्धर्माः उपसत्पूर्वप्रयुक्ता एव, न ज्योति-ष्टोमीयपरमापूर्वप्रयुक्ताः । वि. ९।१।२ वर्णकं २.

* उपसद्विवृद्धौ स्वस्थानविवृद्ध्या अधिकसंख्या-पूरणम् । भा. ५।३।२।३.

♛ उपसत्स्वस्थानविवृद्धिन्यायेन (५।३।२।३) प्रयाजानामेकादशत्वसिद्ध्ये स्वस्थानविवृद्धौ उत्तमः प्रयाजस्त्विरभ्यसनीयः । वि. ५।३।२.

♛ उपसन्न्यायः । उपसदः अपूर्वाः ॥

उपसत्सु यावदुक्तमकर्म स्यात् । १०।७।१४।४३ ॥

भाष्यम्— अस्ति ज्योतिष्टोमः । तत्रेदमाम्नायते 'षडुपसद उपसाद्यन्ते' इति । ताः प्रकृत्य आमनन्ति 'अप्रयाजास्ता अननुयाजाः' इति । तत्र संशयः किं यावत् प्रतिषिद्धं तावन्न कर्तव्यं अन्यत् सर्वं कर्तव्यं, अथ किं यावदुपदिष्टं तावत् कर्तव्यं अन्यत् सर्वं न कर्तव्यं, अथवा अपूर्वा उपसदः इति । किं प्राप्तम् ? उपसत्सु

'अप्रयाजाः' इत्ययं प्रयाजानुयाजमात्रपर्युदासः इति द्वितीयः। वस्तुतस्तु– 'स्रुवेणाघारमाघारयति' इत्यस्यानुवादत्वेनोपलक्षणत्वे प्रमाणाभावात् स्रक्त्वनिषिद्धत्वे अपि नापूर्वतापरत्वं, अपितु आघारत्वावच्छेदकावच्छेदेन स्रुवमानविधानं, तत्र च पूर्वाघारे स्रुवप्राप्तावपि उत्तराघारे तत्प्राप्तिः फलम्। हिरण्यगर्भमन्त्रकाद्धा तन्मात्रे स्रुवविधानं, तत्राप्यस्य आघारविधायित्वाभावात् नापूर्वतापरत्वमिति तृतीयः। सिद्धान्तस्तु, 'नान्यामाहुतिं पुरस्ताज्जुहुयात्' इत्यस्य पृथङ्निषेधविधित्वकल्पने वाक्यभेदापत्तेः अस्यार्थवादत्वानुसारात् न तावदाद्यः पक्षः। पाठक्रमादेव आग्नेयाः प्रधानप्राथम्यसिद्धेः, ततः पूर्वमन्यस्या आहुतेः प्रधानभूताया अप्रसक्त्यादेव तन्निषेधानुवादानुपपत्तेः 'आघारमाघारयति' इत्यस्य उपलक्षणत्वेन अनुवादत्वाङ्गीकारे वैयर्थ्यप्रसङ्गाच्च न द्वितीयोऽपि। अत एव अग्निर्मुखमित्येव प्रधानस्तुतिः। नान्यामित्यादिस्तु स्रुवेणेत्यस्य विधेः शेषः। प्रधानस्य पुरस्तात् पूर्वं स्रौवाघारादन्यामाहुतिं उत्तराघारप्रयाजाज्यभागादिरूपां न जुहुयात्। अतो लाघवात् स्रौवाघार एव कार्यः इति तत्स्तुतिः। अत एव नोत्तराघारे स्रौवनिषिद्धिरिति तृतीयोऽपि, अर्थवादानुसारेण अस्य धान्त्र्यविधिमात्रपरत्वनिश्चयात्। सुत्रमात्रविधौ प्रधानात् पूर्वमाहुत्यन्तरस्यापि प्रसक्तेन तन्निषेधानुवादानुपपत्तेः। अतोऽत्र स्रौवाघारस्यैव निषेधनात् आज्यभागाभ्यन्तरत् अपूर्वतापरत्वमेव। अप्रयाजा इति च तस्यैव औचित्येन स्तुतिरिति सिद्धम्। ११।४।१२.

मण्डन— 'न चोदकेनाङ्गनिषेधकल्पनुः।'

शंकर— 'स्रुग्व्यपूर्वा उपसदः।'

० उपसर्गः अर्थद्योतकः तस्य अर्थाभिधाने व्यापारो नैव विद्यते (श्लोको मत्ता नीतः)। वा. १।३।१।१३ पृ. १०६. ० उपसर्गाः वाचकः इत्येकः पक्षः, द्योतकः इत्यपरः पक्षः। द्योतकत्वेऽपि विनियोजकश्रुतित्वा विधानः। याल. पृ. ४१, ० उपसर्गः विनियोजिका श्रुतिः वाचकत्व–द्योतकत्व–पक्षद्वयेऽपि। पृ. ४१. ० उपसर्गस्य शब्दान्यनियमः। सोम. १०।८।५. ० उपसर्गाणां परम्परान्वयव्युत्पत्तिः। भाट्ट. १०।४।६. ० उपसर्गाणां स्वतन्त्रार्थाभिधायकत्वं नास्ति। के.



☒ उपसर्गन्यायः। यत्रैकवस्तुनः उपाधिभेदेन नानात्वविवक्षा, तत्रायं प्रवर्तते। (भिन्ना उपसर्गाः एकमेव धातुं नानाऽर्थकं कुर्वन्ति 'प्रहाराहारसंहारविहारपरिहारवत्' तद्वदत्रेति)। साहस्री. ७८२.

० उपसर्गरूपा निपातरूपाश्च उपशब्दाः। प्र, परा, अप, सम्, अनु, अव, निस्, निर्, दुस्, दुर्, वि, आङ्, नि, अधि, अपि, अति, सु, उद्, अभि, प्रति, परि, उप इत्युपसर्गा द्वाविंशतिः। एवम्भिन्ना नञादयो निपाताः। प्रादीनां च धातुसमभिव्याहारे एव उपसर्गत्वं निपातत्वं च। तत्रापि कश्चित् धात्वर्थमतिक्रम्य वर्तते। कश्चित्तमेव विशिनष्टि। यथा प्रस्थानं, पराजयः, प्रवेशः, विजयः इति। अत्र गमनजयाभावौ उपसर्गार्थौ। प्रविशति इत्यादौ तद्विशः प्रकर्षः, विजयते इत्यादौ जयस्यैव विशेषः। चादिनिपातानां केषांचित् केवलप्रयोगेऽपि सहप्रयुज्यमानपदार्थान्वयित्वं तदर्थानाम्। यथा 'तदस्य स्वानर्थान् घटयति च मौनं च भजते' 'विकारः कोऽप्यन्तर्जडयति च तापं च कुरुते' इत्यादौ लोके, 'मैत्रावरुणः प्रेष्यति चानु चाह' इत्यादौ वेदे समुच्चयः। चार्थो भावनाऽन्वयी। 'घटं च पटं चानय' इत्यादौ लोके, 'यदग्नये च प्रजापतये च' इत्यादि वेदे च पदार्थान्वयित्वात्। तेन अग्निनिरूपितसमुच्चयस्य प्रजापतौ विशेषणत्वेन, समुच्चयस्य भावनाऽन्वयाभावेन न विधिः, किंतु समुच्चयविशिष्टप्रजापतिविधिः। न चैवं 'गौश्चाश्वश्च' इत्यत्र दक्षिणोद्देशेन समुच्चयविधिर्न स्यात्, इष्टापत्तेः। विशिष्टदक्षिणाविध्यङ्गीकारात्। तस्याश्च 'ऋत्विग्भ्यो ददाति' इति विनियोगः चमसाध्वर्युप्रभृतयः। एवञ्च दर्शने स्फुटम्। तत्र उपसर्गा द्योतकाः, न वाचकाः। प्रजयति इत्यादौ प्रकृष्टजयादौ विधानादेः त्वाद्यर्थैवोपपत्तेः, तत्र शक्तिकल्पने गौरवात्, प्रतिष्ठते इत्यत्र गमने प्रकर्षार्थे विभक्त्यर्थान्वयप्रसङ्गात्, प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वात्। न चैवं नञोऽपि अभावे शक्तिर्न स्यात् इति वाच्यम्। 'भूतले न घटः' इत्यत्र घटपदलक्षितघटस्य नामार्थयोः भेदान्वयाव्युत्पत्त्या भूतले अनन्वयापत्तेः। भेदस्य नञर्थत्वे तु

यावदुक्तं न कर्तव्यम् । 'अप्रयाजास्ता अननुयाजाः' इति प्रयाजानुयाजानां प्रतिषेधं कृत्वा कृतार्थः शब्दः अपशिष्टान् चोदकप्राप्तान् न वारयति । तस्मादशिष्टं सर्वं कर्तव्यमिति ।

**स्रौवेण वाऽगुणत्वाच्छेषप्रतिषेधः स्यात् ॥ ४४ ॥**

**भाष्यम्—** न चैतदस्ति, प्रतिषिद्धं वर्जयित्वा सर्वं कर्तव्यमिति । यावदुपदिष्टं कर्तव्यम् । स्रौवेण आघारेण सर्वमन्यत् परिसंख्यायते । अविशिष्टो हि असौ स्रौव आघारः पुनराम्नायते । न तत्र कश्चिद् गुणो विशिष्टः श्रूयते । तस्मात्तेन तत् परिसंख्यायते ।

**अप्रतिषिद्धं वा, प्रतिषिध्य प्रतिप्रसवात् ॥ ४५ ॥**

**भाष्यम्—** न चैतदस्ति यावदुक्तं कर्तव्यं अशिष्टं नेति । किं तर्हि ? सर्वं कर्तव्यं प्रतिषिद्धं वर्जयित्वेति । एवं हि श्रूयते 'अप्रयाजास्ता अननुयाजास्ताः' इति । एवं प्रतिषेधं कृत्वा कृतार्थः शब्दो नान्यस्य वाचको भवितुमर्हति । यदुक्तं, निर्गुणं स्रौवाघारश्रवणमिति । प्रतिप्रसवोऽयं, न परिसंख्या । एवं श्रूयते, 'नान्यामाहुतिं पुरस्ताज्जुहुयात् । यदन्यामाहुतिं पुरस्ताज्जुहुयादन्यन्मुखं कुर्यात् । स्रुवेणाघारमाघारयति' इति । नान्यामाहुतिं पुरस्ताज्जुहुयात् प्राकृतीभ्यः । एता हि आघारादिका आहुतयः सर्वेष्टीनां मुखम् । यत् अन्यामाहुतिं औपसदीं अग्न्यादिकां जुहुयात्, अन्यत् मुखं कुर्यात् । तस्मात् स्रुवेण आघारमाघारयति इति आघारादिका आहुतीः जुहोति इति आघारादीनामभावमाशङ्क्य पुनः प्रतिप्रसवोऽयं आघारमाघारयतीति । नान्यत् न करोति, किं तर्हि ? आघारमाघारयति, न नाघारयतीति । तस्मान्न परिसंख्या । प्रतिषिद्धं वर्जयित्वा सर्वं कर्तव्यं इति ।

**अनिज्या वा शेषस्य, मुख्यदेवताऽनभीज्यत्वात् ॥ ४६ ॥**

**भाष्यम्—** अथवा, अपूर्वा उपसदः । अनिज्या प्राकृतस्य शेषस्य । नित्यानुवादोऽयं, 'अप्रयाजास्ता अननुयाजाः' इति । मुख्यदेवता अनभीज्या उद्दिश्य प्रधानदेवता विधीयन्ते । नान्यामाहुतिं पुरस्ताज्जुहुयात् आग्नेय्याः अग्निर्हि मुखमित्यभिधाय, यदन्यामाहुतिं पुरस्ताज्जुहुयात् वैकृतीं, अन्यन्मुखं कुर्यादाग्नेय्याः । अग्निर्हि मुखम् । स्रुवेणाऽऽघारमाघारयति, नान्यं यजते अग्निमनीकं, सोमं शल्यं, विष्णुं तेजनमिति । तदेतदाघारेण निराकाङ्क्षीकृतं नान्येन प्राकृतादिना सह एकवाक्यतामेति । अतः प्रथमा मुख्यदेवता अनभीज्याः अत्रोपदिश्यन्ते । नान्यं यजति, तस्मादग्निः प्रथमः इज्यते इति ।

**सोम—** 'न पत्नीः संयाजयन्ति' इत्यस्य अनुवादत्वेऽपि 'अप्रयाजाः' इत्यादेः नानुवादत्वं इत्युत्थानात् प्रत्युदाहरणसंगतिः । सूत्रार्थस्तु– उपसत्सु यावदुक्तां कर्म स्यात् प्रतिषिद्धवर्जं यावत् कर्तव्यं स्यात् इति ।

**वि—** 'उपसत्सु निषिद्धेभ्यः शिष्टं सर्वं क्रियामाचरेत् । यावदुक्तमुता, ऽऽद्योऽस्तु चोदकस्यानिवारणात् ॥, स्रौवाघारे पुनःश्रुत्या शिष्टस्य परिसंख्यया । अपूर्वार्थत्वतो वाऽन्त्योऽनुवादोऽत्र निषेधगीः ॥' परिसंख्यार्थ एव आघारस्य पुनर्विधिः । आहुत्यन्तरनिन्दा तु तच्छेषभूतोऽर्थवादः । यदि परिसंख्या त्रिदोषा इत्युच्येत, तर्हि गृहमेधीयवत् अपूर्वं कर्मास्तु । प्रयाजादिनिषेधो नित्यानुवादः । सर्वथा यावदुक्तमनुष्ठेयम् ।

**भाट्ट—** ज्योतिष्टोमे उपसदो नाम 'अग्निमनीकं, सोमं शल्यं, विष्णुं तेजनं' इति प्रधानत्रयं विधाय 'अग्निर्हि मुखं' इत्यनेन स्तुत्वा 'नान्यामाहुतिं पुरस्ताज्जुहुयाद्यदन्यामाहुतिं पुरस्तात् ( जुहुयात् ) अन्यन्मुखं कुर्यात् स्रुवेणाऽऽघारमाघारयति' इति श्रुतम् । तथा 'अप्रयाजास्ता अननुयाजास्ताः' इति च । तत्रोपसदां किं गृहमेधीयवदपूर्वत्वं न वेति चिन्तायां, 'नान्यामाहुतिं पुरस्ताज्जुहुयात्' इत्यनेन प्रधानपूर्वभाव्याहुतिमात्रपर्युदासात् आघारस्यापि पर्युदासे प्राप्ते, 'स्रुवेणाघारमाघारयति' इत्यस्य प्रतिप्रसवत्वेन सार्थक्यात् नास्त्यत्र पाकाशक्यतायाम्, अपूर्वत्वम् । अत एव अप्रयाजाः इत्याद्यनुवादो नन्वपर्युदासपक्षार्थः । तत्रश्चोत्तराघारप्रयाजाज्यभागानूयाजवर्जं सर्वं प्राकृताङ्गजातं कार्यमित्येकः पक्षः । यद्वा नान्यामित्यादिः स्रुवेणाघारमाघारयति इत्यन्तः सर्वोऽपि प्रधानविधेरर्थवादः । अन्यां आग्नेयीतोऽन्यां प्रधानाहुतिम् । तत्र हेतुः अग्निर्मुखमिति । अङ्गत्वात्तु स्रौवाघारादिकरणेऽपि न दोष इति च स्तुतिः । अतश्च सर्वाङ्गकरणे अतिदेशेन प्राप्ते,

'अप्रयाजाः' इत्ययं प्रयाजानुयाजमात्रपर्युदासः इति द्वितीयः। सन्त्वत्र– 'स्रुवेणाघारमाघारयति' इत्यस्यानुवादत्वेनोपलक्षणत्वे प्रमाणाभावात् स्वतन्त्रविधित्वे अपि नापूर्वतापरत्वं, अपितु आघारत्वावच्छेदकावच्छेदेन स्रुवमानविधानं, तत्र च पूर्वाघारे स्रुवप्राप्तावपि उत्तराघारे तत्प्राप्तिः फलम्। हिरण्यगर्भमन्त्राद्वा तन्मात्रे स्रुवविधानं, ततश्चास्य आघारविशेषविषयत्वाभावात् नापूर्वतापरत्वमिति तृतीयः। सिद्धान्तस्तु, 'नान्यामाहुतिं पुरस्ताज्जुहुयात्' इत्यस्य पृथङ्निषेधविधित्वकल्पने वाक्यभेदापत्तेः अस्यार्थवादत्वावसायात् न तान्त्रदाद्य. पक्षः। पाठक्रमादेव आग्नेय्याः प्रधानप्राथम्यसिद्धेः, ततः पूर्वमन्यस्या आहुतेः प्रधानभूताया अप्रसक्तत्वादेव तन्निषेधानुवादानुपपत्तेः 'आघारमाघारयति' इत्यस्य उपलक्षणत्वेन अनुवादत्वाङ्गीकारे वैयर्थ्यप्रसङ्गाच्च न द्वितीयोऽपि। अत एव अग्निर्मूर्धेति येव प्रधानश्रुतिः। नान्यामित्यादिस्तु स्रुवेणेत्यस्य विधेशेषः। प्रधानस्य पुरस्तात् पूर्वं स्रौवाघारादन्यामाहुतिं उत्तराघारप्रयाजाज्यभागादिरूपां न जुहुयात्। अतो न्यायात् स्रौवाघार एव कार्यः इति तत्स्तुतिः। अत एव नोत्तराघारे स्रौवविधिरिति तृतीयोऽपि, अर्थवादानुसारेण अस्य प्रागर्थविधिमात्रपरत्वनिश्चयात्। स्रुवमानविधौ प्रधानात् पूर्वमाहुत्यन्तरस्यापि प्रसक्तत्वेन तन्निषेधानुवादानुपपत्तेः। अतोऽत्र स्रौवाघारस्यैव विधेयत्वात् आज्यभागाभवणाद् अपूर्वतापरत्वमेव। अप्रयाजा इति च तस्यैव औचित्येन स्तुतिरिति सिद्धम्। ११।७।१२.

मण्डन— 'न चोदकेनाङ्गविधोपयस्तु।'

शंकर— 'स्रुग्व्यपूर्वा उपसद.।'

■ उपसर्गः अर्थद्योतकः तस्य अर्थाभिधाने व्यापारो नैव विद्यते (श्लोको गद्यतां नीतः)। वा १।३।१।२१ पृ. १०६, ● उपसर्गः वाचकः इत्येकः पक्षः, द्योतकः इत्यपरः पक्षः। द्योतकत्वेऽपि विनियोजकश्रुतित्वाविघातः। बाल. पृ. ४१, ● उपसर्गः विनियोजिका श्रुतिः वाचकत्व-द्योतकत्व-पक्षद्वयेऽपि। पृ. ४१.
● उपसर्गस्य पारतन्त्र्यनियमः। सोम. १०।४।५.
● उपसर्गाणां परस्परान्वयव्युत्पत्तिः। भाट्ट. १०।४।६.
● उपसर्गाणां स्वतन्त्रार्थाभिधायकत्वं नास्ति। के.



☞ उपसर्गन्यायः। यत्रैकमस्त्रं उपाधिभेदेन नानार्थविवक्षा, तत्राय प्रवर्तते। (भिन्ना उपसर्गाः एकमेव धातुं नानाऽर्थकं कुर्वन्ति 'प्रहाराहारसंहारविहारपरिहारवत्' तद्वदन्यत्रेति)। साहस्री. ७८२.

● उपसर्गरूपा निपातरूपाश्च उपशब्दाः। प्र, परा, अप, सम्, अनु, अव, निस्, निर्, दुस्, दुर्, वि, आङ्, नि, अधि, अपि, अति, सु, उद्, अभि, प्रति, परि, उप इत्युपसर्गा द्वाविंशतिः। एतद्भिन्ना चनादयो निपाताः। प्रादीनां च धातुसमभिव्याहारे एव उपसर्गत्वं निपातत्वं च। तत्रापि कश्चित् धात्वर्थमतिक्रम्य वर्तते। कश्चित्तमेव विशिनष्टि। यथा प्रस्थानं, पराजयः, प्रवेशः, विजयः इति। अत्र गमनजयाभावौ उपसर्गार्थौ। प्रविशति इत्यादौ तद्विशेषः प्रकर्षः, विजयते इत्यादौ जयलाभे विशेषः। चादिनिपातानां केषां चित् केवलप्रयोगाभावेऽपि सहप्रयुज्यमानपदार्थान्वयित्वं तदर्थानाम्। यथा 'तटस्थः स्वानर्थान् घटयति न मौनं च भजते' 'विकारः कोऽप्यन्तर्जडयति च तापं च कुरुते' इत्यादौ लोके, 'मैत्रावरुणः प्रेष्यति चानु चाह' इत्यादौ वेदे समुच्चय.। चार्थो भावनाऽन्वयी। 'घटं च पटं चानय' इत्यादौ लोके, 'यजमाने च प्रजापतये च' इत्यादि वेदे च उपपदार्थान्वयित्वम्। तेन अभिनिरूपितसमुच्चयस्य प्रजापतौ विशेषणत्वेन, समुच्चयस्य भावनाऽन्वयाभावेन न विधि., किंतु समुच्चयविशिष्टप्रजापतिविधिः। न चैव 'गौश्चाश्वश्च' इत्यत्र दक्षिणोद्देशेन समुच्चयविधिर्न स्यात्, इष्टापत्तेः। विशिष्टदक्षिणाविध्यङ्गीकारात्। तस्माच्च 'ऋत्विग्भ्यो ददाति' इति विनियोग. चमसाध्वर्यु-मानुषयोः। एतच्च दशमे स्फुटम्। तत्र उपसर्गा द्योतकाः, न वाचकाः। प्रजयति इत्यादौ प्रकृष्टजयादौ निपातादेः लक्षणयैवोपपत्ते., तत्र शक्तिकल्पने गौरवात्, प्रविशते इत्यत्र गमने प्रशब्दार्थे विभक्त्यर्थान्वयप्रसङ्गात्, प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वात्। न चैवं नञोऽपि अभावे शक्तिर्न स्यात् इति वाच्यम्। 'भूतले न घटः' इत्यत्र घटपदस्य विभेदस्य नामार्थयोः भेदान्वयाव्युत्पत्त्या भूतले अनन्वयापत्तेः। भेदस्य नञर्थत्वे तु

